य इच्छेत्पुत्रपौत्रादीनैहिकामुष्मिकं सुखम् ।
कथेयं रुचिदा तस्य तिष्ठेच्छ्रीस्तद्‌ग्रहे सदा ॥ ५४ ॥
यद्‌गृहेऽसौ कथा रम्या श्राव्यते पठ्यते सदा ।
नन्दते श्रीयुतं तस्य सुशीलं विमलं कुलम् ॥ ५५ ॥
श्रीगुरोः कृपया तत्र रोगपीडादि नैव च ।
सप्ताहश्रवणात्सर्वपाशनाशोऽप्यसंशयम् ॥ ५६ ॥
ईदृशी पावनी रम्या कथा राति मनोरथान् ।
अनायासेन काम्यार्थसिद्धिः सद्यो भविष्यति ॥ ५७ ॥
निधिश्चेल्लभ्यतेऽयत्नादायासेनापरेण किम् ।
अस्ति चेन्मम वाक्येऽस्मिन्विश्वासोऽद्यानुभूयताम् ५८
अनुभूतं मया सत्यं श्रोतॄन्संप्रार्थये ततः ।
श्रीदत्तस्मरणं सद्य इष्टदं ह्यनुभूयताम् ॥ ५९ ॥
यथोद्गारं ददात्यत्र भुक्तस्तृप्तस्तथाऽप्यहम् ।
अनुभूय प्रवक्ष्यामि दत्तात्रेयकथामृतम् ॥ ६० ॥

रुचिदेयं कथा । तद्‌द्वारि श्रीस्तिष्ठेत् ॥ ५४ ॥ यद्‌गृहेऽसौ कथा श्राव्यते पठ्यते सुशीलं तत्कुलं श्रीयुतं नन्दते ॥ ५५ ॥ यत्र गुरुकृपा तत्र रोगपीडादि नैव। सप्ताहश्रवणात्सर्वपापनाशः ॥ ५६ ॥ ईदृशी कथा पावनीष्टं ददाति । अनायासेनेयं सद्यः फलसिद्धिः ॥ ५७ ॥ अनायासान्निधिलाभे श्रमेणालं। मद्वाक्ये विश्वासश्चानिदमनुभवतु ॥५८॥ मयाऽनुभूतं गुरुस्मरणफलं श्रोतारः सद्योऽनुभवन्तु ॥ ५९ ॥ भुक्तस्तृप्तो यथोद्गारं दत्ते तथाऽनुभूतं कथामृतं वक्ष्ये ॥ ६० ॥ अल्पे मयि नौदासीन्यं कार्यं । मक्षिका-

१ ददाति

नौदासीन्यं लघुतरे मयि कार्यं कदाचन ।
मक्षिकावदनात्स्वादु मधु प्राज्यं हि लभ्यते ॥ ६१ ॥
हेयं[2]शुक्तेर्यथा मुक्ता कर्पूरः कदलीदलात् ।
अस्पृश्यकाकविष्ठातः पूज्याश्वत्थोदयो न किम् ॥६२॥
नौदासीन्यमथो ग्रन्थे सुरसे धार्यमार्यकैः[3] ॥
यथेक्षोर्मलिनाद्वक्राल्लभ्यते मधुरो रसः ॥ ६३ ॥
तथाञ्जसैव मद्वाक्याद्ग्राह्यो गुरुकथारसः ।
येषां गुरुस्मृतिप्रीतिः स्वीकृत्यानुभवन्तु ते ॥ ६४ ॥
एतद्ब्रह्मरसास्वादफलं सद्योऽनुभूयताम् ।
मद्वाक्ये भक्तिमान्यः स सद्योऽनुभवभाग्भवेत् ॥ ६५ ॥
ज्ञानप्रदा गुरुकथा कामदा कामधुग्यथा ।
वृथा न वच्मि श्रोतारः श्रोतव्येयं समाहितैः ॥ ६६ ॥
गन्धर्वनगरे सोऽस्ति श्रीनृसिंहसरस्वती ।
महिमाऽत्यद्भुतस्तस्य विख्यातो भुवनत्रये ॥ ६७ ॥

मुखादपि मधु लभ्यते ॥ ६१ ॥ शुक्तेर्मौक्तिकं, कदल्याः कर्पूरः, काकविष्ठातोऽश्वत्थ उपलभ्यो हेयः किम् ॥ ६२ ॥ वक्रकृष्णेक्षुरस इव मद्ग्रन्थे दृष्टिर्देया ॥ ६३ ॥ येषां गुरुप्रीतिस्तेऽमुं कथां स्वीकृत्यानुभवन्तु ॥ ६४ ॥ एतद्ब्रह्मरसास्वादफलं सद्य एव मद्वाक्ये यो भक्तिमान्सोऽनुभवेत् ॥ ६५ ॥ ज्ञानदा कामदा च गुरुकथेयं कामधेनुरिवेदं वृथा न वच्मि । अतः सावधानाः शृण्वन्तु ॥ ६६ ॥ गन्धर्वपुरे श्रीनृसिंहसरस्वती अस्ति । अद्भुतस्तन्महिमा लोके प्रसिद्धः ॥ ६७ ॥ तमाकर्ण्य भाविका लोका दूरत

१ बहु २ त्याज्य [क्षुल्लक] ३ आर्यैः । स्वार्थे कः

महान्तं महिमानं तं श्रीदत्तस्य महात्मनः ॥
आकर्ण्यायान्ति रसिका लोका दूराच्च भाविकाः ॥६८॥
आगत्य तं समाराध्य लभन्ते त्वरितं फलम् ॥
स्त्रीपुत्रधनधान्यादिकामलब्धिर्यतोऽचिरात् ॥ ६९ ॥
गुरुदर्शनसङ्कल्पादपि सिद्धिश्च पादुके ।
दृष्ट्वा[2] त्वदृष्टो गृहं गत्वा पुमर्थानपि विन्दति ॥ ७० ॥
इति श्रुत्वा द्विजवरः कोऽप्येको नामधारकः ।
अमलश्रीगुरुपदकमलप्रेक्षणोत्सुकः ॥ ७१ ॥
चिन्तान्वितोऽतिनिर्विण्णः[1] कष्टव्याकुलमानसः ।
साक्षाद्द्रष्टुं गुरुपदं निर्ययौ स्वगृहाद्द्विजः ॥ ७२ ॥
स्वकार्यं साधयिष्यामि पातयिष्यामि वा तनुम् ।
भवे श्रीगुर्वलाभेऽस्मिन्किङ्कार्यं जडयाऽनया[2] ॥ ७३ ॥
इति निश्चित्य निर्विण्णो ध्यायन्गुरुपदाम्बुजम् ।
क्षुधं तृषं च विस्मृत्य गच्छन्गुर्वाश्रमं जगौ ॥ ७४ ॥

आयान्ति ॥ ६८ ॥ यदाराधनात्स्त्रीपुत्रधनादिलाभोऽचिरेणैव ॥ ६९ ॥ गुरुदर्शनसङ्कल्पादपि कार्यसिद्धिः । पादुके दृष्ट्वा गृहमेत्यापि पुरुषार्थान्लभते ॥ ७० ॥ इति श्रुत्वा गुरुदर्शनाकाङ्क्षी नामधारकद्विजः ॥ ७१ ॥ चिन्ताव्याकुलो गृहान्निर्गत्य निर्विण्णः साक्षाद्गुरुदर्शनार्थमेत्य ॥ ७२ ॥ स्वकार्यं साधये । देहं वा पातये । किं कार्यं जडदेहेन ॥ ७३ ॥ इति निश्चित्य गुरुपदं ध्यायन्क्षुधं तृषं च विस्मृत्य गुर्वाश्रमं ययौ ॥ ७४ ॥

१ विरक्तः निपूर्वविदेर्विरक्त्यर्थश्रवणात् २ तन्वा

यन्नामस्मरणात्सद्यो दैन्यहानिर्नृणां भवेत् ।
तन्नामस्मरणात्कस्मान्मम दैन्यं न नश्यति ॥ ७५ ॥

दैवं चेत्प्रतिकूलं मे त्वद्भक्तेः किं प्रयोजनम् ।
हीनोऽहं चेत्कथं स्पर्शस्पर्शाल्लोहस्य हेमता ॥ ७६ ॥

पापोऽहं चेत्पापतापकष्टहारीश नाम ते ।
मयि स्थितेऽपि चेच्छिष्टं कष्टं कस्य ततस्त्रपा ॥ ७७ ॥

मनस्यानीय मे वाक्यं गुरुमूर्ते सदाशिव ।
सर्वभूतकृपालो त्वं दर्शनं देहि मे प्रियम् ॥ ७८ ॥

इति व्याकुलचित्तः सन्भक्तिमान्नामधारकः ।
स्तुतिं कर्तुं समुद्युक्तो वाण्या गद्गदया गुरोः ॥ ७९ ॥

पाण्डुरङ्गं विघ्नभङ्गं गौरीपुत्रं च शारदाम् ।
प्रणम्य श्रीगुरुं स्तोतुं प्रारेभे नामधारकः ॥ ८० ॥

त्रिमूर्तिः श्रीगुरुरिति वदतश्च श्रुतिस्मृती ।
वदन्ति सद्यःफलदं तं त्वामेव कलौ युगे ॥ ८१ ॥

यन्नामस्मरणात्सद्यो दैन्यहानिस्तन्नाम स्मरतो मे दैन्यं कुतः शिष्टं ॥७५॥ दैवादिति चेत्त्वद्भक्तेः किं प्रयोजनं । हीनोऽहं चेत्स्पर्शाल्लोहस्य स्वर्णत्वं न किं ॥ ७६ पापोऽहं चेत्पापहारिणि ते नाम्नि मयि स्थिते कथं कष्टं ७७ हे कृपालो गुरुमूर्ते इदं मनस्यानीय मे दर्शनं देहि ॥ ७८ ॥ इति व्याकुलो नामधारको गुरुमस्तौत् ॥ ७९ ॥ पाण्डुरङ्गं गणेशं शारदां च नत्वाऽस्तौत

---

१ कष्टशोषणात् २ गुर्वी, पूज्या मूर्तिर्यस्य सः ३ गणेशं

कलौ युगेऽस्ति ते ख्यातिः श्रीनृसिंहसरस्वती ।
त्वं भक्तसारथिरिति प्रथितोऽसि कृपानिधे ॥ ८२ ॥

कृपासिन्धो भक्तबन्धो वेदास्त्वां वर्णयन्ति हि
गुरुनाथः पुण्यकथस्त्रातेति त्रिगुणात्मक ॥ ८३ ॥

त्रिगुणात्मक एकस्त्वं निधानं[1] बीजमव्ययम् ।
निवार्य सङ्कटं भक्तान्भयात्पासि दयानिधे ॥ ८४ ॥

दयानिधे यतिपते श्रीपते प्रार्थयामि ते ।
भक्तिं न मे सात्विकाष्टचिह्नां गृह्णाति मानसम् ॥८५॥

मानसं चञ्चलं मेऽस्ति न गुरो स्थैर्यमृच्छति ।
आश्वासय कृपासिन्धो त्वं समागच्छ[2] वेगतः ॥ ८६ ॥

वेगतो मां समागच्छ नृहरेऽनन्त सर्वग ।
रुदन्तं बालमालक्ष्य त्वरयेव यथा प्रसूः[3] ॥ ८७ ॥

प्रसूस्त्वं[4] जनकस्त्वं मे सखा त्वं मे चिरन्तनः ।
व्यवहारेऽपि वंशस्य त्वं मेऽसि कुलदैवतम् ॥ ८८ ॥

॥ ८० ॥ कलौ गुरुस्त्रिमूर्तिरिति श्रुतिस्मृत्युक्तः स त्वं भक्तसारथिः कृपानिधिर्दीनबन्धुश्च ॥ ८२ ॥ ८३ ॥ त्रिगुणात्मकस्त्वं सङ्कटं निवार्य भक्तान्पासि ॥ ८४ ॥ दयाब्धे श्रीपते तं त्वां प्रार्थये । चञ्चलं मे मनो भक्तिं न गृह्णाति । ततस्त्वं समाश्वासय ॥ ८५ । ८६ ॥ बालं मातेव त्वरया मामेहि ॥ ८७ ॥ त्वमेव मे माता पिता सखा कुलदैवतं च ॥ ८८ ॥

१ निधिः २ समागत्य इति पाठः ३। ४ माता

कुलदैवतमस्माकमिति निर्धार्य भक्तितः ।
भजे त्वां त्वं सर्वगतिस्त्वं नृसिंहसरस्वती ॥ ८९ ॥
सरस्वतीति ते नाम्ना विक्रीतोऽहं त्वदाश्रयः ।
कुतो दैन्यं मम द्वारि तिष्ठत्येतच्च सङ्कटम् ॥ ९० ॥
सङ्कटं विततां चिन्तां कुतोऽर्पयसि मे वद ।
भक्तवत्सल इत्यत्र प्रख्यातस्त्वं कृपानिधिः ॥ ९१ ॥
कृपानिधे दीनबन्धो अनन्तानन्तसद्गुण ।
परमात्मा त्रिमूर्तिस्त्वं मा सन्त्यज दयालुताम् ॥९२ ॥
दयालुता ते प्रथिता त्रिमूर्ते विश्वपालक ।
लोके समस्तदेवानां त्वमेवासि बहुप्रदः ॥ ९३ ॥
बहुप्रदोऽपि देवेभ्यो यदि त्वं तर्हि सद्गुरो ।
त्वां विहायापरं कं वा याचे दाता त्वमेव मे ॥ ९४ ॥
त्वमेव मे परं दैवं दाता त्वत्तोऽपरोऽस्ति कः ।
पोषकोऽसि त्वमनिशमस्य विश्वस्य सर्ववित् ॥ ९५ ॥
सर्वज्ञः सर्वविदिति वदति त्वां किल श्रुतिः ।
साक्षी नास्म्यस्य[1] नेक्षे हि[2] सर्वसाक्षित्वलक्षणम् ॥ ९६ ॥

त्वं सर्वगतिरिति निर्धार्य त्वां भजे ॥ ८९ ॥ सरस्वतीति ते नाम्ना विक्रीते त्वदाश्रिते मयि कुतो दैन्यं कष्टं च ॥९०॥ कृपानिधे भक्तवत्सल कुताश्चिंतां रासि ॥ ९१ ॥ भो परमात्मन्दीनबन्धो दयाब्धे कृपालुतां मा त्यज ॥९२॥ भो त्रिमूर्ते विश्वपालक त्वं देवानामपि दाता ॥ ९३ ॥ त्वां विहायान्यं कं याचे ॥ ९४ ॥ त्वं सर्वपोषकः सर्वज्ञश्चेति श्रुतेर्नः उपेक्षां मा कुरु ९५।९६.

---

१ अस्य सर्वज्ञस्य तव साक्षी न भवामि २ यस्मात् कारणात्

सर्वसाक्षित्वलक्ष्मेदं[1] कः कथं कुत्र वर्तते ।
तथा न वेत्स्युपेक्षा वा दयालो युज्यते कथम् ॥ ९७ ॥

कथं मम स्थितिरिति वेत्सि चेत्त्वं हि सर्ववित् ।
मां न जानासि चतुर क्षुधितं तात बालकम् ॥ ९८ ॥

बालकं क्षुधितं स्वीयं रुदन्तं वीक्ष्य चापि किम् ।
माताऽपि मानुषी देवस्तादृशं किमुपेक्षते ॥ ९९ ॥

उपेक्षते भावान्कि मां न दत्तं किमपीति चेत् ।
शंसे[2] मे किञ्चिदादाय[3] दित्सेऽपि[4] त्वं बहुप्रद ॥ १०० ॥

बहुप्रद त्वयाऽऽदाय भूतलं सकलं बलेः[5] ।
स्वाराज्यमर्पितं तस्मै प्रसिद्धमिति चेद्वद ॥ १ ॥

वद तेऽन्यत्तु पृच्छामि लङ्का स्वर्णमयी त्वया ।
दत्ता बिभीषणायेश दत्तं ते तेन किं पुरा ॥ २ ॥

पुरा त्वया ध्रुवायापि दत्तं ध्रुवपदं तदा ।
किं दत्तं ते हृषीकेश तेन मां किमु याचसे ॥ ३ ॥

कः कथं क्वेति वेत्ता सर्वसाक्षी तादृशस्त्वं कथमुपेक्षसे ॥९७॥ भो सर्वज्ञ क्षुधितं मां न वेत्सि ॥९८॥ माताऽपि क्षुधितं बालमुपेक्षते किम् ॥९९॥ मया किमपि न दत्तमिति बलेरिव मत्तः किञ्चिदादाय दित्से चेत्त्वया बिभीषणाय लङ्का दत्ता । तेन पुरा किं ते दत्तम् ॥ १०० ॥ १०१ ॥ २ ॥ ध्रुवपदं वा गृह्णतो ध्रुवेण किं दत्तम् ॥ ३ ॥ निःक्षत्रिया भूर्विप्रेभ्यो

१ लक्षणं २कथय ३ गृहीत्वा ४ दातुं इच्छसि किं ५ वैरोचनसकाशात्

या च सेवकपाल त्वं दत्ता निःक्षत्रिया मही ।
विप्रेभ्यः किं प्रदत्तं तैः किं दास्ये तेऽद्य पोषक ॥ ४ ॥
पोषकः सर्वसृष्टेस्त्वं देवस्त्वं कमलापतिः ।
किं ते दास्याम्यहं रङ्को मशको दुर्मतिः कियान् ॥ ५ ॥
कियानहं पराधीनः क्व च श्रीमान्भवान्क्व च ।
सविलासा महालक्ष्मीर्यदग्रे नन्दते सदा ॥ ६ ॥
सदानन्द ततः किं ते वद देयं मयाऽधिकम् ।
किमिच्छसि हृषीकेश मत्तोऽहं तव बालकः ॥ ७ ॥
बालको मातुरुत्सङ्गमुपविश्य क्षुधातुरः ।
दीनः प्रसारयत्यास्यं पयसः काङ्क्षया यदा ॥ ८ ॥
तदा माता प्रथमतो याचते किं सुतं प्रति ।
तथा मां गुरुनाथाद्य याचसे किं ददामि किम् ॥ ९ ॥
किं दाताऽऽदाय यो दाता यद्वा सेवामपेक्ष्य वा ।
वदान्य सद्गुरो तेऽग्रे किं वदामि दयानिधे ॥ ११० ॥
दयानिधे न शक्नोषि दातुमद्येति नोचितम् ।
त्वं चतुर्दशलोकेभ्यः सर्वं पूरयसि प्रभो ॥ ११ ॥

दत्ता । तैः किं दत्तम् ॥ ४ ॥ भो सृष्टिपालक श्रीपते मशकोऽहं किं ते दास्ये ॥ ५ ॥ यद्द्वारि श्रीर्नन्दते स त्वं क्व । रङ्कोऽहं क्व ॥ ६ ॥ अतस्ते किं देयं । बालः क्षीरकाङ्क्षया मात्रङ्के स्थित्वाऽऽस्यं प्रसारयति ॥७।८॥ तदा माता तं बालं किं याचते ॥ ९ ॥ सेवामपेक्ष्य किञ्चिदादाय वा यो दाता स किं दाता? ॥११०॥ अद्य दातुमशक्तश्चेत्कथं चतुर्दशलोकान्पासि

---

१ मत्सकाशात् २ आदाय यो दाता स दाता किं । कुत्सितो दाता वा.

प्रभो यदि तवेच्छेयं मया सेवा न ते कृता ।
अतो न दास्यस्यभीष्टमिति चेन्मा तथा वद ॥ १२ ॥

वद सेवाभिकाङ्क्षी यः स वदान्याग्रणीर्भवेत् ।
न गण्यते हि दातृत्वं सेव्यसेवकभावयोः ॥ १३ ॥

भाव[2]योगज्ञ भगवन्पश्य कूपादिषु क्षितौ ।
आकाशस्थोऽपि जलदो निरपेक्षोंऽबु वर्षति ॥ १४ ॥

वर्षतीह तु यो मेघस्तस्य सेवां न कुर्वते ।
वापीकूपतडागाद्याः प्रसिद्धं[3]मद ईश्वर ॥ १५ ॥

ईश्वरो वेतनादाता[4] दाता सेवामपेक्ष्य यः ।
उदारत्वं दयाब्धे त एतेन श्लाघ्यते कथम् ॥ १६ ॥

कथं च नापि मे देव नाग्रहोऽपि तु सेवनम् ।
न जानेऽथापि मत्पूर्वे सर्वेऽपि तव सेवकाः ॥ १७ ॥

सेवकान्वयजं देव सालसं बालिशं तव ।
स्वामिन्नतोऽपि विद्धीह मां रङ्कं तव सेवकम् ॥ १८ ॥

॥११॥ प्रभो सेवामिच्छसि चेत्कथं वदान्याग्रणीर्भवसि । सेव्यसेवकभावे दातृत्वं न गण्यते ॥ १२ ॥ १३ ॥ आकाशस्थो मेघः कूपादौ वर्षति ॥ १४ ॥ कूपाद्यास्तत्सेवां कुर्वन्ति किं । किञ्चिदादाय दातुर्दातृत्वं श्लाघ्यं किं । मत्पूर्वे तु त्वत्सेवकाः ॥ १५ ॥ ॥१६॥ १७ ॥ तद्वंशजं मां विद्धि । राजाऽपि सेवकान्वयं पाति तथा मां पाहि ॥ १८ ॥ १२० ॥ मत्पूर्व-

---

१ दातृवर्यः २ हे भक्तियोगज्ञ ३ प्रसिद्धमिदमीश्वर इत्यपि पाठः
४ द्रव्यग्रहीता.

सेवकान्वयजं[1] राजा लोके रक्षति पुत्रवत् ।
इति प्रसिद्धं तन्न्यायाद्रक्ष मामप्यसेवकम् ॥ १९ ॥
सेवकैस्तव मत्पूर्वैर्निरपेक्षं पदं तव ।
सेवितं तेन तु भवान्मदृणी मे ददात्वृणम् ॥ १२० ॥
ऋणं कृपानिधेऽस्माकमस्मभ्यं दातुमेव ते ।
रोचते न कथं सद्भ्यो विज्ञाप्यादा[2]स्य एव तत् ॥२१॥
तत्त्वं न दित्[3]ससि यदा तदा त्वामृणिनं त्वहम् ।
नियोजयामि हि निजव्यवहारे परेश्वर ॥ २२ ॥
परेश्वराद्य मे भाति काठिन्यं हृदयस्य ते ।
गुरो किमर्थं काठिन्यं भो सनातनसेवके ॥ २३ ॥
सेवकेन स्वामिनो न स्पर्धा युज्यत ईश्वर ।
सा[4] समेनैव तु कियानहं त्वं भक्तवत्सलः ॥ २४ ॥
भक्तवत्सल ते चित्तं ज्ञातं मृदुतरं पुरा ।
दैत्येन पीडिते भक्ते प्रह्लादे सेवके निजे[5] ॥ २५ ॥
निजेनाप्यपराद्धं चेद्दयनीयेन मानद ।
दयालोस्तत्र काठिन्यं प्रभोः किं शोभतेतरा[6]म् ॥ २६ ॥

सेवित त्वं मे ऋणं देहि । यदि न दास्यसि, तर्हि सद्भ्यो निवेद्यैवा-दास्यामि ॥ २१ ॥ तथाऽपि न दास्यसि चेद्व्यवहारे त्वां योजयिष्यामि ॥ २२ ॥ भो गुरो सेवके काठिन्यं कुतो धृतं ॥ २३ ॥ नायं धर्मस्त्वं तु भक्तवत्सलः। दैत्येन प्रह्लादे पीडिते त्वच्चित्तं मृदुतरं ज्ञातं ॥ २४ ॥२५॥

---

१ सेवकवंशजम् २ आदानं कुर्वे ३ दातुं इच्छसि ४ स्पर्धा ५ स्वकीये ६ अत्यर्थं.

तरां ममापराधेन क्रुद्धोऽसि स्वान्तरेऽपि किम् ।
दुर्वाक्यश्रवणान्मेऽपि न मां पश्यसि बालकम् ॥ २७ ॥

बालकं निष्ठुरगिरमङ्के स्थित्वाऽपि लत्तया ।
ताडयन्तं दीयमानपानमप्यसकृत्पर ॥ २८ ॥

परमात्मन्त्रिलोक्यार्भे मानुषी जननीदृशम् ।
जहात्यस्मै क्रुद्धयति वा प्रत्युत श्लिष्यति प्रभो ॥ २९ ॥

प्रभो केनापराधेन वदसि त्वं न मां वद ।
किं प्रार्थये हृषीकेश बालोऽहं त्वं हि मे पिता ॥१३०॥

पिता कुप्यति बालाय निजाय परमेश्वर ।
यदा कदाचित्तं बालं तदाऽऽश्वासयति प्रसूः ॥ ३१ ॥

प्रसूर्यदा कदाचित्तु मन्तुं दृष्ट्वा प्रकुप्यति ।
स्वदुःखं कथयन्तं तं तदा रक्षति तत्पिता ॥ ३२ ॥

स्वदासापराधे दयालोः काठिन्यं शोभते किं ॥ २६ ॥ अपराधेन क्रुद्धोऽसि चेल्लत्तया ताडयन्तं निष्ठुरवाचं बालं दृष्ट्वा माता तस्मै क्रुद्धयति किं प्रत्युत लालयति ॥ २७ ॥ २९ ॥ प्रभो केनापराधेन न ब्रूषेऽहं तु बालकः ॥ १३० ॥ यदा पिता कुप्यति तदा माताऽऽश्वासयति, माता कुप्यति चेत्पिताऽऽश्वासयति ॥३१॥३२॥ उभयं त्वमेव । त्वयि रुष्टे दुःखं

---

१ मनसि २ पुनः पुनः ३ बालकं ४ आलिंगयति ५ अपराधं.

पिताऽभिन्न[1]निमित्तोपादानमाता त्वमेव मे ।
सद्गुरो त्वयि रुष्टेऽद्य कं ब्रुवेऽकं[2] क्षमां कुरु ॥ ३३ ॥

कुरु स्वामिन्मयि दयां त्वं नाथो दीनवत्सलः ।
दासोऽग्रे पतितोऽहं ते दीनं मां प्रतिपालय ॥ ३४ ॥

प्रतिपालयसीश त्वमनाथमिति कथ्यसे ।
अनाथनाथानाथोऽहं बालो मां प्रतिपालय ॥ ३५ ॥

पालयस्यनिशं दीनान्कृपालो वेदविश्रुत ।
स त्वं विलापं मे कर्णे न गृह्णासि कथं वद ॥ ३६ ॥

वद कस्मान्न ते कर्णौ दीनं मे गृह्णतो वचः ।
विमनस्त्वं त्वया कस्माद्गुरुराज कथं धृतम् ॥ ३७ ॥

धृतं नैर्घृण्य[3]मिति मे भाति यद्वचनं मम ।
श्रुत्वा द्रवन्ति पाषाणाः कारुण्यं ते गतं कुतः ॥ ३८ ॥

कुतस्तरां वर्णयन्ति लोकास्त्वां करुणाकरम् ।
तत्सत्यं चेदथाप्यद्य दयाघन दयां कुरु ॥ ३९ ॥

कस्मै विज्ञाप्यं । अतो दीनवत्सल, दयां कुरु । तवाग्रे पतितं मां पाहि ॥ ३३ । ३४ ॥ अनाथपालक त्वं मामनाथं पाहि । भो कृपालो मे विलापं कर्णे न गृह्णासि यतः पाषाणा अपि द्रवन्ति ॥३५ । ३८॥ कुतस्ते कारुण्यं गतं । त्वं करुणाकर इति सत्यं चेद्दयां कुरु ॥३९॥ प्रभो कृपां कुर्वित्युक्त्वा

---

१ 'स ईक्षत लोकान्नु सृजा' इत्यादिना निमित्तत्वं । 'तदाऽऽत्मानं स्वयमकुरुतेति' उपादानत्वं च । श्रुत्योक्तत्वात् अभिन्ननिमित्तोपादानत्वं
२ दुःखं. ३ निर्दयत्वं.

कुरु प्रभो कृपादृष्टिं मयीत्युक्त्वा स मूर्च्छितः ।
गुरुनाथः कृपासिन्धुस्तदा तमगमद्द्रुतम् ॥ १४० ॥

द्रुतं वात्सल्यतो वत्सं प्रति धेनुर्यथा तथा ।
दयालुर्भगवान्प्राप स्वप्ने तं नामधारकम् ॥ ४१ ॥

नामधारक उत्थाय गुरुं दृष्ट्वा समागतम् ॥
दण्डवत्पतितो भूमावुपसङ्गृह्य पद्द्वयम् ॥ ४२ ॥

पदद्वयरजस्तस्य ममार्ज स्वशिरोरुहैः ।
क्षालयित्वाऽऽनन्दजाश्रुजलैः सुविमलैरलम् ॥ ४३ ॥

अलङ्कृत्योपचारैः स शुभैर्गन्धाक्षतादिभिः ।
हृदयालय ईशानमुपवेश्य मुमोद सः ॥ ४४ ॥

स आसानन्दभरितः सद्भक्तो नामधारकः ।
तं तथा वीक्ष्य तच्चित्ते गुरुनाथः स्थिरोऽभवत् ॥४५॥

निजभक्तहृदम्बुजे मुदा गुरुनाथो विभुरावसद्यदा ।
मुदमाप सरस्वती तदा मुदसौ मय्यपि चास्तु सर्वदा ४६

मूर्च्छितोऽभूत्तदा धेनुर्वत्समिव स्वप्न एत्य दर्शनं ददौ ॥१४० । ४१॥ स चोत्थाय दण्डवन्नत्वा पादौ धृत्वा केशैर्ममार्जानन्दाश्रुभिरभ्यषिंचत् ।४२।४३। गन्धादिभिरापूज्य मुमोद । तमानन्दपूर्णं वीक्ष्य गुरुनाथस्तच्चित्तेऽवसत ॥ ४४ ॥ ४५॥ निजभक्तहृदम्बुजे मुदा गुरुनाथो विभुरावसद्यदा । मुदमाप सरस्वती तदा मुदसौ मय्यपि चास्तु सर्वदा ॥ १४६ ॥

---

१ क्षेपकः ॥ नामधारक उत्थाय गुरु दृष्ट्वा समागतम् ॥ इत्यादि यत्त-दखिलं स्वप्न एव न जाग्रति ॥ १ ॥ २ अभिवाद्य ३ पादयुग्मं.

(इति) सरस्वत्याख्यगङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञितमहाराष्ट्रभाषान्वितगुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वतीयतिविरचितायां श्रीगुरुसंहितायां प्रथमः (अध्यायः) ॥ ग्रन्थसङ्ख्या ॥ १४६ ॥

अध्यायसारसंग्रहश्लोकोऽयम्–

अध्याये प्रथम इहेष्टवन्दनाख्यं
प्रोक्तं मंगलमथ नामधारकाख्यम् ॥
प्राप्येष्टं स्तुत इह धाम हर्षणीयं
दत्तोऽदर्शयदुत नुः प्रहर्षणीयम् ॥

(इति) चूर्णिकायां प्रथमोऽध्यायः ॥ १ ॥

॥ इति प्रथमोऽध्यायः ॥

## ॥ अथ द्वितीयोऽध्यायः ॥ २ ॥

श्रीगणेशाय नमः । श्रीसरस्वत्यै नमः ॥ श्रीगुरु-
दत्तात्रेयाय नमः ॥ श्रीमहालक्ष्म्यै नमः ॥

त्रिमूर्तिराजः स गुरुर्ममाजः कृष्णातटे योऽस्ति सुदीप्तिपुञ्जः ।
आनन्दलीलां दधतेऽत्र भक्ताः स्वर्गे सुरास्तां स्पृहयन्त्यभक्ताः१

ध्यायन्गुरुपदं गच्छन्संस्तुवन्नामधारकः ।
अतिश्रान्तो वृक्षमूले खिन्नः सुष्वाप मूर्च्छितः ॥ २ ॥
क्षणं स निद्रितो भूत्वा गुरुं स्वप्नेऽप्यचिन्तयत् ।
श्रीगुरुश्चिन्तितोऽनन्तो दयाब्धिः स्वं[१] व्यदर्शयत् ॥ ३ ॥
भस्मलिप्तो जटाधारी व्याघ्रचर्मधरो वरः[२] ।
एवंरूप उपागत्य तस्य दृष्टिपथे स्थितः ॥ ४ ॥

श्रीदत्तात्रेयाय नमः॥ अध्यायसारसंग्रहश्लोकोऽयम्॥* सिद्धः सृष्टियुग-स्थितीरिह जगौ सर्गे द्वितीये विधेः संवादं कलिना च दीपकगुरूपाख्यानकं सद्विधेः ॥ यच्चाकारि हि दीपकेन गुरुसत्सेवाख्यविक्रीडितं कुर्यात्कोऽत्र तथा करोत्यपि शशः शार्दूलविक्रीडितम् ॥*॥ त्रिमूर्तिराजः स गुरुर्ममाजः कृष्णातटे योऽस्ति सुदीप्तिपुञ्जः ॥ आनन्दलीलां दधतेऽत्र भक्ताः स्वर्गे सुरास्तां स्पृहयन्त्यभक्ताः १ ततो नामधारकः स्वप्नादुत्थाय गुरुपदं ध्याय-न्खिन्नो वृक्षमूले मूर्च्छित इवाभूत् ॥२॥ तत्स्वप्ने श्रीगुरुः स्वरूपं दर्शयामास ॥ ३ ॥ जटिलो भस्मलिप्तो व्याघ्रचर्मांबर एत्य तल्ललाटे भस्मालेप्य

---

१ स्वं स्वरूपं २ व्याघ्रः.

नामधारकमागत्य ललाटे तस्य भस्म च ।
धारयित्वा समाश्वास्य दधौ शीर्ष्ण्यभयं करम् ॥ ५ ॥

इति स्वप्ने विलोक्यैष प्रबुद्धो नामधारकः ।
दिश आलोक्य तं स्मृत्वा विस्मयं परमं ययौ ॥ ६ ॥

स्वप्ने विलोकितां मूर्तिं मनसा चिन्तयंस्तदा ।
गच्छन्तस चाग्रतोऽद्राक्षीत्प्रत्यक्षं तं तथैव च ॥ ७ ॥

योगीश्वरं समालोक्य साष्टाङ्गं प्रणिपत्य तम् ।
कृपां कुरु कृपासिन्धो त्वं हि माता पिता मम ॥ ८ ॥

जय योगाधीश जय त्वमज्ञानतमोहरः ।
आत्मज्योतिः प्रकाशश्च सिद्धयोगी कृपानिधिः ॥ ९ ॥

तव दर्शनमात्रेण दुरितं मे द्रुतं गतम् ।
मम त्वं तारको यस्मात्स्वामिन्प्राप्तोऽसि सङ्कटे ॥१०॥

कृपया कृपणं[1] भक्तमागतोऽस्ति कुतो भवान् ।
किं नाम भवतः स्थानं[2] क्व निवासो[3] ब्रवीतु मां ॥११॥

मूर्ध्नि करं दधौ ॥ ४ ॥ ५ ॥ इति दृष्ट्वा बुध्वा दिश आलोक्य विस्मयेन स्वप्नदृष्टं मनस्यानीयाग्रतो गच्छंस्तथैव योगीशमालोक्य साष्टाङ्गं नत्वा प्राह। भो दयाब्धे कृपां कुरु । त्वं मे माता पिताऽज्ञानतमोहरो ज्ञानज्योतिः कृपाब्धिर्योगी सिद्धोऽसि । ते दर्शनादेव पापं नष्टं। त्वं सङ्कटे तारकः प्राप्तोऽसि। कुत आगतोऽसि, किं ते नाम। क्व च स्थानं ॥ ६ ॥ ११ ॥

---

१ दीनं २ स्थानं नियतं. ३ निवास आधुनिकः । क्व स्थानं, क्व निवासः, इति देहलीदीपन्यायेनोभयत्राप्यन्वेति.

स प्राह सिद्धोऽहं योगी तीर्थाटनरतो भुवि ।
श्रीगुरुर्नः प्रसिद्धोऽस्ति श्रीनृसिंहसरस्वती ॥ १२ ॥
गन्धर्वाख्यं पुरं भीमामरजासङ्गमेऽस्ति तत् ।
यस्य स्थानं त्रिमूर्त्यात्मा स नृसिंहसरस्वती ॥ १३ ॥
स त्रिमूर्त्यवतारोऽत्र लोके भक्तावनाय हि ।
भवसागरतारं यं सदा ध्यायन्ति योगिनः ॥ १४ ॥
सद्गुरुः स कृपासिन्धुर्भक्तानां वरदः सदा ।
यो दत्ते भक्तशिष्येभ्यः[1] सर्वसौख्यं श्रियं मुदम् ॥१५॥
तद्भक्तानां[2] कुतो दैन्यं श्रीरखण्डाऽत्र तिष्ठति
पूर्णा गोधनधान्याद्यैस्ते नन्दन्त्यष्टसिद्धिभिः ॥ १६ ॥
इति प्रगल्भं[3] तद्वाक्यं श्रुत्वाऽसौ नामधारकः ।
प्राहाहमस्मि तस्यैव श्रीगुरोश्चिन्तकः सदा ॥ १७ ॥
विरुदावलयस्तस्य कीर्तिश्चापि तथा श्रुता ।
पारम्पर्याप्तभक्तिं[4] मां स कष्टार्तं न पश्यति ॥ १८ ॥

स प्राहाहं सिद्धो योगी तीर्थाटनपरः ॥ १२ ॥ गन्धर्वपुरे भीमाऽमरजासङ्गमे त्रिमूर्त्यवतारो योगिध्येयः कृपाब्धिर्भक्तवरदः यो नृसिंहसरस्वतीसंज्ञः श्रीदत्तः ॥ १३ ॥ १४ ॥ यो भक्तशिष्येभ्यः श्रियं सर्वसौख्यं च दत्ते ॥ १५ ॥ यद्भक्तगृहे न दैन्यं तत्र गोधनादिपूर्णाऽखण्डा साष्टसिद्धिश्रीः सदा तिष्ठति ॥ १६ ॥ इति श्रुत्वा नामधारक आह । तस्य भक्तोऽहं तद्विरुदं कीर्तिं च श्रुत्वा तं भजेऽथापि स कष्टार्तं मां न पश्यति । मयि कुतो न भक्तिर्येन तं.

---

१ भक्ताश्च शिष्याश्चेति द्वंद्वः २ तद्भक्तेषु ३ प्रौढं ४ वंशपरंपरया प्राप्ता

अद्य त्वं तारकोऽस्माकं जाता ते सङ्गतिस्ततः ।
निःसंशयं कथय मे प्रसादो न कुतो गुरोः ॥ १९ ॥

उवाच सिद्धस्तं विप्र सावधानमनाः शृणु ।
कृपां वर्षति सर्वत्र भक्तवत्सलसद्गुरुः ॥ २० ॥

यत्र स्थिता कृपा तस्य क्व दैन्यं तत्र तत्कुले ।
वशा भवन्ति देवाः स कलिकालजयी भवेत् ॥ २१ ॥

ईदृशं गुरुमापूज्य कथं दैन्यं प्रभाषसे ।
जाने ते संशयाविष्टं चित्तं कष्टं ततस्तव ॥ २२ ॥

त्रिमूर्तिः श्रीगुरुरिति श्रद्धावानिष्टभाग्भवेत् ।
एकभावाय भक्ताय स दद्यादखिलान्वरान् ॥ २३ ॥

कुपितो यदि दैत्यारिस्त्रिपुरारिरथापि वा ।
ततोऽपि भक्तमात्मीयं श्रीगुरुः परिरक्षति ॥ २४ ॥

यस्मै कस्मै कदाचित्तु गुरुः कुप्येत चेत्तदा ।
रक्षितुं तं न शक्नोति माधवो वाऽप्युमाधवः ॥ २५ ॥

गुरोः प्रसादस्त्वं निःसंशयं कथय ॥ १७ ॥ १९ ॥ सिद्ध उवाच । सावधानः श्रृणु । स सर्वत्र कृपां वर्षति ॥ २० ॥ यत्र तत्कृपा तत्र क्व दैन्यं । स देवान्वशीकृत्य कलिकालं जयति ॥ २१ ॥ तमासेव्य दैन्यं भाषसे; त्वं संशयाविष्टोऽतः कष्टभाक् ॥ २२ ॥ य एकभक्तिस्तस्मै त्रिमूर्तिश्रीगुरुः सर्वं दत्ते ॥ २३ ॥ हरो हरिर्वा कुपितश्चेद्गुरुः स्वभक्तं रक्षति गुरौ कुपिते न कोऽपि रक्षति ॥ २४ ॥ २५ ॥ इति श्रुत्वा तत्पदे धृत्वा नामधारक

इति श्रुत्वा वचस्तस्य सिद्धस्य चरणद्वयम् ।
धृत्वा प्रणम्य भावेन विनयाऽवनतोऽवदत् ॥ २६ ॥

स्वामिन्नेतत्तव वचः श्रुत्वा मे संशयोऽभवत् ।
गुरुः कथं त्रिमूर्त्यात्मा ब्रह्मविष्णुशिवात्मकः ॥ २७ ॥

देवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कोऽप्यदः ।
वद कस्य वचश्छिन्धि द्वैधं[1] चित्तं स्थिरी कुरु ॥२८॥

इति तेन नमस्कृत्य सम्पृष्टः सिद्धयोगिराट् ।
अभिनन्द्य वचस्तस्य तमाह स कृपानिधिः ॥ २९ ॥

नामधारक सद्बुद्धे साधु पृष्टं त्वया श्रृणु ।
अत्र साक्षी वेदवाद आदितः कथयामि ते ॥ ३० ॥

चतुरानन उत्पन्नो विष्णोर्नाभिस्तदास्यतः ।
वेदाश्चत्वार उदिताः पुराणान्यभवंस्ततः ॥ ३१ ॥

अष्टादशपुराणानां मध्ये यत्तु सविस्तरम् ।
पुराणं ब्रह्मवैवर्तं प्रख्यातं भुवनत्रये ॥ ३२ ॥

आह ॥ २६ ॥ स्वामिन्नयं संशयः । गुरुः कथं त्रिमूर्त्यात्मा । देवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कोऽपि चेति कस्य वचनं, इत्युक्त्वा ननाम । तमभिनन्द्य सिद्ध आह ॥ २९ ॥ साधु पृष्टं आदितस्ते कथयामि ॥ ३० ॥ विष्णोर्नाभेर्ब्रह्माऽभूत् । तन्मुखेभ्यश्चत्वारो वेदाः । अष्टादशपुराणानि चाभवन् । तत्र प्रसिद्धं ब्रह्मवैवर्तम् ॥ ३२ ॥ द्वापारान्ते विष्णुर्व्यासो भूत्वा

१ संशयं.

द्वापरान्तेऽभवद्विष्णुर्व्यासो नारायणः स्वयम् ।
प्रकाशयामास भूमौ पुराणान्यखिलेष्टकृत् ॥ ३३ ॥
शिष्यादिद्वारतो व्यासाद्विस्तृतानीह तानि तु ।
ततो यथामति कथा श्रुता ते कथ्यते मया ॥ ३४ ॥
कलिः पप्रच्छ लोकेशं विस्तरेण गुरोः कथाम् ।
तस्मै स कथयामास महिमानं गुरोर्विधिः[3] ॥ ३५ ॥
इति सिद्धवचः श्रुत्वा प्रणम्य पुनरप्यसौ ।
विनयावनतो भूत्वा पृष्टवान्नामधारकः ॥ ३६ ॥
जय सिद्ध महायोगिन्नज्ञानध्वान्तभास्कर ।
सद्गतोऽसि कृपासिन्धुर्भवसागरतारकः ॥ ३७ ॥
ब्रह्मदेवेन कलये किमर्थं महिमा गुरोः ।
कथितस्तमपि प्राज्ञ मह्यं कथय विस्तरात् ॥ ३८ ॥
सिद्ध आह शृणुष्वार्य[4] कल्पो नैमित्तिको[5]ऽभवत् ।
वटपत्रे तदा विष्णुः शयानः कल्पसागरे ॥ ३९ ॥

प्रकाशयामास तच्छिष्यादिद्वाराऽत्र प्रसिद्धं तत्रत्यकलिब्रह्मसंवादं वच्मि । कलिना पृष्टो ब्रह्मा गुरुमहिमानं प्राह ॥ ३३ ॥ ३५ ॥ नामधारको विनयेन नत्वोवाच । कृपाब्धे, भवतारक, सिद्ध, जय, । भो महायोगिन् । किमर्थं ब्रह्मणा कलये गुरुमहिमा वर्णितः ॥ ३६ ॥ ३८ ॥ सिद्ध आह । हे आर्य शृणु । यदा नैमित्तिकः कल्पोऽभूत्तदा कल्पसागरे विष्णुर्वटपत्र-

---

१ पुराणेभ्यः २ ब्रह्माणम् ३ ब्रह्मा ४ हे कुलीन ५ अव्यक्तसंज्ञकब्रह्मदेवशयननिमित्ताज्जातः "रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके" इति स्मृतेः.

नारायणोऽव्यक्तमूर्तिः कल्पे वाराहसंज्ञके ।
मयि लीनां पुनः सृष्टिं स्रक्ष्ये तद्वैव भुक्तये ॥ ४० ॥

इति प्रपञ्चरचनां कर्तुमाधाय मानसे ।
योगनिद्रां विहायादिपुरुषः पूर्वसर्गवित् ॥ ४१ ॥

नारायणस्य बुद्धस्य जगदुत्पादने मतिः ।
सञ्जाता नाभिकमलं प्रादुश्चक्रे स लोकसृट् ॥ ४२ ॥

तन्नाभिपद्मादुदितो ब्रह्मदेवश्चतुर्दिशः ।
आलोकयन्स मनसा समभूच्चतुराननः ॥ ४३ ॥

स्वगतं प्राह स ब्रह्मा मत्तो नान्योऽपरो बली ।
नेक्षेऽन्यं किमपीहास्मि समर्थो बलवानिति ॥ ४४ ॥

तदा प्रहस्य तं गाढवाचा नारायणोऽब्रवीत् ।
अहमस्मि महाविष्णुः पितरं तव मां भज ॥ ४५ ॥

इति श्रुत्वा विलोक्याधः श्रीविष्णुं प्रेक्ष्य चात्मभूः ।
नमस्कृत्वा चिरतरं तं तुष्टावाम्बुजासनः ॥ ४६ ॥

मधिशिश्ये ॥ ३९ ॥ ४० ॥ वराहकल्पेऽव्यक्तमूर्तिर्नारायणो मयि लीनान्सानुशयान् जीवांस्तत्कर्मभुक्त्यै पुनः स्रक्ष्य इति प्रपञ्चरचनां कर्तुं मनस्यानीय योगनिद्रां त्यक्त्वा पूर्वसृष्टिज्ञो जगदुत्पादनेच्छुः स पुरुषो नाभिपद्मं विकसितं चक्रे ॥ ४१ ॥ ४२ ॥ ततो जातश्चतुर्मुखो ब्रह्मा दिशो विलोक्य स्वगतमाह । मत्तोऽन्यः परो बली न । ततः समर्थोऽस्मि । तदा प्रहस्य नारायण आह । अहं महाविष्णुस्ते पिता । मां भज ॥ ४३ ॥ ४५ ॥ इति श्रुत्वाऽधो विलोक्य विष्णुं प्रेक्ष्य नत्वा ब्रह्मा तं तुष्टाव ॥४६॥

१ जीवकर्मभोगार्थं

तेन स्तोत्रेण सन्तुष्टो नारायण उवाच तम् ।
ममाज्ञां शिरसा धृत्वा सृष्टिं रचय पुत्रक ॥ ४७ ॥

ब्रह्मोचे[1] सृष्टिरचनारीतिं विष्णो न वेद्म्यहम् ।
न दृष्टा सृष्टिरचना विष्णो स्रक्ष्ये कथं वद ॥ ४८ ॥

ब्रह्मणो वचनं श्रुत्वा तुष्टो नारायणोऽवदत् ।
वेदान्गृहाणारचय तदुक्तविधिना पुनः ॥ ४९ ॥

वेदेऽस्ति सृष्टिरचनाविचारस्तेन मानद ।
लीनां विरिञ्चे तां सृष्टिं यथापूर्वं प्रकाशय ॥ ५० ॥

वेदोऽनादिः सृष्टिमार्गदर्शको दर्पणोपमः ।
तमादायाखिलां सृष्टिं सावधानतया सृज ॥ ५१ ॥

वेदोदितेन मार्गेण त्वमश्रान्तं सृजाखिलम् ।
इत्युवाच हृषीकेशस्तथेत्युक्त्वाऽपि सोऽसृजत् ॥ ५२ ॥

ततः प्रजाः प्रजानाथः ससर्ज सचराचरम् ।
उद्भिज्जानण्डजांश्चैव स्वेदजांश्च जरायुजान् ॥ ५३ ॥

तेन तुष्टो नारायण आह । ममाज्ञया सृष्टिं रचय ॥ ४७ ॥ ब्रह्मा आह । विष्णो । सृष्टिरचनां न जाने । कथं स्रक्ष्ये वदेति ॥ ४८ ॥ विष्णुराह । वेदान्गृहाण । वेदे सृष्टिरचनरीतिरस्ति तथा रचय । वेदोऽनादिर्दर्पण इव सृष्टिदर्शकस्तमादाय सावधानः सन्सृज ॥ ४९ ॥ ५१ ॥ वेदोदितमार्गेण स्रक्ष्यामीति प्रजापतिः विष्णोराज्ञयोद्भिज्जाण्डजस्वेदजजारजान्ससर्ज । यथा व्यासेन वर्णितं । नारायणावतारेण व्यासेनाष्टादशपुराणान्युक्तानि ॥

---

१ उवाच.

श्रीविष्णोराज्ञया धात्रा सर्वं सृष्टमशेषतः ।
त्रैलोक्यमीशशक्त्या युग्यथा व्यासेन वर्णितम् ॥ ५४ ॥
नारायणेनाख्यातानि वेदव्यासेन विस्तरात् ।
अष्टादशपुराणानि ख्यातानि जगतीतले ॥ ५५ ॥
तन्मध्ये ब्रह्मवैवर्तपुराणं सूतसूनुना ।
कथितं शौनकादिभ्यस्तत्रेयं सद्गुरोः कथा ॥ ५६ ॥
सनकादीन् ब्रह्मनिष्ठान्सृष्ट्वाऽग्रे सृष्टिवर्धकान् ।
मरीच्यादीन्मानसांश्च ससर्ज चतुराननः ॥ ५७ ॥
अमरानसुरांश्चापि ससर्ज द्रुहिणस्ततः ।
स्ववर्णाश्रमधर्मादिसहितान्ब्राह्मणादिकान् ॥ ५८ ॥
कृतं त्रेतायुगं चैव द्वापरं कलिसंज्ञितम् ।
उत्पाद्यैकैकमाहूय पृथिव्यै प्रैरयद्विधिः ॥ ५९ ॥
पूर्वं कृतयुगं ब्रह्मा समाहूयाब्रवीदिदम् ।
ममाज्ञया भुवं गत्वा स्वगुणान्संप्रकाशय ॥ ६० ॥

॥ ५२ ॥ ५५ ॥ तत्र ब्रह्मवैवर्तपुराणं सूतेनर्षिभ्य उक्तं। तत्रायं गुरुकथाक्रमः ॥ ५६ ॥ ब्रह्मा ब्रह्मिष्ठसनकादीन्सृष्टिवर्धकान्मरीच्यादीन्देवादीन् वर्णाश्रमादिसहितान्ब्राह्मणादींश्च सृष्ट्वा कृतं त्रेतां द्वापारं कलिं चोत्पाद्यैकैकं पृथिव्यै प्रैरयत् ॥ ५७ ॥ ५९ ॥ पूर्वं कृतयुगमाहूयाह । ममाज्ञया भूमिं गत्वा स्वगुणान्प्रकाशयेति । तत्तथेत्युक्त्वा भुवं गन्तुं प्रतस्थे । तल्लक्षणं शृणु । सत्यवाक्, वैराग्यज्ञानयुक्, यज्ञोपवीताभरणाक्षमालाकमण्डलुधृगेवंरूपं कृतमेत्य नत्वा प्राह ! ब्रह्मन्कुतः प्रेरयासि । प्रायो महीतले

१ अनुप्रविष्टाचिच्छायायुक् २ प्रकथितानि ३ विश्रुतानि ४ सनकादीनां शिष्यादिद्वारा सृष्टिः ५ ब्रह्मदेवः

एवं ब्रह्मवचः श्रुत्वा सत्यरूपं कृतं युगम् ।
भुवं गन्तुं प्रतस्थे तल्लक्षणं शृणु सादरम् ॥ ६१ ॥

कदाप्यसत्यं नो वेद वैराग्यज्ञानसंयुतम् ।
यज्ञोपवीताभरणमक्षस्रक्करकङ्कणम् ॥ ६२ ॥

एवंरूपं कृतयुगं नतपूर्वाङ्गमब्रवीत् ।
ब्रह्मन्मां प्रेरयस्यद्य कथं यास्ये महीतलम् ॥ ६३ ॥

महीतले नरा ब्रह्मन्प्रायशोऽसत्यभाषणाः ।
निन्दापवादनिरताः शठास्तेभ्यो बिभेम्यहम् ॥ ६४ ॥

श्रुत्वा तद्वचनं प्राह ब्रह्मा कृतयुग त्वया ।
खखखाष्टद्विसप्तैकमिताब्दान्स्थेयमेव हि ॥ ६५ ॥

तुभ्यं कष्टं न दास्यामि प्रेरयिष्येऽपरं युगम् ।
सावधानतया स्थेयमिति तत्प्रैरयद्विधिः ॥ ६६ ॥

व्यतीते नियते काले तस्य त्रेतायुगं विधिः ।
समाहूय जगत्स्रष्टा तदिदं वाक्यमब्रवीत् ॥ ६७ ॥

त्रेतायुगस्य लक्ष्मापि शृणु वक्ष्यामि सादरम् ।
भोगैः पुष्टा तनुस्तस्य सामग्री याज्ञिकी करे ॥ ६८ ॥

मिथ्याभाषणा निन्दापवादरताः शठास्तेभ्यो बिभेमि ॥ ६०॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ब्रह्माऽह । त्वं १७२८००० वर्षपर्यन्तं भुवि तिष्ठ । कष्टं ते न दास्यामि । सावधानतया तिष्ठान्यं युगं प्रेरयिष्यामीति तं प्रैरयत् ६५ ॥ ६६ ॥ नियते तत्काले व्यतीते सति ब्रह्मा त्रेतां प्रैरयत् । तल्लक्षणं

त्रेतायुगे द्विजास्तस्माद्यागहोमरताः सदा ।
कर्ममार्गेण गन्तारो धर्मशास्त्रविदः सदा ॥ ६९ ॥
त्रेतायुगं वृषधरं धर्मशास्त्रप्रवर्तकम् ।
खखषष्टिनवादित्यमिताब्दांस्तदुवास कौ॥ ७० ॥
ततो ब्रह्मा समाहूय मिश्ररूपधरं परम् ।
द्वापारं प्राह तस्यापि लक्षणानि निबोध मे ॥ ७१ ॥
खड्गखट्वाङ्गचापेषुशस्त्राढ्यकरपल्लवः ।
द्वापार उग्रताशान्तिदयानैष्ठुर्यसंयुतः ॥ ७२ ॥
सहितः पुण्यपापाभ्यां तृतीयं युगमीदृशम् ।
ब्रह्मा प्राह भुवं गत्वा कञ्चित्कालं स्थितिं कुरु ॥७३॥
खखखाब्धिषडष्टाब्दकालः पूर्णोऽस्य चाभवत् ।
ततो ब्रह्मा समाहूय कलिं प्राह मलिम्लुचम् ॥ ७४ ॥
शृणुष्व लक्षणं तस्य मलिनस्य कलेर्द्विज ।
ब्रह्मणः पुरतः प्राप्तः कलिः स च कलिप्रियः ॥ ७५ ॥

शृणु । यत्तनुर्भोगैः पुष्टा, यत्करे यज्ञसामग्री, धर्मशास्त्रप्रवर्तकं, तत्प्रैरयत् । तत् १२९६००० वर्षपर्यन्तं भुवि तस्थौ । तदा कर्ममार्गरता धर्मशास्त्रज्ञा नरा आसन् । ततो मिश्ररूपं द्वापरं प्रैरयत्तल्लक्षणं शृणु ॥ ६७ ॥ ७१ ॥ खड्गखट्वाङ्गचापबाणधरं उग्रताशान्तिदयानैष्ठुर्यपुण्यपापयुतम् द्वापरं आहूय कञ्चित्कालं भुवि वसेति ब्रह्माऽऽदिदेश । स च ८६४००० वर्ष-पर्यन्तं तस्थौ। ततो ब्रह्मा कलिं प्रैरयत्। ब्रह्मणोऽग्रे प्राप्तस्य तस्य लक्षणं शृणु ॥ ७२ ॥ ७५ ॥ विचारहीनः पिशाचवदनोऽधोमुखोऽशुद्धः, गतौ

१ भुवि २ मलिनं ३ कलहः

विचारहीनः पिशाचवदनोऽधोमुखोऽशुचिः ।
गच्छन्पदे पदे चापि प्रस्खलन्स खलप्रियः ॥ ७६ ॥
क्रूरो विरागरहितः कलहद्वेषसंयुतः ।
धृत्वा वामेन हस्तेन सुदृढं लिङ्गमात्मनः ॥ ७७ ॥
जिह्वां दक्षकरेणापि धृत्वा नृत्यन्मुदा तदा ।
दोषपूर्वैस्तुतिकरः पापैरपि समन्वितः ॥ ७८ ॥
प्रहसन्प्ररुदन्च्छैश्चचेष्टां मर्कटवच्चरन् ।
प्राहाग्रे ब्रह्मणः स्थित्वा किमाज्ञापयसीति तम् ॥७९॥
दृष्ट्वा पिशाचरूपं तं प्रहस्य विधिरब्रवीत् ।
कले किमर्थं हस्ताभ्यां जिह्वालिङ्गे त्वया धृते ॥ ८० ॥
स प्राह लिङ्गजिह्वाभ्यामेताभ्यां सकलाञ्जनान् ।
जेष्यामीति प्रतिज्ञातं स्वभावोऽयं मम प्रभो ॥ ८१ ॥
जैह्व्यौपस्थ्यसुखासक्त्या जेष्यामीत्यत एव मे ।
जिह्वालिङ्गे धृते क्वापि न बिभेमि स्वभावतः ॥ ८२ ॥

पदे पदे स्खलनयुक्, क्रूरो, विरागहीनः, कलहद्वेषयुक्, वामहस्तेन लिङ्गं दक्षिणेन जिव्हां च धृत्वा मुदा नृत्यन्दोषपूर्वस्तुतिकरः पापयुक्, हसन् रुदन्मर्कटवच्चेष्टां चरन्ब्रह्मणोऽग्रे स्थित्वा किमाज्ञापयसीत्याह । ॥ ७६ ॥ ७९॥ पिशाचाभं तं दृष्ट्वा ब्रह्माऽऽह । किमर्थं लिङ्गजिव्हे धृते इति ॥ ८० ॥ कलिराह । लिङ्गजिव्हाभ्यां सर्वजनाञ्जेष्यामीति प्रतिज्ञातम् । अयं मे स्वभावः ॥८१॥८२॥ ब्रह्मोवाच । कञ्चित्कालं भुवं गत्वा-

---

१ पुनःपुनः २ ब्रह्माणं ३ जिव्हाभवं सुखं रसलंपटता उपस्थभवं सुखं ललनालंपटता.

इति श्रुत्वा कलेर्वाक्यं ब्रह्मदेव उवाच तम् ।
कञ्चित्कालं भुवं गत्वा प्रकाशं कुरु चात्मनः ॥ ८३ ॥

कलिः प्राह विधे भूमौ किमर्थं प्रेरयस्यहो ।
स्वभावं तेऽग्रतो वच्मि दुर्गुणानपि मे शृणु ॥ ८४ ॥

छेत्ताऽहं धर्मसेतूनां निस्त्रपोऽहं निरङ्कुशः ।
निद्राकलहशोकाद्याः सदा सन्ति ममाग्रतः ॥ ८५ ॥

परद्रव्यहरोऽन्यस्त्रीहरो मे भ्रातरौ मतौ ।
प्रपञ्चदम्भमात्सर्यकर्ता प्राणसखो मम ॥ ८६ ॥

यतयस्ते मम प्राणा दाम्भिका ये बका इव ।
स ममात्मा यश्छलेन भूतद्रोही जीवति ॥ ८७ ॥

नातः परं परं मित्रं मम जीवसमं विभो ।
ये पुण्यकारिणो लोकास्ते सर्वे मम शत्रवः ॥ ८८ ॥

ऽऽत्मानं प्रकाशय । कलिराह किमर्थं मां प्रेरयासि । मत्स्वभावं दुर्गुणांश्च शृणु ॥ ८३॥८४॥ अहं धर्मच्छेत्ता निस्त्रपो निरंकुशो निद्राकलहशोकाद्या मेऽग्रतः सन्ति । परस्त्रीद्रव्यहरौ मे भ्रातरौ । प्रपञ्चदम्भमात्सर्यकर्ता मे प्राणसखः । बका इव दाम्भिका यतयस्ते मे प्राणाः । यश्छलेन भूतद्रोही स ममात्मा ॥ ८९ ॥ ८७ ॥ एभ्यः परं मम जीवसमं मित्रं न । ये पुण्य-

१ मे दुर्गुणान् वच्मि तान् शृणु २ निर्लज्जः ३ बकवत् ध्याननिष्ठतया स्वार्थसाधनेनान्यवंचकाः ४ भूमौ.

ब्रह्मा प्राह ममादेशं कले धेहि स्वके गले।
कलौ युगे मनुष्याणां परमायुः शतं मतम् ॥ ८९ ॥

युगान्तरे तु बहुलं तपोनुष्ठानतस्तदा।
नृभिः कतिपयाहोभिः कष्टेनासादितं पदम् ॥ ९० ॥

एवं त्वयि न मर्त्यानामिह स्वल्पायुषां द्रुतम्।
भक्त्या परेशभजनमात्रेणापि कृतार्थता ॥ ९१ ॥

युगान्तरे नृणामायुर्बाहुल्याद्दीर्घकालतः।
तपोनुष्ठानसंसिद्धिः कष्टेन न तथा त्वयि ॥ ९२ ॥

ये ब्रह्मज्ञानिनः पुण्यकारिणो देवसेवकाः।
मा विघ्नं कुरु तेषां त्वं साहाय्यं कुरु शीघ्रद ॥ ९३ ॥

इति श्रुत्वा विधेर्वाक्यं नमस्कृत्याब्रवीत्कलिः।
स्वामिन्ये कथिता लोकास्ते लोका मम वैरिणः ॥९४॥

कारिणः ते मम शत्रवः। ब्रह्मा प्राह। हे कले ममाज्ञां धारय। कलौ नृणां शतवर्षमायुः ॥ ८९ ॥ युगान्तरे बह्वायुः तदा नरैः कतिपयवर्षैः कष्टेन तपोऽनुष्ठानादिना मोक्षो लब्धः ॥ ९० ॥ एवं कले त्वयि न। इह स्वल्पायुषां शीघ्रमीश्वरभजनमात्रेणापि कृतकृत्यत्वं ॥ ९१ ॥ अन्ययुगेषु बह्वायुषां दीर्घकालेन कष्टेन च तपोऽनुष्ठानसिद्धिस्त्वयि न तथा ॥ ९२ ॥ ये ज्ञानिनः पुण्यकारिणो देवभक्तास्तेषा विघ्नं मा कुरु। हे शीघ्रफलद, कले, तेषा साहाय्यं कुरु ॥ ९३ ॥ इति श्रुत्वा कलिर्नमस्कृत्य प्राह। ब्रह्मन्ये कथितास्ते मम वैरिणः ॥ ९४ ॥ यत्र मम वैरिणस्तत्र कथं मम गतिः।

---

१ प्राप्तं २ कलौ संकल्पमात्रेण पुण्यसिद्धिर्न पापस्य.

यत्रेमे वैरिणस्तत्र क्षितौ मे गमनं कथम् ।
येषां श्रवणमात्राच्च बिभेमि भृशदुःखितः ॥ ९५ ॥
भूमण्डले विशेषेण खण्डे भारतसंज्ञके[1] ।
सन्ति पुण्यजना घ्नन्ति ते मां तत्र कथं गतिः ॥ ९६ ॥
इति श्रुत्वा कलेर्वाक्यं हसन्ब्रह्मा तमाह च ।
त्वं कालात्मानमाश्रित्य[2] कले तिष्ठाचलातले[3] ॥ ९७ ॥
छिनत्ति स्वगुणेनैष[4] सर्वेषां धर्मवासनाम् ।
पुण्यात्मनोऽपि महतो भवेत्पापे मतिस्ततः ॥ ९८ ॥
कलिः प्राह शृणु ब्रह्मन्वैरिणो मे विशेषतः ।
भूमण्डले सुविमले तीर्थादौ निवसन्ति ये ॥ ९९ ॥
ये शिवोपासका विष्णुध्याननिष्ठाश्च धार्मिकाः ।
उपद्रवन्ति मां ते तु तेषु मे न कृपा भवेत् ॥ १०० ॥

येषां श्रवणेनापि दुःखितोऽहं भृशं बिभेमि ॥ ९५ ॥ भूमण्डले तत्रापि भरतखण्डे पुण्यजनाः सन्ति, ते मां घ्नन्ति । कथं तत्र मे गतिः ॥ ९६ ॥ इति श्रुत्वा हसन्ब्रह्मा प्राह । त्वं कालात्मानं अङ्गीकृत्य भूतले चिरं तिष्ठ । स स्वगुणेन सर्वेषां धर्मवासनां छिनत्ति । ततः पुण्यवतोऽपि पापे मतिर्भवेत् ॥ ९७ ॥ कलिः प्राह । भो ब्रह्मन् । विशेषतो मम वैरिणः शृणु । भूमण्डले तीर्थादौ ये वसन्ति ये शिवविष्णूपासकाः, धार्मिकाः, ते मामुपद्रवन्ति । तेषु न मम कृपा । अन्येऽपि वैरिणः ये गङ्गातीरस्थाः, धर्मरताः काशीवासिनश्च तीर्थाटनशीलाः, पुराणश्रवणदानरताः ध्याननिष्ठास्ते वैरिणः । ये शान्ता अदाम्भिकाः, पुण्यशीलास्तान्दृष्ट्वा मे कम्पो भवेत्

१ भरतवर्षे २ अंगीकृत्य ३ भूतले ४ कालात्मा.

अन्येऽपि वैरिणः सन्ति गङ्गातीरविहारिणः ।
वाराणसीवासिनो ये ये धर्मं तत्र कुर्वते ॥ १ ॥

तीर्थानि पर्यटन्तीह पुराणश्रवणादराः ।
ध्याननिष्ठा दानरता ये च ते मम वैरिणः ॥ २ ॥

येषां मनसि शान्तिस्ते वैरिणो मे प्रजापते ।
अदाम्भिकान्पुण्यशीलान्दृष्ट्वा मे वेपथुर्[1]भवेत् ॥ ३ ॥

नासाग्रदृष्टयो ये च जपानुष्ठानतत्पराः ।
दृष्ट्या दृष्ट्वाऽपि तान्प्राणा मम यास्यन्ति भाति मे॥

स्त्रीपुत्रस्नेहसम्बद्धा ये मायाजालवेष्टिताः ।
तेषामुपरि मे प्रीतिस्त इष्टाः परमा मम ॥ ५ ॥

दूषयन्ति श्रुतीः शास्त्रं भेदाद्धरिहरौ च ये ।
पश्यन्ति तौ द्विषन्तीह त आप्ताः परमा मम ॥ ६ ॥

भजन्ति ये हरिहरौ सर्वदा विजितेन्द्रियाः ।
ये रागद्वेषरहितास्तेभ्यो मम द[2]रः परः ॥ ७ ॥

॥९९॥१०३॥ नासाग्रदृष्टयो ये जपन्ति तान्दृष्ट्वा मम प्राणाः यास्यन्ति ॥ ४ ॥ स्त्रीपुत्रस्नेहबद्धाः मायाजालवेष्टितास्ते ममेष्टास्तदुपरि मे प्रीतिः ॥५॥ वेदशास्त्रदूषका हरिहरयोर्निन्दका भेददर्शकाश्च ते ममाप्ताः॥६॥ ये हरिहरभक्ताः जितेन्द्रिया रागद्वेषहीनास्तेभ्यो बिभेमि ॥ ७ ॥ ब्रह्मा प्राह ।

---

१ कंपः २ भयं.

ब्रह्मा प्राह कले भूमौ त्वत्प्रकाशो भविष्यति ।
गतिमात्रेण[1] ते लोका वर्तिष्यन्ते त्वदिच्छया ॥ ८ ॥
तेषां मध्ये पुण्यवन्तो भविष्यन्ति कचिन्नराः ।
मा विघ्नं कुरु तेषां त्वं सञ्चरैवं महीतले ॥ ९ ॥
इत्येतद्ब्रह्मणो वाक्यं कलिः श्रुत्वा करद्वयम् ।
सन्धाय स पुनः प्राह विनयावनतो विधिम् ॥ ११० ॥
स्वभावो मम दुर्वृत्तेः[2] कथमेवं भविष्यति ।
स्वामिन्धर्मेण तु कथं सङ्गतिर्मम मां वद ॥ ११ ॥
एवं कलेर्वचः श्रुत्वा प्रहस्य विधिरब्रवीत् ।
निवासोपायमवनौ[3] शृणु कालमलात्मक ॥ १२ ॥
त्वं कालमलसाहाय्यादधर्मस्य च गच्छ गाम् ।
ततो विज्ञातमार्गस्त्वं निर्भयं प्रचरिष्यसि ॥ १३ ॥
निर्मला ये जनाः क्वापि तव ते सन्तु वैरिणः ।
इष्टास्तव भविष्यन्ति ये नरा मलदूषिताः ॥ १४ ॥

कलौ भूमौ त्वत्प्रकाशो भविष्यति । ते गमनमात्राल्लोकास्तवेच्छया स्थास्यन्ति ॥ ८ ॥ तेषां मध्ये क्वचित्पुण्यवन्तो भविष्यन्ति । तेषां विघ्नं मा कुर्वेवं सञ्चर ॥ ९ ॥ इति श्रुत्वा कलिर्नत्वा पुनर्विनयेनाह । दुर्वृत्तेर्मे स्वभावः कथमेवं भविष्यति । कथं धर्मेण मम सङ्गतिः ॥ १० ॥ १११ ॥ ब्रह्मा प्रहस्य प्राह । हे कालमल कले निवासोपायं शृणु । त्वं अधर्मसाहाय्येन भुवं गच्छ । ततो लब्धमार्गः सन्निर्भयं सञ्चरिष्यसि । ये निर्मलास्ते त्वद्वैरिणः मलदुष्टास्तवेष्टा भविष्यन्ति ॥ १२ ॥ १३ ॥ १४ ॥ काश्चित्पुण्य-

१ गमनमात्रेण २ दुष्टा वृत्तिर्यस्य तस्य मम ३ भुवि.

एषां मध्ये नरः कश्चित्पुण्यंवांस्त्वां स जेष्यति ।
प्रायशो भूतले लोका भविष्यन्ति वशे तव ॥ १५ ॥
इति ब्रह्मवचः श्रुत्वा कलिर्नत्वाऽवदत्पुनः ।
एवं श्रुत्वाऽपि न मनः क्षमं गन्तुं क्षितिं मम ॥ १६ ॥
एवं कलेस्तु सकलं साशङ्कं नामधारक ।
श्रुत्वा वाक्यं विधिः प्राह सावधानमनाः शृणु ॥ १७ ॥
धैर्यं धृत्वा मनसि ये शुद्धा बुद्धाश्चरन्ति तान् ।
त्वद्दोषाः स्पर्शयिष्यन्ति न तथा लोभवर्जितान् ॥१८॥
ये सेवन्ते हरिहरावभेदेन गुरूनपि ।
ये काशीवासिनस्तेषु त्वद्दोषाः प्रभवो न हि ॥ १९ ॥
ये विप्रसेवका लोका ये मातापितृसेवकाः ।
कपिलागोऽर्चकास्तेषु त्वद्दोषाः प्रभवो न हि ॥१२०॥

वांस्त्वां जेष्यति । प्रायो लोकास्ते वशा भविष्यन्ति । इति श्रुत्वा नत्वा कलिः पुनराह । एवं श्रुत्वा मे मनो गन्तुं नोत्सहते ॥ १५ ॥ १६ ॥ एवं साशङ्कं कलेर्वचः श्रुत्वा ब्रह्माऽऽह । हे नामधारक तत् शृणु ॥ १७ ॥ धैर्यं धृत्वा ये शुद्धबुद्धाश्चरन्ति तान्निर्लोभांश्च त्वद्दोषा न स्पृशन्ति । अभेदेन ये हरिहरगुरुसेवकाः कपिलाधेन्वर्चकास्तेषां त्वद्दोषो न । ये काशीवासिनो ब्राह्मणमातृपितृसेवकास्तेषां त्वद्दोषो न । शैववैष्णवतुलसीपूजकान्मा पीडय गुरुसेवापुराणश्रवणस्वधर्मरतान् श्रुतिस्मृतिपुराणधर्मज्ञान्विशेषतो गुरुभक्तान्मा पीडय । कलिः प्राह । ब्रह्मन्को गुरुः, किंस्वरूपः, तन्मे कथय । इति श्रुत्वा प्रसन्नो ब्रह्मा प्राह । कले गुरुमाहात्म्यं वक्ष्यामि । शृणु ॥११८॥१२९

१ पुण्यवान् भवेत्सः २ समर्थ.

शैवान्वा वैष्णवान्वाऽपि तुलसीपूजकान्कले ।
मदाज्ञां शिरसा धृत्वा कदाप्येतान्न पीडय ॥ २१ ॥
गुरुसेवारतांश्चैव पुराणश्रवणादरान् ।
स्वधर्मनिरतांश्चैव कदाप्येतान्न पीडय ॥ २२ ॥
श्रुतिस्मृतिपुराणज्ञान्धर्मज्ञांश्च विवेकिनः ।
गुरुभक्तान्विशेषेण कले त्वं नैव पीडय ॥ २३ ॥
कलिर्जगाद भगवन्ब्रह्मन्मां वद को गुरुः ।
गुरुस्वरूपं कथय प्रसादाद्विस्तरेण मे ॥ २४ ॥
इति श्रुत्वा कलेर्वाक्यं ब्रह्मा प्राह प्रसन्नधीः ।
कले शृणु प्रवक्ष्यामि गुरुमाहात्म्यमुत्तमम् ॥ २५ ॥
गकारः सिद्धिदः प्रोक्तो रेफ[1]ः पापस्य दाहकः ।
उकारो विष्णुरव्यक्तस्त्रितयात्मा गुरुः स्मृतः ॥ २६ ॥
ग[2]णेशो व[3]ह्नियुक्तश्च वि[4]ष्णुना च समन्वितः ।
वर्णद्वयात्मको मन्त्रश्चतुर्वर्गफलप्रदः ॥ २७ ॥
गणेशसंज्ञो गकारो वह्निसंज्ञो रकारकः ।
विष्णुसंज्ञ उकारः स्यादेवं गुरुरिति स्फुटम् ॥ २८ ॥

गकारः सिद्धिदः रकारः पापदाहकः उकारो विष्णुर्गुरुस्त्रिमूर्तिः । गणेशाग्निविष्णुयुक्तः द्विवर्णमंत्रश्चतुर्वर्गप्रदः । गकारो गणेशसंज्ञः रकारो वह्निसंज्ञः विष्णुरुकारसंज्ञ एवं गुरुः ॥२६॥२७॥ २८ ॥ गुरुर्माता पिता शिवश्च ।

१ रकारः २ गकारः ३ रकारः ४ उकारेण.

गुरुः पिता गुरुर्माता गुरुरेव परः शिवः ।
ईश्वरो यदि कुप्येत गुरू रक्षति तं तदा ॥ २९ ॥

यदा कदाचिच्छिष्याय गुरुः कुप्येत दैवतः ।
परिरक्षितुमीशानस्तं[1] न शक्नोति सर्वथा ॥ १३० ॥

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो[2] महेश्वरः ।
गुरुरेव परं ब्रह्म तस्माद्गुरुमुपाश्रयेत् ॥ ३१ ॥

ब्रह्मत्वेनोत्पादकत्वादविद्यादेश्च तारणात् ।
भवसंहारकत्वाच्च गुरुस्त्र्यात्मा तमाश्रयेत् ॥ ३२ ॥

हरौ प्रसन्नेऽपि हि वैष्णवा जनाः सम्प्रार्थयन्ते गुरुभक्तिमव्ययाम् ।
गुरौ प्रसन्ने जगतामधीश्वरो जनार्दनस्तुष्यति सर्वसिद्धिदः ॥३३॥

यदि प्रसन्न ईशानः सद्गुरुर्नैव तुष्यति ।
गुरौ प्रसन्न आसन्न[3] ईशानस्तस्य धीमतः ॥ ३४ ॥

ईश्वरे कुपिते गुरुस्त्राता । कदाचित् गुरौ कुपिते न कोऽपि त्रातुं शक्यः ॥ २९ ॥ ३० ॥ गुरुर्ब्रह्मा विष्णुरीशश्च गुरुरेव परं ब्रह्मोपास्यं ॥ ३१ ॥ ब्रह्मत्वेनोत्पादनात् अज्ञानादितारणाद्भवसंहाराच्च त्रिमूर्त्यात्मा गुरुः ॥३२॥ विष्णौ प्रसन्नेऽपि भक्ता गुरुभक्तिं याचन्ते । गुरौ प्रसन्ने सर्वसिद्धिदो विश्वेशस्तुष्यति ॥ ३३ ॥ ईशे तुष्टे गुरुर्न तुष्यति । गुरौ तुष्टे ईश्वरः

---

१ शंकरः २ जीवभावं निरस्य ब्रह्मरूपेणोत्पादकत्वात् ब्रह्मा, अविद्या-कामकर्मनिवारणात्पालको विष्णुः, संसारसंहारकत्वात् रुद्रः, एवं गुरुर्ब्रह्म-विष्णुशिवात्मकः ३ समीपः.

अत एव गुरुं भक्त्या शास्त्रमार्गेण यो भजेत् ।
स ज्योतीरूपभाक्तीर्थव्रतयोगतपोऽर्थभाक् ॥ ३५ ॥

वर्णाश्रमवृषाचारसद्विवेकक्रियापथम् ।
भक्तिं विरक्तिं मुक्तिं च तस्य दर्शयते गुरुः ॥ ३६ ॥

इति श्रुत्वा विधेर्वाक्यं पप्रच्छ प्रणतः कलिः ।
सर्वदेवसमानोऽसौ कुतो जातो गुरुर्वद ॥ ३७ ॥

ब्रह्मा तमाह वक्ष्यामि विस्तरेण यथातथम् ।
शृणुष्वैकाग्रचित्तेन पारोऽलभ्यो गुरुं विना ॥ ३८ ॥

गुरुं विना न श्रवणं भवेद्यस्यापि कस्यचित् ।
विना सच्छास्त्रवणात्त्वद्भयान्मुच्यते कथम् ॥ ३९ ॥

गुरोर्विना न श्रवणं स्वबुद्ध्या तत्त्वतो भवेत् ।
शास्त्राणि सुलभान्येव श्रवणे सुलभे सति ॥ १४० ॥

स्वाधीनः स्यात् ॥ ३४ ॥ ततः शास्त्रतः यो भक्त्या गुरुं भजेत् स तीर्थ-व्रततपोयोगमोक्षभाक् ॥ ३५॥ गुरुर्वर्णाश्रमधर्माचाराक्रियाविवेकभक्तिवैराग्य-मुक्तिमार्गदर्शयिता ॥ ३६ ॥ इति श्रुत्वा कलिः पप्रच्छ गुरुः सर्वदेववरः कुतो जातः ॥ ३७ ॥ ब्रह्मा प्राह । विस्तरेण वक्ष्ये । ऐकाग्र्येण शृणु । गुरुं विना पारो न लभ्यः ॥३८॥ गुरुं विना कस्यापि श्रवणं न । श्रवणं विना कथं भयमुक्तिः । गुरुं विना स्वबुद्ध्या श्रवणे शास्त्राणि सुलभानि ॥ ३९ ॥४०॥ शास्त्रतत्त्वे ज्ञाते स्वतः संसारान्मुक्तिः मैवं । तस्मादुपदेष्टा

१ ब्रह्म २ धर्मः ३ मोक्षः.

शास्त्रतत्त्वेऽवबुद्धे तु संसारतरणं स्वतः ।
गुरुः प्रकाशकस्तस्माज्ज्योतीरूपप्रदर्शकः ॥ ४१ ॥

गुरुसेवनया सर्वसिद्धिर्जाता पुरा कले ।
गुरुशिष्यकथामेतामभिधास्यामि[1] ते कले ॥ ४२ ॥

पुरा गोदावरीतीर आश्रमोऽङ्गिरसो महान् ।
नानावृक्षलताकीर्णः पुण्यारण्यमृगान्वितः ॥ ४३ ॥

यत्र ब्रह्मर्षिमुख्यास्तु सुव्रतास्तपसि स्थिताः ।
तत्रैको वेदधर्माख्यः पैलपुत्रो द्विजोत्तमः ॥ ४४ ॥

तच्छिष्यास्तत्परा आसञ्श्रुतिसच्छास्त्रपाठकाः ।
तेषां मध्ये दीपकाख्यः शिष्याग्र्यो[2] वेदधर्मणः ॥४५॥

वेदधर्माऽपि तद्भावपरीक्षायै कदाचन ।
शिष्यान्समस्तानाहूय सन्तोषेणाभिनन्द्य तान् ॥ ४६ ॥

स गुरुः प्राह भोः शिष्याः किञ्चित्पृच्छामि वोऽधुना ।
यदि वोऽस्ति मयि प्रीतिर्मद्वाक्यं शृणुताधुना ॥ ४७ ॥

गुरुर्ब्रह्मदर्शकः । गुरुसेवनया सर्वसिद्धिर्जातेत्यत्र गुरुशिष्यकथां शृणु । पुरा गोदातीरेंऽगिर आश्रमे पुण्यारण्यनानावृक्षमृगान्विते सुव्रता ब्रह्मर्षयः स्थिताः तत्र वेदधर्माख्यः पैलपुत्र आस ॥ ४१ ॥ ४४ ॥. तत्परास्तच्छिष्याः श्रुतिशास्त्रपाठकाः तेषां मध्ये शिष्याग्र्यो दीपकाख्यः ॥ ४५ ॥ तद्भक्तिं ज्ञातुं तं शिष्यमाहूय गुरुः सन्तोषेणाह ॥ ४६ ॥ भोः शिष्याः । किंचिद्वः पृच्छामि । यदि मयि प्रीतिरस्ति तर्हि मद्वाक्यं शृणुत ॥ ४७ ॥ शिष्या

---

१ वक्ष्यामि २ मुख्यशिष्यः

शिष्या ऊचुर्गुरो स्वामिन्नस्माकं तारको भवान् ।
शिरसाऽङ्गीकरिष्यामो भवदाज्ञां न संशयः ॥ ४८ ॥

गुरुवाक्यातिचारी स रौरवं नरकं व्रजेत् ।
गुरुवाक्यमकुर्वाणो मायासिन्धौ स मज्जति ॥ ४९ ॥

ततो न विन्दति गतिं दुर्गतिं याति सोऽधमः ।
तारको गुरुरेवातो भक्तस्य श्रुतिसम्मतः ॥ १५० ॥

इति श्रुत्वा वचस्तेषां वेदधर्मातिहर्षितः ।
दीपकप्रमुखाञ्छिष्यानिदं वचनमब्रवीत् ॥ ५१ ॥
शिष्याः शृणुत मे वाक्यमस्ति पूर्वार्जितं मम ।
जन्मान्तरसहस्रेषु महापापं तु यत्कृतम् ॥ ५२ ॥
तपोऽनुष्ठानधर्मेण बहु प्रक्षालितं मया ।
प्रारब्धमवशिष्टं न नश्येद्भोगं विना तु तत् ॥ ५३ ॥
तपसोपेक्षितमपि मोक्षविघ्नकरं भवेत् ।
उपेक्षा नैव कर्तव्या घोरपापस्य भाति मे ॥ ५४ ॥

ऊचुः । भवान्नः तारकः भवदाज्ञां शिरसांगीकरिष्यामः ॥ ४८ ॥ गुरुवाक्योल्लङ्घनाद्रौरवो नरकः । गुरुवाक्यमकुर्वाणा मायाब्धौ मज्जन्ति ॥ ४९ ॥ ततो नोर्ध्वगतिरधोगतिरेव । तस्माद्भक्तस्य गुरुस्तारकः ॥ ५० ॥ इति श्रुत्वा हृष्टो गुरुः दीपकादिशिष्यानाह । मद्वाक्यं शृणुत । जन्मांतरसहस्रेषु पूर्वमर्जितं महापापमस्ति ॥ ५१ ॥ ५२ ॥ तपोऽनुष्ठानधर्मैर्बहु क्षालितं । शिष्टं प्रारब्धं भोग्यमेव । तपसोपेक्षितं चेन्मोक्षविघ्नकरं । अतः घोरपापस्योपेक्षा न कर्तव्या ॥ ५३ ॥ ५४ ॥ स्वदेहेन न भुक्तं चेत्तत्र ... नरेत् अतस्तन्नि-

स्वदेहेन न भुक्तं चेन्न भवेत्तस्य निष्कृतिः ।
इति निश्चित्य मनसा तद्भोगार्थं समुद्यतः ॥ ५५ ॥
निष्कृत्यर्थं[1] हि पापस्य यास्ये वाराणसीं पुरीम् ।
भोक्ष्येऽघं[2] तत्र युष्माभी रक्षा कार्या प्रयत्नतः ॥ ५६ ॥
सर्वपापक्षयकरी पुरी वाराणसी श्रुता ।
पुराणादौ भवन्तोऽतो मां नयन्त्वविलम्बितम् ॥ ५७ ॥
शिष्याणामत्र युष्माकं कः समर्थोऽवने[3] मम ।
कोऽङ्गीकरिष्यति वचो दुःखोदर्कं[4] वदन्तु माम् ॥५८॥
इति श्रुत्वा गुरुवचो गुरुसेवाविशारदः ।
तेषां मध्ये दीपकाख्यः सच्छिष्यो गुरुसम्मतः ॥५९॥
गुरुं नत्वाऽवदत्स्वामिन्निजपापं न शेषयेत् ।
देहनाशकराघस्य शीघ्रं कार्या प्रतिक्रिया ॥ १६० ॥
वेदधर्माऽवदच्छिष्य यावद्देहो दृढो नृणाम् ।
तावत्पापक्षयः कार्यो भवेदग्रे विषोपमः ॥ ६१ ॥

ष्कृत्यर्थं वाराणसीं गत्वा पापं भोक्ष्ये। तत्र प्रयत्नात् युष्माभी रक्षणं कार्यं ॥ ५५ ॥ ५६ ॥ सर्वपापहंत्री वाराणसी पुराणप्रसिद्धा तां मां शीघ्रं नयत ॥ ५७ ॥ युष्माकं मध्ये मद्रक्षणे कः समर्थः। दुःखोत्तरं मद्वचः कोंगीकरिष्यति ॥ ५८ ॥ इति श्रुत्वा गुरुसेवापरो गुरुमान्यः सच्छिष्यो दीपकः गुरुं नत्वा प्राह। भोः स्वामिन्पापशेषो न स्थापितव्यः। शीघ्रं प्रतिक्रिया कार्या। गुरुराह सत्यमेव यावद्देहो दृढस्तावत्क्षयः कार्योऽन्ते पापं विषवद्भवेत् ॥ ५९ ॥ ६१ ॥ तीर्थसेवाकृच्छ्रप्रायश्चित्तादिना स्वदेहे रोगा भोगेन

---

१ शुद्ध्यर्थं २ पापं ३ रक्षणे ४ उत्तरकालं.

तीर्थसेवाऽथवा प्रायश्चित्तं कृच्छ्रादिकं महत् ।
रोगादिभोगो देहेन नान्यथा पापनिष्कृतिः ॥ ६२ ॥
स्वयमेवात्मनः पापं भोग्यं देवोऽथवा ऋषिः ।
ज्ञानी वाऽपि न शक्नोति त्यक्तुं भोगं विनैव तत्[1]॥६३॥
दीपकः स्वगुरुं प्राह यदुक्तं सत्यमेव तत् ।
शक्त्या सेवां करिष्यामि स्वामिन्नाज्ञप्तुमर्हसि ॥ ६४॥
दीपकस्य वचः श्रुत्वा वेदधर्मा तमब्रवीत् ।
गलत्कुष्ठी भविष्यामि पङ्गुरन्धश्च पापतः ॥ ६५ ॥
एकविंशतिवर्षाणि गलत्कुष्ठं भविष्यति ।
ईदृशं रक्षितुं शक्तश्चेदङ्गीकुरु पुत्रक ॥ ६६ ॥
दीपकः प्राह कुर्वेऽहं भवत्पापस्य निष्कृतिम् ।
एकविंशतिवर्षाणि कुष्ठो[2]ऽन्धोऽपि भवाम्यहम् ॥ ६७॥
भवत्पापक्षयं स्वामिन्करिष्ये मम वर्ष्मणा[3] ।
स्फुटमाज्ञापयेत्युक्त्वा भक्त्या तच्चरणेऽग्रहीत् ॥ ६८ ॥

च पापनिष्कृतिर्नान्यथा ॥ ६२ ॥ स्वपापं स्वयं भोग्यं । देवर्षिज्ञानिनामपि भोगं विना न पापलयः ॥ ६३ ॥ दीपक आह । सत्यमेव शक्त्या सेवां करिष्ये स्वामिन् आज्ञापय ॥ ६४ ॥ गुरुराह । अहं पापेन गलत्कुष्ठी पंगुरंधश्च भविष्यामि ॥ ६५ ॥ हे पुत्रक ईदृशं मां एकविंशतिवर्षपर्यन्तं रक्षितुं शक्तश्चेदङ्गीकुरु ॥ ६६ ॥ दीपक आह । भवत्पापक्षयार्थं तावत्कालं अहमेवान्धः कुष्ठी च स्यां । भवत्पापक्षयं स्वदेहेन करिष्ये । मामाज्ञापयतु

१ पापं  २ कुष्ठमस्यास्तीति कुष्ठः अर्श आदित्वान्मत्वर्थीयोऽच्
३ देहेन.

इति श्रुत्वा वचस्तस्य वेदधर्मा महामुनिः ।
प्रहृष्टस्तं पुनः प्राह गतिं पापस्य मे शृणु ॥ ६९ ॥
स्वयमेवात्मनः पापं भोक्तव्यं खलु शिष्य तत् ।
स्वशिष्यादिप्रतिनिधिद्वारा पापक्षयो न हि ॥ १७० ॥
अत एवाहमेवाघं मम भोक्ष्ये स्ववर्ष्मणा ।
एकविंशतिवर्षाणि रक्ष मां यदि रोचते ॥ ७१ ॥
यः पीड्यतेऽत्र रोगेण तत्कष्टादधिकं खलु ।
सेवकस्यापि कष्टं तत्[1]त्वं भविष्यसि कष्टभाक् ॥ ७२ ॥
इदं पूर्वं मयोक्तं ते भोक्ष्ये स्वाङ्गेन पातकम् ।
शक्तोऽसि चेत्पुरीं नीत्वा काशीं मां परिपालय ॥७३॥
अहं तवोपकारेण काश्यां भुक्त्वा स्वपातकम् ।
भूत्वा विपापो यास्यामि शाश्वतं पदं[2]मव्ययम् ॥ ७४ ॥
दीपकः स्वगुरुं प्राह त्वां नेष्येऽवश्यमेव ताम् ।
काशीं सेवां करिष्यामि विश्वनाथसमो भवान् ॥ ७५ ॥

भवानिति तच्चरणेऽग्रहीत्। तदा हृष्टो गुरुः पापगतिं प्राह। स्वयमेव स्वपापं भोग्यं। शिष्यादिद्वारा तन्नाशो न। अतोऽहमेव भोक्ष्ये। यदि रोचते तर्हि तावन्मां रक्ष। रोगिणोऽप्यधिकं सेवकस्य कष्टं तत्त्वं कष्टी भविष्यसि ॥ ६७ – ७२ ॥ इदं पूर्वमेवोक्तं। शक्तोऽसि चेत्काशीपुरीं नीत्वा मां सेवय। तवोपकारेण पापं भुक्त्वा विपापः सन्मुक्तिं यास्ये। दीपक आह भवंतं काशीं नीत्वा विश्वनाथवद्भवत्सेवां करिष्ये ॥ ७३ ॥ ७५ ॥ एवं गुरुसेवामंगीकृत्य

१ तस्मात्कारणात् २ ब्रह्म.

कले दृढमतिः शिष्यः सेवामाश्रुत्य तं गुरुम् ।
आदाय प्राप तां काशीं तारकां मणिकर्णिकाम् ॥७६॥

नीत्वा गुरुं कम्बलाश्वतरासन्नमवासयत् ।
वेदधर्मोऽपि सन्तुष्टस्तस्थौ भुञ्जन्नघं स्वकम् ॥ ७७ ॥

स्नात्वा महामुनिस्तत्र प्रणम्य मणिकर्णिकाम् ।
पूजयित्वा विश्वनाथं स्वारब्धं भोक्तुमारभत् ॥ ७८ ॥

गलत्कुष्ठाभिभूतः स नेत्रहीनोऽतिदुःखितः ।
वेदधर्माऽभवद्भक्त्या सिषेवे दीपकोऽपि तम् ॥ ७९ ॥

व्याप्तं कुष्ठेन सर्वाङ्गं तस्य पूयास्रदूषितम् ।
कृमयोऽप्यभवन्गात्रे स्मृतिर्नष्टाऽस्य दुःखतः ॥१८०॥

सन्दीपकोऽपि भिक्षित्वा गुरवेऽन्नं ददौ मुदा ।
विश्वनाथस्वरूपं तं मत्वा भक्त्याऽभिपूज्य च ॥ ८१ ॥

गुरुमादाय मणिकर्णिकां ययौ ॥ ७६ ॥ कंबलाश्वतरसमीपे गुरुं वासयामास । तुष्टो गुरुः स्वपापं भुञ्जन् मणिकर्णिकां नत्वा विश्वेशं सम्पूज्य पापं भोक्तुमारेभे ॥ ७७ ॥ ७८ ॥ गुरुर्गलत्कुष्टी दुःखितोऽन्धोऽभुत । दीपकस्तं सिषेवे । कुष्ठेन व्याप्तस्य तस्य पूयरक्तदुष्टेंगे कृमयोऽपतन् । दुःखात्स्मृतिर्निष्टा ॥ ७९ ॥ ८० ॥ शिष्योऽन्नं भिक्षित्वा गुरवे ददौ । विश्वनाथबुद्ध्या तमपूजयत् ॥ ८१ ॥ यथा रोगग्रस्ताः क्रूरा भवंति तथा

१ अंगीकृत्य २ निकटं.

रोगेण पीडिता लोके साधवोऽपि गतत्रपाः[1] ।
क्रूरा भवन्ति हि मुनिः शान्तोऽपि क्रूरतां गतः ॥८२॥
शिष्येण भिक्षितं[2] स्वन्नं[3] भक्त्या दत्तमपि द्विजः ।
न भुनक्ति क्षिपति कौ[4] स्वल्पं मत्वाऽतिकोपनः ॥८३॥
अपरेऽहनि शिष्येण बह्वन्नं हि समाहृतम्[5] ।
किञ्चिज्जग्ध्वा[6]ऽत्यजत्कोपान्न मिष्टं नेष्टमित्यसौ ॥ ८४ ॥
पक्वान्नानि सुमिष्टानि कस्मान्मह्यं न दास्यसि ।
इति क्रुद्धो ययाचे तं शाकपाकाद्यनेकशः ॥ ८५ ॥
अपरेऽहनि भिक्षित्वा तथैवाहृतमप्यसौ ।
शिष्यायाशिववाक्यानि[7] जगादाताडयच्च तम् ॥ ८६ ॥
कदाचित्तु गुरुः प्रीतः प्राह शिष्यशिखामणे ।
ज्ञानराशे मन्निमित्तमनुभूतमकं[8] त्वया ॥ ८७ ॥
सद्योऽपि पुनरप्याह त्वं मां व्यथयसि[9] द्रुतम् ।
गच्छ शश्वत्पूतिगन्धि[10]क्षालनं न करोष्यतः ॥ ८८ ॥

शांतोऽपि स मुनिः क्रूरोऽभूत् ॥ ८२ ॥ शिष्येण भक्त्या दत्तं भिक्षान्नं स्वल्पं मत्वा कोपेन गुरुस्तत्याज ॥ ८३ ॥ ततः शिष्येणानीतं बह्वन्नं तत्किंचिज्जग्ध्वा नेदमिष्टं, पक्वान्नानि शाकादि च कस्मान्न दास्यसि ॥ ८४ ॥ ८५ ॥ इति श्रुत्वा तथैवानीतमपि दोषदृष्ट्या त्यक्त्वा गालीं दत्वाऽताडयत् ॥ ८६ ॥ कदाचित्प्रीतो गुरुः प्राह । भोः शिष्यशिखामणे ज्ञानराशे मन्निमित्तं कष्टं भुक्तं ॥ ८७ ॥ सद्य एवाह । दुर्गंधक्षालनादि न करोषि । मां व्यथयसि । शीघ्रमितो गच्छ ॥ ८८ ॥ मक्षिकास्तुदंति ।

---

१ निर्लज्जाः २ भिक्षालब्धं ३ शोभनान्नं ४ भुवि ५ आनीतं ६ भुक्त्वा ७ गालिप्रदानलक्षणानि ८ दुःखं ९ पीडयसि १० दुर्गंधं.

तुंदन्ति[1] मक्षिकास्ताः किं न वारयसि दीपक ।
इति श्रुत्वा तथोद्युक्तं[2] प्राह भिक्षां न रासि[3] किम् ॥८९॥
इति पापोत्थरोगेण पीडितः स गुरुस्तदा ।
विपरीतं वचः प्राह पापस्य हि गतिस्त्वियम् ॥१९०॥
अधिकं पातकं तत्र दैन्यमात्सर्यदुष्टताः ।
वसन्ति पापरूपी स न जानाति शुभाशुभम् ॥ ९१ ॥
यो दैन्येनातिदुःखेन पीडितो भाषतेऽन्यथा ।
उन्मत्तवत्स विज्ञेयः पापरूपी न संशयः ॥ ९२ ॥
कुष्ठान्यष्टादश रुजां[4] दुःखदानि च तेषु तु ।
गलत्कुष्ठं महाकष्टं यतोऽयं मुनिरीदृशः ॥ ९३ ॥
तथाऽपि तस्य दोषान्स शिष्यो नाधात्स्वमानसे ।
मत्वेश्वरं सिषेवे तं भर्त्सितो वारितोऽपि सः ॥ ९४ ॥
यथा यथा याचतेऽस्मै भिक्षित्वाऽदा[5]त्तथा तथा ।
यथेश्वरो महाविष्णुस्तथाऽसावित्यमन्यत ॥ ९५ ॥

ताः न निवारयसि । एवमुक्तस्तथाकरोत्तमाह । भिक्षां नानयसीति ॥८९॥ एवं पीडितो गुरुर्विपरीतमाह । इति पापगतिः ॥ ९० ॥ यत्राधिकं पापं तत्र दैन्यमात्सर्यदुष्टताः । पापी शुभाशुभं न वेत्ति ॥ ९१ ॥ यो दुःखदैन्यपीडितोऽन्यथा भाषते स पापी उन्मत्तवज्ज्ञेयः ॥ ९२ ॥ अष्टादशकुष्ठमध्ये गलत्कुष्ठं महाकष्टदं । यतो मुनिरीदृशोऽभूत् ॥ ९३ ॥ तथापि तद्दोषमविगणय्य भर्त्सितो वारितोऽपि तं विश्वेशं विष्णुं मत्वा शिष्योऽभजत् ॥ ९४ ॥ स यथा यथा याचते तथा तथा भिक्षित्वा ददौ ॥९५॥ काशी-

१ देहं त्रोटयंति २ उत्सुकं ३ न ददासि ४ रोगाणां मध्ये ५ दत्तवान्

नाचरत्तीर्थयात्रां स काशीक्षेत्रे वसन्नपि ।
गुरुसेवारतो देवयात्रार्थमपि नागमत् ॥ ९६ ॥
न देहरक्षणं चापि चक्रे गुरुपदाश्रितः ।
गुरुं त्रिमूर्तिं मत्वा स नित्यं नान्यमभाषत ॥ ९७ ॥
सोढ्वा[1]ऽपि निष्ठुरं वाक्यं गुरोः सन्तुष्टमानसः ।
यथा यथा मनस्तस्य चचार स तथा तथा ॥ ९८ ॥
एवं तं दीपकं सन्तं[2] सुप्रसन्नः पिनाकधृक्[3] ।
उपागत्याब्रवीद्वत्स प्रीतोऽस्मि वरयेप्सितम् ॥ ९९ ॥
सद्भक्ताहो[4] महाज्ञानिन् कुलदीपक दीपक ।
प्रसन्नोऽस्म्यधुनाऽभीष्टं वरं वरय सुव्रत[5] ॥ २०० ॥
सन्दीपक उवाचेश मृत्युञ्जय गुरुं त्विदम् ।
अपृष्ट्वा व्योमकेशाद्य[6] नादास्यामि वरं वरम्[7] ॥ १ ॥
इत्युक्त्वा स्वगुरुं गत्वा विनयावनतोऽब्रवीत् ।
विश्वनाथः प्रसन्नो मे वरं दातुमुपागतः ॥ २ ॥

क्षेत्रे वसन्नपि गुरुसेवारतः शिष्यः तीर्थदेवयात्रां नाचरत् ॥ ९६ ॥ गुरुसेवारतो देहरक्षामपि न चक्रे । गुरुं त्रिमूर्ति मत्वाऽन्यन्नावदत् ॥ ९७ ॥ निष्ठुरमपि गुरुवाक्यं सोढ्वा तुष्टस्तदनुसारी अवर्तत ॥ ९८ ॥ एवं शिष्यं दृष्ट्वा प्रसन्नो विश्वेश उपेत्य हे वत्स सद्भक्त महाज्ञानिन् कुलदीपक प्रसन्नोऽस्मि । हे सुव्रताभीष्टं वरय ॥ ९९ – २०० ॥ दीपक उवाच । हे ईश । गुरुं अपृष्ट्वा वरं न गृह्णामीत्युक्त्वा गुरुं गत्वा विनयेनाह । विश्वनाथः प्रसन्नो भूत्वा वरं दातुमागतः ॥ १ ॥ २ ॥ भवदाज्ञा चेद्रोगशांतये वरं

---

१ सहनं कृत्वा २ वर्तमानं ३ शिवः ४ अहो सद्भक्त ५ शोभनं गुरुसेवालक्षणं व्रतं यस्य ६ हे शिव ७ श्रेष्ठं.

यद्याज्ञा भवतो रोगशान्तयेऽथ ततो वरम् ।
आदास्ये तद्वरादेव रोगशान्तिर्भविष्यति ॥ ३ ॥

इति दीपकवाक्यं स श्रुत्वा क्रुद्धोऽब्रवीन्मुनिः ।
श्रान्तोऽसि किं न सम्प्रार्थ्यो व्याधिशान्त्यै ममेश्वरः ॥

विना भोगेन शिष्यात्र न निवर्तेत पातकम् ।
वरेण प्रतिबद्धं चेद्भोक्तव्यं तद्भवान्तरे ॥ ५ ॥

इति शास्त्रीह शास्त्रं तद्भोग्यमत्रैव जन्मनि ।
क्षालयित्वाऽपि चेच्छिष्टं पातकं मोक्षविघ्नकृत् ॥ ६ ॥

इति श्रुत्वा गुरोर्वाक्यं स शिष्यो दीपको गुरुम् ।
आज्ञा प्रमाणमित्युक्त्वा ययौ यत्रेश्वरः स्थितः ॥ ७ ॥
आगत्य प्राह विश्वेशं किं कर्तव्यं वरेण मे ।
मतो गुरोर्न मनसः स्वीकार्योऽद्य कथं वरः ॥ ८ ॥
इति श्रुत्वा व्योमकेशः प्राप्य निर्वाणमण्डपम् ।
देवानां शृण्वतां विष्णोरग्रे तत्प्राह विस्मितः ॥ ९ ॥

आदास्ये । ततो रोगशांतिर्भविष्यति ॥ ३ ॥ इति श्रुत्वा गुरुः क्रुद्ध आह । श्रांतोऽसि किं ? व्याधिशांत्यै नेशः प्रार्थ्यः ॥ ४ ॥ भोगं विना पापं न निवर्तते । वरेण प्रतिबद्धं चेज्जन्मान्तरे भोग्यं ॥ ५ ॥ इति शास्त्रादत्रैव जन्मनि भोग्यं न क्षालितं चेन्मोक्षविघ्नकरं तत् ॥ ६ ॥ इति श्रुत्वा आज्ञा प्रमाणमित्युक्त्वा दीपको विश्वेशमेत्य प्राह । वरेण किं । गुरवस्तु वरं न स्वीकुर्वंति ॥ ७ ॥ ८ ॥ इति श्रुत्वा विश्वेशो निर्वाणमंडपमेत्य तत्सर्वं देवसन्निधौ विष्णुं प्राह ॥ ९ ॥ विष्णुः प्राह । कः शिष्यः, को वा गुरुः,

उवाच शङ्करं विष्णुः कः शिष्यः को गुरुः कुह ।
निवासमेतयोर्ब्रूहि विस्मयो मेऽभवन्महान् ॥ २१० ॥
ईश्वरः प्राह तं विष्णुमाश्चर्यं दृष्टमद्य मे ।
दीपको बालकस्त्वेको गुरुभक्तिविशारकः ॥ ११ ॥
गोदावरीतीरवासी वेदधर्माख्यतापसः ।
तत्सेवानिरतोऽश्रान्तं दीपको भक्तिदीपकः ॥ १२ ॥
तत्तुल्यो नेक्षितो लोके गुरुभक्तिपरायणः ।
तं दृष्ट्वैव वरं दातुं जाता प्रीतिरतीव मे ॥ १३ ॥
विष्णो स वारयामास वरं दातुं गतं हि माम् ।
गुरुणाऽऽज्ञा न दत्ताऽतः परिभाव्य वरं जगौ ॥ १४ ॥
दिव्यकोटिसहस्राब्दांस्तपस्यन्ति महर्षयः ।
नक्तंदिवं सुकष्टेन संस्थितास्ते वरार्थिनः ॥ १५ ॥
तादृशांस्तापसान्योगीनुपेक्ष्य त्वं प्रसह्य[3] मे ।
कुतो दित्से[4] वरमिति स चोक्त्वा नाददे[5] वरम् ॥ १६ ॥
तनुं मनो वचस्तस्मै समर्प्य गुरवेऽनिशम् ।
सेवते दीपकः साक्षात्त्रिमूर्त्यात्मेति वीक्ष्य तम् ॥ १७ ॥

तयोः क्व निवासः मे महान्विस्मयः ॥ १० ॥ विश्वेश आहाद्याश्चर्यं दृष्टं । गोदावासिवेदधर्मतापसशिष्योऽश्रांतं गुरुभक्तिरतो दीपकोऽस्ति ॥ ११ ॥ १२ ॥ तत्तुल्यो गुरुभक्तो न दृष्टः ॥ १३ ॥ मया दीयमानेऽपि वरं परिभाव्य प्राह ॥ १४ ॥ बहुकालमहोरात्रं वरार्थिनो मुनयस्तपस्यांति तानुपेक्ष्य बलात्कारेण कुतो मे वरं दित्से इत्युक्त्वा न जग्राह । सदा तनु-

१ अनाहृत्य २ उवाच ३ हठादेव ४ दातुमिच्छसि ५ न स्वीचकार.

माता पिता सुराः सर्वे गुरुरेव ममेति सः ।
निश्चित्यानुदिनं प्रीत्या गुरुसेवारतोऽस्ति सः ॥ १८ ॥
तद्गुणान्कति वक्ष्यामि सोऽविद्याध्वांतदीपकः ।
गुरुसेवादरो नित्यं दीपकः कुलदीपकः ॥ १९ ॥
धर्मो ज्ञानं यशः सर्वं गुरुरेवेति निश्चितः ।
भेजे तच्चरणे प्रीत्या दीपकः कुलदीपकः ॥ २० ॥
इति विश्वेशवचनं श्रुत्वा शार्ङ्गधरो गुरुम् ।
शिष्यं यथा श्रुतं तं च त्वरयामास वीक्षितुम् ॥ २१ ॥
आगत्य दृष्ट्वा विश्वेशकथितादपि चाधिकम् ।
तस्य भक्तिप्रकारं स तुष्टोऽभूद्भक्तवत्सलः ॥ २२ ॥
विष्णुर्दीपकमाहूय हृषीकेशोऽवदत्तदा ।
तुष्टोऽस्मि गुरुभक्त्या ते वरं वरय सुव्रत ॥ २३ ॥
उवाच दीपको विष्णो का मद्भक्तिस्त्वयेक्षिता ।
किमर्थं मे हृषीकेश वरं दास्यस्यनिच्छते ॥ २४ ॥

मनोवाचस्तस्मै समर्प्य माता पिता सर्वे देवा गुरुरेव त्रिमूर्त्यात्मेति मत्वा प्रीत्या तत्सेवारतोऽभवत्। तद्गुणान्कति ब्रुवे। प्रीत्या गुरुसेवारतः सोऽज्ञानध्वांतदीपकः ॥१८॥१९॥ धर्मो ज्ञानं यशो गुरुरेवेति निश्चित्य कुलदीपकस्तत्पदेऽभजत् ॥२०॥इति श्रुत्वा विष्णुस्तं द्रष्टुं त्वरयामास ॥२१॥ तमेत्य च विश्वेशकथितादधिकां तद्भक्तिं दृष्ट्वा भक्तवत्सलस्तुष्टोऽभूत् ॥२२॥ विष्णुर्दीपकमाहूय प्राह। ते भक्त्या तुष्टोऽस्मि। वरं वरय ॥२३॥ दीपक आह। विष्णो, का मद्भक्तिर्दृष्टा। किमर्थं वरं दास्यसि। दिव्यकोटि-वर्षाणि मुनयो वने तपसि स्थिताः तानुपेक्ष्य तपोहीनाय मे वरं कुतो दित्से

मुनयो दिव्यकोटयब्दानरण्ये तपसि स्थिताः ।
तानुपेक्ष्य वरं दित्से तपोहीनाय मे कुतः ॥ २५ ॥

नारायण त्वद्भजनं न [1]मे कृतं नारायण त्वत्स्मरणं न मे कृतम् ।
नारायण [2]त्वन्न वरं वृणोम्यहं दातुं प्र[3]सह्यापि न योग्यता मम ॥

हरिः प्रगल्भां[4]मिति दीपकोक्तिमाकर्ण्य नारायण आप तुष्टिम् ।
तद्भक्तिसम्मोहनमोहिता[5]त्मा तं दीपकं प्राह जगद्धितात्मा ॥२७॥

त्वया निर्वाणपरमा गुरुभक्तिः कृता परा ।
तया तुष्टोऽस्मि सा भक्तिर्ममैव कुलदीपक ॥ २८ ॥

यो नरो गुरुभक्तोऽसौ मम भक्तो न संशयः ।
तदधीनोऽस्मि सततं दास्येऽभिलषितं वरम् ॥ २९ ॥

मद्भक्तास्तेऽपि विज्ञेया ये मातापितृसेवकाः ।
या पतिं भजते साध्वी साऽपि भक्ता ममैव हि ॥२३०॥

विज्ञेयः सोऽपि मद्भक्तो यो विद्वद्विप्रसेवकः ।
तपस्वियतियोगीशभजका भजका मम ॥ ३१ ॥

॥ २४ ॥ २५ ॥ हे नारायण, त्वद्भजनं मे न कृतं । स्मरणं च न कृतं । बलाद्दातुमपि मे न योग्यताऽतो नादास्ये ॥ २६ ॥ इति श्रुत्वा तद्भक्त्या तुष्टो नारायण आह । हे कुलदीपक, त्वया या गुरोः परमा भक्तिः कृता सा ममैव ॥ २७ ॥२८॥ तेन तुष्टोऽस्मि । यो गुरुभक्तः स ममैव भक्तः । तस्याधीनोऽहं तदभिलषितं दद्मि ॥ २९ ॥ ये मातापितृसेवकाः, या च साध्वी पतिसेवका, ये विद्वद्ब्राह्मणतपस्वियोगिभक्तास्ते ममैव भक्ताः

१ मया २ त्वत्तः ३ बलात्कारेण ४ प्रौढां ५ मनः

इति प्रगल्भवचनं विष्णोराकर्ण्य दीपकः ।
प्रणम्य तं विनीतोऽसौ प्राब्रवीच्छृणु सादरम् ॥ ३२ ॥
शृणु विष्णो हृषीकेश निश्चयो मनसो मम ।
वेदशास्त्रादिमीमांसादाता नो गुरुरेव हि ॥ ३३ ॥
गुरोस्तु[1] सर्वविज्ञानं ततोऽधीना[2]स्त्रिमूर्तयः ।
किं नोऽनन्[3]न्येन देवेन देवोऽस्माकं हि सद्गुरुः ॥३४॥
सर्वे देवाश्च तीर्थानि सत्यं सद्गुरुरेव नः ।
अस्माकं परमार्थोऽपि किं दूरे विद्यते वद ॥ ३५ ॥
सिद्धाश्च योगिनश्चापि ज्ञानिनो न गुरुं विना ।
येन ज्ञानं गुरोर्लब्धं सुदूरोऽस्येश्वरोऽस्ति किम् ॥३६॥
विष्णो त्वं यं वरं दित्से तं गुरुर्ना[4]पि दास्यति ।
गृहस्थं दूरतस्त्यक्त्वा कोऽन्वेष्टुं यात्यहो बहिः॥ ३७ ॥

॥३०॥३१॥ इति श्रुत्वा दीपको विष्णुं नत्वा सादरमाह । विष्णो ममायं निश्चयोऽस्माकं वेदशास्त्रादिदाता गुरुरेव ॥ ३२ ॥३३॥ गुरोः सकाशात्सर्वज्ञानं, ततस्त्रिमूर्तयोऽधीनाः । किं नोऽन्येन देवेनास्माकं देवो गुरुः ॥ ३४ ॥ सर्वे देवास्तीर्थानि च गुरुरेव । ततः परमार्थो दूरे विद्यते किं ॥ ३५ ॥ सिद्धा योगिनश्च गुरुं विना न ज्ञानिनः येन ज्ञानं लब्धं तस्येशो दूरः किं ॥ ३६ ॥ विष्णो, यत्त्वं दित्से तद्गुरुरपि दास्यति । गृहस्थं त्यक्त्वाऽन्वेष्टुं को बहिर्धावेत् ॥३७॥ एवं श्रुत्वा तुष्टो विष्णुराह । हे शिष्य-

---

१ गुरोः सकाशात् २ स्वाधीनाः ३ न विद्यतेऽन्यो गुरुर्यस्य सः ४ न दास्यति किं.

एवं सुहार्दो[1] स तु दीपकोक्तिं श्रुत्वा महाविष्णुरवाप तोषम् ।
तमब्रवीच्छिष्य[2]शिखामणे त्वं धन्योऽसि मे प्राणसखोऽसि बाल ॥
त्वद्भक्तिबद्धोऽस्म्यत आगतोऽस्मि वरं कमप्यंग वृणीष्व दास्ये ।
समागतः प्रागिह विश्वनाथो दातुं वरं चापि ततोऽहमाप्तः[3] ३९

वरं वृणीष्व तोषार्थमावयोरेकरूपयोः[4] ।
अभीष्टं ते प्रदास्यामि वशवर्ती तवास्म्यहम् ॥ २४० ॥
दीपकः प्राह भो विष्णो वरं दातुं यदीच्छसि ।
गुरौ ममाधिका भक्तिर्वर्धत्वस्युत्तरोत्तरम् ॥ ४१ ॥
गुरुस्वरूपविज्ञानं तद्भक्तिः प्रेमलक्षणा ।
भवत्वेवं वरो देयो नादेयोऽतः परः परः[5] ॥ ४२ ॥
इत्युक्त्वा पदलग्नोऽभूच्छार्ङ्गपाणिरुवाच तम् ।
सन्तुष्टोऽस्मि मम प्राणसखस्त्वं कुलदीपक ॥ ४३ ॥
विहिता[5] गुरुभक्तिर्या तेन तीर्णोऽसि पश्यसि ।
इहैव च परं ब्रह्म शृण्वन्यदपि दीपक ॥ ४४ ॥
धर्मेण लौकिकधिया परबुद्ध्याऽपि सद्गुरुम् ।
उत्कृष्टमनसा वाऽपि भज भक्त्या स्तुतिं कुरु ॥ ४५ ॥

शिखामणे त्वं धन्योऽसि । मे प्राणोऽसि ॥ ३८ ॥ पूर्वं त्वद्भक्त्या विश्वेश आगतोऽद्याहमागतः । आवामेकरूपौ । अहं ते वशः । मत्तोषार्थं वरं वरय ॥ ३९ ॥ ४० ॥ दीपक आह । गुरौ मम भक्तिरुत्तरोत्तरमधिका वर्धतु । गुरुज्ञानं प्रेमलक्षणा तद्भक्तिरेव दित्से चेत्तर्हि देयमित्युक्त्वा ननाम । तुष्टो विष्णुराह ॥ ४३ ॥ तथाऽस्तु । या गुरुभक्तिः कृता तेन तीर्णोऽसि । इहैव

---

१ शोभनः हार्दः हृद्गताभिप्रायो यस्यां तां २ हे शिष्य ३ प्राप्तः
४ विश्वेश्वरस्य मम च ५ अतःपरः परोऽपि वरो न स्वीकार्यः ५ कृता.

यदा यदा निजगुरुं त्वं भक्त्या स्तौषि दीपक ।
तेन तुष्टो भवामीह स्तुतिः साऽपि ममैव हि ॥ ४६ ॥
ये वेदपाठका लोका ये साङ्गश्रुतिचिन्तकाः ।
वेदान्तवाक्यरसिकाः पर्यवस्यन्ति सद्गुरौ ॥ ४७ ॥
वदन्ति वेदसिद्धान्ते ये परं ब्रह्म सद्गुरुम् ।
ते मत्प्रिया भज ततो गुरुं ते[1] देवता वशे ॥ ४८ ॥
गुरुरित्यक्षरद्वंद्वं केवलं सोऽमृतार्णवः ।
तस्मिन्क्षणं निमग्नस्य त्रितापा निर्दहन्ति किम् ॥ ४९ ॥
सद्गुरुस्मरणं यस्य चित्ते पूज्यः स सर्वतः ।
गुरुनामसुधापानं यस्य सोऽप्यमरो[2] भवेत् ॥ २५० ॥
यदा मम शिवस्यापि ब्रह्मणो ब्राह्मणस्य[3] वा ।
अनुग्रहो भवेन्नृणां लभ्यते सद्गुरुस्तदा ॥ ५१ ॥
मयाथर्वेश्वरेणापि दीयते ब्रह्मणा वरः ।
गुरुणा दीयते सोऽपि त्रिमूर्त्यात्मा गुरुस्ततः ॥ ५२ ॥

ब्रह्मानुभविष्यसि । त्वं धर्मेण लौकिकबुद्ध्या मनसा च गुरुं भज । यदा भक्त्या गुरुं स्तौषि तदाऽहं तुष्टः स्यां । सैव मे स्तुतिः । ये सांगसशिरस्कवेदपाठका गुरौ पर्यवस्यंति ये गुरुं ब्रह्म वदंति ते मत्प्रियाः । त्वं गुरुं भज । तवाधीना देवाः । गुरुरित्यमृताब्धिस्तत्र मग्नस्य न त्रितापदाहः । यच्चित्ते गुरुस्मरणं स पूज्यः । गुरुनामामृतपानं यस्य सोऽमरः ॥ ४४ ॥ ५० ॥ यदा मम ब्रह्मणो ब्राह्मणस्य वांनुग्रहो भवेत्तदा सद्गुरुर्लभ्यते ॥ ५१ ॥ अस्माभिर्यो वरो दीयते स गुरुणापि दीयतेऽतो गुरुस्त्रिमूर्तिः ॥ ५२ ॥

१ देवतास्तव वशवर्तिनः २ मुक्तः ३ ब्रह्मज्ञानसम्पन्नस्य.

इत्युक्त्वा दीपकं विष्णुर्जगाम स यथाऽऽगतः ।
कले शृणु महात्मानं विद्धि सद्गुरुसेवकम् ॥ ५३ ॥

एवं लब्धवरो विष्णोर्दीपको गुरुसम्मुखम् ।
आगत्य तं ननामाथ सर्वज्ञः प्राह तं गुरुः ॥ ५४ ॥

वद शिष्य हृषीकेशस्त्वया सम्भाषितः किल ।
किं ते ददौ त्वया किं वा याचितं हि मदात्मंहृत्[1] ॥५५॥

दीपकः प्राह तं दत्तो हृषीकेशेन मे वरः ।
अनिच्छतेऽपि हि भवत्पादभक्तिरचंश्चला[2] ॥ ५६ ॥

तात्पर्येण भवत्पादसेवा युष्मत्पदाब्जयोः ।
दृढभक्तिरिति स्वामिन्वरो मे विष्णुनाऽर्पितः ॥ ५७ ॥

इति शिष्यवचः श्रुत्वा सन्तुष्टः स गुरुस्तदा ।
प्रसन्नः प्राह सुचिरञ्जीव काशीपुरीं वस ॥ ५८ ॥

सिद्धयस्त्वद्वचोऽधीना निधयो द्वारि सन्तु ते ।
त्वदधीनो विश्वनाथो भूयात्सन्तोषतो मम ॥ ५९ ॥

इत्युक्त्वा विष्णुर्जगाम ॥ ५३ ॥ हे कले एवं महात्मा गुरुभक्तः गुरुमेत्य ननाम। सर्वज्ञो गुरुः प्राह। त्वया विष्णुः संभाषितः। किं याचितं ॥५४॥ ॥५५॥ दीपक आह । अनिच्छते ते निश्चला भवत्पदभक्तिर्दत्ता इति श्रुत्वा प्रसन्नो गुरुराह। चिरं जीव, काशीं वस, सिद्धयस्ते वाक्याधीनाः । ते द्वारि

---

१ मन्मनोऽप्याल्हादकं २ अचंचलभवत्पदभक्तिरूपो वरः

स्मरिष्यन्ति जना ये त्वां तत्कष्टं नाशमेष्यति ।
नन्दन्ति पुत्रदाराद्यैस्ते त्वत्स्मरणमात्रतः ॥ २६० ॥
इत्युक्त्वा दीपकं सोऽपि वेदधर्मा महामुनिः ।
विपापो विरजो दिव्यदेहस्तत्क्षणमाबभौ[1] ॥ ६१ ॥
परीक्षितुं शिष्यभावं बुद्ध्या कुष्ठीव[2] सोऽभवत् ।
यस्तापसो महाज्ञानी पापशंका कुतोऽस्य तु ॥ ६२ ॥
मुनिः काशीपुरीं यातो लोकानुग्रहकांक्षया ।
श्रीकाशीक्षेत्रमहिमा नैकजन्माघसङ्घहृत् ॥ ६३ ॥
इति दर्शितमेतेन[3] ये काशीवासतत्पराः ।
अधर्मनिरता वाऽपि नास्ति तेषां पुनर्भवः ॥ ६४ ॥
एवं श्रीमद्गुरुवरमहाशिष्यसत्कीर्तिरुक्ता
शीतक्ष्माभृत्पयउदधिजावल्लभौदार्ययुक्ता[4] ।
तिष्यायापि[5] प्रतिवचनतः पद्मजातेन चोक्ता
सूतेनाथो शुनकसुतमुख[6]र्षिभ्य एषाऽप्यनूक्ता[7] ॥ ६५ ॥

निधयश्च मत्संतोषाद्विश्वनाथोऽपि तवाधीनः । ये त्वां स्मरिष्यंति तेषां कष्टं न ते पुत्रदाराद्यैर्मोदिष्यंते ॥५८–६०॥ इत्युक्त्वा वेदधर्मा विपापो दिव्यदेहोऽभूत् । शिष्यपरीक्षार्थं कुष्टीवाभवत् । महाज्ञानी तापसस्तस्य कुतः पापशंका । स लोकानुग्रहेच्छया काशीं गतः । एवमनेकजन्माघहृत्काशीमहिमा । एवं गुरुणा दर्शितं अधर्मनिरतानामपि काशीवासिनां न पुनर्जन्म ॥६१–६४॥ एवं ब्रह्मणा कलये कथितं । तत्सूतेन शौनकादिभ्य उक्तं । कलिर्ब्रह्म-

१ शुशुभे २ वस्तुतो न कुष्ठी ३ मुनिना ४ शीतक्ष्माभृज्जावल्लभः शिवः पयउदधिजावल्लभो विष्णुः ५ कलये ६ शौनकः ७ पश्चादुक्ता.

एवं ब्रह्मवचो निशम्य स कलिर्नत्वा तदुक्तं मुदा
मूर्ध्नाऽऽधाय भुवं ततः स्म चरति[1] ब्रह्मोक्तवत्सर्वदा।
सिद्धः प्राह स नामधारक गुरौ यस्यास्ति भक्तिर्वरा
तीर्त्वाऽऽश्वेव[2] भवाम्बुधिं परगतिस्तेनैव लब्धाऽचिरात् ॥
यत्र कुत्र दृढा भक्तिर्यदा यस्य महात्मनः।
तत्र तत्र महादेवः प्रकाशमुपगच्छति ॥ ६७ ॥
भक्तिर्यस्य निजे गुरौ हरिहरब्रह्मात्मबुद्ध्या स्थिरा
यो वाचा मनसाऽनिशं सुवचसा संसेवते सोऽचिरात्।
ईशानुग्रहपात्रमेव भवति क्षिप्रं यथा दीपकः
श्रीशस्तद्वशवर्तितां चरति यः स्वीयेष्टधीदीपकः[3] ॥६८ ॥
गङ्गाधरस्य तनयो हि सरस्वतीति
ख्यातः प्रणम्य विनतोऽर्थयति[4] स्म सर्वान्।
श्रोतृच्छिशूक्तिवदिदं मम वाक्यमत्र
न्यूनं सुपूर्णमधुनाऽस्तु भवत्प्रसादात् ॥ २६९ ॥

वचः श्रुत्वा नत्वा तदाज्ञां शिरसा धृत्वा, भुवं गत्वा, तथाऽऽचरत्। हे नामधारक, गुरौ यस्य भक्तिः स शीघ्रं भवाब्धेः पारं यायात् ॥ ६६ ॥ यत्र यत्र दृढा भक्तिस्तत्र तत्र महादेवः प्रकाशं प्राप्नोति। यस्य ब्रह्मविष्णु-शिवबुद्ध्या गुरौ भक्तिर्यो वाङ्मनःकायैर्गुरुं भजते स ईश्वरानुग्रहपात्रः दीपक-वद्भवति। विष्णुरपि तदधीनः ॥ ६८ ॥ श्लो. गङ्गाधरस्य तनयो हि सरस्वतीति ख्यातः प्रणम्य विनतोऽर्थयति स्म सर्वान्॥ श्रोतृच्छिशूक्तिवदिदं मम वाक्यमत्र न्यूनं सुपूर्णमधुनाऽस्तु भवत्प्रसादात् ॥ २६९ ॥

---

१ चरति स्म भूतार्थे लट् २ आशु एव ३ स्वभक्तबुद्धिप्रकाशकः ४ प्रार्थयति.

(इति) श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्यगङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञितमहाराष्ट्रभाषान्वितगुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वतीयतिविरचितायां श्रीगुरुसंहितायां कलिब्रह्मसंवादान्वितसिद्धनामधारकसंवादाख्यो द्वितीयः (अध्यायः) ॥ आदितः श्लोकाः॥४१५॥

॥ इति चूर्णिकायां द्वितीयोऽध्यायः ॥ २ ॥

॥ इति द्वितीयोऽध्यायः ॥ २ ॥

---

## ।। अथ तृतीयोऽध्यायः ।। ३ ।।

श्रीगणेशाय नमः । श्रीगुरुदत्तात्रेयाय नमः ।

एवं सिद्धमुनेर्वाक्यं भक्तियुक्तं सविस्तरम् ।
श्रुत्वा सन्तोषमापन्नः प्राब्रवीन्नामधारकः ।। १ ।।

जय सिद्धमुने त्वं मे संसारार्णवतारकः ।
संशयो मे समुच्छिन्नो मनोगत इहाधुना ।। २ ।।

त्वत्तः सर्वं मया लब्धं मग्नोऽस्म्यानन्दसागरे ।
विज्ञातं परमं तत्त्वं मया तव मुखाद्गुरोः ।। ३ ।।

त्वन्मुखाद्गलितं पीत्वा सद्गुरोर्महिमामृतम् ।।
नानन्दो माति मे चित्ते भोःस्वामिंस्ते प्रसादतः ।। ४ ।।

तृतीयाध्यायसारसंग्रहश्लोकः ।

तृतीयेऽध्यायेऽम्भोऽनशनमिति मौनेः प्रथमतो-
म्बरीषोऽपाद्विष्णुव्रतहतिभिया वैष्णवमतः ।।
व्रजानेका योनीरिति शपति दुर्वाससि हरि-
स्तमादाच्छापं यन्निजसहनताऽभूच्छिखरिणी ।। १ ।।

श्रीगणेशाय नमः । एवं सविस्तरं सिद्धस्य वाक्यं श्रुत्वा सन्तुष्टो नामधारक आह ।। १ ।। भोः सिद्ध जय । त्वं संसारसिन्धुतारकोऽसि अद्य मे संशयश्छिन्नः ।। २ ।। त्वत्तः सर्वं लब्धं । आनन्दाब्धौ मग्नोऽस्मि । त्वत्तः परतत्त्वं ज्ञातं ।। ३ ।। त्वन्मुखाद्गलितं गुरुमहिमामृतं पीत्वा मच्चित्ते आनन्दो न माति ।। ४ ।। भवतः कुत्र वासः क्व वा ग्रासः कथय । तव दासो

कुत्रास्ति भवतो वासो ग्रासो वा कुत्र मे वद ।
दासोऽहं ते भवामीति कराभ्यां तत्पदेऽग्रहीत् ॥ ५ ॥
ततः सिद्धः कृपालुः स हृष्ट आलिंग्य तं मुदा ।
आशीर्भिरभिनन्द्याथ निजवृत्तान्तमब्रवीत् ॥ ६ ॥
यत्र यत्र गुरोर्वासो वासो मे तत्र तत्र च ।
ग्रासो ममापि सततं गुरुस्मरणमेव हि ॥ ७ ॥
महिमामृतपानं मे श्रीगुरोर्नित्यतृप्तिदम् ।
सदा संसेव्यते भक्त्या पश्येदं पुस्तकं शुभम् ॥ ८ ॥
भुक्तिर्मुक्तिः परार्थश्च वांछितं सकलं द्रुतम् ॥
श्रीसद्गुरोश्चरित्रस्य श्रवणादेव लभ्यते ॥ ९ ॥
धनार्थी चाक्षयधनं लभते श्रुतिमात्रतः[1] ॥
पुत्रपौत्रगवादींश्च तत्कामो ज्ञानमप्युत ॥ १० ॥
सप्ताहं यः शुचिर्भक्त्या पठेद्वा शृणुयादपि ॥
तन्मनोरथसिद्धिः स्यादपुत्रः पुत्रवान्भवेत् ॥ ११ ॥
ग्रहरोगादिपीडाऽपि न कदाऽपि भविष्यति ।
मुच्यते बंधनाद्बद्ध एतच्छ्रवणमात्रतः ॥ १२ ॥

भवामीति ननाम ॥ ५ ॥ ततः कृपालुः सिद्धस्तमालिंग्याऽऽशिषो दत्वा स्ववृत्तान्तमाह ॥ ६ ॥ यत्र यत्र गुरोर्वासस्तत्र तत्र मे वासः । गुरुस्मरणं मम ग्रासः ॥ ७ ॥ गुरुमहिमामृतपानं मे तृप्तिदं । भक्त्येदं पुस्तकं सेव्यते ॥८॥ भुक्तिर्मुक्तिर्वांछितार्थश्च श्रीगुरुचरित्रश्रवणादेव लभ्यते । यच्छ्रवणादक्षयधनं पुत्रगवादि ज्ञानं च लभ्यते ॥ ९ ॥ १० ॥ यः शुचिर्भूत्वा भक्त्या सप्ताहं पठेच्छृणुयाद्वा तन्मनोरथसिद्धिर्भवेत् । तत्र ग्रहरोगादिपीडा कदाऽपि न । यच्छ्रवणतो बद्धो बंधान्मुच्यते ॥ ११-१२॥ यो भक्त्या

१ श्रवणमात्रेण.

यः श्रृणोति नरो भक्त्या शतायुर्ज्ञानवान्भवेत् ।
ब्रह्महत्यादिपापानि नश्यन्ति श्रवणेन हि ॥ १३ ॥
इति सिद्धवचः श्रुत्वा नत्वा तं नामधारकः ।
प्राह स्वामिन्दयासिन्धो मां तारय भवाम्बुधेः ॥ १४ ॥
लब्धो ज्योतिर्मयः साक्षाद्गुरुमूर्तिस्त्वमेव मे ।
स्वामिन्गुरुचरित्रस्य श्रवणेच्छा ममापि हि ॥ १५ ॥
तृषिताय यथा मार्गे यथेष्टं दीयतेऽमृतम् ।
भवानपि तथा मेऽद्य चरितामृतपानदः ॥ १६ ॥
नैशं[1] तमो यथाऽपैति[2] सूर्यालोक[3]विलोकनात् ।
ममाज्ञानं तथाऽपेयाँ[4]च्चरितश्रवणाद्गुरोः ॥ १७ ॥
इत्थं समाकर्ण्य स नामधारकव्याहार[5]माश्वास्य स दुःखहारकः ।
दत्वाऽभयं तस्य करं प्रगृह्य तं निन्ये द्रुमं[6] सद्गुरुमूर्तिसेवितम् १८
अश्वत्थसंज्ञे किल कल्पवृक्षे ज्ञानप्रदे सद्गुरुसन्निधाने ।
स्वयं समासीन इमं[7] समीपे प्रीत्योपवेश्याथ जगाद सिद्धः १९

श्रृणोति स नरः शतायुर्ज्ञानवांश्च भवेत् । ब्रह्महत्यादिपापं श्रवणादेव नश्यति ॥१३॥ इति श्रुत्वा नामधारको नत्वाऽऽह । भोः स्वामिन्दयासिन्धो भवसागरात् मां तारय । त्वमेव साक्षाज्ज्योतिर्मयो गुरुर्लब्धः। भोः स्वामिन्ममापि गुरुचरित्रश्रवणेच्छा वर्तते । तृषिताय मार्गेऽमृतद इव मे चरितामृतपानदो भव ॥१४॥१५॥१६॥ सूर्योदये यथा सर्वथा तमो विनश्यति तथा गुरुचरित्रश्रवणान्ममाज्ञानं नष्टं ॥ १७ ॥ एवं श्रुत्वा सिद्धस्तमाश्वास्याभयं दत्वा गुरुमताश्वत्थस्याध उपविश्य तं चोपवेश्य प्रीत्या जगाद ॥ १९ ॥

१ निशि भवं २ गच्छति ३ द्योतः ४ गंतुं शक्नुयात् ५ वचनं ६ अश्वत्थवृक्षं ७ नामधारकं.

श्रृणु शिष्य दृढा भक्तिरज्ञानस्य न ते गुरौ ।
संशयाविष्टचित्तत्वाच्चिन्ताक्लेशादि तेऽभवत् ॥ २० ॥
आधत्ते दृढभक्तिं यः सदाचारो नरो गुरौ ।
स जानीयाद्गुरो रूपं स एवाभीष्टभाग्भवेत् ॥ २१ ॥
इति श्रुत्वा पुनर्नत्वा तं सिद्धं नामधारकः ।
उवाच करुणं दीनः प्रश्रयावनतो भृशम् ॥ २२ ॥
संसाराब्धौ निपतितो निमग्नोऽज्ञानवारिणि ।
त्रितापवडवा[1]तप्तः कामादिग्रहवेष्टितः ॥ २३ ॥
ज्ञाननावि समारोप्य मामितो[2] नाविको भवान् ।
प्रेरयित्वा कृपावायुं परं तीरं नयत्वरम्[3] ॥ २४ ॥
इति श्रुत्वा सकारुण्यं प्रार्थितः सिद्ध आह तम् ।
कृपाकरं निजकरं तस्य विन्यस्य मूर्धनि ॥ २५ ॥
नामधारक मा भीस्त्वं चिन्तां सन्त्यज दूरतः ।
उत्तिष्ठोत्तिष्ठ भद्रं ते करिष्ये त्वामसंशयम् ॥ २६ ॥

रे शिष्य, गुरौ ते दृढा भक्तिर्न । संशययुक्तत्वात्तव क्लेशाः । यः सदाचारो गुरौ दृढभक्तिः स गुरुरूपं जानीयात्स एवेष्टभाक् । इति श्रुत्वा प्रणतो नामधारकः सकरुणमाह । अज्ञानजले संसाराब्धौ मग्नोऽस्मि । त्रितापतप्तं कामादिग्रहवेष्टितं मां ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ ज्ञाननौकाश्रयेण भवान्कृपावायुं प्रेरयित्वा परं पारं नयतु ॥२४॥ इति सदयं प्रार्थितः सिद्धस्तन्मूर्ध्नि करं विन्यस्य प्राह । मा भीश्चिन्तां त्यज । ते भद्रमस्तु । उत्तिष्ठ । त्वामसंशयं करिष्ये । यस्य दृढभक्तिर्न स क्लेशभागी श्रीगुरुस्तस्य किं

१ वडवानलः २ संसारात् ३ शीघ्रं.

यस्य नास्ति दृढा भक्तिः स सदा क्लेशदैन्यभाक् ।
श्रीगुरुस्तस्य किं कुर्यात्संशयावेष्टितस्य तु ॥ २७ ॥

संशयं मानसे धृत्वा जातोऽसि त्वं सुदुःखभाक् ।
विहाय संशयं तस्माच्छ्रद्धत्स्व ज्ञानवान्भव ॥ २८ ॥

निःसंशयं भज गुरुं सोऽभीष्टं ते प्रदास्यति ।
भजतोऽनुभजत्येष भक्तं नोपेक्षते निजम् ॥ २९ ॥

गुरुं विद्धि[1] कृपासिन्धुं वेदशास्त्रादिविश्रुतम् ।
किन्दुर्लभं तच्चरणशरणस्य तु भूतले ॥ ३० ॥

वदान्यः[2] कामदः कोऽत्र वदान्यः स च मेघवत् ।
मेघो वर्षति सर्वत्र तारतम्यं न वीक्षते ॥ ३१ ॥

तथैव सद्गुरुः कामपूरकोऽस्ति तथाऽपि हि ।
न तिष्ठत्युदकं तूच्चदेशे गर्ते तु तिष्ठति ॥ ३२ ॥

कुर्यात् ॥ २९ ॥ २७ ॥ संशयं धृत्वा त्वं दुःखभागी । अतः संशयं त्यक्त्वा श्रद्धया ज्ञानवान्भव । निःसंशयं गुरुं भज स तेऽभीष्टं दास्यति । निजभक्तं नोपेक्षते गुरुः कृपासिन्धुर्वेदमतः । तच्छरणस्य किं दुर्लभं ॥ २८ ॥ ३० ॥ स दाता मेघवत्कामदः तारतम्यं नेक्षते । मेघे वर्षत्यपि जलमुच्चदेशे न तिष्ठति, गर्ते तु तिष्ठति यथा, तथाऽस्य कृपा दृढभक्ते तिष्ठति न दाम्भिके ॥ ३१ ॥ ३२॥ तस्मान्मनोवाक्कायधर्मैर्दृढभक्त्या गुरुं

---

१ ब्रूहि २ दानशौंडः.

दृढभक्तिर्गर्तसमो दांभिकस्तूच्चदेशवत् ।
तस्माद्वाक्कायहृद्धर्मैर्दृढभक्त्या गुरुं भज ॥ ३३ ॥

गुरुर्निरुपमो यस्य शिष्यः संस्पर्शमात्रतः ।
मायामयप्रपञ्चं तु परं ब्रह्मैव पश्यति ॥ ३४ ॥

नोपमा कल्पवृक्षस्य युक्ताऽत्र स तु कल्पितम् ।
ददाति श्रीगुरुर्भूयो दत्तेऽसंकल्पितं द्रुतम् ॥ ३५ ॥

तस्मात्त्वं संशयं त्यक्त्वा निगमागमविश्रुतम् ।
चरणं शरणं गच्छ कामधेनुं जगद्गुरोः ॥ ३६ ॥

इत्युक्तः स क्षणं ध्यात्वा प्राञ्जलिर्नामधारकः ।
अनुग्रहो गुरोरेष इति मत्वाऽब्रवीदिदम् ॥ ३७ ॥

योगेश्वर कृपासिन्धो कामधेनुस्त्वमेव मे ।
सेवकोऽहं तव स्वामिन्भवभीतिहरो भव ॥ ३८ ॥

विस्तृतं भवतो वाक्यं श्रुत्वा गुरुपदाम्बुजे ।
संलग्नं मे मनो लीलाश्रवणोत्कण्ठितं गुरोः ॥ ३९ ॥

भज ॥ ३३ ॥ स गुरुर्निरुपमः । यत्स्पर्शमात्रेण शिष्यः प्रपञ्चं ब्रह्मैव पश्यति । नात्र कल्पवृक्षोपमा युक्ता । स कल्पितं दत्ते गुरुस्त्वकल्पितमपि । तस्मात्त्वं निःसंशयं कामधेनुं जगद्गुरुं शरणं भज ॥ ३४ ॥ ३६ ॥ ततः क्षणं ध्यात्वा नत्वा गुरोरनुग्रहोऽयमिति नामधारक आह । भोः सिद्ध योगेश्वर स्वामिंस्तव सेवकोऽहं मम भवभीतिं हर । सविस्तरं भवद्वाक्यं श्रुत्वा गुरुपदे लग्नं मे मनो गुरुचरित्रश्रवणोत्कंठितं जातं ॥ ३७ ॥ ३९ ॥

१ गुरोः २ अधिकं.

त्रिमूर्तिः श्रीगुरुः साक्षाद्यदि तर्हि कुतो भुवि ।
मर्त्यात्मनाऽवतीर्णोऽत्र तन्मे कथय ते नमः ॥ ४० ॥
उवाच सिद्धः साधो त्वं शिष्यचन्द्रोऽसि केवलम् ।
मम बोधसमुद्रोऽयं पूरितः प्रश्नतस्त्वया ॥ ४१ ॥
महानन्दाप्तिकालस्ते गुरुदास्योदयोऽपि च ।
उपस्थितोऽचिरादेव त्वं ब्रह्मानुभविष्यसि ॥ ४२ ॥
पर्यटन्तं क्षितितले कोऽपि मां नैव पृच्छति ।
गुरुलीलामृतं त्वद्य शुश्रूषुस्त्वं मयेक्षितः ॥ ४३ ॥
ऐहिकामुष्मिकार्थेच्छा यस्य तस्य तु रोचते ।
चरितं तच्छृणुष्वाद्य कृत्वा त्रिकरणं दृढम् ॥ ४४ ॥
त्वमसि श्रीगुरोर्भक्तस्ततस्ते मतिरीदृशी ।
लप्स्यसे त्वं चतुर्वर्गान्ममेदं निश्चितं मतम् ॥ ४५ ॥
धनधान्यादिसम्पत्तिः पुत्राः पौत्राः श्रुतिः स्मृतिः ।
आयुः सौख्यं गतिश्चांते लभ्या यच्छ्रवणान्नृणाम् ॥ ४६ ॥

श्रीगुरुः साक्षात् त्रिमूर्तिर्यदि तर्हि कुतो भुवि नरवज्जातः ॥ ४० ॥ सिद्ध आह । शिष्यचन्द्रेण त्वया मे बोधाब्धिः प्रपूरितः । गुरुदास्योदयात्तवानन्दप्राप्तिकाल उपस्थितः । शीघ्रं ब्रह्मानुभविष्यसि ॥ ४१ ॥ भुवि पर्यटन्तं मां न कोऽपि पृच्छति । त्वमेवाद्य शुश्रूषुर्दृष्टः । ऐहिकामुष्मिककामेच्छा यस्य तस्येदं चरितं रोचते । दृढान्तःकरणेन तत् शृणु ॥ ४३ ॥ ४४ ॥ त्वं भक्तोऽस्यतस्ते मतिरीदृशी । त्वं चतुर्वर्गं लप्स्यसे । धनादिसम्पत्तिं पुत्रादीन्सौख्यमायुरन्ते गतिं च ॥ ४६ ॥ लीलाविहारिणो विभोर्नृरूपस्य

---

१ मनुष्यरूपेण २ श्रवणेच्छुः सेवेच्छुश्च ३ वाङ्मनः कायश्च त्रिकरणं.

गुरुलीला कामधेनुर्वेदशास्त्रमताऽऽदृता[1] ।
लीलाविहारिणो मर्त्यरूपिणोऽरूपिणो विभोः ॥ ४७ ॥
भूमेर्भारावताराय भक्तोद्धाराय मारिष[2] ।
एष वेषधरो भूत्वा कुरुते धर्मपालनम् ॥ ४८ ॥
इति सिद्धवचः श्रुत्वा नत्वा तं नामधारकः ।
पप्रच्छेशावताराणां निदानं[3] किं महामते ॥ ४९ ॥
स्वामिन्मयि कृपां कृत्वा विस्तरेणैव तद्वद ।
उवाच सिद्धः शृणु भो निर्गुणं ब्रह्मवस्तु यत् ॥ ५० ॥
जगदादि[4] स्वतोऽनादि यदेकं चाद्वितीयकम् ।
तत्स्वशक्ति[5]समावेशात्त्रिगुणं विश्वकारणम् ॥ ५१ ॥
यत्स्वतंत्रं तदेवासीद्ब्रह्मविष्णवीशरूपधृक् ।
सृष्टिस्थितिप्रलयकृद्रजःसत्त्वतमोगुणैः ॥ ५२ ॥
कः[6] स्रष्टा रज उद्रेके सत्त्वोद्रेकेऽस्य केशवः ।
पोष्टाऽन्ते तम उद्रेके हर्ता रुद्रः स्वयम्प्रभुः ॥ ५३ ॥

गुरोर्लीला कामधेनुर्वेदसम्मता ॥ ४७ ॥ भूमेर्भारावताराय भक्तोद्धाराय चैष वेषधारी भूत्वा धर्मपालनं कुरुते ॥४८॥इति श्रुत्वा नत्वा नामधारक आह । ईशावताराणां मूलकारणं किं स्वामिन्कृपां कृत्वा विस्तरेण तद्वद । सिद्ध आह । यन्निर्गुणं ब्रह्म जगत्कारणं तदेव सत्त्वरजस्तमोगुणैरुत्पत्तिस्थितिलयार्थं ब्रह्मविष्णुरुद्ररूपधरं जातम् ॥४९॥ ॥ ५२ ॥ रज उद्रेके ब्रह्मा स्रष्टा, सत्त्वोद्रेके विष्णुः पाता, तम उद्रेके रुद्रः संहर्ता सृष्ट्यादिकर्तारः प्रभवो

१ देवर्षिभिरिति शेषः २ हे मारिष आर्य ३ आदिकारणं ४ जगत्कारणं स्वतः कारणरहितं ५ माया ६ प्रजापतिः

नैते परस्परं भिन्नास्त्रयः कार्यानुसारिणः ।
सृष्ट्यादिलीलाकर्तारः प्रसिद्धाः प्रभवः श्रुतौ ॥ ५४ ॥

अम्बरीषाभिधः कश्चित्सूर्यवंशीयपार्थिवः ।
एकादशीव्रतपरो विष्णुभक्तो दृढव्रतः ॥ ५५ ॥

नानावतारस्वीकारे स निमित्तमभूद्विभोः ।
तत्सर्वं तेऽभिधास्यामि सावधानमना भव ॥ ५६ ॥

उपोष्य विधिना राजा नित्य[1]मेकादशीदिने ।
आ[2]तिथेयः स कुरुते सर्वदा हरिचिन्तनम् ॥ ५७ ॥

एवं सत्येकदा तस्य दुर्वासा गृहमागतः ।
साक्षात्तद्व्रतभङ्गाय दुर्दैवं किमुपागतम् ॥ ५८ ॥

एकै[3]नाड्यवशिष्टाभूत्तद्दिने द्वादशी तिथिः ।
आतिथेयोऽम्बरीषस्तं गतो भीतोऽपि सम्मुखम् ॥५९॥

नैते भिन्नाः ॥ ५३॥ ५४ ॥ अंबरीषाख्यः कश्चित्सूर्यवंशीयो राजा विष्णुभक्त एकादशीव्रतपर आस ॥५५॥ विष्णोर्नानावतारस्वीकारे स निमित्तमभूत् तत्ते वक्ष्ये। सावधानतया शृणु ॥ ५६ ॥ विधिनोपोष्य एकादश्यां सर्वदा हरिचिंतनं कुरुते । एवं सति व्रतभंगाय दुर्दिनमिव दुर्वासाः कदाचिद्गृहं प्रातः ॥ ५७ ॥ ५८ ॥ एकघट्यवशिष्टायां द्वादश्यां प्राप्तं तं दृष्ट्वा भीतोऽप्यंबरीषः संमुखं गत्वा तमानीय पादौ प्रक्षाल्य संपूज्य नत्वा कुशलं पृष्ट्वा प्राह । शीघ्रमनुष्ठानं समाप्य पारणार्थं भवानागच्छत्विति

१ अकरणे प्रत्यवायश्रवणात् २ अतिथिषु साधुः ३ एकघटिका.

तं समानीय पांनीयमानीय विधिनाऽस्य सः ।
पादौ प्रक्षाल्य सम्पूज्य पूज्यमेतमपूजयत् ॥ ६० ॥
तं नत्वा कुशलं पृष्ट्वा प्राह शीघ्रमनुष्ठितिम् ।
कृत्वैतु पारणायाऽऽशु भवान्स्वल्पाद्य सत्तिथिः ॥ ६१ ॥
तथेति स नदीं गत्वा चक्रे कर्म चिरक्रियः ।
व्रतभङ्गातिथित्यागदोषभीत्या स शङ्कितः ॥ ६२ ॥
विचार्य स्वगतं राजा जलपानेन मे भवेत् ।
अधुनोभयसंसिद्धिरिति मत्वा पपौ जलम् ॥ ६३ ॥
अत्रान्तरेऽपि दुर्वासा आगत्य कुपितोऽवदत् ।
बुभुक्षितातिथिं हित्वा कथं पानं त्वया कृतम् ॥ ६४ ॥
एवमुक्त्वा स दुर्वासाः शापं दातुं प्रचक्रमे ।
भीतो राजाऽस्मरच्छार्ङ्गधरं तं भक्तवत्सलम् ॥ ६५ ॥
स्मृतमात्रस्तदा प्राप्तो धेनुर्वत्समिव द्रुतम् ।
नारायणः सकरुणः शरणागतरक्षणः ॥ ६६ ॥

प्रार्थयामास ॥५९॥६१॥ तथेति स मुनिर्नदीं गत्वा चिरं कर्माकरोत् व्रतभंगभिया शंकितो राजा जलपानेनोभयसिद्धिरिति मत्वा जलं पपौ ॥६२॥६३॥ तदा दुर्वासा एत्य कुपित आह । बुभुक्षितातिथिं त्यक्त्वा कस्मात्त्वया पानं कृतं । इत्युक्त्वा शापं दातुं प्रचक्रमे । तदा भीतो राजा भक्तवत्सलं विष्णुमस्मरत् ॥६४॥६५॥ तदैव धेनुर्वत्समिव शरणागतवत्सलो विष्णुस्तं प्राप ॥६६॥ राजन्नानायोनीर्गच्छेति मुनौ शपति तन्मध्ये विष्णुरुपागतः ।

१ उदकं २ पूजायोग्यं ३ अनुष्ठानं ४ भोजनाय ५ सतो विष्णोरस्तिथिर्द्वादशी ६ स राजा शंकितः ७ हे बुभुक्षित, बुभुक्षितश्चासावतिथिश्च तमिति बा.

राजन्नानायोनिभाक् त्वं भवेति स शशाप तम् ।
यावत्तावद्धृषीकेशस्तयोर्मध्ये समागतः ।। ६७ ।।
मुनेर्वाक्यं न मिथ्येति भीतो राजा हरेः पदम् ।
जग्राह स महाविष्णुर्बभाषे भक्तवत्सलः ।। ६८ ।।
मुने रक्षाम्यमुं भक्तं शापं देहि तमेव मे ।
नायं सोढुं प्रभुर्भक्तवात्सल्यान्मे सहिष्णुता[1] ।। ६९ ।।
ईश्वरांशोऽपि दुर्वासा विचार्य स्वगतं जगौ ।
अवतीर्यैष शापेन भुवो भारं हरिष्यति ।। ७० ।।
सुचिरेणापि तपसा भगवान्भुवि दुर्लभः ।
अम्बरीषप्रभावेण शापसम्बन्धकारणात् ।। ७१ ।।
भविष्यत्यत्र सुलभः श्रीपतिः सहितः श्रिया ।
अवतीर्य स्वभक्तानामुद्धर्ता भविताऽभवः ।। ७२ ।।
अस्मै परोपकारार्थं शापो देयो दयावते ।
किमम्बरीषजनुषा भूभारोऽयं हरिष्यति ।। ७३ ।।

मुनेर्वाक्यं मोघं नेति भीतो राजा हरेः पदं जग्राह । तदा भक्तवत्सलो विष्णुराह । मुने भक्तं रक्षामि, तमेव शापं मे देहि, नायं सोढुं प्रभुः भक्तवात्सल्यान्मे सहिष्णुता । तदा दुर्वासा विचार्याह । विष्णुः शापेनावतीर्य भूभारं हरिष्यति । याश्चिरात्तपसाऽपि दुर्लभः शापसम्बन्धात ।। ६७–७१ ।। अत्र सुलभो भविष्यति । श्रिया सहावतीर्य भक्तानुद्धरिष्यति ।। ७२ ।। ततोऽस्मै परोपकारार्थं शापो देयः । किमंबरीषशापेनेति विचार्य दुर्वासाः शापं दास्यन्निदमाह । स्थूलसूक्ष्मनिवासोऽपि विश्वात्मा त्वं मत्स्यादिरूपैर्दशवारमव-

---

१ सहनशीलता.

इत्थं विचार्य दुर्वासा वासार्थमवनौ हरेः ।
शापं तमेव हरये प्रदास्यन्निदमब्रवीत् ॥ ७४ ॥
स्थूलसूक्ष्मनिवासोऽपि विश्वात्माऽपि क्षितावज ।
दशवारं च मत्स्यादिरूपैरवतरिष्यसि ॥ ७५ ॥
इति दुष्टान्तकः शिष्टरक्षको मुनिनाऽर्पितम् ।
शापं प्रीत्या स्वीचकार कारणात्मा दयाघनः ॥ ७६ ॥
नारायणोऽनन्तरूपो भगवान्भक्तवत्सलः ।
अस्यावतारा मत्स्याद्या उक्ता भागवतादिषु ॥ ७७ ॥
क्वचित्स्पष्टान्क्वचिद्गूढांस्तान्विदुर्ब्रह्मवादिनः ।
कुतो विमूढा जानन्ति यत्र वेदोऽपि शङ्कितः ॥ ७८ ॥
चमत्कारोऽपि चान्योऽयमनसूया मनस्विनी ।
पतिव्रताशिरोरत्नं श्रुतावपि च विश्रुता ॥ ७९ ॥
तस्या गृहं समागत्य मध्याह्नेऽतिथिरूपिणः ।
त्रिमूर्तयः सुतास्तस्या अभवन्नत्रियोषितः ॥ ८० ॥
इति श्रुत्वाऽथ पप्रच्छ पुनस्तं नामधारकः ।
आश्चर्यं कथितं त्वेतदासन्पुत्राः कथं सुराः ॥ ८१ ॥

तरिष्यसि ॥ ७३ ॥ इति दुष्टांतकः शिष्टरक्षको दयालुर्विष्णुर्मुनिदत्तं शापं प्रीत्या स्वीचकार। अस्य विष्णोर्मत्स्याद्यवतारा भागवतादिषूक्ताः । क्वचित्स्पष्टान्क्वचिद्गूढांस्तान्ब्रह्मविदो विदुः न मूढाः । यत्र वेदोऽपि चकितः ॥ ७४ ॥ ७८ ॥ चमत्कारं श्रृणु । याऽनसूया पतिव्रता विश्रुता तद्गृहेऽतिथिरूपिणस्त्रिमूर्तय एत्य तत्पुत्रा अभवन् ॥ ७९ ॥ ८० ॥ नामधारक आह । आश्चर्यं ब्रूषे देवा अपि तत्पुत्राः कथं जाताः ॥ ८१ ॥ धन्योऽय-

धन्योऽयमत्रिः कुत एष जातः स किंप्रभावोऽपि तथाऽनसूया।
सविस्तरं तूत्तरमार्तबन्धो बन्धोच्छिदाख्याहि सुबोधसिन्धो ८२

इति स तदनुयोगं कामितानन्दयोगं
सकलमलवियोगं सन्मुमुक्षूपयोगं।
दृढमतिरवधार्य प्राब्रवीदार्यवर्य-
स्त्रितनुजनुरनार्यध्वंसकं शिष्यवर्यम् ॥ ८३ ॥

ॐ तत्सत् ॥ (इति) श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्यगङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञित-महाराष्ट्रभाषान्वितगुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वती-यतिविरचितायां श्रीगुरुसंहितायां ज्ञानकाण्डे तृतीयः (अध्यायः) ॥ आदितः श्लोकाः ॥ ४९८ ॥

मत्रिः किंप्रभावः, अनसूया वा कीदृशी, हे कृपालो, एतत्सविस्तरं कथय ॥ ८२ ॥ इति स तदनुयोगं कामितानन्दयोगं सकलमलवियोगं सन्मुमुक्षू-पयोगं। दृढमतिरवधार्य प्राब्रवीदार्यवर्यस्त्रितनुजनुरनार्यध्वंसकं शिष्यवर्यं ॥ ८३ ॥

इति चूर्णिकायां तृतीयोऽध्यायः ॥ ३ ॥

॥ इति तृतीयोऽध्यायः ॥ ३ ॥

---

१ बध्नातीति बंधः संसारः तमुच्छिनत्तीति तत्संबुद्धौ २ प्रश्न.

## ॥ अथ चतुर्थोऽध्यायः ॥ ४ ॥

॥ श्रीः ॥ एवं शिष्यस्य सम्प्रश्नं श्रुत्वा सिद्ध उवाच तम्।
साधु साधु[1] त्वया पृष्टं प्रीतिर्गुरुपदेऽस्ति ते ॥ १ ॥
धन्या मान्याऽस्ति ते वाणी त्वं हि शिष्यशिखामणिः।
त्वत्प्रश्नश्रवणेनैव गुरुलीला स्मृताऽऽदितः ॥ २ ॥
प्रश्नस्तेऽयं समीचीनः सादरं कथयामि ते।
आरभ्य सृष्टितः सर्वमत्रेर्जन्मादि यच्छ्रुतम् ॥ ३ ॥
पुरा कल्पाम्बुधौ लीना विश्वसृष्टिरशेषतः।
नारायणो वेदगीतो जलशायी तदाऽभवत् ॥ ४ ॥
रेतोरूपेण मनसा सकामोऽण्डं[2] पुराऽसृजत्।
पुराकल्पे यत्र लीना नाना[3]चेतनवासनाः ॥ ५ ॥

तुर्ये त्रीशाः सत्त्वहत्यै यथाऽन्नं
स्मेहंतेऽदाद्याऽनसूया तथाऽन्नम् ॥
बाला भूत्वा दुग्धमस्याः पपुस्ते
यत्कीर्तिर्दिक्शालिनी सर्वदाऽऽस्ते ॥ १ ॥
चतुर्थाध्यायसारसंग्रहश्लोकोऽयं ॥

श्रीः ॥ एवं शिष्यप्रश्नं श्रुत्वा सिद्ध आह। साधु पृष्टं गुरुपदे ते प्रीतिरस्ति ॥ १ ॥ त्वं शिष्यशिखामणिर्धन्यं मान्यं च ते वाक्यं त्वत्प्रश्नादेवादितो गुरुलीला स्मृता ॥ २ ॥ प्रश्नोऽयं समीचीनः सादरं ते कथयामि। सृष्टित आरभ्यात्रेर्जन्म वक्ष्ये शृणु ॥ ३ ॥ पुरा कल्पाब्धौ सृष्टिर्लीना तदा नारायणो जलशाय्यभवत् ॥ ४ ॥ पूर्वकल्पे जीववासना यत्र लीनास्तदव्यक्तमण्डरूपेण संकल्पादेवासृजत् ॥ ५ ॥

१ सम्यक् २ ब्रह्मांड ३ प्राणी.

हिरण्यगर्भसंज्ञं तद्ब्रह्माण्डं देववत्सरम् ।
स्थित्वा भिन्नमभूत्तत्र सर्वोत्पत्तिः श्रुतीरिता ॥ ६ ॥
स्वर्[1]भूतले द्वे शकले विधात्रा निर्मितेऽमले ।
भुवोऽधः सप्तलोकाः स्युरूर्ध्वं सप्त सुतेजसः ॥ ७ ॥
विष्णोर्नाभेरभूद्ब्रह्मा स चतुर्दशलोकसृट् ।
मनसा देहतश्चापि दिक्कालादीन्ससर्ज सः ॥ ८ ॥
सृष्टिं वर्धयितुं चाग्रे ब्रह्मा विष्णोरनुज्ञया ।
तपस्तप्त्वाऽपि चे[2]तुरः पुत्रान्सप्त च सोऽसृजत् ॥ ९ ॥
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।
वसिष्ठ इति सप्तैते मानसा ब्रह्मणः सुताः ॥ १० ॥
शतरूपामनू ब्राह्मौ देवहूतिः सुता तयोः ।
[3]छायोत्थकर्दमस्त्री तत्पुत्र्यो ब्रह्मसुतैर्वृताः ॥ ११ ॥
विधातृनेत्रजस्यात्रेर्धर्मपत्नी पतिव्रता ।
अनसूया वे[4]दंगेया जगदम्बैव केवलम् ॥ १२ ॥

हिरण्यगर्भाख्यं तद्ब्रह्माण्डं कञ्चित्कालं स्थित्वा निर्भिन्नमभूत् । यतो जगदुत्पत्तिः श्रुता ॥ ६ ॥ स्वर्भूरिति द्वे शकले जाते । भुवोऽधः सप्तोर्ध्वं च सप्त लोकाः कल्पिताः ॥ ७ ॥ विष्णोर्नाभेर्जातेन ब्रह्मणा चतुर्दश लोका दिक्कालादि च सृष्टं ॥ ८ ॥ विष्णोराज्ञया ब्रह्मा तपस्तप्त्वा सनकादीनन्यांश्चासृजत् ॥ ९ ॥ ते च मरीच्यत्रिपुलस्त्यांगिरःपुलहक्रतुसिष्ठाः ॥ १० ॥ ब्रह्मणो जातौ शतरूपामनू तत्पुत्री देवहूतिः कर्दमर्षिणा विवाहिता । तत्पुत्र्यो ब्रह्मपुत्रैर्वृताः ॥ ११ ॥ ब्रह्मनेत्राज्जातस्यात्रेः पत्नी पतिव्रताऽनसूया । यस्याः पुत्रश्चंद्रस्तस्याः सौंदर्यवर्णने कः समर्थः ॥ १२ ॥ पतिसेवारतां तां

१ स्वर्गः २ सनकादीन् ३ छायोत्पन्नः ४ अत्रेर्यथाऽनसूया स्यादिति.

तस्याः सुलक्षणायाः कः शक्तः[1] सौन्दर्यवर्णने ।
यस्याः पुत्रो हि नक्षत्रनाथश्चन्द्रोऽत्र विश्रुतः ॥ १३ ॥
पतिसेवारता नित्यं तां विज्ञाय[2] तपस्विनीम् ।
भीता इन्द्रादयो देवाः स्वर्गैश्वर्यं हरिष्यति ॥ १४ ॥
इति मत्वाऽमरवरा इन्द्राद्याः शरणं ययुः ।
ब्रह्मविष्णुहरास्तेभ्यः सतीख्यातिं न्यवेदयन् ॥ १५ ॥
इन्द्रः प्राह महादेवा अत्रिपत्नी पतिव्रता ।
तदाचारादधीरा[3]: स्मः स्वपदच्युतिशङ्कया ॥ १६ ॥
भजते या पतिं भक्त्या मनोवाक्कायकर्मभिः ।
अतिथीनां तथाऽऽतिथ्ये स्वप्नेऽपि विमुखा न हि ॥१७॥
स्वकरस्पर्शतः साध्व्यास्तापो ननु भविष्यति ।
इति मत्वा तु तपनो[4] मन्दं तपति भीतिमान् ॥ १८ ॥
भीतभीत[5]स्तथाऽप्यग्निः शीतलत्वं हि वाञ्छति ।
वायुश्च चकितो वाति मन्दं मन्दं सदैव हि ॥ १९ ॥

दृष्ट्वाऽसौ स्वर्गं हरिष्यतीति भीता इंद्राद्या ब्रह्मविष्णुशिवाञ्छरणं गत्वा तत्ख्यातिं ख्यापयंत आहुः । अनसूयाचारं वीक्ष्य स्वपदच्युतिशङ्कया वयमधीराः ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ या मनोवाक्कायैर्भक्त्या पतिं भजते, स्वप्नेऽप्यातिथिपराङ्मुखा नैव । स्वकिरणस्पर्शात्तस्यास्तापो भविष्यतीति भिया सूर्यो मंदं तपति, भीतोऽप्यग्निः शीतलत्वं वांछति । वायुरपि चकितो मंदं वाति । तत्काठिन्यशंकया भूरपि मृदुला जाता । वयं च शापं दास्यतीति भीता नतास्तिष्ठामः ॥ १७–२० ॥ तपःप्रभावात्क-

१ कः शक्तः न कोऽपि ब्रह्मा वा　२ ज्ञात्वा　३ कातराः　४ सूर्यः
५ भीतादपि भीतः.

श्वरा मृदुतरा जाता तस्याः काठिन्यशङ्कया ।
शापं दास्यति सा किं न इति भीता नता वयम् ॥२०॥
तपःप्रभावात्कस्यापि स्थानं साऽपहरिष्यति ।
साऽनुगृह्णाति यं सोऽपि रङ्कोऽप्यस्मान्विजेष्यति ॥२१॥
अत्रोपायमपायघ्ना जगदीशा विचार्य नः ।
पदभ्रंशो यथा न स्यात्तथा कुरुत मा चिरम् ॥ २२ ॥
अनुग्रहो न भवतामस्मानुपरि चेत्तदा ।
स्थास्याम एव तद्द्वारि दासभावं समाश्रिताः ॥ २३ ॥
इत्थं देववचः श्रुत्वा ब्रह्मविष्णुमहेश्वराः ।
क्रुद्धा ऊचुरहो जाता किमेवं सा पतिव्रता ॥ २४ ॥
गत्वाऽस्या[२] व्रतभङ्गं तु कृत्वा यद्वा यमालयम् ।
गमयित्वा पुनः शीघ्रमायास्यामः सुरोत्तमाः ॥ २५ ॥
त्रयोऽपीति प्रतिज्ञाय भूत्वा तेऽतिथयोऽमलाः ।
आगता आश्रमपदमत्रेरिव बुभुक्षिताः ॥ २६ ॥

स्यापि स्थानं हरिष्यति । यं साऽनुगृह्णीयात्स रंकोऽप्यस्माञ्जेष्यतीत्यत- उपायं विचार्य यथाऽस्मत्पदभ्रंशो न स्यात्तथा भवद्भिः कार्यं । यदि भव- दनुग्रहो न चेत्तर्हि तद्दास्यमाश्रित्य तद्द्वारि स्थास्यामः ॥ २१ ॥ २३ ॥ इत्थं श्रुत्वा ब्रह्मविष्णुमहेश्वराः क्रुद्धा ऊचुः ॥ २४ ॥ अहो कथमेवंविधा पतिव्रताऽद्यैव गत्वा तद्व्रतभङ्गं कृत्वा तां यमलोकं गमयित्वा वाऽऽगमिष्या- मः । इति प्रतिज्ञाय त्रयोऽप्यतिथयो भूत्वा बुभुक्षिताः संतोऽत्रेराश्रमं ययुः ॥ २५ ॥ २६ ॥ अनुष्ठानाय मुनौ वनं गते त्रयोऽप्यागत्यानसूयामाहुः ।

१ भो जगदीशाः २ अनसूयायाः.

गते मुनौ[1] वनुष्ठातुं ब्रह्मविष्णुमहेश्वराः ।
अनसूयामनुप्राप्य प्राहुस्तां भिक्षुका इव ॥ २७ ॥

मातर्बुभुक्षिताः स्मोऽद्य देह्यन्नं त्वरितं शुभे ।
अथवा नेति चेद्ब्रूहि गच्छामोऽन्यत्र मा चिरम् ॥२८॥

सदा तवाश्रमपदे तृप्यन्त्यभ्यागता इति ।
कीर्तिं श्रुत्वाऽद्य सम्प्राप्ता यथेच्छसि तथा कुरु ॥ २९ ॥

इच्छाभोजनदात्री त्वमिति श्रुतिपथं[2] गतम् ।
यशस्ते दूरतः प्राप्ता इच्छाभोजनकांक्षया ॥ ३० ॥

इति श्रुत्वा वचस्तेषामनसूया प्रणम्य तान् ।
पादौ प्रक्षाल्य पीठेषु प्रीत्या समुपवेश्य च ॥ ३१ ॥

दत्वाऽर्घ्यादि च सम्पूज्य गन्धपुष्पादिभिः शुभैः ।
प्राहाह्निकं समाप्तं चेत्सिद्धमन्नं ददामि वः ॥ ३२ ॥

ऋषय[3]स्तपं[4]से याता इति श्रुत्वाऽवदंस्त्रयः ।
चिरादृषय एष्यन्ति शीघ्रं नो देहि भोजनम् ॥ ३३ ॥

मातर्बुभुक्षितेभ्यो नोऽन्नं देहि मा चिरं। नो चेदन्यत्र गमिष्यामः। तवाश्रमेऽभ्यागतास्तृप्यंतीति कीर्तिं श्रुत्वा प्राप्ताः स्मः यथेष्टं तथा कुरु॥२७॥२९॥ त्वमिच्छाभोजनदात्रीति ते यशः श्रुत्वेच्छाभोजनकांक्षया दूरादागताः ॥ ३० ॥ ३१ ॥ इति श्रुत्वाऽनसूया तान्प्रणम्य पादौ प्रक्षाल्य प्रीत्याऽऽसनेषूपवेश्य संपूज्य प्राहाह्निकं समाप्तं चेत्सिद्धमन्नं वो ददामि ॥ ३२ ॥ भर्ता तु तपस्तप्तुं गतः इति श्रुत्वा त्रयोऽप्यवदन्। अत्रिश्चिरादेष्यति तस्मान्नो भोजनं देहि ॥ ३३ ॥ इति श्रुत्वा सा तान्गृहमध्यमानीयासनेषू-

१ अत्रिमुनौ २ कर्णमार्गं ३ अत्रिः । पूजायां बहुवचनं ४ तपस्तप्तुं.

इति श्रुत्वा गिरस्तेषामानयित्वा गृहान्तरम्[1] ।
आसनेषूपवेश्यासौ[2]वन्नं दातुं प्रचक्रमे ॥ ३४ ॥
गृह आसाद्य पात्राणि रङ्गवल्ल्यादिरञ्जिते ।
अभिघार्य समारेभे परिवेष्टुं मनस्विनी ॥ ३५ ॥
ऊचुस्तेऽतिथयः साध्वि त्वमभीष्टप्रदाऽसि चेत् ।
याच्ञां नः सफलां कर्तुमनसूये त्वमर्हसि ॥ ३६ ॥
नग्ना भूत्वा त्वमस्मभ्यमन्नं देहीति कांक्षितम् ।
नो चेन्नेति वदाशु त्वं गच्छामोऽन्यत्र सत्वरम् ॥३७॥
इति श्रुत्वा गिरस्तेषां स्वगतं प्राह सा सती ।
एते कारुणिका एव महा[3]पुरुषलक्षणाः ॥ ३८ ॥
विमुखाश्चेदतिथयो यद्गृहात्तद्गृहं वनम्[4] ।
उल्लंघ्यते चेद्वचनं यास्यन्ति विमुखा इमे ॥ ३९ ॥
निर्मलं मानसं मेऽस्ति किं स्यात्कामखलेन मे ।
पत्युस्तपोबलं भूयं[5]स्तन्मे भवति तारकम् ॥ ४० ॥

पवेश्य रंगवल्ल्यादिरंजिते स्थले पात्राण्यासाद्याभिघार्य परिवेष्टुमारेभे ॥३४॥ ३५॥ तदा ते प्राहुर्भोः साध्वि नग्ना भूत्वाऽन्नं देहीति कांक्षितं । अस्मद्याच्ञां सफलां कुरु। नो चेदन्यत्र यास्यामः ॥ ३६ ॥ ३७ ॥ इति श्रुत्वाऽनसूया स्वगतं प्राह । एते कारुणिका महापुरुषाः पराङ्मुखा यास्यंति चेदिदं गृहं वनप्रायं। वचनोल्लङ्घने तु विमुखा यास्यंति। मन्मनस्तु निर्मलं। कामः किं करिष्यति ! भर्तृतपो मम तारकम् ॥ ३८ ॥ ४० ॥ एवं विचार्य भोजनं वो

१ गृहमध्ये २ अनसूया ३ विष्णुः ४ वनं वनोपमं, न सखायो न ददाति सख्ये इति श्रुतेः ५ भूरि.

एवं विचार्य मनसि साऽनसूया पतिव्रता ।
भोजनं वस्तथा दास्ये भोक्तव्यं स्वस्थमानसैः ॥ ४१ ॥
इत्युक्त्वा पाकसदनं गत्वा ध्यात्वा पदं मुनेः ।
बाला एते ममेत्येवं विचिन्त्य वसनं जहौ ॥ ४२ ॥
नग्ना सती समादाय यावदन्नं ददाति सा ।
तावत्ते बालका जाताः प्रभवोऽपि यशस्कराः ॥ ४३ ॥
त्रीन्बालकान्समालोक्य किञ्चिद्भीता सती सुधीः ।
आगत्य तान्समाश्वास्य सम्प्राप्ता परमां मुदम्[1] ॥ ४४ ॥
रुदतस्त्रीनपि सुतान्समाश्वास्य पुनः पुनः ।
क्षुधितान्वीक्ष्य चकिता यावत्तावत्पयोऽस्रवत् ॥ ४५ ॥
एकमेकं समादाय पाययित्वा पयो मुदा ।
क्षुधितांस्तर्पयामास नालं यत्तृप्तये[2] मखाः ॥ ४६ ॥
अहो भाग्यमहो भाग्यमत्रिपत्न्यास्त्रिमूर्तयः ।
यद्दुग्धपानतस्तृप्ता इदं साध्वीतपःफलम् ॥ ४७ ॥

दास्ये । स्वस्थं भोक्तव्यमित्युक्त्वा पाकस्थानं गत्वा पतिपदं ध्यात्वा ममैते बाला इति ध्यात्वा नग्ना भूत्वाऽनसूया यावदन्नं ददाति तावत्प्रभवोऽपि ते बाला जाताः ॥ ४१ – ४३ ॥ किंचिद्भीताऽपि सा रुदतस्त्रीन्बालान्विलोक्यागत्याश्वास्य क्षुधान्वितान्वीक्ष्य यावच्चकिता तावत्स्तनाभ्यां पयोऽस्रवत ॥ ४४ ॥ ४५ ॥ तदा मुदैकैकमादायापाययत् । यत्तृप्तयेऽद्यापि यज्ञा नालं ते त्रिमूर्तयोऽनसूयापयःपानात्तृप्ताः । अहो भाग्यं । इदं तत्तपःफलं

१ आनंदं २ येषां तृप्तये यज्ञा अपि अलं पर्याप्तं न.

तिष्ठन्ति जठरे यस्य भुवनानि चतुर्दश ।
स विष्णुस्तत्पयःपानात्तृप्तोऽभूत्किं ब्रुवेऽधिकम् ॥४८॥
चतुर्मुखः सृष्टिकर्मश्रान्तो नक्तंदिवं विधिः ।
स सतीस्तन्यपानेन ब्रह्मा तृप्तिं गतो द्रुतम् ॥ ४९ ॥
कर्पूरगौरो भालाक्षो रुद्रः पञ्चमुखोऽपि यः ।
कालाग्निसदृशः सोऽपि तृप्तः साध्वीरसग्रहः[1] ॥ ५० ॥
तपोबलमिदं त्वत्रेः समा नान्याऽनसूयया ।
या त्रिमूर्तिप्रसूर्जाता ख्याता या भुवनत्रये ॥ ५१ ॥
उत्थाप्य बालकान्प्रीत्या लालयामास सा सती ।
शाययित्वाऽथ पर्यंके सुस्वरं मधुरं जगौ ॥ ५२ ॥
सा सर्वोपनिषत्सारभूतैर्गीतैः सुरञ्जितैः ।
सप्तस्वरैश्च सहितं सुस्वरं तद्यशो जगौ ॥ ५३ ॥
अत्रान्तरेऽत्रिर्भगवान्मध्याह्ने स तपोवनात् ।
समाप्य नैत्यकं कर्म निजाश्रममुपागतः[2] ॥ ५४ ॥
आकर्ण्य सोऽनसूयाया गीतशब्दं मनोरमम् ।
बालकाश्वासनं चापि प्रियां पप्रच्छ सादरम् ॥ ५५ ॥

॥ ४६ ॥ ४७ ॥ यत्कुक्षौ चतुर्दशलोकाः स विष्णुस्तत्पयःपानात्तृप्तः ॥ ४८ ॥ सृष्ट्या श्रान्तो ब्रह्मा सतीस्तन्यपानात्तृप्तः ॥ ४९ ॥ भालाक्षः कर्पूरगौरो रुद्रस्तत्स्तन्यपानात्तृप्तः ॥ ५० ॥ इदमत्रेस्तपोबलं । या त्रिमूर्तिमाता जाता तत्समाऽन्या त्रिभुवने न ॥५१॥ तान्बालान्प्रीत्या पर्यंके शाययित्वा सप्तस्वरैः सुस्वरं जगौ । अत्रान्तरे कृताह्निकोऽत्रिर्वनादेत्य सर्वोपनिष-

१ साध्वीदुग्धग्राहकः २ समीपमागतः.

आदितः कथितं सर्वं तया सोऽपि तदा मुदा ।
ध्यात्वा तपःप्रभावेण ज्ञात्वा नत्वा ननाम तान्[1] ॥ ५६ ॥

नमन्तमत्रिमालोच्य गायन्तीं सुदतीं[2] सतीम् ।
विज्ञाय च तयोर्भावं प्रसन्ना अभवंस्त्रयः ॥ ५७ ॥

पालके बालरूपेण स्थिता अपि च ते त्रयः ।
प्रादुर्भूय स्वरूपेण साधु साध्विति तौ जगुः ॥ ५८ ॥

तुष्टाः स्मो युवयोर्भक्त्या दास्यामो वाञ्छितं द्रुतम् ।
उवाचात्रिः सतीमेभ्यो वरं वरय कांक्षितम् ॥ ५९ ॥

प्राहानसूया प्राणेश[3] भवद्भावप्रभावतः[4] ।
प्राप्ता एते सुतानेभ्यो वृणुध्वमधुनेदृशान् ॥ ६० ॥

इति सतीवचनं मतिरञ्जनं मुनिवरोऽभ्युपगम्य सुपावनम् ।
अथ तथेति स वव्र इमेऽमराः सुरवरा अभवन्वरदाः पराः ॥६१॥

त्सारभूतं सुस्वरं गीतं मनोरमं बालकाश्वासनं च श्रुत्वाऽनसूयां सादरं पप्रच्छ ॥ ५२ – ५५ ॥ तयाऽऽदितः सर्वं कथितं श्रुत्वा तपःप्रभावात्ताञ्ज्ञात्वा ननाम ॥ ५६ ॥ नमतोऽत्रेर्गायन्त्याः सत्याश्च भक्तिं ज्ञात्वा पालकस्थास्ते स्वरूपेण प्रादुर्भूत्वा तुष्टा आहुः । साधु गीतं, वो भक्त्या तुष्टाः स्मो वांछितं दास्यामः । अत्रिः सतीमाह । एभ्यो वरं वरयेति ॥ ५७ ॥ ५९ ॥ अनसूया प्राह। भवत्प्रभावादेते प्राप्ताः । एभ्य ईदृशान्सुतान्वृणुध्वं । इति श्रुत्वा तथेत्यत्रिस्त्रिमूर्तीस्तथा पुत्रानयाचत ॥ ६० ॥ ६१ ॥ देवा ऊचुः हे मुनी-

१ ब्रह्मविष्णुमहेश्वरान् २ शोभना दन्ता यास्यास्तां ३ हे प्राणनाथ ४ भवद्भक्तिसामर्थ्यात् .

मुनीश्वर यथेच्छा ते तथा भवतु ते गृहे ।
अस्मदंशभवा बालाः स्थिता यास्यामहे वयम् ॥ ६२ ॥

इत्युक्त्वा ते ययुः स्वं स्वं धाम येऽभिन्नविग्रहाः ।
बाला भूत्वाऽथ तेऽत्रापि संस्थिता अत्रिवेश्मनि ॥६३॥

तान्पुपोषानसूयाऽपि ब्रह्मविष्णुमहेश्वरान् ।
श्रीदत्तचन्द्रदुर्वासःसंज्ञितान्लोकपूजितान् ॥ ६४ ॥

दुर्वासाश्चन्द्रमाश्चैव संस्कृतौ मातरं मुदा ।
प्रार्थयामासतुर्गन्तुं [1]कृतप्रज्ञौ महामती ॥ ६५ ॥

दुर्वासा आह जननि तपस्तप्तुं सुपावनि ।
गच्छामि देह्यनुज्ञां मे तीर्थदर्शनकांक्षिणे ॥ ६६ ॥

चन्द्रोऽवददहो मातर्यास्येऽहं चन्द्रमण्डलम् ।
नित्यं ते दर्शनं मेऽस्तु देह्यनुज्ञां हि मा खिदः ॥ ६७ ॥

श्वर यथेच्छसि तथा भवत्वित्युक्त्वैकमत्यास्ते त्रयोऽपि स्वं स्वं धाम ययुः। तदंशतोऽत्रिगृहे त्रयो बाला जातास्तान्ब्रह्मविष्णुरुद्रांशांश्चंद्रश्रीदत्तदुर्वासः-संज्ञिताननसूया पुपोष ॥ ६२ – ६४ ॥ संस्कृतो दुर्वासाश्चन्द्रश्च गन्तुकामः सन्मातरं प्रार्थयत् । दुर्वासा आह । भो जननि तीर्थपर्यटनार्थमाज्ञां देहीति। चन्द्र आह । मातश्चन्द्रमण्डलं यास्ये । नित्यं ते दर्शनमस्त्वनुज्ञां देहि । श्रीदत्तोऽयं त्रिमूर्त्यात्मा सदा युष्मत्समीपे तिष्ठति । नात्र संशयः । सत्यमिदं सर्वव्यापी विष्णुर्भगवानेत्र श्रीदत्तस्ते चित्तानसारिणाऽनेन ते वियोगो माऽस्तु

१ गंतुं कृतमती.

श्रीदत्तोऽयं त्रिमूर्त्यात्मा सदा युष्मत्समीपगः ।
तिष्ठत्येव न सन्देहो नान्यथा मे वचः सति ॥ ६८ ॥
श्रीदत्तो भगवान्विष्णुः सर्वं विष्णुमयं जगत् ।
नानेन ते वियोगोऽस्तु तव चित्तानुसारिणा ॥ ६९ ॥
एवमुक्त्वा तदाज्ञप्तौ जग्मतुर्भुवि पर्यटत् ।
दुर्वासाः श्राप चन्द्रः स्वमण्डलं योऽब्धिजः पुनः ॥७०॥
अनसूयागृहे तस्थौ श्रीदत्तस्त्रिगुणात्मकः ।
गुरोः परम्परायास्तु मूलपीठमिदं परम् ॥ ७१ ॥
सिद्धेन कथिता नामधारकाय त्वियं कथा ।
अथ तुष्टः पुनः प्रीत्या स तं पप्रच्छ सादरम् ॥ ७२ ॥
सिद्ध योगेश्वर जय जय भक्तमनोहर ।
ज्ञानमूर्ते कृपासिन्धो साधो संसारतारक ॥ ७३ ॥
तव प्रसादाज्ज्ञातेयमनसूयासतीकथा ।
त्वं तारको योगिराजः प्रार्थनां मेऽवधारय ॥ ७४ ॥

॥ ६५ – ६९ ॥ तदा मात्राऽऽज्ञप्तौ तौ जग्मतुः । त्रिगुणात्मको दत्तस्तु गृहे स्थितः । इदं गुरुपरम्पराया मूलपीठं । एवं सिद्धेन कथितं श्रुत्वा तुष्टो नामधारकः प्रीत्याऽपृच्छत् ॥ ७० – ७२ ॥ भो सिद्ध योगीश्वर ज्ञानमूर्ते कृपासिन्धो त्वं संसारतारकोऽसि । त्वत्प्रसादादियं कथा श्रुता । भो तारक योगिराज मे प्रार्थनां शृणु । दत्तात्रेयावतारो विस्तरात्कथितः । अपरोऽप्यवतारोऽत्र कथं जातः । ममोपरि कृपां कृत्वा तत्सविस्तरं कथय । त्रिमूर्त्यवतारलीला तु कस्मा अलं भवेत् । एवं पृष्टः सिद्धः प्रीत्या तां कथां प्राह ।

१ दुर्वासःशापादिंद्ररत्नैः सहाब्धौ पतितो मन्थनात् पुनर्जातः २ शृणु.

दत्तात्रेयावतारोऽयं कथितो विस्तरेण मे।
अपरोऽप्यवतारोऽस्य कथं जातो महीतले ॥ ७५ ॥
विस्तरेण वद स्वामिन्कृपां कृत्वा ममोपरि।
त्रिमूर्तेरवतारस्य लीला कस्मा अलं भवेत् ॥ ७६ ॥
एवं पृष्टः प्राह शिष्याय सिद्धः शुद्धः प्रीत्या यां कथां तां प्रबुद्धः।
वक्ष्यत्यग्रे साधु गङ्गाधराख्यविप्रापत्यं[1] यत्सरस्वत्यभिख्यम् ७७

(इति) श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्यगङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञितमहाराष्ट्रभाषान्वित-गुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वतीयतिविरचितायां श्रीगुरुसंहितायां ज्ञानकाण्डे चतुर्थः (अध्यायः) ॥ आदितः श्लोकाः ॥ ५७५ ॥

तामग्रे वक्ष्यति सरस्वतीसंज्ञो गङ्गाधरात्मजः ॥ ७३ – ७७ ॥ एवं पृष्टः प्राह शिष्याय सिद्धः शुद्धः प्रीत्या यां कथां तां प्रबुद्धः ॥ वक्ष्यत्यग्रे साधु गङ्गाधराख्यविप्रापत्यं यत्सरस्वत्यभिख्यं ॥

इति चूर्णिकायां चतुर्थोऽध्यायः ॥

॥ इति चतुर्थोऽध्यायः ॥ ४ ॥

---

१ पुत्रः

# अथ पंचमोऽध्यायः ॥ ५ ॥

श्रीगणेशाय नमः ॥ ॥ श्रीदत्तात्रेयाय नमः ॥

नामधारकभक्ताय सिद्धः प्राह परेश्वरः ।
नृरूपेण स्वभक्तानां तारणार्थमवातरत् ॥ १ ॥
नामधारक शृण्वेष नानारूपधरोऽभवत् ।
अम्बरीषस्य रक्षार्थमवतारान्दशादधौ ॥ २ ॥
मत्स्यः कूर्मो वराहश्च नरसिंहशरीरधृक् ।
याचको वामनाङ्गेन[1] विप्रोऽपि क्षत्रियान्तकृत् ॥ ३ ॥
पुत्रो दशरथस्यासीच्छ्रीरामो[2] राजभूषणः ।
राजा भूत्वाऽप्यथारक्षद्गोष्ठे गोपगृहेऽपि गाः ॥ ४ ॥
विहाय वसनं नग्नो जातो यो बुद्धधर्मकृत् ।
युगान्ते भविता कल्की म्लेच्छहा सोऽश्ववाहनः ॥ ५ ॥

अध्यायसारसंग्रहश्लोकोऽयम् —
दत्ताय ददौ द्विजांगनाऽन्नं श्राद्धात्पुरतः स पंचमेऽभूत् ॥
श्रीपादभिधः सुतोऽन्धपंगूद्धृद्धद्विराडभूत्परिव्राट् ? ॥

सिद्ध आह। हे नामधारक परेशो भक्ततारणार्थं नृरूपेणावातरत् योऽम्बरीषरक्षार्थं नानारूपधरो भूत्वा दशावतारान्दधौ ॥१॥ २ ॥ मत्स्यः कूर्मः वराहः नृसिंहः याचको वामनः क्षत्रियान्तको भार्गवरामः दाशरथी राजा रामः राजा भूत्वाऽपि गोकुले गोपः नग्नो बुद्धधर्मकृत् युगान्ते म्लेच्छहा कल्कीत्येवं

१ ह्रस्वदेहेन २ श्रिया सीतया सहितो रामः श्रीरामः। राघवत्वेऽभवत्सीता कृष्णत्वे रुक्मिणी मतेति विष्णुपुराणात्.

एवं नानावेषधारी हृषीकेशोऽवतीर्य सः ।
सदा साधुजनान्पाति हन्ति दुष्टान्युगे युगे ॥ ६ ॥
द्वापरान्ते कलौ व्याप्ते विप्रा अज्ञानवेष्टिताः ।
जाता दुराचाररताः कलिदोषेण दूषिताः ॥ ७ ॥
भूतले भक्तरक्षार्थं गुरुनाथोऽप्यवातरत् ।
गङ्गां यथाऽऽनयद्भूमिं पित्रुध्दृत्यै भगीरथः ॥ ८ ॥
तथा विप्रस्त्रिया दत्त आनीतो भक्तियोगतः ।
स तस्यास्तनयो जज्ञे शृणुष्वाश्चर्यमुत्तमम् ॥ ९ ॥
पीठापुरे पूर्वदेशे कुलीनो ब्राह्मणोऽभवत् ।
स आपस्तम्बशाखीयो राजा नाम स्वकर्मकृत् ॥ १० ॥
तद्भार्या सुमतिर्नाम सदाचारा पतिव्रता ।
अभ्यागतातिथीन्नित्यं सत्त्ववृत्त्याऽर्चति स्म या ॥ ११ ॥
सच्छीलगुणसम्पन्ना पतिसेवापरायणा ।
कालं नयति सा नित्यं मुदाऽतिथ्यर्चनादिना ॥ १२ ॥

नानावेषधारी हृषीकेशोऽवतीर्य साधून्पाति । दुष्टान्हन्ति । द्वापरान्ते कलिदूषिता अज्ञविप्रा दुराचारा इति मत्वा ॥ ७ ॥ स धर्मरक्षार्थं गुरुनाथोऽवतीर्णोऽभूत् यथा भगीरथेनात्र गङ्गाऽऽनीता ॥ ८ ॥ तथा भक्तियोगतो विप्रस्त्रिया दत्त आनीतः। स तत्पुत्रो जात इदमाश्चर्यं शृणु ॥ ९ ॥ पूर्वदेशे पीठापुरे स्वकर्मकृद्राजा नामापस्तम्बशाखीयो विप्र आसीत्। सुमतिर्नाम तद्भार्या सदाचारा पतिव्रता सच्छीलगुणसम्पन्ना मुदाऽतिथिसत्कारादिना कालं नयति ॥ १० – १२ ॥ एकदा तद्गृहे श्राद्धाहेऽतिथिरूपेण श्रीदत्तः प्राप । श्राद्धात्प्राक्तस्मै सा भिक्षां ददौ ॥ तद्भक्तिं ज्ञात्वा प्रसन्नो भूत्वा त्रिमूर्त्यात्मकं

एवं सत्येकदा दत्तस्तद्वेश्मातिथिरूपधृक् ।
समागात्तद्दिने दर्शश्राद्धमासीत्पितृप्रियम् ॥ १३ ॥
पित्र्यविप्राशनात्पूर्वं तस्मै भिक्षां ददौ सती ।
भक्तिप्रियः प्रसन्नोऽभूद्दत्तात्रेयस्तदा विभुः ॥ १४ ॥
स्वरूपं दर्शयामास तारकं त्रिगुणात्मकम् ।
पतिव्रता नता भूत्वा भक्त्या तच्चरणेऽग्रहीत् ॥ १५ ॥
दत्तात्रेयोऽवदत्साध्वीं वरं वरय सुव्रते ।
यद्यदिष्टतमं तत्तत्तुभ्यं दास्यामि सत्वरम् ॥ १६ ॥
आकर्ण्य वचनं तस्य विप्रपत्नी प्रणम्य तम् ।
विनयावनता भूत्वा तुष्टाव जगदीश्वरम् ॥ १७ ॥
जगन्नाथ जयानन्त विश्वकर्ताऽसि तारकः ।
यदि मे त्वं प्रसन्नोऽसि मम कामान्प्रपूरय ॥ १८ ॥
त्वं कृपालुः सर्वगतः पुराणादिषु विश्रुतः ।
तव को वर्णयेत्कीर्तिं दयाब्धे भक्तवत्सल ॥ १९ ॥

स्वरूपं दर्शयामास। सा सती तच्चरणे ननाम ॥ १३ – १५ ॥ दत्तात्रेयस्तामाह। हे सुव्रते वरं वरयाभीष्टं दास्यामि ॥ १६ ॥ इति श्रुत्वा सा प्रणम्य विनयाऽवनता सती तुष्टाव। हे जगन्नाथ त्वं विश्वकर्ता तारकोऽसि। यदि प्रसन्नोऽसि तर्हि मे कामान्पूरय। त्वं कृपालुर्व्यापकः सर्वगः पुराणपुरुषः। भो दयाब्धे भक्तवत्सल ते कीर्तिं को वर्णयेत। न मिथ्या ते वाक्। विभीषणाय आचन्द्रार्कं राज्यं ध्रुवाय चाचलं पदं दत्तं

[1] तद्गृहं [2] पितृस्थानीयः [3] श्रुत्वा.

मिथ्या वाक्यं न ते देव त्वं ध्रुवायाचलं पदम् ।
बिभीषणायाचन्द्रार्कं राज्यं दत्तमृतं[1] च तत् ॥ २० ॥
भक्ताधारः स्वभक्तार्थं भूमाववतरिष्यसि ।
भो चतुर्दशलोकेषु व्याप्तास्ते विरुदालयः ॥ २१ ॥
नान्यथा ते वचो भूमन्[2]देवराज कृपानिधे ।
दित्से चेत्त्वं वरं मह्यं वासनावनदाहक ॥ २२ ॥
नारायणानाथनाथ या मे मनसि वासना ।
तां पूरय धृतौ पादौ जगज्जीवन ते मया ॥ २३ ॥
इत्थमत्रितनयोऽस्य[3] कारणं भाषणं सकरुणं निशम्य सः ।
तत्करं समवलम्ब्य तां तदा ब्रूहि मातरिति चाब्रवीन्मुदा ॥२४॥
सा सती समवधार्य तद्वचः स्वामिनं[4] प्रति जगाद सद्वचः ।
मातरित्युदितमीश तेऽत्र सम्बुद्धिसिद्धिरधुनाऽस्तु मय्यसौ[5] २५
पुत्रा मे बहवो जातास्ते मृता द्वौ तु जीवितौ ।
अपि तौ पादनयनरहितौ कष्टजीवितौ ॥ २६ ॥

सत्यं ॥१७–२०॥ त्वं भक्ताधारो भक्तार्थमवतरिष्यसि । चतुर्दशलोकेषु ते यशो व्याप्तं । हे देवराज कृपाब्धे ते वचो न मृषा । वरं दित्से चेन्मे वासनां पूरय ॥ २१ – २२ ॥ हे अनाथनाथ जगज्जीवन ते चरणौ धृतौ ॥२३॥ इत्थं श्रुत्वा दत्तात्रेयः प्रेम्णा तत्करं धृत्वा मातर्ब्रूहीति मुदाऽब्रवीत् । सा तद्वचः श्रुत्वा प्राह । हे ईश मातरित्युक्तं । तत्सत्यं कुरु । मे बहवः पुत्रा जाता मृताश्च । पादाक्षिहीनौ द्वौ जीवितौ योग्यः पुत्रो न जातः ।

---

१ सत्यं २ अपरिच्छिन्न ३ जगतः ४ श्रीदत्तं ५ मयि तव मातृत्वं अस्तु इति भावः.

पुत्रो योग्यो न मे जातो मूर्खैः किं कार्यमार्तिदैः[1] ।
सत्पुत्रेण विना जन्म निष्फलं प्रतिभाति मे ॥ २७ ॥
आयुष्माञ्ज्ञानवाञ्श्रीमाञ्जगद्वन्द्यो भवेद्यदि ।
भवादृशः सुपुत्रो मे साफल्यं तर्हि जन्मनः ॥ २८ ॥
इति तस्या वचः श्रुत्वा प्रसन्नो भगवान्प्रभुः ।
सज्जनान्दीक्षयोद्धर्तुमिदं[2]मेवान्वमोदत ॥ २९ ॥
श्रीदत्तः प्राह ते पुत्रो भविता मादृशोऽनघे ।
कुलमुद्धृत्य युवयोः कलौ विख्यातिमेष्यति ॥ ३० ॥
पालनीयं हि तद्वाक्यं स्थास्यतीतरथा न सः ।
ज्ञानमार्गप्रदो दैन्यपापतापान्हरिष्यति ॥ ३१ ॥
इत्युक्त्वाऽन्तर्दधे[3] तस्याः पश्यन्त्या भगवान्विभुः ।
विस्मिता[4] साऽपि तं चित्ते स्मृत्वा स्मृत्वा पुनः पुनः ॥
साश्चर्या गृहमागत्य यथावृत्तं पतिं प्रति ।
उवाच सोऽपि हृष्टः सन्दत्तोऽयमिति तां जगौ ॥ ३३ ॥

आर्तिदैर्मूर्खैः किं । सत्पुत्रं विना जीवनं निष्फलं । आयुष्यवान्श्रीमान्ज्ञानवान्जगद्वंद्यो भवादृशः पुत्रश्चेत्सफलं जन्म । इति श्रुत्वा प्रसन्नो भगवान्दीक्षया सज्जनानुद्धर्तुं तद्वचोऽन्वमोदत ॥ २३ – २९ ॥ श्रीदत्त आह । मादृशः पुत्रस्ते भविता । युवयोः कुलमुद्धृत्य कलौ ख्यातो भविष्यति । तद्वाक्यं पालितं चेत्स्थास्यति नान्यथा । स ज्ञानप्रदो दैन्यतापान्हारिष्यति ॥३०–३१॥इत्युक्त्वा सोऽन्तर्दधे। सा तं पुनः पुनः स्मृत्वा विस्मिताऽभूत साश्चर्या सा गृहमेत्य भर्त्रे शशंस । स हृष्टः प्राह । दत्तोऽयं ॥३२–३३॥

१ पीडा २ सुमतीवचनमेव ३ तिरोहितोऽभूत् ४ चकिता.

मध्याह्नेऽतिथिवेलायां दत्तो याति द्विजालयम् ।
विमुखी मा भव तदा देह्यन्नं बहुरूपिणे[1] ॥ ३४ ॥

माहुरं करवीरं च पाञ्चालेश्वरमीशितुः ।
देवस्य वसतिस्थानं सदा सर्वात्मनोऽनघे ॥ ३५ ॥

दत्तो भिक्षुकरूपेण नानारूपधरोऽन्वहम् ।
अटत्यस्मै त्वया देया भिक्षा मा पृच्छ मां प्रिये ॥३६॥

सती प्राहापराधो मे क्षन्तव्यो यन्मयाऽर्पितम् ।
श्राद्धात्पूर्वं भगवते श्राद्धीयान्नं दयस्व मे ॥ ३७ ॥

इति श्रुत्वा वचस्तस्यास्तुष्टो विप्रोऽवदत्सति ।
कृतं साधु त्वया तृप्ताः पितरो मे न संशयः ॥ ३८ ॥

पित्रुद्देशेन कर्माणि कृत्वा यस्मै समर्प्यते ।
साक्षादागत्य दत्तः स श्रीविष्णुर्भैक्ष्यमाददे ॥ ३९ ॥

मध्याह्ने दत्तो द्विजगृहं याति । तदा मा विमुखी भव । तस्मै बहुरूपिणेऽन्नं देहि । माहुरं करवीरं पांचालेश्वरं च दत्तस्य वसतिस्थानं । तत्र स नानारूपधरो भिक्षुरूपेण पर्यटति । तदाऽपृष्ट्वाऽपि नानारूपधराय तस्मै प्रत्यहं भिक्षा देया ॥ ३४ ॥ सा प्राह । श्राद्धात्पूर्वं श्राद्धान्नं दत्ताय दत्तं । ममापराधः क्षंतव्यः । तच्छ्रुत्वा तुष्टो विप्र आह । हे सति त्वया साधु कृतं यतः पितरस्तृप्ताः। पित्रुद्देशेन कर्म कृत्वा यस्मै समर्प्यते स विष्णुः साक्षादेत्य भैक्ष्यं जग्राह ॥ ३९॥ तस्मात्कृतार्थाः पितरः स्वर्गे चिरं स्थास्यन्ति । यत-

१ नानारूपधराय.

कृतार्थाः पितरस्तृप्ताः स्वर्गे स्थास्यन्ति ते चिरम् ।
यत्साक्षाद्भगवान्दत्तस्त्रिमूर्त्यात्मा त्वयाऽर्चितः ॥ ४० ॥

धन्या ते जननी मान्या वरो लब्धो यदीदृशः ।
भविष्यति तथा पुत्रो नात्र कार्या विचारणा ॥ ४१ ॥

एवं निश्चितचित्तौ तौ दम्पती हृष्टमानसौ ।
ततः स्वल्पेन कालेन गर्भिणी साऽभवत्सती ॥ ४२ ॥

गतेषु नवमासेषु सा प्रासूत शुभे दिने ।
स्नात्वाऽऽनन्दभरो विप्रो जातकर्मादिकं व्यधात्[2] ॥४३॥

दैवज्ञा[3] एत्य तल्लग्नं वीक्ष्य प्राहुरयं सुतः ।
तपस्वी भविता मान्यो दीक्षादाता जगद्गुरुः ॥ ४४ ॥

इति श्रुत्वोचतुर्हृष्टौ पितरौ श्रीगुरोर्वरात् ।
फलं लब्धमिदं तीर्णाः पितरः सर्वे आवयोः ॥ ४५ ॥

सुचिह्नांकितपादत्वाद्द्वादशाहेऽथ तं सुतम् ।
नाम्ना चकार श्रीपादं त्रिमूर्तिं भक्ततारकम् ॥ ४६ ॥

त्रिमूर्त्यात्मा दत्तस्त्वयार्चितः धन्या ते जननी । यथा ते वरो लब्धस्तथा पुत्रो भविष्यति । नात्र संशयः । एवं निश्चित्य दंपती हृष्टौ । ततोऽचिरात्सा गर्भिणी जाताऽथ दशमे मासे पुत्रं प्रासूत । तदा द्विजः स्नात्वा जातकर्माकरोत् । दैवज्ञा तल्लग्नं वीक्ष्योचुः । सुतोऽयं तपस्वी मान्यो दीक्षादो जगद्गुरुर्भविता । इति श्रुत्वा पितरौ हृष्टौ प्रोचतुः गुरुवरफलमिदं । पितरोऽपि मुक्ताः द्वादशेऽह्नि सुचिह्नांकितपादत्वात्तद्बालस्य श्रीपाद इति नाम विहितं । स

१ यस्मात् २ अकरोत् ३ ज्यौतिषिकाः

स बालोऽवर्धत समं विद्याभिः सद्गुणैर्धिया ।
अष्टमेऽब्देऽकरोत्तस्य व्रतबन्धं पिता मुदा ॥ ४७ ॥

ब्रह्मचर्यविधानेन साङ्गान्वेदान्यथाविधि ।
शास्त्राणि चाददे[1] शास्त्रयोनिः[2] शास्त्रपटुर्बटुः[3] ॥ ४८ ॥

पाठशक्तिं बटोर्वीक्ष्य तथा ग्रंथार्थधारणाम् ।
लोका विस्मयमापन्ना आहुरेष परेश्वरः ॥ ४९ ॥

आचारं व्यवहारं च प्रायश्चित्तं यथायथम् ।
वेदान्तभाष्यवेदार्थान्कथयामास निर्भ्रमम् ॥ ५० ॥

एवं लीलानराकारः सर्वविद्यापरायणः ।
अभूत्तस्य विवाहार्थं प्रवृत्तौ पितरौ मुदा ॥ ५१ ॥

तथोद्युक्तौ[4] तु तौ प्रेक्ष्य निवार्य श्रीपदोऽवदत् ।
उद्वोढुं मानुषीं भार्यां मम नोत्सहते मनः ॥ ५२ ॥

विरतिर्मे[5] मता कान्ता नापरा मम सम्मता ।
तया सह विवाहो मे भवत्विति विनिश्चितम् ॥ ५३ ॥

बालो धीसद्गुणैःसहावर्धत । पित्रा तस्याष्टमेऽब्दे व्रतबंधः कृतः ॥४०–४७॥ स बटुर्यथाविधि ब्रह्मचर्येण सांगान्वेदान् शास्त्राणि चापठत् । तत्पाठशक्तिं धारणां च ज्ञात्वा विस्मिता लोका अयमीश्वर इत्याहुः । आचारं व्यवहारं प्रायश्चित्तं वेदान्तभाष्यवेदार्थान्सोऽकथयत् । एवं लीलानरः श्रीपादः सर्वविद्यापरोऽभूत् । स्वविवाहार्थमुद्युक्तौ पितरौ निवार्याह । मानुषीभार्योद्वाहे

---

१ स्वीचकार २ कारणं ३ कुशलः ४ उत्सुकौ ५ वैराग्यं.

योगश्रीः सुन्दरी नारी वरणीया मया खलु ।
तया विनाऽपरा नारी मम मातृसमा मता ॥ ५४ ॥

तापसोऽहं ब्रह्मचारी प्रवृत्तिविमुखः सुखः[1] ।
मनसाऽपि न कांक्षेऽन्यां नूनं योगश्रियं विना ॥ ५५ ॥

श्रीवल्लभोऽस्मि श्रीपादः कृतार्थोऽहं हि तत्त्ववित् ।
उत्तरेण पथा[2] यास्य इत्यादि ज्ञानमादिशत् ॥ ५६ ॥

श्रुत्वा पुत्रस्य वचनं स्मृत्वाऽऽत्रेयस्य[3] भाषणम् ।
मत्वा तद्वचसो हार्दं ज्ञात्वा श्रीदत्तमित्यमुम् ॥ ५७ ॥

भाषणोल्लङ्घनादस्य महाविघ्नो भविष्यति ।
अतोऽमुमनुसृत्यास्मै दुःखं विज्ञाप्य च स्वकम् ॥५८॥

अस्य चित्तं यथा तुष्येत्तथा कर्तव्यमादरात् ।
नास्मत्पुत्रोऽवतीर्णोऽयं दत्तः परमपूरुषः ॥ ५९ ॥

च्छा न मम । विरतिर्मे कांता मता । तया सह मे विवाहो भवतु । तया विनाऽन्या नारी मम मातृसमा । तापसोऽहं ब्रह्मचारी प्रवृत्तिपराङ्मुखो मनसाऽप्यन्यां न कांक्षे ॥५५॥ श्रीपादः श्रीवल्लभोऽहं कृतार्थः उत्तरमार्गेण यास्ये ॥ ५६ ॥ इति तद्वचः श्रुत्वा दत्तवाक्यं स्मृत्वा श्रीदत्तोऽयमिति ज्ञात्वाऽस्य भाषणोल्लंघनाद्विघ्नो भविष्यति । अतोऽमुमनुसृत्यास्मै स्वदुःखं निवेद्य यथाऽस्य चित्तं तुष्येत्तथा कार्यं । नायमस्मत्पुत्रो दत्तोऽयमवतीर्णः । इति निश्चित्य जननी पुत्रसमीपमेत्य प्राह । हे पुत्र, त्वं नः पालकः । आशां निष्फलां मा कुरु । इति पुत्रस्नेहेन व्याकुलाऽश्रुमुखी

१ सुखस्वरूपः नतु विषयसुखापेक्षः २ निवृत्तिमार्गेण ३ दत्तात्रेयस्य.

इति निश्चित्य जननी पुत्राभिमुखमेत्य तम् ।
प्राहाशां निष्फलां पुत्र मा कुरु त्वं हि पालकः ॥६०॥
इत्युक्त्वा व्याकुलमतिः सुमतिः साश्रुदृक्सती[1] ।
पुत्रस्नेहेन पतिता रम्भा[2] वाताहता यथा ॥ ६१ ॥
तादृशीं प्रेक्ष्य जननीमुत्थाप्याश्वास्य तां सुतः ।
प्रक्षाल्याश्रूणि हस्तेन सम्बोध्य प्राह पूरुषः ॥ ६२ ॥
चिन्तां मा कुरु भो मातर्यदिच्छसि ददामि तत् ।
मातश्चित्तं दृढं कृत्वा सुखं तिष्ठ शुचिस्मिते ॥ ६३ ॥
सा प्राह त्वां विलोक्यैव दुःखं त्यक्तं मयाऽखिलम् ।
दैन्यं निवार्य वार्धक्ये रक्षितेत्यभिकांक्षितम् ॥ ६४ ॥
वृद्धावावां[3] पङ्गुरेकः पुत्रोऽन्यो दृष्टिवर्जितः ।
त्वयि प्रव्रजिते[4] त्राता कोऽस्माकं वद पुत्रक ॥ ६५ ॥
इति मातृवचः श्रुत्वा सुधादृष्ट्याऽग्रजौ[5] प्रभुः ।
ददर्श तौ तदा जातौ सुपादाक्षियुतौ क्षणात् ॥ ६६ ॥

माता वाताहता कदलीवापतत् ॥ ५७–६१ ॥ तां तथाविधां वीक्ष्योत्थाप्य करेणाश्रु प्रक्षाल्याश्वास्य मातरिति संबोध्य प्राह श्रीपादः । भो मातश्चिंतां मा कुरु। यदिच्छसि तद्दास्ये । त्वं चित्तं दृढं कृत्वा सुखं तिष्ठ॥६२॥६३॥ माता प्राह । त्वां दृष्ट्वा सर्वदुःखं त्यक्तं । त्वं नो दैन्यं निवार्य वार्धक्ये रक्षसीति कांक्षितं ॥ ६४ ॥ आवां वृद्धौ पुत्रश्चैकः पंगुर्द्वितीयोऽन्धश्च । त्वयि प्रव्रजितेऽस्माकं कस्त्राता ॥ ६५ ॥ इति श्रुत्वा श्रीपादः सुधादृष्ट्याऽग्रजौ ददर्श । स्पर्शस्पर्शाल्लोहं काञ्चनमिव तद्दृष्ट्या सुपादाक्षियुतौ तौ

---

१ साश्रुनेत्रा २ कदली ३ दंपती ४ संन्यस्य याते सति ५ भ्रातरौ.

यथा चिन्तामणिस्पर्शादयो भवति काञ्चनम् ।
महात्मनस्तथा दृष्ट्या तत्क्षणं योग्यतां गतौ ॥ ६७ ॥

वेदशास्त्रकलाभिज्ञौ भूत्वा समवलम्ब्य तौ ।
श्रीपादपादावर्गदौ कृतार्थाविति चोचतुः ॥ ६८ ॥

तानाश्वास्य वरं दत्वा श्रीपादः प्राह सोदरौ ।
युवां मम प्रसादेन पुत्रपौत्रश्रियान्वितौ ॥ ६९ ॥

इहामुत्रे च सौख्यं वां जनन्या जनकस्य च ।
भूत्वा कृतार्थौ मद्वाक्यात्कैवल्यं गच्छतं ध्रुवम् ॥७०॥

इत्युक्त्वा तौ समाश्वास्य श्रीपादः प्राह मातरम् ।
आभ्यां सुताभ्यां सहिता लभस्व सुखमुत्तमम् ॥ ७१ ॥

शतायुषौ सुतावेतौ पुत्रान्पुत्रीः किलैतयोः ।
द्रक्ष्यसि त्वं स्वनेत्रेण चिन्तां मा कुरु मानदे ॥ ७२ ॥

क्षणाद्योग्यतां गतौ ॥ ६७ ॥ वेदशास्त्रादिज्ञौ तौ श्रीपादपादौ धृत्वा आवां कृतार्थौ जाताविति प्रोचतुः ॥६८॥ तानाश्वास्य वरं दत्वा श्रीपाद आह । मत्प्रसादात् युवयोः पुत्रपौत्रश्रियोऽत्रामुत्र च सौख्यं भुक्त्वा पितृभ्यां सह कैवल्यं गच्छतं । इत्युक्त्वा मातरं प्राह । आभ्यां सुताभ्यां सहोत्तमं सुखं लभस्व ॥ ६९ – ७१ ॥ शतायुषोरेतयोः सुतयोः पुत्रान्पौत्रांश्च द्रक्ष्यसि । हे मानदे चिंतां मा कुरु ॥७२॥ अनयोर्वंशे श्रीर्निश्चला शाश्वती कीर्तिश्च

१ अनामयौ २ परत्र.

श्रीर्निश्चलाऽनयोर्वंशे कीर्तिः स्थास्यति शाश्वती ।
भविष्यत्यनयोर्वंशे वेदशास्त्रादिपारगाः ॥ ७३ ॥

मा कुर्वनादरं मेऽम्ब[1] देह्यनुज्ञामितो द्रुतम् ।
दीक्षां प्रदातुं साधुभ्यो यास्याम्युत्तरवर्त्मना ॥ ७४ ॥

इत्युक्त्वा तां नमस्कृत्य तयाऽऽज्ञप्तः स तत्क्षणम् ।
भूत्वाऽदृश्यो ययौ काशीं श्रीपादो भक्तिभावनः॥७५॥

लीलाविहारी भगवान्गत्वा बदरिकाश्रमम् ।
दृष्ट्वा नारायणं स्वाङ्गं[2] नरं कारणमानुषः ॥ ७६ ॥

दीक्षां दातुं स्वभक्तेभ्यः पर्यटन्सकलां महीम् ।
मनोगतिः[3] प्रभुस्तस्थौ गोकर्णक्षेत्रमुत्तमम् ॥ ७७ ॥

इति सिद्धवचोऽमृतोपमं ह्यवधार्याथ[4] स नामधारकः ।
अभिवाद्य तमाह पूजितं विरतं[5] कीर्तनतो नतो मतः ॥७८॥

भविष्यति । एतद्वंशे वेदशास्त्रपारगा भविष्यंति । आज्ञां मे देहि । तिरस्कारं मा कुरु । साधुभ्यो दीक्षां दातुमुत्तरमार्गेण यास्ये ॥ ७३ ॥ ७४ ॥ इत्युक्त्वा तां नमस्कृत्य तयाऽऽज्ञप्तस्तदा गुप्तो भूत्वा श्रीपादः काशीं ययौ ॥ ७५ ॥ लीलाविहारी स भगवान्बदर्याश्रमे नारायणं नरं च दृष्ट्वा स्वभक्तेभ्यो दीक्षां दातुं महीं पर्यटन्मनोवेगेन गोकर्णमेत्य तस्थौ । इति सिद्धवचोऽमृतं श्रुत्वा नामधारकः सिद्धं नत्वा प्राह ॥ ७६ ॥ ७७ ॥ ७८ ॥

---

१ भो मातः २ स्वांशभूतं ३ मनसो गतिरिव गतिर्यस्य अथवा मनसोऽपि अगतिः अविषयत्वात् यन्मनसा न मनुत इति श्रुतेः ४ श्रुत्वा ५ कीर्तनादुपरतं.

(इति) श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्यगङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञितमहाराष्ट्रभाषान्वितगुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वतीयतिविरचितायां श्रीगुरुसंहितायां ज्ञानकाण्डे पञ्चमः (अध्यायः) ॥ आदितः श्लोकाः ॥ ६५३ ॥

इति सिद्धवचोऽमृतोपमं ह्यवधार्याथ स नामधारकः ॥
अभिवाद्य तमाह पूजितं विरतं कीर्तनतो नतो मतः ॥

॥ इति चूर्णिकायां पंचमोऽध्यायः ॥ ५ ॥

॥ इति पंचमोऽध्यायः ॥ ५ ॥

# ॥ अथ षष्ठोऽध्यायः ॥ ६ ॥

॥ श्रीगणेशाय नमः ॥ ॥ श्रीदत्तात्रेयाय नमः ॥

स नामधारकोऽपृच्छदज्ञानध्वान्तभास्कर ।
आदितो गुरुपीठं मे श्रावितं सिद्ध सद्गुरो ॥ १ ॥

त्रिमूर्तिरवतीर्यात्र कुतः पर्यटति क्षितौ ।
विशेषतः किमर्थं स गोकर्णं श्रीपदो गतः ॥ २ ॥

तीर्थानि बहु सन्तीह तानि हित्वा महीतले ।
श्रीपादः श्रीवल्लभोऽसौ गोकर्णेऽस्थात्कुतो वद ॥ ३ ॥

इति सिद्धवचः श्रुत्वा सन्तुष्टः सिद्ध आह तम् ।
समीचीनः कृतः प्रश्नः सन्तुष्टोऽस्मि तवोपरि ॥ ४ ॥

नामधारक ऊचे त्वं तुष्टोऽसि यदि मे वद ।
विस्तरेण गुरोर्लीलां स्वामिन्निति पदेऽग्रहीत् ॥ ५ ॥

अध्यायसारसंग्रहश्लोकोऽयम्—

शिवो दशास्याय ददौ स्वलिंगं प्रगृह्य दंभाद्गणपस्ततस्तत् ॥
उपेंद्रवज्रास्त्रमुखेरितः कौ महाबलेशं निदधौ स षष्ठे ॥ १ ॥

नामधारक आह। हे अज्ञानध्वांतभास्कर, गुरुपीठमादितो मे श्रावितम् ॥ १ ॥ त्रिमूर्त्यवतारोऽयं श्रीपादः कुतः पर्यटति भूतलस्थानि महातीर्थानि त्यक्त्वा किमर्थं गोकर्णे तस्थौ इति श्रुत्वा तुष्टः सिद्ध आह। तवोपरि तुष्टोऽस्मि। समीचीनोऽयं ते प्रश्नः। नामधारक आह यदि तुष्टोऽसि तर्हि विस्तरेण श्रीगुरुलीलां कथय इति तत्पदे दधौ ॥ २-५ ॥

श्रुत्वा तत्प्रार्थनां सिद्धः सन्तोषेण तमब्रवीत् ।
श्रीगुरोश्चरितं रम्यं नामधारक मे शृणु ॥ ६ ॥

श्रीगुरोश्चरितं वक्तुं हर्षो मेऽतीव वर्धते ।
लाभो ममाप्यभूद्यस्मात्तल्लीलास्फूर्तिरुद्यता ॥ ७ ॥

तीर्थानि पर्यटत्येष त्रिमूर्त्यात्माऽपि सन्स्वयम् ।
तस्थौ गोकर्णके क्षेत्रे किमर्थमिति चेच्छृणु ॥ ८ ॥

दत्तात्रेयः स्वयं तीर्थरूपोऽपि भुवि पर्यटन् ।
निजपर्यटनेनैव भक्तानुद्धरतीश्वरः ॥ ९ ॥

उपदेक्ष्यन्विशेषेण स्वस्य शङ्कररूपिणः ।
गोकर्णाख्यं ययौ क्षेत्रं प्रसिद्धं यन्महीतले ॥ १० ॥

शृणु गोकर्णमाहात्म्यं लोके निरुपमं खलु ।
सावधानमना भूत्वा शृणु त्वं नामधारक ॥ ११ ॥

अस्मिन्गोकर्णके क्षेत्रे बहवो लेभिरे वरान् ।
अपूर्वमिव तत्क्षेत्रं यत्र साक्षात्सदाशिवः ॥ १२ ॥

ततः सिद्धः संतोषात्तं प्राह । रम्यं श्रीगुरुचरित्रं शृणु ॥ ६ ॥ तद्वक्तुं ममापि हर्षोऽभूत् यतस्तल्लीलास्फूर्तिर्जाता ममायं लाभः ॥ ७ ॥ स्वयं त्रिमूर्त्यात्मा यदर्थं पर्यटति गोकर्णे च तस्थौ तच्छृणु। स स्वयं तीर्थरूपोऽपि तीर्थाटनेन भुवि भक्तानुद्धरन्पर्यटति ॥ ८-९ ॥ शंकररूपिणः स्वस्य क्षेत्रं गोकर्णं प्रख्यापयन्गोकर्णे तस्थौ। लोके निरुपमं गोकर्णमाहात्म्यं तत्ते वक्ष्ये। सावधानतया शृणु। अत्र क्षेत्रे बहवो वरान्लेभिरे तदेतदपूर्वं क्षेत्रं। यत्र साक्षात्सदाशिवः। महाबलेशाख्यं स्वयंभूलिंगं विष्णोराज्ञया

महाबलेशलिङ्गं तत्स्वयम्भूः शिव एव हि ।
लम्बोदरेण श्रीविष्णोराज्ञयैव प्रतिष्ठितम् ॥ १३ ॥
इति श्रुत्वा पुनः सिद्धं पप्रच्छ स कुतो वद ।
विघ्नेश्वरेण तल्लिङ्गं स्थापितं विष्ण्वनुज्ञया ॥ १४ ॥
सिद्ध आह शृणुष्वार्य कथयामि तवादितः ।
महाबलेश्वरस्येदं चरितं सर्वकामदम् ॥ १५ ॥
कैकसीनामिका भार्या पौलस्त्यब्राह्मणस्य तु ।
अतिभक्त्या सर्वकालं शिवपूजनतत्परा ॥ १६ ॥
नान्नं गृह्णाति सा नित्यं शिवलिङ्गार्चनं विना ।
एवं सत्याः कदाचित्तु न लब्धं लिङ्गमर्चितुम् ॥ १७ ॥
व्रतभङ्गभिया सा तु मृन्मयं लिङ्गमुत्तमम् ।
विधायाऽनर्च[1] परया भक्त्या चैकाग्र्य आस्थिता ॥१८॥
तदा तत्तनयस्तत्र रावणो लोकरावणः[2] ।
मातरं द्रष्टुमापन्नो योऽतिक्रूरो दशाननः ॥ १९ ॥

गणेशेन स्थापितं ॥१०-१३॥ इति श्रुत्वा नामधारक आह । विष्णवाज्ञया गणेशेन कुतो लिंगं स्थापितं । सिद्ध आह सर्वकामदं महाबलेशचारितमादितो वक्ष्ये शृणु । पुलस्त्यभार्या कैकसी सदाऽतिभक्त्या शिवपूजनरताऽभूत्सा शिवार्चनं विनाऽन्नं न गृह्णाति । एवं सत्या एकदा लिंगं न लब्धं । तदा सा व्रतभंगभिया मृन्मयं लिंगं कृत्वा भक्त्यैकाग्र्येणापूजयत् ॥१४-१८॥ तदा तत्पुत्रः क्रूरो रावण एत्य मातरं नत्वा हे भद्रे किं करोषि तदखिलं वद । त्वं मे माताऽसि । मम तु सिद्धयो दास्यः । ममैतद्दौर्भाग्यं यदेतन्मृन्मयलिंगार्चनं । अस्तु नाम तथाऽस्य पूजनात्किं फलं । माता प्राह । कैलासपदप्राप्तिः॥१९॥

---

१ पूजयामास २ लोकान् रावयतीति तथा.

प्रणम्य मातरं दृष्ट्वा लिङ्गपूजनतत्पराम् ।
पप्रच्छ किमिदं भद्रे करिष्यसि वदाखिलम् ॥ २० ॥

माता त्वं मम विख्याता दास्यो मे सिद्धयोऽखिलाः ।
किमर्थं मृन्मयं लिङ्गमेतद्दौर्भाग्यमेव मे ॥ २१ ॥

अस्तु नाम तथाऽप्यस्य पूजनात्किम्फलं मिलेत् ।
सा प्राह पूजनादस्य कैलासपदमाप्यते ॥ २२ ॥

रावणः प्राह सायासो व्यर्थोऽयं क्रियते त्वया ।
अहमानीय कैलासं दास्यामि क्षणमात्रतः ॥ २३ ॥

लङ्कापुरेऽपि कैलासमुमारमणसंयुतम् ।
आनीय तुभ्यं दास्यामि त्वरितं न मृषा वचः ॥ २४ ॥

सावधानेन मनसा ततस्तं पूजयानिशम् ।
किं मृन्मयेन लिङ्गेनेत्युक्त्वा यातो निशाचरः ॥ २५ ॥

मनोवेगेन कैलासं प्राप्य राजतपर्वतम् ।
उत्पाटयितुमारेभे धृत्वा विंशतिबाहुभिः ॥ २६ ॥

चालयामास कैलासं रावणः स महाबलः ।
शिरांसि दश चाप्यस्य प्रान्ते संस्थाप्य यत्नतः ॥ २७ ॥

२०॥२१॥२२॥ रावण आह । व्यर्थोऽयं तव श्रमः क्षणात्कैलासमानीय ते दास्ये। न मे मृषा वचः शिवसहितं कैलासमानेष्ये। सावधानतयाऽनिशं शिवं पूजय। किं मृन्मयलिंगेनेत्युक्त्वा वेगेन कैलासं प्राप्य विंशतिबाहुभिः रौप्यपर्वतं धृत्वा तत्प्रांते दशशिरांसि च स्थापयित्वा यत्नादुत्पाटयितुमारेभे ॥२३-२७॥ उत्संगयोः करौ धृत्वा यदा कैलासं चालयामास

उत्सङ्ग्योः करान्धृत्वा लीलयैवोज्जहार तम् ॥
पातालानि तदा चेलुरपि सप्त ततः क्षणात् ॥ २८ ॥

शेषोऽपि चकितो जातः कूर्मोऽकस्माच्च शङ्कितः ।
भीता देवगणाः सर्वे चचालाप्यमरावती ॥ २९ ॥

सप्तोर्ध्वलोकयुक्ता भूः सशैलवनकानना ।
मेरुश्चचाल लोकाश्च मेनिरे प्रलयागमम् ॥ ३० ॥

कैलासीया शिवगणा अभवन्भयपीडिताः ।
भीतभीताऽद्रिदुहिता शङ्करं शरणं गता ॥ ३१ ॥

शिवाऽऽलिंग्य शिवं प्राह कैलासोऽयं पतत्यधः ।
अकस्मात्किमिदं प्राप्तं सभागेहादि कम्पितम् ॥ ३२ ॥

आक्रान्तः सर्वतो जातो भवतः स्वस्थता कुतः ।
कुरुष्वास्य प्रतीकारमित्युक्त्वा तत्पदेऽग्रहीत् ॥ ३३ ॥

तदा सप्तपातालानि चेलुः । शेषश्चकितः कूर्मोऽपि शंकितः । इंद्रपुरी चचाल । देवा अपि भीताः । सप्तोर्ध्वलोकसहिता सशैलवनकानना भूमिर्मेरुश्चचाल । लोकाः प्रलयागमं मेनिरे । कैलासे भयपीडिताः गणाः पार्वती च भीता शिवमालिंग्य प्राह कैलासोऽयं पतति सभागेहादि कम्पते । सर्वत आक्रान्तो जातस्तव कथं स्वस्थता । हे शिव प्रतीकारं कुर्विति पादौ दधौ ॥ २८-३३ ॥ शिव आह । हे गिरिजे रावणोऽयं भक्तः

शङ्करः प्राह गिरिजे भक्तोऽयं रावणो मम ।
क्रीडतीह त्वया चिन्ता न कर्तव्याऽधुनाऽबले ॥ ३४ ॥

इति श्रुत्वेशवचनं गिरिजा पुनरब्रवीत् ।
शूलपाणे सुरगणांत्रक्ष रक्षाखिलान्प्रभो ॥ ३५ ॥

पार्वत्या वचनं श्रुत्वा शङ्करः सर्वशङ्करः ।
वामहस्तेन कैलासमधश्चक्रे सरावणम् ॥ ३६ ॥

रावणश्चिन्तया युक्तः कैलासाधः स्म मुह्यति ।
स्तोष्ये शिव शिव त्राहि शरणागतरक्षण ॥ ३७ ॥

पिनाकपाणे मां त्राहि जगत्पातृशिरोमणे ।
शरणं त्वां प्रपद्येऽतो मरणं किं नु दास्यसि ॥ ३८ ॥

शङ्करो भक्तवात्सल्यात्कृपया परया युतः ।
पर्वताधोगतं तं च मोचयामास रावणम् ॥ ३९ ॥

लङ्केश्वरस्ततो मुक्तो भक्त्या तुष्टाव शङ्करम् ।
सुस्वरं साङ्गरागाढ्यं कोमलं सकलं जगौ ॥ ४० ॥

क्रीडति। चिन्तां मा कुरु। पुनः पार्वती प्राह हे शूलपाणे देवादीन्रक्ष रक्ष ॥ ३४-३५ ॥ इति श्रुत्वा शंकरः रावणसहितं कैलासं हस्तेनाधश्चक्रे। तेन कैलासाधो गतो मोहितो रावण आह। हे शरणागतवत्सल शिव त्राहि त्राहि। हे पिनाकपाणे रक्षकशिरोमणे त्वां प्रपन्नं मां मारयसि किं। तच्छ्रुत्वा भक्तवत्सलः शिवस्तं कृपया मोचयामास। स मुक्तो रावणः शिवतुष्ट्यै स्वशिरसो वीणां कृत्वा सप्तस्वरसहितं षट्त्रिंशद्रागिणीषड्रागसहितं मनोहरं जगौ ॥ ३६-४० ॥

रावणस्य च भक्त्या तु प्रसन्नोऽभूत्स ईश्वरः ।
तस्थौ तत्सम्मुखं हृष्टो निजरूपेण शङ्करः ॥ ४१ ॥
त्रिनेत्रः पञ्चवक्त्रः स भूत्वा सन्तुष्टमानसः ।
रावणं प्राह हृष्टोऽस्मि वरं वरय कामितम् ॥ ४२ ॥
रावणः प्राह किं प्रार्थ्यं दासी लक्ष्मीर्गृहे मम ।
तथाऽष्टनिधयः सन्ति दासा इव सदाशिव ॥ ४३ ॥
चतुरास्यो ज्यौतिषिकः सदा मे वशवर्तिनः ।
वृन्दारकास्त्रयस्त्रिंशत्कोटिका मम सेवकाः ॥ ४४ ॥
आश्रयाशो[1]ऽपि सोऽग्निर्मे वस्त्रक्षालनकर्मणि ।
योजितो न कृतान्तो[2]ऽपि हन्ति मद्वचनं विना ॥ ४५ ॥
कुम्भकर्णो मम भ्राता शक्रजेता सुतो मम ।
स्थानं मेऽब्धौ सुरागम्यं कामधेनुर्गृहे मम ॥ ४६ ॥
सहस्रकोटिवर्षायुर्मम कोऽन्योऽस्ति मादृशः ।
वेत्सीदं सर्वमीशान कैलासं नेतुमागतः ॥ ४७ ॥
व्रतमस्ति जनन्या मे नित्यं त्वां पूजयिष्यति ।
दातः[3] पूरय भक्तस्य कृपामूर्ते मनोरथम् ॥ ४८ ॥

तद्भक्त्या प्रसन्नः शिवः स्वरूपेण तत्सम्मुखे तस्थौ । तुष्टोऽस्मि । वरं वरयेति च प्राह । रावण आह । हे शिव, लक्ष्मीर्मे दासी । नवनिधयोऽपि दासाः । ब्रह्मा ज्यौतिषिकः । सदा वशवर्तिनस्त्रयस्त्रिंशत्कोटिदेवाश्च सेवकाः । अग्निर्वस्त्रक्षालकः । यमो मद्वचनं विना न हन्ति । कुम्भकर्णो मे भ्राता । सुत इन्द्रजिच्च । समुद्रे मे स्थानं सुरासुरागम्यं । कामधेनुश्च मे गृहे । सहस्रकोटिवर्षाणि ममायुर्न कोऽपि मत्समः । इदं वेत्सि । जनन्यर्थं कैलासं नेतुमागतोऽस्मि । ततः सा त्वां पूजयिष्यति । कृपामूर्ते मे मनोरथान्पूरय ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ शिव आह । अलं गानेन ।

---

१ आश्रयं काष्ठादिं अश्नातीत्याश्रयाशः  २ यमः  ३ भो दातः.

ईश्वरो रावणं प्राह कैलासेन प्रयोजनम् ।
किं किं गानेन ते दास्य आत्मलिङ्गं सुदुर्लभम् ॥ ४९ ॥

सद्यो लिङ्गार्चनेनैव या या मानसवासना ।
सा सा सम्पूर्णतां यायात्प्राणलिङ्गार्चनान्मम ॥ ५० ॥

रुद्राभिषेकपूर्वं हि त्रिकालं तस्य पूजनम् ।
कृत्वा षडक्षरं मन्त्रं जपित्वाऽष्टोत्तरं शतम् ॥ ५१ ॥

एवं त्रिवर्षपर्यन्तं पूजनात्सर्वकामभाक् ।
भूत्वा त्वं रावण ततो मत्स्वरूपो भविष्यसि ॥ ५२ ॥

यत्सन्निधावदो लिङ्गं तस्य मृत्युभयं कुतः ।
सर्वे दोषाः प्रणश्यन्ति लिङ्गदर्शनमात्रतः ॥ ५३ ॥

न स्थापय क्षितौ लिङ्गं यावल्लङ्कां गमिष्यसि ।
त्रिवर्षपूजनादीशस्त्वं कैलासश्च ते पुरम् ॥ ५४ ॥

इति कर्पूरगौरेण वरो दत्तस्ततः स च ।
साष्टाङ्गं तं प्रणम्याशु लङ्कां गन्तुं समुद्यतः ॥ ५५ ॥

सुदुर्लभमात्मलिङ्गं ते दास्ये। किं कैलासेन। मम प्राणलिङ्गार्चनात्सर्ववासनापूर्तिः। रुद्राभिषेकपूर्वकं त्रिकालं सम्पूज्याष्टोत्तरशतवारं षडक्षरं जप। त्रिवर्षपूजनात्सर्वकामाप्तिः। त्वं मत्स्वरूपश्च भविष्यसि ॥ ४९-५२ ॥ यत्रेदं लिङ्गं तत्र मृत्युभयं न। यद्दर्शनात्सर्वदोषनाशः। यावल्लंकां यास्यसि तावद्भूमौ मा निधेहि। त्रिवर्षपूजनात्त्वमीश्वरो लंका च कैलासो भविष्यति ॥ ५३-५४ ॥ इति लब्धवरो रावणः शिवं साष्टाङ्गं प्रणम्य लंकां गन्तुं प्रतस्थे ॥ ५५ ॥ नारदस्तज्ज्ञात्वा तत्क्षणं स्वर्गत्वेन्द्रं

ऋषीश्वरो नारदोऽथ ज्ञात्वेदं तत्क्षणं द्रुतम् ।
मत्वाऽसमञ्जसं सर्वं सुरेन्द्रभुवनं ययौ ॥ ५६ ॥
उवाच नारदः स्वस्थमुपविष्टोऽसि किं वद ।
इन्द्रामरत्वं त्वल्लक्ष्मी रावणेनाधुना हृता ॥ ५७ ॥
जातश्चिरायुर्लंकेशो लब्ध्वा कर्पूरगौरतः ।
प्राणलिङ्गं शिवेनोक्तं मत्तुल्यस्त्वं भविष्यसि ॥ ५८ ॥
त्रिवर्षपूजनात्त्वं हि मत्स्वरूपो भविष्यसि ।
पुरी च तेऽपि कैलासो नापि मृत्युभयं तव ॥ ५९ ॥
इति लब्धवरः शम्भोस्तुष्टोऽगाद्रावणः पुरम् ।
[1]कारायां ये सुरा बद्धास्तेषां मुक्तिरतः कुतः ॥ ६० ॥
लङ्कायां सेव्यतां नित्यं भवद्भिरथ रावणः ।
रम्भोर्वश्यादयो देव्यः सेवां कुर्वन्तु तस्य तु ॥ ६१ ॥
इन्द्रो मुनिवचः श्रुत्वा भीतोऽकम्पत सामरः ।
प्रणम्य नारदं प्राह किं कर्तव्यमितः परम् ॥ ६२ ॥

प्राह । किं स्वस्थमुपविष्टोऽसि । त्वल्लक्ष्मी रावणेन हृता ॥ ५६-५७ ॥ स शिवात्प्राणलिङ्गं लब्ध्वा चिरायुर्जातः । तस्मै शिवेनोक्तं त्रिवर्षं लिङ्ग-पूजनान्मत्स्वरूपो भविष्यसि । न ते मृत्युभयं पुरी च ते कैलासो भविष्यति ॥ ५८-५९ ॥ इति शंभोर्लब्धवरो रावणो गतः । तेन बद्धानां देवानां कुतो मोक्षः । अथ तत्तोषार्थमुर्वश्यादीन्नीत्वा भवद्भी रावणः सेव्यतां । इतीन्द्रो मुनिवचः श्रुत्वा भीतो देवैः सह नारदमाह । किं कर्तव्यमिति ॥ ६०-६२ ॥ नारद आह । ब्रह्माणं शरणं गच्छ ।

---

१ बंधनागारे.

नारदः प्राह देवेन्द्र ब्रह्माणं शरणं व्रज ।
कथयिष्यत्युपायं ते स ज्ञाता सर्वलोकसृट् ॥ ६३ ॥

ततः स मुनिना सार्धं ब्रह्मलोकं द्रुतं गतः ।
तस्मै निवेदयामास यथावृत्तं सुराधिपः ॥ ६४ ॥

ब्रह्मोवाच सुरेन्द्रं तं वैकुण्ठं गच्छ सत्वरम् ।
दैत्यारिः स हृषीकेश उपायं हि विधास्यति ॥ ६५ ॥

ततस्तौ ब्रह्मदेवश्च वैकुण्ठभुवनं गताः ।
प्राप्य नारायणं देवं स्ववृत्तान्तं न्यवेदयन् ॥ ६६ ॥

ब्रह्मोवाच महाविष्णो प्रतीकारं द्रुतं कुरु ।
महासङ्कटमग्रेऽपि तव देव भविष्यति ॥ ६७ ॥

त्रयस्त्रिंशत्कोटिसुरा निबद्धा रावणेन हि ।
तन्मोचनार्थमग्रे त्वं क्षिताववतरिष्यसि ॥ ६८ ॥

ईश्वरस्य प्राणलिङ्गं गृहीत्वाऽगात्खलाग्रणीः ।
रावणस्य न भङ्गोऽतः स एवेशो भविष्यति ॥ ६९ ॥

स उपायं कथयिष्यतीति । ततः सनारद इन्द्रो ब्रह्मलोकं गत्वा तन्न्यवेदयत् । ब्रह्माऽऽह । हे इन्द्र वैकुण्ठं गच्छ । दैत्यारिर्विष्णुरुपायं करिष्यति ॥ ६३-६५ ॥ ततस्तौ ब्रह्मदेवश्च वैकुण्ठं प्राप्य सर्वं विष्णवेऽकथयन् ॥ ६६ ॥ ब्रह्माऽऽह । विष्णो शीघ्रं यत्नं कुरु । नो चेदग्रे संकटमेष्यति । त्रयस्त्रिंशत्कोटिदेवा रावणेन बद्धास्तन्मोचनाय त्वमवतरिष्यसि ॥ ६८ ॥ शिव प्राणलिङ्गं गृहीत्वा रावणो गतोऽतस्तस्य भङ्गो न । स ईश्वरो भविष्यति ।

१ इंद्रः २ नारदेंद्रौ.

कुरु शीघ्रमुपायं त्वं भविष्यत्यन्यथाऽग्रतः ।
सुदुस्तरमिदं देव रक्षोनिर्दलनं हरे ॥ ७० ॥

इति ब्रह्मवचः श्रुत्वा कोपाध्मातो[1] हरिस्तदा ।
जाता विनेष्टिरित्युक्त्वा[2] कैलासं त्वरितो गतः ॥ ७१ ॥

ईश्वरं शङ्करं प्राप्य विष्णुः प्रोवाच रक्षसे ।
रावणाय कुतो दत्तं प्राणलिङ्गं वदाधुना ॥ ७२ ॥

रावणो राक्षसः क्रूरो देवा यद्भृत्यतामितीः[3] ।
कारास्थिताः कतिपयास्तेषां मुक्तिः कथं ततः ॥ ७३ ॥

पयः सर्पायेव वरान्दुराचाराय यच्छसि ।
पश्याधुनाऽमरत्वं स प्राप्तवान्स्वर्गभाग्भवेत् ॥ ७४ ॥

उवाच शिव ईशस्तं विष्णो तद्भक्तिमोहितः ।
विस्मृत्या तुष्टमनसा प्राणलिङ्गं मयाऽर्पितम् ॥ ७५ ॥

तन्निर्दलनं दुस्तरं भात्यतः शीघ्रमुपायं कुरु ॥ ६९-७० ॥ इति ब्रह्मवचः श्रुत्वा कोपाविष्टो हरिरनर्थो जात इत्युक्त्वा कैलासं समेत्य शिवमाह । रावणाय किमर्थं त्वया प्राणलिङ्गं दत्तं वद ॥ ७१ ॥ ७२ ॥ रावणोऽतिक्रूरो देवा यद्भृत्या जाताः कतिपयाश्च कारागारे स्थितास्तेषां कथं मुक्तिः ॥ ७३ ॥ सर्पाय दुग्धमिव दुष्टाय वरान्यच्छसि । पश्याधुना सोऽमरत्वं गतः स्वर्गभाग्भवेत् । शिव आह । विष्णो तद्भक्तिमोहनेन संतोषात्तस्मै प्राणलिङ्गं दत्तं ॥ ७४-७५ ॥ स स्वशिरश्छित्वा वीणां कृत्वा

---

१ आपूर्णः २ विनाशः ३ गताः.

रावणः स्वशिरश्छित्वा वीणां कृत्वा स्वयं जगौ ।
सुस्वरं साङ्गरागाढ्यं सामगानं सुमंजुलम् ॥ ७६ ॥

पार्वती साऽपि दातव्येत्येवं मोहो ममाभवत् ।
विस्मृत्या रावणायैव प्राणलिङ्गं मयाऽर्पितम् ॥ ७७ ॥

विष्णुरूच उमाकान्त त्वमेवं दुर्लभान्वरान् ।
ददास्येतेन मे कष्टं दुष्टा मत्ता भवन्ति हि ॥ ७८ ॥

अवतारप्रसङ्गो मे घटतेऽतो यतोऽसुराः ।
भवन्ति ते सुदुर्धर्षा देवब्राह्मणपीडकाः ॥ ७९ ॥

लिङ्गं तस्मै कदा दत्तं सोऽद्य लङ्कां गतो न वा ।
ईश ऊचे पञ्चनाडीमितकालस्ततो गतः ॥ ८० ॥

इति श्रुत्वा शिववचः सूर्यादर्शनकारणम् ।
विधाय विष्णुराहूय नारदं प्राब्रवीदिदम् ॥ ८१ ॥

देवर्षे नारदाशु त्वं गच्छ मानसवेगवत् ।
लङ्कां गच्छति दुष्टोऽसौ लिङ्गमादाय रावणः ॥ ८२ ॥

सुस्वरं साम जगौ। उमाप्यस्मै देयेति मोहोऽभूत्। ततस्तस्मै प्राणलिङ्गं दत्तं। विष्णुराह। त्वं दुर्लभान्वरान्ददासि। तेन मे कष्टं भवति। यतो दुष्टा मत्ता जायंते। यतोऽसुरा देवब्राह्मणपीडका दुर्धर्षाश्च भवन्त्यतो ममावतारप्रसंगोऽपि घटते। तस्मै लिङ्गं कदा दत्तं। स लंकां गतो न वा। शिव उवाच। पंचनाड्यो गताः। इत्थं श्रुत्वा विष्णुः सूर्यादर्शनकारणं सम्पाद्य नारदमाह ॥ ७६-८१ ॥ हे देवर्षे दुष्टो रावणो लिङ्गं गृहीत्वा लंकां याति। त्वं मनोवेगेन गत्वा मार्गे रक्षसे विलंबं कुरु। स नाद्यापि

गत्वा तदग्रतस्तस्य गमनाय विलम्बनम् ।
कुरु यत्नेन सोऽद्यापि न गतो निजमन्दिरम् ॥ ८३ ॥
सूर्योऽप्यदृश्यतां यायात्सन्ध्यावन्दनकर्मणि ।
तिष्ठेत्स रावणो नूनं विघ्नोऽप्यस्य भविष्यति ॥ ८४ ॥
इत्याज्ञप्तः स हरिणा नारदः सत्वरं ययौ ।
मनोगत्याऽऽगतस्तत्र रावणस्य पुरः पथि ॥ ८५ ॥
ततो विष्णुरुवाचेदं [1]स्वगतं गणनायकम् ।
विघ्नाय प्रेरयिष्यामि सत्वरं विघ्नहेतवे ॥ ८६ ॥
इत्युक्त्वाऽथ समाहूय गणेशं विष्णुरब्रवीत् ।
विघ्नेशान गणेशान रावणस्त्वामुपेक्षते ॥ ८७ ॥
त्वां नमन्ति सुरास्तेषां सिद्धिं याता मनोरथाः ।
ये लोके त्वामुपेक्षन्ते तेषां विघ्नाः पदे [2]पदे ॥ ८८ ॥
अद्य त्वामनिवेद्यासौ निधानं रावणोऽहरत् ।
प्राणलिङ्गं महेशस्य मोहयित्वा प्रयत्नतः ॥ ८९ ॥
अतोऽद्य भवता कार्यं रावणस्य विवञ्चनम् ।
बालवेषधरो भूत्वा तं [3]व्याजेन विवञ्चय ॥ ९० ॥

पुरं गतः। सूर्योऽप्यदृश्यत्वं गच्छेत्तदा रावणोऽपि संध्यावंदनकर्मणि तिष्ठेत्। तस्य विघ्नोऽपि भविष्यति ॥ ८२-८४ ॥ इत्युक्तो नारदो रावणास्याग्रतो मार्गे स्थितः। ततो विघ्नार्थं गणेशाय प्रेरयामीति मत्वा विष्णुर्गणेशमाहूय प्राह। हे गणेश रावणस्त्वामुपेक्षतेऽद्यैव यत्नाच्छिवं मोहयित्वा प्राणलिङ्गं जहार ॥ ८५-८९ ॥ ततस्त्वं बालवेषेण तं प्रति गत्वा व्याजेन

---

१ स्वमनस्येव   २ भवन्तीति शेषः   ३ कपटेन.

स मार्गेऽस्तमिते सूर्ये सन्ध्यावन्दनकर्मणि ।
रावणः स्थास्यति मुनिस्तदर्थं[1] चाग्रतो गतः ॥ ९१ ॥

शिवाज्ञया रावणः कौ[2] लिङ्गं न स्थापयिष्यति ।
न स्थापयिष्यति करे मूत्रोत्सर्गे च कर्मणि[3] ॥ ९२ ॥

बालभावेन तं गच्छ सौम्यशिष्यात्मनाऽथवा ।
स यथा येन विश्वासं यायात्प्राज्ञ तथा कुरु ॥ ९३ ॥

सन्ध्याकाले त्वत्करे स लिङ्गं दास्यति निश्चितम् ।
गृहीत्वा कौ निधेहि त्वं ध्रुवं स्थास्यति तत्र तत् ॥ ९४ ॥

व्याजेन जय्यः खल इत्युपायं
सम्यग्विचार्येति जगाद विष्णुः ।
तथेति चोक्त्वा गणनायकोऽपि
पाथेयभक्ष्यं स हरिं ययाचे ॥ ९५ ॥

पञ्चखाद्यतिलान्क्षीरं नारिकेलेक्षुदाडिमम् ।
मोदकान्लड्डुकांश्चैव देहि मे घृतसम्प्लुतान् ॥ ९६ ॥

स मृदूंश्चणकाँल्लाजाञ्छर्करासहितान्हितान् ।
स्वामिन्मे भक्षणायाद्य देहीति तमयाचत ॥ ९७ ॥

वंचय । सूर्यास्ते रावणः संध्याकर्मणि स्थास्यति । नारदोऽप्यग्रतो गतः॥९०-९१॥ मूत्रोत्सर्गादिकाले स लिङ्गं न धारयिष्यति । त्वं तं विश्वासेन वञ्चयित्वा लिङ्गमादाय भूमौ निधेहि तत्तत्राचलं भविष्यति॥९२-९४॥ इत्युक्तो गणेशः

---

१ नारदः २ भुवि ३ संध्यावंदनादौ.

विघ्नेश्वरेण यद्यत्तु याचितं भक्ष्यमुत्तमम् ।
तत्तत्तस्मै ददौ विष्णुर्जक्षन्[1]वर्णीव[2] निर्ययौ ॥ ९८ ॥
ब्रह्मर्षिर्नारदस्त्वग्रे रावणस्य मनोजवः ।
गत्वा तं प्राह विनयादागतोऽसि कुतो वद ॥ ९९ ॥
रावणो नारदं प्राह गत्वा कैलासपर्वतम् ।
प्रसादितो मया तत्र चन्द्रमौलिर्वरप्रदः ॥ १०० ॥
भूत्वा मे सुप्रसन्नः स आत्मलिङ्गं प्रदत्तवान् ।
सर्वकामप्रदं रम्यं वरानपि बहून्मुने ॥ १०१ ॥
नारदः प्राह लङ्केश फलितं दैवमेव ते ।
लिङ्गं मृत्युहरं लब्धं जाने तदहमादितः ॥ २ ॥
तन्मह्यं दर्शय ततो विलोक्य च परीक्ष्य च ।
कथयिष्यामि ते लिङ्गलक्षणानि सविस्तरम् ॥ ३ ॥
नारदस्य वचः श्रुत्वा रावणः शङ्कितान्तरः[3] ।
दूरतो दर्शयामास करे वासोऽपसार्य सः ॥ ४ ॥
तद् दृष्ट्वा नारदः प्राह लङ्केशमुपवेश्य च ।
लिङ्गस्य महिमानं ते शृणु वक्ष्यामि सादरम् ॥ ५ ॥

पाथेयं ययाचे । हरिस्तस्मै पंचखाद्यलड्डुकादीन्ददौ । स जक्षन्ययौ ॥९५-९८॥ नारदोऽग्रे रावणमेत्याह कुत आगतोऽसीति । स तस्मै सर्वं न्यवेदयत ॥९९-१०१॥ नारद आह । अद्य ते दैवं फलितं । उपविश्य लिङ्गं दर्शय । तल्लिङ्गलक्षणं वक्ष्ये । स शंकितो दूरतो दर्शयामास ॥२-४॥ नारद आह ।

---

१ भक्षणं कुर्वन् २ ब्रह्मचारीव ३ संशयाविष्टचित्तः.

रावणास्य तु लिङ्गस्य जानाम्युत्पत्तिमादितः ।
कथयामि कथामस्य त्वं भवैकाग्रमानसः ॥ ६ ॥
मृग एकः कदाचित्तु कालाग्निसदृशो वने ।
सैरंभप्रभृतीन्वन्यान्भक्षयित्वा चचार ह ॥ ७ ॥
ब्रह्मविष्णुमहेशाना मृगयार्थं वनं गताः ।
त्रिमूर्तयो मृगं हत्वा तस्य मेदोऽभजंस्तदा ॥ ८ ॥
तस्य स्युस्त्रीणि शृंगाणि लिङ्गानि तदधोऽपि च ।
त्रीणि त्रिभिर्गृहीतानि प्राणलिङ्गानि तानि तु ॥ ९ ॥
माहात्म्यं शृणु लिङ्गस्य रावणास्यैकचेतसा ।
त्रिवर्षं पूजयेद्यः स ईश्वरो वरदो भवेत् ॥ १० ॥
यत्र तिष्ठेदिदं लिङ्गं स कैलासो न संशयः ।
ब्रह्मविष्णुमहेशानां महत्त्वं लिङ्गधारणात् ॥ ११ ॥
शृण्वन्यमपि वक्ष्यामि महिमानं हि रावण ।
स प्राह न शृणोमीह लङ्कां यास्यामि सत्वरम् ॥ १२ ॥
इत्युक्त्वा गन्तुमुद्युक्तं रावणं प्राह नारदः ।
सन्ध्यावन्दनकालोऽयं ब्राह्मणानामुपागतः ॥ १३ ॥

कालाग्निसदृक् महिषमुक् त्रिशृंगो मृगो ब्रह्मविष्णुशिवैर्हतः । तच्छृंगाधः-स्थानि त्रीणि लिङ्गानि त्रिभिर्गृहीतानि । तानि तेषां प्राणसमानि । तत्रैकमिदं शैवं । य इदं त्रिवर्षं पूजयेत्स शिवस्तत्पुरं च कैलासो भवेत् ॥९-११॥ अन्यदपि माहात्म्यं शृणु । रावण आह । न श्रोष्ये । शीघ्रं लंकां यास्ये । नारद आह । संध्याकालोऽयं ॥१२-१३॥ अनेकवेदपाठी त्वं । कर्म हित्वा कथं

१ महिषादीन्. २ सेवयामासुः भक्षितवंतः.

अनेकवेदवेत्ता त्वं कथं मार्गं क्रमिष्यसि ।
सन्ध्याकालेऽध्वनि प्राप्ते सन्ध्यालोपो भवेन्न किम् ॥१४॥
अहं तिष्ठामीह सन्ध्यावन्दनं कर्तुमेव हि ।
इत्युक्त्वा रावणं सिन्धुं सम्प्राप्तो नारदो मुनिः ॥१५॥
अत्रान्तरे ब्रह्मचारिवेषधारी गणेश्वरः ।
रावणस्याग्रतो भूत्वा यज्ञियाः समिधोऽच्छिनत् ॥१६॥
मनसाऽचिन्तयद्रक्षः सन्देहोऽयमुपागतः ।
व्रतभङ्गो भवेत्सन्ध्यावन्दनाभावतो मम ॥ १७ ॥
क्रियाकाले नैव धार्यं लिङ्गं नापि महीतले ।
स्थापितव्यमतः सन्ध्याकालेऽस्मिन्कि करोम्यहम् ॥१८॥
अयं तु ब्रह्मचारीह बालकोऽतीव सुन्दरः ।
सिन्धुतीरं पर्यटति गत्वा पृच्छामि तं खलु ॥ १९ ॥
ब्रह्मचारी बटुरयं नैव विश्वासघातकृत् ।
तत एतन्महालिङ्गं दत्त्वैतस्य करेऽत्र तु ॥ १२० ॥
कुर्वे सन्ध्यावन्दनानि नित्यकर्मेति रावणः ।
विचार्य प्रययौ तस्य समीपं ब्रह्मचारिणः ॥ २१ ॥

यास्यसि । अहं तु तिष्ठामीति नारदः तस्थौ । अत्रांतरे ब्रह्मचारिवेषी गणेशः समिधश्छिदन्नात्तः । तं दृष्ट्वा रावणः स्वगतमाह । संध्यालोपे व्रतभङ्गो भवेत् । क्रियाकाले लिङ्गं मया न धार्यं नाप्यधः स्थापनीयं । अयं ब्रह्मचारी बालः सिन्धुतीरे पर्यटति । तद्धस्ते लिङ्गं दत्वा संध्यावन्दनं कुर्वेऽयं विश्वासघातं न करिष्यतीति मत्वा तत्समीपमाप ॥ १४-२१ ॥ तं दृष्ट्वा

लम्बोदरो दशग्रीवं दृष्ट्वा दूरं ययौ भिया ।
रावणोऽप्यभयं दत्वा तत्समीपं समागतः ॥ २२ ॥

रावणो मंजुलं प्राह कस्त्वं माता पिता तव ।
को वा कस्मिन्कुले जन्म तव जातं वदस्व मे ॥ २३ ॥

उवाच ब्रह्मचारी तं मां पृच्छसि कुतो वद ।
पितृभ्यां मम किं देयमृणं ते कथयाग्रतः ॥ २४ ॥

प्रहसन्नपि लङ्केशः स्नेहभावेन तत्करम् ।
प्रगृह्य प्राह पृच्छामि प्रीत्या मां वद पुत्रक ॥ २५ ॥

ब्रह्मचारी ततः प्राह महात्माऽस्ति पिता मम ।
रुद्राक्षभूषितो भस्मलिप्तगात्रो जटाधरः ॥ २६ ॥

तस्य शङ्कर इत्याख्या भिक्षार्थमटति क्षितिम् ।
नक्तंदिवमुमासंज्ञा मम माताऽपि विश्रुता ॥ २७ ॥

एतावत्पृच्छसि कुतो बालकोऽहमधीरधीः ।
मुञ्च मुञ्च करं यास्ये गृहं त्वत्तो बिभेम्यहम् ॥ २८ ॥

इति श्रुत्वा द्विजसुतं मत्वा तं प्राह रावणः ।
भिक्षुकस्ते पिता रङ्कः सुखवार्ता कुतस्तव ॥ २९ ॥

बालो दूरतो भियाऽधावत् रावणस्तमभयं दत्वा मंजुलं प्राह । कस्त्वं कस्ते माता पिता च । ब्रह्मचारी आह । कुतः पृच्छसि । पितृभ्यां ते ऋणं देयं किं । रावणस्तं करे धृत्वा प्राह । किमपि न देयं स्नेहवशात्पृच्छामीति । स आह । मत्पिता रुद्राक्षभस्मजटाधरः शंकरो नित्यं भिक्षार्थं पर्यटति । उमा मम माता । मां मुञ्च । त्वत्तो बिभेमि ॥२२-२८॥ रावणस्तं द्विजसुतं मत्वाऽऽह ।

मम लङ्कापुरी हैमी यत्र रत्नमयानि तु ।
गृहाणि तां समागच्छ तत्र देवार्चको भव ॥ १३० ॥
यद्यद्याचसि तत्तत्ते दीयते सकलं मया ।
मया सह समागच्छ सुखं स्थास्यसि निर्वृतः ॥ ३१ ॥
स प्राह लङ्कां नो यास्ये नराद[1]ा यत्र राक्षसाः ।
ते मामारण्यकं बालं भक्षयिष्यन्ति राक्षसाः ॥ ३२ ॥
तस्माल्लङ्कां न यास्यामि करं मुञ्च व्रजाम्यहम् ।
[2]चणकाशनतोऽशान्ता क्षुन्मे यास्ये ततो गृहम् ॥ ३३ ॥
इत्युक्तवन्तं तं बालं [3]प्रसाद्य प्राह रावणः ।
यावत्सन्ध्यामुपासिष्ये तावल्लिङ्गं गृहाण भोः ॥ ३४ ॥
बालकः प्राह ते लिङ्गं मन्ये गुरु[4]तरं तु तत् ।
करे धर्तुं न शक्नोमि मा मां पीडय वर्णिनम् ॥ ३५ ॥
लिङ्गं जडमहं मूढो धर्तुं शक्नोमि नैव हि ।
करं मुञ्च गृहं यास्ये धर्मोऽनेन भवेत्तव ॥ ३६ ॥

भिक्षुकस्ते पिताऽतस्ते न सुखवार्ताऽपि । हैमं मे पुरं तत्र रत्नमयानि गृहाणि । तत्र त्वमेहि । देवपूजको भव । अभीष्टं ते दास्ये । सुखं स्थास्यसि । बाल आह तत्र नृभक्षका राक्षसा मां भक्षयिष्यंत्यतो न यास्ये । हस्तं मुञ्च । क्षुधितोऽहं गृहं गमिष्यामि । चणकाशनान्मे क्षुधा न शान्ता । रावण आह यावत्संध्यामुपासिष्ये तावादिदं लिङ्गं वह । बाल आह । ते लिङ्गं गुरु । बालोऽहं वोढुं न शक्नोमि । यास्ये । मां मुञ्चानेन ते धर्मो भवेत् ॥२९-३६॥

---

१ नरभक्षकाः  २ चणकभक्षणान्मे क्षुधा न शांता यतः ततः
३ प्रसन्नं कृत्वा  ४ अतिभारम्.

एवं श्रुत्वाऽपि तं प्रार्थ्य तल्लिङ्गं तत्करे ददौ ।
गत्वा समुद्रतीरं स सन्ध्यावन्दनमारभत् ॥ ३७ ॥

ब्रह्मचारी तमाभाष्य स्थितः प्रोवाच रावणम् ।
यावत्सामर्थ्यमादाय लिङ्गं तिष्ठामि निश्चितम् ॥ ३८ ॥

त्वं शीघ्रमेहि नो चेत्त्वां त्रिराहूय¹ प्रयत्नतः ।
अनागते त्वयि क्षित्यां स्थापयिष्याम्यसंशयम् ॥ ३९ ॥

एवं निर्धार्य हस्ताभ्यां लिङ्गमादाय स² स्थितः ।
दिवि देवा विमानेषु स्थिताः कौतुकमीक्षितुम् ॥१४०॥

अर्घ्यप्रदानकाले तं रावणं स गणाधिपः ।
प्राह वोढुं न शक्नोमि लिङ्गं ते शीघ्रमेहि भोः ॥ ४१ ॥

न्यासपूर्वकमर्घ्यं स दास्यंस्तिष्ठ क्षणं त्वहम् ।
आगमिष्यामीति हस्तमुद्रां तस्मै व्यदर्शयत् ॥ ४२ ॥

पुनः क्षणं विरम्यासौ त्रिराहूय गणेश्वरः ।
प्राह भारं न शक्नोमि वोढुमागच्छ सत्वरम् ॥ ४३ ॥

रावण एवं श्रुत्वाऽपि तत्करे लिङ्गं दत्वाऽब्धितीरे संध्यावन्दनाय तस्थौ। ब्रह्मचारी तमाह। त्वं शीघ्रमेहि। त्वां त्रिराह्वयामि। त्वयि नागते लिङ्गं भूमौ स्थापयामि। इत्युक्त्वा दिवि देवेषु पश्यत्सु सत्सु गणेशो लिङ्गं गृहीत्वा स्थितः। अर्घ्यदानसमये रावणमाहूय गणेश आह। शीघ्रमेहि भारं वोढुं न शक्नोमीति। स आयास्य इति हस्तमुद्रया ज्ञापयामास ॥३७-४२॥ बालः क्षणं विरम्य भारं वोढुं न शक्नोमीति रावणमाभाष्य त्रिराहूय स्वर्गस्थान्देवा-

१ त्रिवारम् २ गणेशः.

दशाननो गणेशेन त्रिराहूतोऽपि नागतः ।
स्वः[1]स्थान्सुरगणान्कृत्वा साक्षिणो गणनायकः ॥ ४४ ॥
श्रीविष्णुं मनसा स्मृत्वा स्थापयामास भूतले ।
लिङ्गं सन्तोषमापन्ना देवाः पुष्पमुचो दिवि ॥ ४५ ॥
दत्वाऽर्घ्याणि स लङ्केशः शीघ्रमागत्य बालकम् ।
तल्लिङ्गं स्थापितं दृष्ट्वा क्रुद्धो बालं व्यतर्जयत् ॥ ४६ ॥
विश्वासघातक सु[2]दांभिक कू[3]टतोक
त्वं विप्रलम्भक सुवञ्चक मूर्ख रङ्क ।
रे बुद्धिपूर्वकमिदं कृतवानसीति
प्रोक्त्वा व्यताडयदसाँ[4]वहसद्रुदित्वा ॥ ४७ ॥
बालकः प्राह यस्मान्मामसमर्थमनागे[5]सम् ।
ताडयिष्यसि पित्रेऽ[6]दो वक्ष्यामीति ब्रुवन्गतः ॥ ४८ ॥
ततः स रावणो लिङ्गं करैर्धृत्वा हठेन तु ।
उद्धर्तुं यतमानोऽपि तदुद्धर्तुं श[7]शाक नो ॥ ४९ ॥

न्साक्षिणो विधाय विष्णुं स्मृत्वा लिङ्गं भुवि स्थापयामास। तदा तुष्टा देवाः पुष्पाणि मुमुचुः ॥ ४३-४५ ॥ रावणोऽर्घ्याणि दत्वाऽऽगत्य लिङ्गं स्थापितं दृष्ट्वा बालं निर्भर्त्स्य प्राह। विश्वासघातक, सुदांभिक, कूटतोक, त्वं विप्रलंभक, सुवञ्चक, मूर्ख, रंक, रे, बुद्धिपूर्वकमिदं कृतवानसीति प्रोक्त्वा व्यताडयदसावहसद्रुदित्वा बाल आह। कस्मान्निरपराधं मां ताडयसि? पित्रे वक्ष्यामीति ब्रुवन्गतः ॥४६-४८॥ रावणो विंशतिकरैर्हठादप्युद्धर्तुं न शशाक ॥४९॥ तदा शिरस्ताडयामास। भूश्चकंपे। तस्य बलं क्षीणं ततो

---

१ स्वर्गस्थान् २ सुतरां दांभिक ३ हे कपटबालक ४ बालवेषी गणेशः ५ निरपराधं ६ इदं ७ समर्थो न बभूव.

स्वशिरस्ताडयामास चकम्पे धरणी तदा ।
रावणस्य बलं क्षीणं जातं लिङ्गं महाबलम् ॥ १५० ॥
महाबलेश्वर इति लिङ्गनाम ततोऽभवत् ।
निष्पीडनेन चोद्धाराद्गोकर्णाकारतां गतम् ॥ ५१ ॥
लङ्कानाथोऽथ तत्रैव तपस्तप्त्वाऽलभद्वरान् ।
ततः प्रभृति तत्क्षेत्रं जातं गोकर्णसंज्ञितम् ॥ ५२ ॥
समस्ता देवतास्तत्र तत आरभ्य संस्थिताः ।
अद्भुतो महिमा तस्य प्रोक्तः स्कंदपुराणके ॥ ५३ ॥

इति सिद्धवचोऽभिलाषुकः[1]
स निशम्याप्यथ नामधारकः ।
स्म विपृच्छति तत्प्रवक्ष्यति
क्षितिदेवो[2] मतिमान्सरस्वती ॥ १५४ ॥

(इति)श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्यगङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञितमहाराष्ट्रभाषान्वितगुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वतीयतिविरचितायां श्रीगुरुसंहितायां ज्ञानकाण्डे षष्ठः ( अध्यायः )

॥ आदितः श्लोकाः ॥८०७॥

महाबलेश्वरनामकं तल्लिङ्गमभूत् । निपीडनेन गोकर्णाकारं जातं ततस्तत्क्षेत्रं गोकर्णनामकमभूत् । रावणस्तत्र तपस्तप्त्वा वरान् लेभे तत आरभ्य देवा अपि तत्र स्थिताः । एवं माहात्म्यं स्कन्दपुराणे कथितं । इति सिद्धवचोऽभिलाषुकः स निशम्याप्यथ नामधारकः । स्म विपृच्छति तत्प्रवक्ष्यति क्षितिदेवो मतिमान्सरस्वती ॥ १५०-१५४ ॥

इति चूर्णिकायां षष्ठोऽध्यायः ॥ ६ ॥

॥ इति षष्ठोऽध्यायः ॥ ६ ॥

---

१ श्रवणलुब्धः   २ ब्राह्मणः

## ॥ अथ सप्तमोऽध्यायः ॥ ७ ॥

नामधारक ऊचे तं[1] कृपया विस्तरेण मे ॥
गोकर्णमहिमानं तं वद के लेभिरे वरम् ॥ १ ॥

हित्वा समस्ततीर्थानि श्रीपादो यत्र संस्थितः ॥
कथां कथय मे तस्य क्षेत्रस्य त्वं पुरातनीम् ॥ २ ॥

यस्यास्ति सद्गुरौ प्रीतिः स तीर्थमहिमश्रुतिम् ॥
वांछतीतः कृपामूर्ते ज्ञानज्योतिर्वदस्व मे ॥ ३ ॥

सिद्धः प्राहैकचित्तः सञ्छृणु त्वं नामधारक ॥
गोकर्णमहिमानं ते कथयिष्यामि विस्तरात् ॥ ४ ॥

पूर्वमिक्ष्वाकुवंशेऽभूद्राजा मित्रसहाभिधः ॥
सर्वधर्मरतः शूरः क्षत्रियाणां[2] प्रतापवान् ॥ ५ ॥

अथाध्यायसारसंग्रहश्लोकोऽयम्—

भूपेन्द्रवंशोन्नतयेऽत्र सप्तमे गोकर्णमाहात्म्यमुवाच गौतमः ॥
तद्ब्रह्महत्यालयकृद्गतिं वदन् चण्डालिकायाः प्रशशंस भूभृते ॥१॥

नामधारक उवाच ॥ गोकर्णे के वरान्लेभिरे सर्वतीर्थानि हित्वा यत्र श्रीपादः स्थितः तन्माहात्म्यं कृपया विस्तराद्वद । यस्य सद्गुरौ प्रीतिः स तीर्थमाहात्म्यं श्रोतुमिच्छति । अतः कृपामूर्ते सिद्ध मे वद ॥१-३॥ सिद्ध आह । गोकर्णमाहात्म्यं कथयिष्ये । शृणु । पुरा इक्ष्वाकुवंशे प्रतापी धार्मिको मित्र-

---

१ सिद्धं २ क्षात्रियाणां मध्ये.

राजा सकलधर्मज्ञो विवेकी श्रुतितत्परः ॥
कुलाभिमानी बलाढ्यो नित्योद्योगो दयानिधिः ॥ ६ ॥

एवं सन्नेकदा[1] राजा मृगयार्थं वनं गतः ॥
प्रविष्टोऽभून्महारण्यं सिंहादेर्यत्र संस्थितिः ॥ ७ ॥

राजा निर्मनुजेऽरण्ये विनेष्यन्[2]व्याघ्रपूर्वकान् ॥
ददर्श ज्वलनाकारं[3] दैत्यमेकं भयानकम् ॥ ८ ॥

सज्जीकृतधनू राजा ववर्षामर्षणः[4] शरान् ।
तैर्बाणैरसुरो विद्धो मूर्च्छितो निपपात कौ ॥ ९ ॥

भ्राता तस्य बली दृष्ट्वा म्रियमाणं स्वसोदरम्[5] ॥
विलीय विललापातिदुःखितो भ्रातृशोकतः ॥ १० ॥

त्यजन्प्राणान्स दैतेयः प्राहासि त्वं सहोदरः ॥
तर्हि मद्धिंसकं भूपं घातयैनं प्रयत्नतः ॥ ११ ॥

इति सोदरमाभाष्य स दैत्यः पञ्चतामितः[6] ।
तद्भ्राता सोऽपि मायावी नररूपधरोऽभवत् ॥ १२ ॥

सहो राजाऽभूत् स दयाब्धिर्विवेकी बली राजैकदा सिंहादिव्याप्तं महारण्यं मृगयार्थं ययौ । तत्र व्याघ्रादीन्हत्वा भयानकं दैत्यं दृष्ट्वा ॥४-८॥ धनुः सज्जीकृत्य बाणान्मुक्त्वा राक्षसं पातयामास । स म्रियमाणो विलीनं दुःखितं भ्रातरमाह । हे सोदर, भूपं यत्नेन घातयेतीत्युक्त्वा मृतः । तस्य भ्राता

---

१ वर्तमानः २ घातयन् ३ अग्न्याकारं ४ कोपी ५ स्वभ्रातरं
६ मरणं गतः.

नृरूपेण नृपं प्राप्य बलिनस्तस्य भूपतेः ॥
सौम्यवाक्सेवको भूत्वा तं भेजेऽतीव नम्रवत् ॥ १३ ॥

विज्ञाय कपटी नित्यं स्वामिनोऽस्य मनोगतम् ॥
आनुकूल्येन तं भेजे राजानं वनचारिणम् ॥ १४ ॥

दुष्टजीवान्नृपो हत्वा हिंस्रान्सन्तुष्टमानसः ॥
परावृत्य पुनः प्राप्तः स्वपुरीं सेवकान्वितः ॥ १५ ॥

छिद्रं पश्यन्स दैत्योऽपि कापट्येन स्थितस्ततः ॥
राज्ञा प्राप्ते पितृश्राद्धे वसिष्ठाद्या निमंत्रिताः ॥ १६ ॥

तस्मिन्दिने स्वयंपाकस्थाने कपटिसेवकम् ॥
तत्कापट्यानभिज्ञस्तं[2] नियोज्य प्राह भूपतिः ॥ १७ ॥

सेवकात्र त्वया स्थित्वा यद्यदाज्ञापयत्यसौ ॥
बल्लवस्तत्तदानीय पाकसिद्ध्यै प्रदीयताम् ॥ १८ ॥

तथेति स प्रतिश्रुत्य नरमांसं प्रयत्नतः ॥
कापट्येन ददौ तस्य पाकोऽप्यज्ञानतः कृतः ॥ १९ ॥

मायावी नृरूपं धृत्वा बलिनो राज्ञोऽनुकूल इव सेवको भूत्वा राजानं सिषेवे[1]। दुष्टजीवान्हत्वा पुनः परावृत्य ससेवको राजा पुरं प्राप। छिद्रं पश्यन्स कपटी सेवकवत्स्थितः। अथ पितृश्राद्धे प्राप्ते राज्ञा वसिष्ठाद्या निमंत्रिताः। राजा कपटसेवकमाह ॥९-१७॥ बल्लवो यद्यदाज्ञापयति तत्तद्दीयतामिति ॥ १८ ॥ तथेति स कापट्येन पाकाय मांसं ददौ। बल्लवेनाज्ञानतः पाको

१ सिषेवे २ तत्कापट्यमजानन्.

परिवेषणकाले[1] तु ज्ञानदृष्टिर्ऋषीश्वरः ॥
ज्ञात्वा[2] चुकोप भूपाय वसिष्ठः प्राब्रवीच्छपन् ॥ २० ॥
राजन्नो[3] मानुषं मांसमस्पृश्यमुपकल्पितम् ॥
द्रुतमेतेन पापेन भव त्वं ब्रह्मराक्षसः ॥ २१ ॥
इति शापवचः श्रुत्वा क्रुद्धो राजा महाबलः ॥
शापं दातुं स्वयं तस्मै प्राह शापः कुतोऽर्पितः ॥ २२ ॥
न ज्ञातो मांसपाको मे नायं पाको मदाज्ञया ॥
जातः शापो वृथा दत्तस्तुभ्यं दास्याम्यहं तथा ॥२३॥
इत्युक्त्वोदकमादाय स्वाञ्जलौ शपतीश्वरे[4] ॥
मदयन्ती सती प्राप्य वारयामास तं पतिम् ॥ २४ ॥
राज्ञी प्राह महादोषो गुरुशापाद्भविष्यति ॥
तद्वाक्यं[5] न वृथाऽतस्तत्पदे भज तरिष्यसि ॥ २५ ॥
इति भूपतिराश्रुत्य[6] मदयन्तीसतीवचः ॥
स्वाञ्जलिस्थोदकं दुष्टं जहौ तत्पतितं पदे ॥ २६ ॥

ऽपि कृतः। परिवेषणकाले वसिष्ठो मांसं ज्ञात्वा क्रुद्ध आह। राजन्नस्पृश्यं नरमांसं दत्तमतस्त्वं ब्रह्मराक्षसो भव इति श्रुत्वा राजा क्रुद्धः सन्वसिष्ठमाह। मया नृमांसपाको न ज्ञातः न मदाज्ञयाऽपि जातः। वृथा शापो दत्तोऽतस्तुभ्यं शापं दास्य इत्युक्त्वा जलं गृहीत्वा शापं दातुं प्रवृत्तस्तदा तत्पत्नी मदयन्ती पतिं निवार्याहायं महादोषो न वृथा गुरोर्वाक्यमतस्तत्पदे धृत्वा तरिष्यसि ॥१९-२५॥ इति पत्न्या वचः श्रुत्वाऽञ्जलिस्थं जलं तत्याज।

१ भोजनपात्रे अन्नसमर्पणसमये २ नरमांसं विज्ञाय ३ अस्मभ्यं ४ भर्तरि राजनि शापं दास्यति सति ५ अतः कारणात् ६ अंगीकृत्य.

कल्माषसलिलस्पर्शाद्दैवयोगेन पादयोः ॥
कल्माषपादनामाभूद्भूपतिर्ब्रह्मराक्षसः ॥ २७ ॥
राजपत्नी वसिष्ठस्य गृहीत्वा चरणौ दृढम् ॥
प्राहेयताऽलं कोपेन स्वामिन्बालं समुद्धर ॥ २८ ॥
ततः शान्तो वसिष्ठोऽभूत्करुणं प्राह सर्ववित् ॥
उषित्वा द्वादशसमा भविष्यत्येव पूर्ववत् ॥ २९ ॥
मैत्रावरुणिरित्युक्त्वा वसिष्ठः स्वाश्रमं गतः ॥
ब्रह्मराक्षसतां प्राप्य वनं मित्रसहो ययौ ॥ ३० ॥
निर्मनुष्ये वने स्थित्वा स राजा ब्रह्मराक्षसः ॥
अभक्षयन्नृपश्वादीन्निजकर्मविपाकतः ॥ ३१ ॥
एवं सन्नेकदा दैवान्मार्गगौ विप्रदम्पती ॥
दृष्ट्वा भक्षयितुं प्राप राक्षसः स भयानकः ॥ ३२ ॥
व्याघ्रः पशुमिवागत्य द्विजमत्तुं समाददे ॥
ब्राह्मणी सहसा दृष्ट्वा भीतभीताऽन्वधावत ॥ ३३ ॥
शोकेन महता व्याप्ता ब्राह्मणी तमभाषत ॥
स्वामिन्मे रक्ष सौभाग्यं मुञ्च प्राणेश्वरं पितः ॥ ३४ ॥

कल्माषसलिलं पादयोः पपात । तेन स कल्माषपादाख्यो ब्रह्मराक्षसोऽभूत ॥२६-२७॥ राजपत्नी वसिष्ठपदे धृत्वाऽऽहालं कोपेन स्वबालमुद्धरेति । ततः शांतो वसिष्ठो ध्यानात्सर्वं ज्ञात्वा प्राह । द्वादशवर्षाणि राक्षसो भूत्वाऽयं पूर्ववद्भविष्यतीत्युक्त्वा स्वाश्रमं ययौ । राजापि राक्षसो भूत्वा स्वकर्मवशान्निर्जने वने स्थित्वा नृपश्वादीनभक्षयत् ॥२८-३१॥ एकदा मार्गे ब्राह्मणदंपती गच्छंतौ दृष्ट्वा व्याघ्रः पशुमिव राक्षसो ब्राह्मणं जग्राह ॥३२-३३॥ तदा भीता शोकान्विता ब्राह्मणी तमाह । हे पितः मे सौभाग्यं रक्ष

---

१ इयता एतावना कोपेनालं २ द्वादशवर्षाणि ३ मित्रावरुणयो रेतसा उर्वश्याः जातः ४ विद्यमानः ५ जग्राह.

९

मा हिंसीर्मे पतिं प्रीतिर्ममातीवात्र वल्लभम् ॥
त्यज वारय मे शोकं भक्ष मां वा यथासुखम् ॥ ३५॥
पतिं विना तु नारीणां वृथा जननमश्मवत् ॥
मां भक्ष प्रथमं दीनां पत्युः प्राणांश्च रक्ष वा ॥ ३६ ॥
रूपलावण्यसम्पन्नो युवाऽयं वेदशास्त्रवित् ॥
प्राणरक्षणतोऽस्य त्वं जगद्रक्षणपुण्यभाक् ॥ ३७ ॥
कृपां कुरु भविष्यामि दुहिता तव मानद ॥
यदि पुत्रा भविष्यन्ति वर्धयिष्यामि तेऽभिधाम् ॥३८॥
एवं बहुप्रकारेण स शोकव्याप्तया तया ॥
बोधितोऽपि न तद्वाक्यं मत्वा भक्षितवान्द्विजम् ॥३९॥
भक्षितं स्वपतिं दृष्ट्वा शापं तस्मै प्रदास्यती[3] ॥
ब्राह्मणी राक्षसं प्राह शृणु मे पाप शापगां[4] ॥ ४० ॥
त्वं राजा सूर्यवंशीयः शापाद्राक्षसतामितः ॥
पुनर्द्वादशवर्षोर्ध्वं दैवाद्राजा भविष्यसि ॥ ४१ ॥

प्राणेश्वरं मुंच । वल्लभे ममातीव प्रीतिः एनं त्यज शोकं वारयाथवा मां भक्ष । पतिं विना नारीणां जन्म वृथाऽतः पतिप्राणान्रक्ष मां वा भक्ष । रूपादिसंपन्नो युवाऽयं विद्वानस्य रक्षणात्ते जगद्रक्षणपुण्यं भवेत्कृपां कुरु । ते दुहिताऽहं । मे पुत्रा भविष्यंति चेत्ते नाम ख्यापयिष्यामीत्येवं शोकव्याप्तया तया बोधितोऽपि तद्वाक्यमनादृत्य स तं भक्षितवान् ॥३४-३९॥ पतिं भक्षितं दृष्ट्वा ब्राह्मणी तमाह । त्वं सूर्यवंश्यो राजा शापाद्राक्षसो भूत्वाऽपि द्वादशवर्षोर्ध्वं राजा भविष्यसि ॥४०-४१॥ तदा स्त्रिया रतिं करोषि चेन्मरिष्यसि ।

१ वल्लभे २ तव नाम ३ दास्यती सती ४ शापवाक्यं ५ गतः

करिष्यसि महिष्या त्वं रतिं चेन्मृतिमेष्यसि ॥
अनाथविप्रहिंसोत्थं[1] दुरात्मन्भोक्ष्यसे फलम् ॥ ४२ ॥
एवं क्रुद्धा सती तस्मै शापं दत्वा प्रयत्नतः ॥
पत्युरस्थीन्युपादाय विधिनाऽग्निं विवेश सा ॥ ४३ ॥
एवं नृपो द्वादशाब्दानुषित्वा गहने वने ॥
शापकाले व्यतिक्रान्ते राजा भूत्वा पुरं ययौ ॥ ४४ ॥
स्मरातुराऽस्य महिषी पूर्ववत्तं समागतम् ॥
आलिंगितुमुपागात्तां[2] ब्राह्मणीशापमब्रवीत् ॥ ४५ ॥
श्रुत्वा पतिवचो दीना मदयन्ती सुदुःखिता ॥
त्यक्तुं प्राणान्प्रवृत्ताऽभून्मनसाऽतीव दूयता[3] ॥ ४६ ॥
राजाऽपि दुःखितोऽभूत्तं मदयन्ती वचोऽब्रवीत् ॥
द्वादशाब्दैर्न मे कष्टं नष्टं नाप्ताऽपि सन्ततिः ॥ ४७ ॥
इति तस्या वचः श्रुत्वा नेत्राभ्यां जलमुत्सृजन् ॥
शोकाविष्टोऽवदद्राजा किं करोमि विधिर्बली[4] ॥ ४८ ॥

अनाथविप्रहिंसापापं भोक्ष्यसीति शापं दत्वा पत्युरस्थीन्यादायाग्निं विवेश ॥४२-४३॥ ततः नृपो राक्षसत्वं हित्वा पूर्ववत् भूत्वा पुरं प्राप। तदा कामार्ता स्वमालिङ्गितुमागतां पत्नीं ब्राह्मणीशापमुवाच। साऽपि दुःखिता प्राणांस्त्यक्तुमुद्युक्ता दुःखितं पतिं प्राह। द्वादशाब्दैः कष्टं न नष्टं पुत्रोऽपि न दृष्टः। इति श्रुत्वा नेत्राभ्यामश्रु मुञ्चन्नृप आह। किं करोमि दैवं बलवत्। इत्युक्त्वा पुरोहितान्मंत्रिणश्चाहूय प्राह। ब्रह्महत्या जातेति ॥४४-४९॥ ते

---

१ हिंसाजन्यं २ समीपं गता ३ अत्यन्तं खिन्नेन ४ दैवं.

ततः पुरोहितान्वृद्धान्मंत्रिणोऽतिविशारदान् ॥
आहूय ब्रह्महत्यादि सर्वं तेभ्यो न्यवेदयत् ॥ ४९ ॥
पुरोहिता मंत्रिणश्च प्राहुः पापविमोचनम् ॥
तीर्थाचारं कुरु ततस्त्वं पुनीतो भविष्यसि ॥ ५० ॥
इति श्रुत्वा वचस्तेषां राजा तीर्थपरोऽभवत् ॥
सकलानि च तीर्थानि सिषेवे स यथाविधि ॥ ५१ ॥
प्रतितीर्थं नृपो गत्वा स्नानं कृत्वा विधानतः ॥
वस्त्रान्नधनदानाद्यैर्यज्ञैर्विप्रान्सुरानपि ॥ ५२ ॥
तर्पयामास सद्भक्त्या ब्रह्महत्या तथापि तम् ॥
सुघोररूपाऽनुगता न मुमोच कथंचन ॥ ५३ ॥
स राजा बहुकष्टेन निर्विण्णो[1] मनसा भृशम् ॥
चिन्ताग्रस्तो ययौ दैवात्सुन्दरीं मिथिलापुरीम् ॥ ५४ ॥
पुरबाह्यप्रदेशे स चिन्ताविष्टो भृशं नृपः ॥
वृक्षच्छायां समासाद्य[2] निषसाद स्त्रियान्वितः ॥ ५५ ॥
ऋषीश्वरैर्युतो यद्वद्गणै रुद्रः प्रकाशितः ॥
गौतमाख्यो ऋषिवरः सहसा समुपागतः ॥ ५६ ॥

ऊचुस्तीर्थयात्रां कुरु, शुद्धो भविष्यसीति। सस्त्रीको राजाऽपि यथाविधि तीर्थयात्रां चकार। प्रतितीर्थं विधिवत्स्नात्वा वस्त्रान्नधनैर्विप्रानतोषयत्तथाऽपि घोरा ब्रह्महत्या तं न मुमोच ॥५०-५३॥ चिंताग्रस्तो निर्विण्णो राजा दैवान्मिथिलापुर्या बहिःप्रदेशे वृक्षाधः स्थितस्तत्र सगणो रुद्र इव ऋषिभिः सह गौतम आगात्। राजा तं दृष्ट्वा हर्षान्वितस्तं ननाम। तं दुःखित-

१ निर्वेदं प्राप्तः २ प्राप्य.

दृष्ट्वा तं गौतमं राजा पतितस्तस्य पादयोः ॥
नमस्कृत्यातिभक्त्या तं हर्षेण महताऽऽप्लुतः[1] ॥ ५७ ॥

दुःखितं तं समाश्वास्य गौतमः करुणार्द्रधीः ॥
आदितः सर्ववृत्तान्तं पप्रच्छ क्षेम चापि च ॥ ५८ ॥

राष्ट्रं ते केन वाऽऽक्रान्तं वनवासः कुतस्त्वयम् ॥
चिन्ताव्याकुलितो भासि किमर्थं वद सुव्रत ॥ ५९ ॥

इति तस्य वचः श्रुत्वा स राजा प्राह दुःखितः ॥
दैवाल्लग्नो ब्रह्मशापो ब्रह्महत्याऽपि चागता ॥ ६० ॥

प्रायश्चित्तादिकं चीर्णं[2] यज्ञाद्या अप्यनुष्ठिताः ॥
समस्तक्षेत्रतीर्थादौ धर्माद्याचरितं[3] मया ॥ ६१ ॥

अद्यापि दोषशान्तिर्मे न जाता व्रतचारिणः ॥
ब्रह्महत्या घोरवेषाऽथापि मामनुवर्तते ॥ ६२ ॥

अद्य मे सफलं जन्म दृष्टं ते पावनं पदम् ॥
नश्येदतः परं कष्टमित्युक्त्वा तत्पदेऽग्रहीत् ॥ ६३ ॥

माश्वास्य दयालुर्गौतमः सर्वं पप्रच्छ ॥५४-५८॥ हे राजन्, ते राष्ट्रं केनाक्रांतं कुतो वनवासश्चिंताव्याकुलितो भासि। सर्वं वदेति ॥ ५९ ॥ राजोवाच। दैवाद्विप्रशापो ब्रह्महत्या चाप्ता। प्रायश्चित्तक्षेत्रतीर्थाचरणधर्मानुष्ठानैरपरिहार्या घोरा हत्या मामनुवर्ततेऽद्य मे जन्म सफलं। ते पदं दृष्टं कष्टमपि नश्ये-

---

१ आनंदाश्रुजलेन स्नातः २ आचरितं ३ धर्मशब्देन दानादि ग्राह्यं.

श्रुत्वा भूपस्य वचनं गौतमः करुणाकरः ॥
प्राह मा भीः शङ्करस्ते त्राता मृत्युञ्जयोऽभयः ॥ ६४ ॥
तत्र पापविनाशार्थं तीर्थं ते कथयाम्यथ ॥
महापापापहं क्षेत्रं गोकर्णाख्यं सुपावनम् ॥ ६५ ॥
गोकर्णस्मरणात्सद्यो ब्रह्महत्यादि नश्यति ॥
ईश्वरो यत्र वसति सदा मृत्युञ्जयः शिवः ॥ ६६ ॥
यथा कैलासशिखरं यद्वा मन्दरकंदरम् ॥
तद्वद्गोकर्णं कर्पूरगौरेशवसतिस्थलम् ॥ ६७ ॥
यथा निश्युद्गते ध्वान्ते वन्हिना शशिनाऽपि वा ॥
सर्वथाऽपैति न विना सहस्रकिरणोदयात् ॥ ६८ ॥
तथैवेतरतीर्थाद्यैर्नांहसः सर्वथा क्षयः ॥
गोकर्णदर्शनादेव सर्वं नश्यति पातकम् ॥ ६९ ॥
ब्रह्महत्यासहस्राणि सद्यो गोकर्णदर्शनात् ॥
नश्यन्ति स्मरणादस्य पूतात्मा जायते नरः ॥ ७० ॥
इन्द्रोपेन्द्रविरिंच्याद्याः सिद्धार्था यत्र देवताः ॥
यत्र तप्त्वा तपोऽनेके जाता लब्धमनोरथाः ॥ ७१ ॥

दिति ननाम। कृपालुर्गौतम आह। मा भीः शंकरो मृत्युंजयस्त्राता। ते पापनाशार्थं महापापापहं पावनं गोकर्णक्षेत्रं कथयामि। यत्स्मरणाद्ब्रह्महत्यादिनाशः। यत्र सदाशिव आस्ते। यथा कैलासशिखरं तथेदं कर्पूरगौरनिवासस्थानम्॥६०-६७॥सर्वथा नैशध्वांतनाशे सूर्यं विनाऽन्ये न समर्थाः ॥ ६८ ॥ तथा गोकर्णं विनाऽन्यतीर्थादीनि सर्वाघहरणे न शक्तानि। गोकर्णस्य दर्शनात्स्मरणाच्च ब्रह्महत्यासहस्राणां नाशः। पवित्रता च। इंद्रादयो यत्र तपस्तप्त्वा सिद्धार्था अभवंस्तत्क्षेत्रप्रभावात्तत्र तपआदिकं

१ ते भयम्मास्तु.

तद्गत्वा भक्तिपूर्वं ये ज्ञानिनस्तप आदिकम् ॥
कुर्वन्ति तल्लक्षगुणं भवेत्क्षेत्रप्रभावतः ॥ ७२ ॥

यत्र सिद्धिं गता ब्रह्मविष्णुशक्रादयोऽमराः ॥
निवासमात्रतः शीघ्रं किं वक्तव्यमतः परम् ॥ ७३ ॥

कैलासं विद्धि गोकर्णं साक्षादीशं महाबलम् ॥
विघ्नेश्वरेण श्रीविष्णोराज्ञयैव प्रतिष्ठितम् ॥ ७४ ॥

पुण्ये गोकर्णके क्षेत्रे निवसन्त्यखिलाः सुराः ॥
ब्रह्मा विष्णुश्च मघवा विश्वेदेवा मरुद्गणाः ॥ ७५ ॥

सूर्यश्चन्द्रोऽष्टवसवः पूर्वद्वारं समाश्रिताः ॥
महाबलेश्वरं नित्यं भक्तियुक्ता उपासते ॥ ७६ ॥

यमोऽग्निश्चित्रगुप्तश्च रुद्राः पितृगणास्तथा ॥
उपासते सदा भक्त्या दक्षिणद्वारमाश्रिताः ॥ ७७ ॥

देवा वरुणमुख्याश्च पश्चिमद्वारमाश्रिताः ॥
उपासते प्रीतियुता गोकर्णे चन्द्रमौलिनम् ॥ ७८ ॥

कुबेरो भद्रकाली च समीरः सप्तमातृकाः ॥
महाबलेशमर्चन्ति द्वारमुत्तरमाश्रिताः ॥ ७९ ॥

लक्षगुणं भवेत्। यत्र निवासमात्रतो ब्रह्मादयः सिद्धिं गताः किमन्यद्वक्तव्यं। गोकर्णं साक्षात्कैलासं विष्णवाज्ञया गणेशेन प्रतिष्ठितं महाबलेशं साक्षाच्छिवं विद्धि। पुण्ये गोकर्णक्षेत्रे ब्रह्मविष्ण्वाद्या देवा वसंति। सूर्यचंद्रवस्वादयः पूर्वद्वारि ॥६९-७६॥ यमाग्निचित्रगुप्तरुद्रपितृगणा दक्षिणद्वारि, वरुणादयः पश्चिमद्वारि, कुबेरभद्रकाली उत्तरद्वारे च स्थित्वा प्रीत्या शिवमु-

विश्वावसुश्चित्ररथश्चित्रसेनादयः सदा ॥
गन्धर्वास्तत्र गीतेन शङ्करं पर्युपासते ॥ ८० ॥
कश्यपोऽत्रिर्वसिष्ठश्च कण्वाद्या मुनयोऽमलाः ॥
तपसाऽऽराधयन्तीशं क्षेत्रं गोकर्णमाश्रिताः ॥ ८१ ॥
तिलोत्तमोर्वशीरम्भाघृताचीमेनकामुखाः ॥
महाबलेशाभिमुखं नित्यं नृत्यन्ति भक्तितः ॥ ८२ ॥
महर्षयः कृतयुगे विश्वामित्रपुरोगमाः ॥
जाबालिजैमिनिभरद्वाजाद्याः सिद्धिमाप्नुयुः ॥ ८३ ॥
सनकाद्याः कुमाराश्च नारदाद्याः सुरर्षयः ॥
मरीच्याद्या मानसाश्च भजन्त्युपनिषद्विदः ॥ ८४ ॥
सिद्धाः साध्या मुनीशाश्च दण्डिनो ब्रह्मचारिणः ॥
निर्गुणाश्चाजिनधरास्तत्र शम्भुमुपासते ॥ ८५ ॥
त्वगस्थिमात्रावशिष्टदेहा अपि महाधियः ॥
अनुतिष्ठन्ति चार्चन्ति भक्त्या तं चन्द्रमौलिनम् ॥८६॥
गन्धर्वाः पितरः सिद्धा वसवोऽष्टावुपासते ॥
विद्याधराः किन्नराश्च त एत्यैत्यं[1] पुनः पुनः ॥ ८७ ॥

पासते तथाऽऽसमंताद्विश्वावसुचित्रसेनादिगंधर्वा गीतादिना कश्यपात्रिवसिष्ठाद्या मुनयस्तपसा उर्वशीतिलोत्तमाघृताचीमेनकाप्सरसो नृत्येन चेश्वरमुपासते । विश्वामित्रजाबालिजैमिन्याद्या यत्र सिद्धिं गताः । सनकाद्या नारदाद्याः सुरर्षयो मरीच्याद्या मानसाश्च । सिद्धसाध्यमुनियत्यजिनधारिब्रह्मचारिणश्चेशमुपासते । त्वगस्थिमात्रावशिष्टदेहा अपि तपस्विन ईशमुपासते । गंधर्वपितृवसुविद्याधरकिन्नरा दर्शनार्थं पुनः पुनरागच्छंति ॥७७-

१ पुनःपुनरागत्यागत्य.

सगुह्यकाः किम्पुरुषाः शेषनागाहितक्षकाः ॥
भूताः पिशाचा वेताला आयान्तीक्षितुमीश्वरम् ॥ ८८॥
भूषिता भूषणैर्दिव्यैर्देवा देवीसमन्विताः ॥
सूर्यकान्तिविमानस्थाः स्वरायान्तीशमीक्षितुम् ॥ ८९॥
केचित्स्तुवन्ति गायन्ति केचिन्नृत्यन्ति भक्तितः ॥
पूजयन्ति नमन्तीशं केचिद्दर्शनलालसाः ॥ ९० ॥
येषां केषां तु भूपाल या या मनसि वासनाः ॥
तास्ताः सिध्यन्ति तत्रैव नेदृशा सदृशं क्वचित् ॥९१॥
महर्षयोऽगस्त्यमुखाः कन्दर्पाग्न्यादयोऽमराः ॥
प्रियव्रताद्या राजानः क्षेत्रेऽस्मिन्लेभिरे वरान् ॥ ९२ ॥
शिशुमारो भद्रकाली त्रिकालं लिङ्गमर्चति ॥
तार्क्ष्याद्या अत्र सर्पादीन्न हिंसन्त्यहितां अपि ॥ ९३ ॥
रावणः कुम्भकर्णश्च तथाऽन्ये राक्षसा इह ॥
जाता लब्धवरा नित्यमर्चतीशं बिभीषणः ॥ ९४ ॥

८७॥ गुह्यककिंपुरुषशेषनागाद्या भूतपिशाचवेताला अपीक्षितुमायांति। दिव्यभूषणभूषिता देव्यो देवाश्च सूर्यसंकाशविमानैरागच्छंति। केचिद्भक्त्या स्तुवंति गायंति नृत्यंति। केचिद्दर्शनलालसा ईशं पूजयंति। येषां येषां ये ये कामास्तेऽत्र दर्शनमात्रात्सिध्यंति। महर्षयोऽगस्त्याद्याः कामाद्या देवाः प्रियव्रताद्या भूपा अत्र वरान् लेभिरे। शिशुमारो भद्रकाली च त्रिकालमीशं पूजयति। निसर्गवैरिणो गरुडाद्या अत्र सर्पादीन्न हिंसंति। अत्र लब्धवरा रावणादिराक्षसाः बिभीषणो नित्यमीशं पूजयति च ॥८८-९४॥ एवमत्र

१ स्वर्गात् २ क्षेत्रमिति शेषः ३ गरुडादयः ४ शत्रवोऽपि.

एवं सर्वं देवकुलं सिद्धदानवमण्डलम् ॥
ईशमाराध्य गोकर्णे कृतकृत्यमभूदिह ॥ ९५ ॥
स्वनाम्ना केचनात्रैव लिङ्गानि स्थापयन्ति हि ॥
प्राप्नुवन्ति वरानत्र पुरुषार्थांश्चतुर्विधान् ॥ ९६ ॥
ब्रह्मा विष्णुः कार्तिकेयो लिङ्गान्यत्र स्वनामतः ॥
गोकर्णे स्थापयामासुर्विनायकमुखा अपि ॥ ९७ ॥
धर्मः क्षेत्रपतिर्दुर्गादेवी शक्तिस्तथैव च ॥
स्वनामान्वितलिङ्गानि स्थापयामासुरादरात् ॥ ९८ ॥
असंख्यातानि लिङ्गानि सन्ति यत्र पदे पदे ॥
असंख्यातानि तीर्थानि क्षेत्रे गोकर्णसंज्ञिते ॥ ९९ ॥
गोकर्णमुत्तमं क्षेत्रं तीर्थान्यत्रोदकानि तु ॥
लिङ्गानि सर्वे पाषाणा यत्र सन्ति पदे पदे ॥ १०० ॥
कृते श्वेतं लोहितं च त्रेतायां लिङ्गमीशितुः ॥
द्वापरे पीतवर्णं च कृष्णवर्णं कलौ युगे ॥ १ ॥
सप्तपातालतलतः स्थितं लिङ्गं महोन्नतम् ॥
कलौ भूत्वा मृदुतरं सूक्ष्मरूपेण दृश्यते ॥ २ ॥

।सिद्धदेवदानवा ईशमाराध्येष्टं प्रापुः। सर्वेऽप्यत्र स्वनाम्ना लिंगानि स्थापयंति। बहवः पुरुषार्थान् लेभिरे। कार्तिकेयगणेशाद्यैर्ब्रह्मादिभिश्चात्र स्वनाम्ना लिङ्गानि प्रतिष्ठापितानि। तथैव धर्मक्षेत्रपालदुर्गाशक्त्यादिभिश्च। यत्र पदे पदेऽसंख्यातानि लिंगानि तीर्थानि च। यत्र सर्वाण्यप्युदकानितीर्थानि सर्वेऽपि पाषाणा लिंगानि च। कृते महाबलेशलिङ्गं श्वेतं। त्रेतायां रक्तं। द्वापरे पीतं। कलौ कृष्णं च। सप्तपातालगतं महोन्नतं लिङ्गं कलौ मृदु भूत्वा सूक्ष्ममिव दृश्यते।

पश्चिमाब्धितटे रम्यं क्षेत्रं गोकर्णसंज्ञितम् ॥
परमाश्चर्यदं ब्रह्महत्यादिकलुषापहम् ॥ ३ ॥
महान्ति पञ्चपापानि ब्रह्महत्यामुखानि तु ॥
परदारगमादीनि दुराचारभवानि च ॥ ४ ॥

तत्र दर्शनमात्रेण नश्यन्ति सकलानि हि ॥
गोकर्णलिङ्गदृष्ट्[1]यैव कामाँल्लब्ध्वाऽमृतं[2] व्रजेत् ॥ ५ ॥
तत्र स्थित्वा पुण्यदिने ये भक्त्याऽर्चन्ति भूभुज ॥
यास्यन्ति रुद्रलोकं ते नात्र कार्या विचारणा ॥ ६ ॥

यदा कदा वा गोकर्णं दैवादागत्य यो नरः ॥
भक्त्याऽर्चति महेशं स ब्रह्मलोकमवाप्नुयात् ॥ ७ ॥
रवीन्दुसौम्यवारेषु पौर्णिमाऽमा[3]दिपर्वसु ॥
स्नात्वा समुद्रसलिले यो दानादि करोति च ॥ ८ ॥
शिवपूजां व्रतं होमं जपं ब्राह्मणतर्पणम् ॥
किञ्चित्कृतमिह क्षेत्रे तदनन्तफलं भवेत् ॥ ९ ॥

पश्चिमाब्धितीरे ब्रह्महत्यादिपापहरं गोकर्णक्षेत्रं ॥९९-१०३॥ यद्दर्शनात् ब्रह्महत्यादीनि पारदार्यादीनि दुराचारभवानि पापानि नश्यंति। गोकर्णलिङ्गदर्शनमात्रेण कामान् लब्ध्वा नरो मोक्षं व्रजेत्। ये तत्र पुण्यदिने स्थित्वा भक्त्येश्वरमभ्यर्चन्ति ते रुद्रलोकं यांति नात्र विचारणा कार्या। यदा कदा वा गोकर्णमेत्य यो भक्त्येशमर्चति स ब्रह्मलोकं यायात्। रवींदुबुधवारपूर्णिमादिपर्वसु समुद्रे स्नानादि कृत्वा शिवं संपूज्य यो व्रतहोमजप-

१ दर्शनमात्रेणैव २ मोक्षम् ३ अमावास्यादि.

व्यतिपातादिकालेषु सूर्यसंक्रान्त्यहःसु च ॥
प्रदोषे शिवरात्र्यां तत्पूजापुण्यमनुत्तमम्[1] ॥ ११० ॥

किं ब्रुवे क्षेत्रमाहात्म्यं बहवो लेभिरे वरान् ॥
भक्तवत्सल ईशोऽसौ पुष्पमात्रेण तुष्यति ॥ ११ ॥

माघमासेऽसिते[2] पक्षे शिवरात्र्यां निशीथके ॥
बिल्वपत्रार्पणादत्र फलं त्रैलोक्यदुर्लभम् ॥ १२ ॥

एवं निरुपमं क्षेत्रं ये न यास्यन्ति दुर्भगाः ॥
न शृण्वन्त्यपि ये मूढा बधिरास्ते न संशयः ॥ १३ ॥

उपोषणं जागरणं ये कुर्वन्तीशसन्निधौ ॥
तानि तेषां स्वर्गमार्गसोपानानि न संशयः ॥ १४ ॥

गोकर्णस्थानमहिमा चतुर्विधपुमर्थदः ॥
लोका अनेके गोकर्णे सम्प्राप्ता दुर्लभान्वरान् ॥ १५ ॥

ब्राह्मणभोजनादि करोति तदनंतफलं भवेत्। व्यतीपातप्रदोषसंक्रांतिशिवरात्रिषु शिवपूजनादनंतपुण्यं। यत्र भक्तवत्सलः बिल्वपत्रार्पणमात्रेण तुष्यति तस्य फलं को ब्रूयान्न कोऽपि ॥४-११॥ माघे निशीथे शिवरात्रौ शिवेऽत्र बिल्वार्पणात् त्रैलोक्यदुर्लभं फलं ॥१२॥ ईदृक्क्षेत्रं ये न यांति ते दुर्भगाः माहात्म्यं न श्रृण्वंति ते बधिराः। शिवसन्निधौ उपोषणजागरादि कुर्वंति तानि तेषां स्वर्गसोपानानि ॥१३-१४॥ चतुर्विधपुरुषार्थदे गोकर्णेऽनेके दुर्लभान्वरान् लेभिरे। मुख्यतीर्थेषु स्नात्वा महाबलेशं संपूज्य नरः शुद्धो

१ न विद्यते उत्तमं यस्मात्तत् अनुत्तमम्  २ कृष्णे.

स्नात्वा तीर्थेषु मुख्येषु भक्त्या संपूज्य मुक्तिदम् ॥
महाबलेश्वरं लिङ्गं पापमुक्तो भवेन्नरः ॥ १६ ॥

एवं गोकर्णमाहात्म्यं श्रुत्वा गौतमवक्त्रतः ॥
प्रेम्णा मित्रसहो राजा हृष्टः पप्रच्छ तं मुनिम् ॥ १७ ॥

मुने गोकर्णमाहात्म्यं वर्णितं विस्तरेण मे ॥
निदर्शनं[1] वदस्वैकं मुक्तः कोऽत्र महांहसः[2] ॥ १८ ॥

तन्मह्यं गौतम स्वामिन्कृपया परया वद ॥
इत्युक्त्वा भूपतिस्तस्य गौतमस्य पदेऽग्रहीत् ॥ १९ ॥

गौतमः प्राह गोकर्णमहिमानं महीपते ॥
यत्र मुक्ता महापापा मया दृष्टाः सहस्रशः ॥ १२० ॥

शृण्वेकदाऽगमं क्षेत्रं गोकर्णं शिवरात्र्यहे[3] ॥
माघे मास्यसिते पक्षे सम्प्राप्ता यात्रिका जनाः ॥२१॥

मध्याह्न उपविष्टोऽहं वृक्षच्छायामुपाश्रितः ॥
दूरादद्राक्षमायान्तीं चण्डालीं रोगपीडिताम् ॥ २२ ॥

भवेत् ॥१५-१६॥ इति श्रुत्वा राजा पप्रच्छ। गोकर्णमाहात्म्यं त्वत्तो विस्तराच्छ्रुतं। अत्र महापापात्को मुक्तस्तन्मे कृपया वदेत्युक्त्वा गौतमपदे दधौ ॥१७-१९॥ गौतम आह। क्षेत्रमाहात्म्यं शृणु। तत्र महापापा मुक्ता मयाऽपि दृष्टाः। एकदा माघे शिवरात्र्यां गोकर्णमहं गतोऽस्मि। तत्र यात्रिका आगताः। मध्याह्ने व्रताहात्परदिने वृक्षच्छायां श्रितोऽहं।

---

१ दृष्टांतं २ महापापात् ३ शिवरात्रिदिने.

वृद्धामन्धां शुष्कमुखीं क्षुधितां व्रणपीडिताम् ॥
पूयशोणितदुर्गन्धां दुर्दर्शां[1] कृमिपीडिताम् ॥ २३ ॥
गण्डमालोदरव्याप्तां दन्तहीनां सुविह्वलाम् ॥
कफावरुद्धकण्ठीं तां म्रियमाणां दिगम्बराम् ॥ २४ ॥
आदित्यकिरणस्पर्शादपि भाति मरिष्यति ॥
सर्वाङ्गशूलदुःखार्ता मया दृष्टा गलद्गुदा ॥ २५ ॥
विधवा केशरहिता प्रस्खलन्ती पदे पदे ॥
सद्यः प्राणांस्त्यजन्तीव वृक्षच्छायामुपागता ॥ २६ ॥
आगत्य वृक्षच्छायां सा पपात धरणीतले ॥
प्राणांस्तत्याज तत्रैव पश्यतो मम सन्निधौ ॥ २७ ॥
अकस्मात्तत्र कैलासाद्विमानं सूर्यसन्निभम् ॥
अवतीर्णं तत्र दूताः शूलखट्वांगधारिणः ॥ २८ ॥
चन्द्रार्धमौलिनः सर्वे शैवास्ते चन्द्राकान्तयः ॥
किरीटकुण्डलधराश्चत्वारो दिव्यरूपिणः ॥ २९ ॥

रोगपीडितां वृद्धामंधां शुष्कमुखीं क्षुधितां व्रणपीडितां पूयदुर्गंधां गंडमालोदररोगव्याप्तां दंतहीनां कफावरुद्धकंठां म्रियमाणां चंडालीमद्राक्षं ॥२०-२४॥ सूर्यकिरणस्पर्शान्मरिष्यतीव सर्वांगशूला गलद्गुदा पदे पदे स्खलंती मरणोन्मुखी वृक्षच्छायामासाद्य सा विधवा भुवि पतित्वा ममार ॥२५-२७॥ तदाऽकस्मात्सूर्यनिभं विमानं तत्रागतं । तत्र शूलखट्वांगधराश्चंद्राभाश्चंद्रमौलिनः किरीटकुंडलधराः शिवदूताश्चंडालीं नेतुमागतास्ता-

१ दर्शनानर्हाम्.

ईदृग्विमानं सूर्याभं विचित्रं सुविराजितम् ॥
चंडालीं नेतुमायातं दृष्ट्वाऽहं विस्मितोऽभवम् ॥१३०॥

शिवदूता मया पृष्टाः किमर्थं ह्यागता इति ॥
आगताः स्मो वयं नेतुं चण्डालीमिति तेऽब्रुवन् ॥३१॥

इति श्रुत्वा वचस्तेषां विस्मयो मे महानभूत् ॥
तानपृच्छं पुनर्भूप सावधानमनाः शृणु ॥ ३२ ॥

किमीदृशीयं चण्डाली विमानं दिव्यमर्हति ॥
कः स्थापयेच्छुनीं नीत्वा दिव्यसिंहासनोपरि ॥ ३३ ॥

एतया जन्मतो दूताः पापौघः सञ्चितो महान् ॥
कथमर्हति लोकं सा कैलासं पापरूपिणी ॥ ३४ ॥

पशुमांसाहारवृद्धा जीवहिंसापरायणा ॥
कुष्ठिनी पापिनी त्वेषा कथं कैलासमर्हति ॥ ३५ ॥

यस्या न हि शिवज्ञानं तपः साधनमेव वा ॥
दयासत्यविहीनेयं कथं कैलासमर्हति ॥ ३६ ॥

न्दृष्ट्वा विस्मितोऽहमपृच्छं किमर्थमागता इति । त ऊचुरिमां कैलासं नेतुमिति ॥२८-३१॥ पुनर्विस्मितेन मया पृष्टं ईदृक्चंडाली दिव्यं विमानमर्हति किं । कः श्वानं सिंहासने स्थापयेत् । जन्मतोऽनया पापं कृतं । पशुमांसाहारपुष्टा हिंसापरा कुष्ठिनीयं कैलासमर्हति किं । यस्याः शिवज्ञानतपःसाधनदयासत्यवार्ता न ॥३२-३६॥ यया पंचाक्षरी न जप्ता

नैतया शिवपूजाऽपि कृता पञ्चाक्षरीजपः ॥
न शिवस्मरणं वा सा कथं कैलासमर्हति ॥ ३७ ॥
शिवरात्रोपवासादि नैतयाऽपि कदा कृतम् ॥
न दत्तं दानमप्येषा कथं कैलासमर्हति ॥ ३८ ॥
न ज्ञातमेतया तीर्थं स्नानं पर्वणि नो कृतम् ॥
नाचीर्णं व्रतमप्येषा कथं कैलासमर्हति ॥ ३९ ॥
सर्वाङ्गे बहुदुर्गन्धः पूयमस्रं गलत्यपि ॥
चण्डालीयं सुदुर्वृत्ता कथं कैलासमर्हति ॥ १४० ॥
अस्तु पूर्वार्जितं पापं पतन्ति मुखतोऽद्य तु ॥
कीटाः सेयं गलत्कुष्ठा कथं कैलासमर्हति ॥ ४१ ॥
पापिनीयं दुराचारा कथं नेया शिवालयम् ॥
चराचरेऽतिनिन्द्यां तां कुह नेतुं समागताः ॥ ४२ ॥
पापिनीं सुदुराचारामनर्हां शिवमन्दिरम् ॥
किमर्थं नेतुमायाताः कौतुकं प्रतिभाति मे ॥ ४३ ॥
इति पृष्टा मया ते तु हृष्टा मामब्रुवंस्तदा ॥
चण्डाल्याः पूर्वजन्मादि तत्ते वक्ष्यामि भूमिप ॥ ४४ ॥

शिवो न पूजितो नापि स्मृतः शिवरात्र्युपोषणादि न कृतं । दानं च न दत्तं । पर्वणि तीर्थस्नानं न कृतं व्रतं च नाचीर्णं । यस्याः सर्वाङ्गे बहुदुर्गन्धः पूयादि स्रवति च । अस्याः पूर्वपापमस्तु । अद्य तु मुखतः कीटाः पतन्ति । ईदृग्दुराचारा निन्द्या पापिनीयं कथं शिवमन्दिरमर्हति । कौतुकं मे भाति । इति पृष्टास्ते हृष्टास्तस्याः पूर्वकर्मोचुः । पूर्वजन्म-

दूता ऊचुरियं पूर्वजन्मनि ब्रह्मवंशजा ॥
सौमिनी नाम विख्याता सोमबिम्बमुखी वरा ॥ ४५ ॥

दृष्ट्वा तां सुन्दरीं बालामनुरूपं वरं पिता ॥
अन्वेष्य क्वाप्यलब्ध्वाऽभूच्चिन्तावेष्टितमानसः ॥ ४६ ॥

विवाहस्यातिकालं स मत्वा साधारणं द्विजम् ॥
दृष्ट्वा तस्मै स गृह्योक्तविधिना तां सुतां ददौ ॥४७॥

उद्वाहिता नवोढा सा पत्युर्भवनमन्वगात् ॥
कञ्चित्कालं निजगृहे स्थिता सा रुचिराकृतिः ॥ ४८ ॥

ततः कालेन कियता तद्भर्ता पञ्चतामितः[1] ॥
दैवयोगेन विधवा बाल्य एवाभवत्तु सा ॥ ४९ ॥

ततो मातापितृभ्यां सा समानीता धवालयात् ॥
पत्या विरहिता खिन्ना सञ्जाता साऽतिदुःखिता॥१५०॥

सुन्दरी प्राग्वयस्का सा स्मरव्याप्ता[2] प्रतिक्षणम् ॥
तरुणं पुरुषं दृष्ट्वा मनो जेतुं शशाक नो[3] ॥ ५१ ॥

नीयं चंद्रमुखी सौमिनीसंज्ञा विप्रकन्याऽभूत् । तां बालां सुन्दराङ्गीं दृष्ट्वाऽनुरूपं वरमप्राप्य ॥३७-४६॥ पिता विवाहकालातिक्रमभिया साधारणाय द्विजाय गृह्योक्तविधिना तां कन्यां ददौ । उद्वाहिता सा रुचिरा भर्तृगृहे कंचित्कालं तस्थौ । दैववशाद्बाल्य एव तत्पतिर्मृतः । ततः पत्या विरहिता दुःखिता सा पितृभ्यां गृहमानीता । तरुणी सुन्दरी सा तरुणं दृष्ट्वा कामं

१ गतः २ कामपीडिता ३ समर्था न बभूव.

स्मरातुरा रहसि सा जारकर्मरताऽभवत् ॥
तदपि प्रकटं जातं पातकं न हि गोप्यते ॥ ५२ ॥

सा नारी विधवा पूर्ववयस्काऽप्यतिसुन्दरी ॥
विषयाक्षिप्तमनसा चञ्चलाऽभूत्सदैव हि ॥ ५३ ॥

तादृशी सुदुराचारा ज्ञातिभिर्व्यभिचारिणी ॥
मातापितृसुहृद्भिश्च संममेव बहिष्कृता ॥ ५४ ॥

ततः पित्रादयः सर्वे तां त्यक्त्वा दूषितां सुताम् ॥
प्रायश्चित्तेन ते शुद्धास्तत्सांसर्गिकदोषतः ॥ ५५ ॥

पूर्वं सा शङ्किता चापि ततो निःशङ्कतां गता ॥
स्पष्टं तत्रैव नगरे रेमे सा कामदूषिता ॥ ५६ ॥

तत्रैकं सुन्दरं वैश्यमनुरूपं विलोक्य सा ॥
तरुणं रमणं तेन रेमे तद्रूपमोहिता ॥ ५७ ॥

गेहिनी तस्य वैश्यस्य भूत्वा दुष्कृतकारिणी ॥
रमणी रममाणाऽऽस स्वकुलत्रयवैरिणी ॥ ५८ ॥

जेतुं न शशाक । ततो रहसि जारकर्मरताऽभूत्तदपि प्रसिद्धं जातं । पापं न हि गोप्यते । विषयासक्ता चलाचित्ता व्यभिचारिणी सा पित्रादिभिः सह ज्ञातिभिर्बहिष्कृता । तत्संसर्गदूषिताः पित्रादयस्तां त्यक्त्वा प्रायश्चित्तं चेरुः । ततो निःशंकं सा कामार्ता तत्र नगरे सुन्दरं तरुणं वैश्यं दृष्ट्वा तद्रूपमोहिता सती तेन रेमे ॥४७-५६॥ सा कुलत्रयवैरिणी तद्गेहिनी भूत्वा रमयांबभूव । स्त्रियः कामेन नश्यंति ब्राह्मणो हीनसेवया । राजानो

१ सहैव.

स्त्रियः कामेन नश्यन्ति ब्राह्मणो हीनसेवया ॥
राजानो ब्रह्मदण्डेन यतयो भोगसङ्ग्रहात् ॥ ५९ ॥

साऽहोरात्रं तेन साकं नष्टबुद्धिररीरमत्[1] ॥
तस्यास्तु रममाणायाः पुत्रा अपि बभूविरे ॥ १६० ॥

मांसाहाररता नित्यमुन्मत्ता मद्यपानतः ॥
भूत्वा वैश्यस्य महिषी सर्वमेवं वयोऽनयत् ॥ ६१ ॥

कदाचन मदान्धा सा योषा मेषभ्रमेण तु ॥
आहारार्थं धेनुवत्सं निजघान दुरात्मिका ॥ ६२ ॥

निधाय शिक्ये वत्सस्य वराङ्गमपरे[2]ऽहनि ॥
अत्तुं नष्टमतिः सद्यः शेषं पक्त्वा चखाद[3] सा ॥ ६३ ॥

भ्रान्ता सा मद्यपानेन गाढं सुप्त्वाऽपरेऽहनि ॥
प्रबुद्धा पात्रमादाय धेनुं दोग्धुं समुद्यता ॥ ६४ ॥

वत्सस्थाने तदा दृष्ट्वा मेषं भ्रान्ता गृहं गता ॥
शिक्ये वत्सशिरो दृष्ट्वा भीताऽऽत्मानमगर्हयत्[4] ॥६५॥

ब्रह्मदंडेन यतयो भोगसंग्रहात्। वैश्येन सह रममाणायास्तस्याः पुत्रा अपि जाताः। मद्यमांसरता मत्ता वैश्यस्त्री भूत्वैवं सर्वं वयोऽनयत्। मदांधा सैकदाऽऽहारार्थं मेषभ्रमेण धेनुवत्सं जघान। तच्छिरः शिक्ये निधायान्यन्मांसं पक्त्वाऽभक्षयत् ॥५७-६३॥ मद्येन भ्रांता सा गाढं सुप्त्वाऽन्येद्युरुत्थाय धेनुं दोग्धुं गत्वा ॥६४॥ वत्सस्थाने मेषं दृष्ट्वा शिक्ये च

---

१ रमयामास २ शीर्षं ३ भक्षितवती ४ गर्हयामास.

साऽनुतप्ता शिव शिव चन्द्रमौले दुरात्मना ॥
किमिदं विहितं[1] पापमज्ञानेनेति चाब्रवीत् ॥ ६६ ॥
कुप्येत पतिरेतेन दोषेणेति कुधीस्तदा ॥
अस्थिचर्मादि निक्षिप्य सर्वं गर्ते शिरोऽपि च ॥ ६७ ॥
समीपस्थं गृहं गत्वा मृषादुःखेन साऽरुदत् ॥
व्याघ्रेणापहृतो वत्स इत्येवं भर्तुरग्रतः ॥ ६८ ॥
एवमादीनि पापानि कृत्वा वैश्यगृहे कुधीः ॥
ममार सा ततो याम्या दूतास्तां नेतुमागताः ॥ ६९ ॥
नीत्वा सा पितृभिः सार्कं प्रक्षिप्ता रौरवादिषु ॥
दुस्तरां यातनां भुक्त्वा चण्डाली साऽधुनाऽभवत् १७०
चण्डाली गोवधादन्धा जाता सम्यगनीक्षणात् ॥
औपपत्याद्[2]गलत्कुष्ठा पितृभ्यां परिपालिता ॥ ७१ ॥
उच्छिष्टान्नादिदानेन बाल्ये सा परिरक्षिता ॥
स्नेहेन तन्मुखे दत्वा ग्रासान्मात्रा यथारुचि ॥ ७२ ॥

वत्साशिरो दृष्ट्वाऽऽत्मानं निर्भर्त्स्याह । हा चंद्रमौले शिव शिव, दुरात्मना मया किमिदं पापं कृतं । पतिः कुप्येतेति मत्वा शिरोस्थिचर्मादि गर्ते निक्षिप्य समीपस्थगृहं गत्वा व्याघ्रेण वत्सो हत इति रुरोद । भर्तुरग्रेऽप्येवं । एवमादीनि कृत्वा सा मृता । पितृभिः सह तामादाय यमदूता रौरवादिनरकेषु प्राक्षिपन् । तत्र चिरं दुस्तरां यातनां भुक्त्वा गोवधाच्चंडाली असम्यग्दर्शनादन्धा औपपत्याद्गलत्कुष्ठा च जाता ॥६९-७१॥ उच्छिष्टान्नदानादिना बाल्ये पितृभ्यां स्नेहेन पालिता ॥७२॥ यथा यथा सा

१ कृतं २ जारकर्मतः.

वृद्धा यथा यथा साऽपि तथा वृद्धा व्रणा अपि ॥
[1]प्रमीतौ पितरौ बाल्ये दीनाऽभूत्सा निराश्रया ॥ ७३ ॥
गलत्कुष्ठेन दुर्गन्धां भ्रातरस्तां जहुस्तदा ॥
रक्षति स्मोदरं सा तु याच्ञया प्रतिवासरम् ॥ ७४ ॥
तथाऽपि नैव शान्ताऽभूद्[2]बुभुक्षाऽस्याश्च भिक्षया ॥
क्षुत्तृट्प्रपीडिता नित्यं कुष्ठेनातीव दुःखिता ॥ ७५ ॥
पूर्वकर्मविपाकेन वृद्धा सा व्रणदुःखिता ॥
दरिद्रा वस्त्ररहिता पानाशनविवर्जिता ॥ ७६ ॥
मार्गे प्रसिद्धे पतिता ययाचे सा महाजनान् ॥
पापयोगेन साऽथापि न लेभेऽन्नं क्षुधार्दिता ॥ ७७ ॥
व्याधिग्रस्ता गलत्कुष्ठा क्षीणदेहा क्षुधार्दिता ॥
पूयशोणितदुर्गन्धा कर्मणा स्वेन [3]गर्हिता ॥ ७८ ॥
एवं सा वर्तमानाऽथ माघमास उपागते ॥
स्त्रीपुत्रसहिता लोका गोकर्णं गन्तुमुद्यताः ॥ ७९ ॥

चवृधे व्रणा अपि तथा तथा । बाल्य एव पितरौ मृतौ । सा निराश्रया जाता । दीना जाता । गलत्कुष्ठां तां भ्रातरो जहुः । याच्ञया साऽऽत्मानं ररक्ष । तथाऽपि तत्क्षुधा न शांता। क्षुत्तृट्पीडिता कुष्टेन दुःखिता पूर्वकर्मणा व्रणशूलार्ता दरिद्रा सा वृद्धाऽभूत् । मार्गे पतित्वा सा महाजनानन्नं ययाचे । क्षुधार्ता पापवशादन्नं न लेभे ॥७३-७७॥ व्याधिग्रस्ता क्षुधार्ता क्षीणा स्वकर्मणा गर्हिता साऽभूत् । अथ माघमासे शिवरात्र्यां शिवं द्रष्टुं स्त्रीपुत्रसहिता यात्रिका लोकाः हर्षेण गोकर्णं गंतुमुद्यताः ॥७८-७९॥

---

१ मृतौ २ क्षुधा ३ निंदिता.

शिवरात्र्यां शिवं द्रष्टुं नानादेशसमागताः ॥
हर्षेण महताविष्टा यात्रिका[1] गमनोत्सुकाः ॥ १८० ॥

हस्त्यश्वरथपादातिसहिताः समलङ्कृताः ॥
राजानः समनुप्राप्ता द्रष्टुं लिङ्गं महाबलम् ॥ ८१ ॥

ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा अन्याश्च जातयः ॥
महाबलेश्वरं द्रष्टुं जग्मुः सर्वेऽतिहर्षिताः ॥ ८२ ॥

हसन्तः केऽपि गायन्तो धावन्तः केचनापरे ॥
नृत्यन्तो जग्मुरखिलाः स्मरन्तोऽजं[2] पुनः पुनः ॥८३॥

एवं तान्गच्छतो ज्ञात्वा गोकर्णं हर्षनिर्भरा ॥
गच्छद्भिर्भिक्षुकैः साकं चण्डाली साऽपि निर्ययौ ८४॥

शिवेत्युच्चारणोत्पन्नपुण्येन क्षेत्रमागता ॥
चण्डाली साऽपि गोकर्णं गत्वाऽन्नं समयाचत ॥ ८५ ॥

मार्गेण गच्छतो लोकान्क्रन्दन्ती सा बुभुक्षिता[3] ॥
करौ प्रसार्य तानन्नमयाचत महाजनान् ॥ ८६ ॥

॥१८०॥ हस्त्यश्वादिसहिता अलंकृता राजानः ब्राह्मणाः क्षत्रियाः वैश्याः शूद्रा अन्ये च हर्षेण महाबलेश्वरं द्रष्टुं प्रस्थिताः । केचिद्धसंतो गायंतो धावंतो नृत्यंतो शिवं शश्वत्स्मरंतो हर्षनिर्भरा गोकर्णं जग्मुः । तदा गच्छद्भिर्भिक्षुकैः सह साऽपि चंडाली प्राग्जन्मनि शिवेत्युच्चरणपुण्यवशाद्गोकर्णं गत्वाऽऽक्रन्दती क्षुधिता च सती करौ प्रसार्य मार्गेण गच्छतो

१ तीर्थयात्राचरणशीलाः २ शिवं ३ क्षुधिता.

पूर्वजन्मनि मे[1] पापं कृतं तेनैव पीडिता ॥
क्षुधानिवारणार्थं मे ददात्वन्नं महाजनः ॥ ८७ ॥

सर्वाङ्गेषु गलत्कुष्ठां विवस्त्रां शीतपीडिताम् ॥
दृष्ट्वा मां क्षुधितामन्धां धर्मं कुर्वन्तु सज्जनाः ॥ ८८ ॥

चिरोपवासात्क्षुधया सन्दीप्तो जठरानलः ॥
मम पीडां विलोक्यैवं धर्मं कुर्वन्तु सज्जनाः ॥ ८९ ॥

न कृतं मे पूर्वजन्मसहस्रेषु मनागपि ॥
पुण्यं ततोऽतिक्लिष्टायै धर्मं कुर्वन्तु सज्जनाः ॥ १९० ॥

एवं मार्गे पतित्वा सा चण्डाल्यन्नमयाचत ॥
शिवरात्रिव्रताहेऽन्नं तस्यै केनापि नार्पितम् ॥ ९१ ॥

क्रन्दन्ती व्रजतो देवं द्रष्टुमन्नमयाचत ॥
कश्चित्प्राहोपवासोऽद्य नान्नमस्तीति वै हसन् ॥ ९२ ॥

बिल्वपत्रं स्वहस्तस्थं ददौ तद्धस्तयोस्तदा ॥
साऽवघ्रायाप्यभक्ष्यं तन्मत्वा भूमौ क्रुधाऽत्यजत् ॥९३॥

महाजनान् अन्नं ययाचे । मया पूर्वं पापं कृतं तेन क्षुधिता तन्निवारणाय लोकोऽन्नं ददातु ॥८१-८७॥ सर्वांगकुष्टां विवस्त्रां शीतार्तां मां दृष्ट्वा लोका धर्मं कुर्वंतु । चिरोपवासक्षुधिता पीडिताऽस्मि । मया जन्मांतर-सहस्रेषु पुण्यं न कृतं तेन क्लिष्टास्मीति मार्गे पतित्वाऽन्नं ययाचे । व्रताहे तस्यै केनाप्यन्नं न दत्तं ॥८८-९१॥ क्रंदंतीं याचमानां तां कश्चिदाहाद्योपवासोऽन्नं नास्तीति तद्धस्ते बिल्वदलं ददौ । साऽवघ्रायाभक्ष्यं मत्वा

---

१ मया.

बिल्वपत्रं तया त्यक्तं शिवलिङ्गेऽपतत्तु तत् ॥
निशीथे दैवयोगेन जातं तच्छिवपूजनम् ॥ ९४ ॥

अन्नं केनापि नो दत्तमुपवासस्ततोऽभवत् ॥
उपोषणाज्जागरणमेवं साङ्गमभूत् व्रतम् ॥ ९५ ॥

इत्थं यत्नं विना पुण्यं तस्या जातं ततः शिवः ॥
सन्तुष्ट ईश्वरस्तेन तारकोऽभूद्भवार्णवात् ॥ ९६ ॥

एवं चण्डालिकायास्तु लब्धं व्रतफलं महत् ॥
ततोऽद्य दिवसेऽत्रैव भिक्षामाहर्तुमुद्गता ॥ ९७ ॥

उपोषणेन रोगेण श्रान्ता मार्गमजानती ॥
गन्तुमेकपदं वाऽपि न शक्ता मन्दगामिनी ॥ ९८ ॥

आदित्यकरसंस्पर्शाद्रुग्णेयं भृशदुःखिता ॥
इयमेतादृशी जाता पूर्वकर्मविपाकतः ॥ ९९ ॥

सा चण्डालीयमत्रैव वृक्षच्छायामुपागता ॥
प्राणान्जहौ ततः शम्भुप्रेरिताः स्म इहागताः ॥ २०० ॥

भूमौ क्षुधाऽत्यजत् । दैवेन तन्निशीथे लिंगे पतितं तेन शिवार्चनं जातं । अन्नालाभादुपवासश्च जात एवं सांगं व्रतमभूत् । इत्थमयत्नात्पुण्यं जातं तेन भवतारक ईश्वरस्तुष्टोऽभूत् ॥९२-९६॥ एवं चण्डाल्या महद्व्रतफलं लब्धं । ततोऽद्य दिवसे भिक्षाहरणाय निर्गता ॥९७॥ रोगेणोपोषणेन च श्रांता । मार्गमजानती, एकं पदमपि गंतुमशक्ता, सूर्यकिरणस्पर्शाद्भृशं दुःखिता, चण्डालीयं पूर्वकर्मवशतो वृक्षच्छायामेत्य मृता । शिवेनमामाने-

शिवरात्र्युपवासाहे शिवे बिल्वार्पणेन च ॥
जागरेण सुपुण्येन पापमस्या लयं गतम् ॥ १ ॥
शतजन्मार्जितं पापमेतेनास्या लयं गतम् ॥
प्रीतिपात्रं शिवस्येयमत ईशो न ऐरयत् ॥ २ ॥
इत्युक्त्वा शिवदूता मां तस्या उपरि तेऽमृतम् ॥
क्षिप्त्वा ततो दिव्यदेहां तामादाय द्रुतं ययुः ॥ ३ ॥
एतद् दृष्टं मया राजंश्चण्डाल्यज्ञानतोऽपि सा ।
मुक्ता गोकर्णमाहात्म्यमीदृशं लोकपावनम् ॥ ४ ॥
निःसंशयं व्रज ततो राजन्गमनमात्रतः ॥
शुद्धो भूत्वेह लब्ध्वेष्टं परत्र गतिमेष्यसि ॥ ५ ॥
इति गौतमतः श्रुत्वा तुष्टो राजाऽपि सत्वरम् ॥
गत्वा गोकर्णकं क्षेत्रं पापान्मुक्तो बभूव ह ॥ ६ ॥
तस्मात्सुपावनं पुण्यं गोकर्णक्षेत्रमुत्तमम् ॥
अत एव स्थितस्तत्र श्रीपादो नामधारक ॥ ७ ॥

तुमादिष्टाः स्मः । शिवरात्र्युपवासाच्छिवाय बिल्वार्पणाज्जागरणाच्च पुण्यं लब्धं तेन शतजन्मार्जितपापं नष्टमियं शिवप्रीतिपात्रभूता जाताऽतोऽस्मान्प्रैरयत् इत्युक्त्वा तदुपर्यमृतं क्षिप्त्वा दिव्यदेहां तां गृहीत्वा जग्मुः । एतच्चंडालीमोक्षणं मया दृष्टं । ईदृक्पावनं गोकर्णमाहात्म्यं । राजंस्त्वं गच्छ । गमनमात्रतः शुद्धो भूत्वेष्टं लब्ध्वा मोक्षमेष्यसि ॥१८-२०५॥ इति श्रुत्वा राजा गोकर्णं गत्वा पापान्मुक्तो बभूव । तस्मात्पुण्यं पावनं गोकर्णक्षेत्रं । अतः श्रीपादस्तत्र स्थितः ॥२०६-२०७॥ गंगाधरद्विजसुतोऽत्र सरस्व-

गङ्गाधरद्विजसुतोऽत्र सरस्वतीति
प्रख्यात एतदवदच्छ्रवणोत्सुकेभ्यः ॥
अज्ञानतोऽपि वसतामसतामपीदं
लब्धं फलं किमु सतां विदुषां तु वाच्यम् ॥२०८॥

(इति)श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्यगङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञितमहाराष्ट्रभाषान्वितगुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वतीयतिविरचितायां श्रीगुरुसंहितायां ज्ञानकाण्डे सप्तमः ( अध्यायः )

॥ आदितः श्लोकाः ॥ १०१५ ॥

तीति प्रख्यात एतदवदच्छ्रवणोत्सुकेभ्यः । अज्ञानतोऽपि वसतामसताम-पीदं लब्धं फलं किमु सतां विदुषां तु वाच्यम् ॥२०८॥

इति चूर्णिकायां सप्तमोऽध्यायः ॥

॥ इति सप्तमोऽध्यायः ॥ ७ ॥

---

## ॥ अथाष्टमोऽध्यायः ॥ ८ ॥

॥ श्रीगणेशाय नमः ॥ ॥ श्रीदत्तात्रेयाय नमः ॥

नामधारक ऊचे तं गोकर्णमहिमा श्रुतः ॥
कतिकालं स्थितस्तत्र श्रीपादो वद मेऽग्रतः ॥ १ ॥
गुरुमूर्ते कृपासिन्धो विद्धं तेन मनो मम ॥
तस्य सच्चरितं श्रोतुमानन्दोऽतीव वर्धते ॥ २ ॥
इति तस्य वचः श्रुत्वा सन्तुष्टः सिद्ध आह तम् ॥
चरितं विस्तराद्वक्ष्ये सावधानतया शृणु ॥ ३ ॥
क्षेत्रं गोकर्णमासाद्य त्रीणि वर्षाणि तत्र च ॥
स्थित्वा लोकानुग्रहकृत्ततः श्रीपर्वतं गतः ॥ ४ ॥
यत्पादर्शनादेव सर्वतीर्थफलं नृणाम् ॥
श्रुतिरप्याह चरणं पवित्रं विततं त्विति ॥ ५ ॥

अथाध्यायसारसङ्ग्रहश्लोकोऽयम्—

सकुसुतविधवाप्ता मर्तुकामा प्रदोष—
व्रतकथनत ईशस्तान्निवर्त्याष्टमेऽन्तात् ।
स विबुधमकरोत्तज्जं च जन्मान्तरेस्याः
सुत इह भविता दिङ्मालिनी यस्य कीर्तिः ॥

नामधारक उवाच ॥ गोकर्णमहिमा श्रुतस्तत्र श्रीपादः कतिकालं तस्थौ ॥ १ ॥ हे कृपाब्धे गुरुमूर्ते, तत्र मे मनो लग्नं तच्चरितश्रवणेऽतीवानंदो वर्धते । सिद्ध आह । चरितं वक्ष्ये । सावधानतया शृणु । लोकानुग्रहकृच्छ्रीपादः त्रिवर्षाणि तत्रोषित्वा श्रीपर्वतं गतः । चरणं पवित्रमिति

---

१ प्राप्य.

यत्पदे सर्वतीर्थानि तस्य पर्यटनं भुवि ॥
अनुग्रहाय लोकानां महद्विचलनं[1] स्मृतम् ॥ ६ ॥
स्थित्वाऽद्रौ[2] चतुरो मासान्दास्यन्स्वेभ्यः[3] स्वदर्शनम् ॥
निवृत्तिसंगमे स्नात्वा श्रीपात्कुरुपुरं ययौ ॥ ७ ॥
कृष्णा यत्र प्रवहति वेण्या सह निरन्तरम् ॥
अपारो महिमा तस्या दुर्लभोऽन्यत्र भूतले ॥ ८ ॥
महिमा वर्ण्यते चेत्तु ग्रन्थो विस्तरतां व्रजेत् ॥
अतः स्वल्पतरं तुभ्यं कथयिष्यामि तारक ॥ ९ ॥
श्रीपादाधिष्ठितस्थानख्यातिर्जाता महीतले ॥
अधुना कुरुगड्डीति स्थानं प्रख्यातमस्ति तत् ॥१०॥
श्रीपादमत्र ये भक्त्या भजन्ति श्रद्धयाऽञ्जसा ॥
ते कन्यापुत्रलक्ष्म्यादिभाजोऽभीष्टं लभन्ति हि ॥ ११ ॥
श्रीपादमहिमाऽशेषो विस्तरेण न वर्ण्यते ॥
अथापि किञ्चिदधुना चरितं तस्य ते ब्रुवे ॥ १२ ॥

श्रुतेर्यद्दर्शनात्सर्वतीर्थफलं, यत्पदे सर्वतीर्थानि, तस्याटनं लोकानुग्रहाय। सोऽद्रौ चतुरो मासान्स्थित्वा निवृत्तिसंगमे स्नात्वा कुरुपुरं ययौ। यत्र कृष्णावेणी तन्महिमा त्रैलोक्ये दुर्लभस्तद्वर्णने ग्रंथविस्तरो भवेत्। अतः स्वल्पं कथयिष्ये। श्रीपादस्थानमहिमा प्रसिद्धोऽभूत् ॥२-१०॥ तत्र ये भक्त्या भजंति ते कन्यापुत्रलक्ष्म्यादीष्टं लभंते। विशेषतोऽस्य महिमा न वर्ण्यते। किंचिच्छ्रीपादस्य चरितं वच्मि। अन्यमवतारं धृत्वाऽपि श्रीपाद-

१ महात्मनां गमनं २ श्रीपर्वते ३ भक्तेभ्यः.

विलीय[1] तत्र श्रीपादः स्वावतारान्तरं[2] दधौ ॥
श्रीवल्लभः कुरुपुरे गुप्तरूपेण चास्ति हि ॥ १३ ॥
कथयिष्यामि भोस्तुभ्यमवतारप्रयोजनम् ॥
तद्ग्रामे वेदशास्त्रज्ञः कश्चन ब्राह्मणोऽभवत् ॥ १४ ॥
तस्य भार्याऽम्बिका नाम सुशीला पतिदेवता ॥
सती स्वाचारसम्पन्ना पतिसेवापरायणा ॥ १५ ॥
भूत्वा मृता बहुसुतास्तस्याः प्राक्कर्मयोगतः ॥
अनेकतीर्थसेवादिनानोपायास्तया कृताः ॥ १६ ॥
ततो दैववशाज्जातस्तस्या मन्दमतिः सुतः ॥
तथाविधं[3]मपि स्नेहात्तं पुपोषाम्बिका सुतम् ॥ १७ ॥
ततः स व्रतबन्धार्हो जातो विप्रसुतः स तु ॥
पितोपनीय[4] विधिना तस्मै वेदमुपादिशत् ॥ १८ ॥
अज्ञो मन्दमतिर्नैकं मन्त्रमप्याददे[5] सुतः ॥
चिन्तातुरः पिता तस्य श्रोत्रियो[6]ऽभूत्सुदुःखितः ॥१९॥

स्तत्र गुप्तरूपेण वर्तते। द्वितीयावतारप्रयोजनं श्रृणु। तद्ग्रामे वेदशास्त्रज्ञः कश्चिद्विप्र आसीत्। तद्भार्या पतिसेवारता सुशीलाऽम्बिकाख्याऽभूत्। कर्मवशात्तस्याः पुत्रा जाता मृताश्चानेकतीर्थदेवसेवादिना एको जीवितः। स दैववशान्मूर्खोऽभूत्तं माता पुपोष। ततोऽष्टमेऽब्दे व्रतबंधं कृत्वा पिता तस्मै वेदानुपादिशत् ॥११-१८॥ स मंदधीरेकमपि मंत्रं न पपाठ ॥१९॥

---

१ गुप्तो भूत्वा २ अन्योऽवतारोऽवतारांतरं ३ मंदमतिं ४ मौंजीं बध्वा ५ जग्राह ६ वैदिकः.

द्विजः प्राह समाराध्य दैवाल्लब्धस्त्वयं सुतः ।
हा कष्टं मे कुलं नष्टं प्राचीनं कर्म दुर्घटम् ॥ २० ॥
एवमुक्त्वा बहुविधैरुपायैस्तमशिक्षयत् ॥
निवार्य ताडयन्तं तं पतिं स्त्रीर्दुःखिताऽवदत् ॥ २१ ॥
कष्टेन महता लब्ध एक एव सुतस्त्वयम् ॥
चिरं जीवतु बालोऽसौ दैवेन परिपालितः ॥ २२ ॥
विद्यां नार्हति[1] दैवेन मा ताडय दयानिधे ॥
मूढत्वेन द्विजत्वाप्तिरस्य प्राचीनकर्मतः ॥ २३ ॥
अतोऽस्य ताडनेनालं[2] यदि सन्ताडयिष्यसि ।
प्राणांस्त्यक्ष्यामि भोः स्वामिन्भवदग्रे न संशयः ॥२४॥
इति पत्नीवचः श्रुत्वा तूष्णीमास विवेकवान् ॥
तथाविधं निजं दैवं मत्वा कार्यान्तरे स्थितः ॥ २५ ॥
ततः कालेन कियता विप्रो रोगेण पीडितः ॥
पञ्चतां[3]मगमद्दैववशेन श्रोत्रियो द्विजः ॥ २६ ॥

तेन दुःखितो वैदिकस्तत्पिता प्राह। हा कष्टं, देवानाराध्य मूढः पुत्रो लब्धः। प्राक्कर्म दुर्घटं। मे कुलं नष्टं। एवमुक्त्वा तं ताडयामास। तदा दुःखिता तत्पत्नी पतिं निवार्याह। कष्टेनायं लब्धो बालश्चिरं जीवतु। हे दयाब्धे, द्विजकुले जातस्याप्यस्य प्राक्कर्मतो मूढत्वं। अलं ताडनेन। ताडयिष्यसि चेत्तेऽग्रे प्राणांस्त्यक्ष्ये। इति श्रुत्वा तथाविधं स्वदैवं मत्वा विप्रस्तूष्णीमास। ततोऽल्पकालेन पिता रोगग्रस्तो मृतः ॥२०-२६॥ विधवा

१ योग्यो न भवति २ ताडनं पर्याप्तं ३ मृत्युं.

सा मूर्खपुत्रा विधवा दारिद्र्येणातिदुःखिता ॥
स्वा[1]त्मानं तनयं चापि याच्ञावृत्त्या व्यजीवयत् ॥२७॥
तस्मै विवाहयोग्याय न ददौ कोऽपि कन्यकाम् ॥
मूढं निन्दितवान्मातृयाचितान्नाशिनं जनः ॥ २८ ॥
जनास्तमूचिरे मूढ धृत्वा शीर्षेऽन्वहं[2] घटम् ॥
नद्या जलं समानीय समर्पय गृहे गृहे ॥ २९ ॥
अश्मवज्जन्म ते व्यर्थं मूर्खस्त्वं कुलनाशकः ॥
त्वत्कुले लांछनं लग्नं जन्मना तव मूढधीः[3] ॥ ३० ॥
ख्यातश्चतुर्षु राष्ट्रेषु सदाचारः पिता तव ॥
वेदशास्त्रपुराणज्ञः स ते जन्या[4] कलङ्कितः ॥ ३१ ॥
जननीयाचितान्नेन त्वं मूढ उदरंभरिः[5] ॥
न ह्रीणा[6]सि कथं ब्रूहि पितॄन्नेष्यस्यधोगतिम् ॥ ३२ ॥
सम्भूय तिष्ठसि पशुप्रायोऽलं तव जन्मना ॥
किं व्यर्थजन्मना गङ्गाप्रवेशं कुरु दुर्मते ॥ ३३ ॥

दुःखिता ब्राह्मणी दारिद्र्याद्याच्ञयाऽऽत्मानं मूढं पुत्रं च जीवयामास ॥२७॥ मूर्खस्य विवाहो न जातः । मातृयाचितान्नजीविनं तं लोका ऊचुः । रे मूढ, शीर्षे घटं धृत्वा गृहे गृहे जलं देहि । त्वं कुलहाऽश्मवत्ते जन्मना कुलं लांछितम् । त्वत्पिता वेदशास्त्रज्ञः सदाचारश्चतुर्दिक्षु ख्यातस्ते जन्मना दूषितः । मातृयाचितान्नभक्षकस्त्वं न लज्जसे किं । पितॄनधोगतिं नेष्यासि । त्वं पशुस्ते व्यर्थजन्मनाऽलं । दुर्मते, गङ्गाप्रवेशं कुरु । इति श्रुत्वा स मूढो

१ स्वदेहं २ प्रत्यहं ३ हे मूढधीः ४ जन्मना ५ स्वोदरपूरकः ६ लज्जां न प्राप्नोषि.

इति लोकवचः श्रुत्वा सोऽपि मूढोऽतिदुःखितः ॥
मातरं प्राह जननि प्राणांस्त्यक्ष्यामि निश्चितम् ॥ ३४ ॥
सर्वे निन्दन्ति मां मूढं शरीरेण किमीदृशा ॥
मत्पोषणेऽपि श्रान्ताऽसि मातर्यास्याम्यतो वनम् ॥ ३५ ॥
इति पुत्रवचः श्रुत्वा माता चिन्तासमन्विता ॥
शोकाब्धौ गहने साऽपि पतिता विललाप ह ॥ ३६ ॥
दुःखितौ तौ ततः कृष्णाप्रवाहं समुपागतौ ॥
तत्र स्नानार्थमायान्तं श्रीपादं विपदन्तकम्[1] ॥ ३७ ॥
दृष्ट्वा तच्चरणे धृत्वा प्रोचतुर्दुःखविह्वलौ ॥
गङ्गायामधुना प्राणांस्त्यक्ष्याव इति नौ[2] मतम् ॥ ३८ ॥
भवान्ददातु नौ[3]वाज्ञामात्महत्या हि दुस्तरा ॥
अतस्त्वां प्रार्थयावो नौ वचनात्तव सद्गतिः ॥ ३९ ॥
इति तद्वचनं श्रुत्वा श्रीपादः स कृपार्द्रधीः ॥
प्राह किं सङ्कटं प्राप्तं महत्प्राणा हि दुस्त्यजाः ॥ ४० ॥

दुःखितो मातरं प्राह मातः प्राणांस्त्यक्ष्ये ॥२८-३४॥ सर्वे मूढं मां निन्दन्ति। किमीदक्शरीरेण। त्वं च पोषणे श्रान्तास्यतो वनं यास्ये। इति श्रुत्वा चिन्तया शोकाब्धौ पतिता माता विललाप ॥३५-३६॥ ततो दुःखितौ तौ मर्तुं कृष्णाप्रवाहं गतौ। तत्र श्रीपादं दृष्ट्वा तत्पादौ धृत्वा दुःखविह्वलौ प्रोचतुः। आत्महत्या दुस्तराऽपि गङ्गायां प्राणांस्त्यक्ष्यावः। भवानाज्ञां ददातु। भवद्वचनाद्धि सद्गतिरिति श्रुत्वा दयाब्धिः श्रीपाद आह।

१ विपत्तिनाशकरं २ आवयोः ३ आवाभ्यां.

विप्रपत्नी ततस्तस्मै स्वकं दुःखं न्यवेदयत् ॥
भक्तवत्सल भोः स्वामिन्रक्ष नौ घोरसङ्कटात् ॥ ४१ ॥

अनेकतीर्थाचरणादनेकव्रतसेवनात् ॥
अनेकदेवार्चनतः पुत्रोऽयं चिरजीवितः ॥ ४२ ॥

व्रतोपवासाः कतिचिन्नियमेन मया कृताः ॥
ततो जातोऽप्येष सुतो दुर्मतिर्लोकनिन्दितः ॥ ४३ ॥

वेदसच्छास्त्रसम्पन्नः पतिर्मे ब्राह्मणोत्तमः ॥
तस्योदरे दुरात्माऽयं जातो मन्दमतिः प्रभो ॥ ४४ ॥

दयस्व श्रीपद यते पुत्रो नेदृक्सताङ्गते ॥
भूयाद्भवे भवेऽप्येव सदुपायमुपादिश ॥ ४५ ॥

कृपाब्धिर्दैन्यहर्ता त्वमिति ते चरणौ धृतौ ॥
भाग्याद्दृष्टं ते चरणं शरणागतरक्षणम् ॥ ४६ ॥

वां संकटं किं प्राप्तं प्राणा हि दुस्त्यजाः । ब्राह्मणी आह । हे भक्तवत्सल सङ्कटाद्रक्ष । अनेकतीर्थाटनव्रतदेवार्चनोपवासादिना ॥ ३७-४२ ॥ एकोऽयं पुत्रो जातोऽयं दुर्मतिर्लोकनिंदितः ॥ ४३ ॥ वेदशास्त्रसम्पन्नो मे पतिस्तत्कुक्षौ जातोऽयं मन्दधीर्दुरात्मा । हे श्रीपाद, दयस्व । जन्मान्तरे-पीदृक्सुतो माऽस्तु । भाविजन्मनि सत्पुत्रोपायं कथय । दैन्यहर्तुः कृपाब्धेस्ते पादौ धृतौ । भाग्यात्पादौ दृष्टौ । संसारेऽस्मिन्संभूय कष्टं दृष्टं ।

---

१ दुर्बुद्धिः २ दयां कुरु ३ जन्मनि जन्मनि.

स्वामिन्नुत्पद्य[1] संसारे नानाकष्टं मया कृतम् ॥
सुखपृष्ठं न मे दृष्टं नष्टाः कष्टाहिता[2]ः सुताः ॥ ४७ ॥

भ्रष्टं सौभाग्यं शिष्टोऽयं दुष्टः पुत्रः सुकष्टदः ॥
अजागलस्तनसमो वृथा जातोऽयमिष्टद[3] ॥ ४८ ॥

श्रीगुरो देव मे याच्ञां संशृणुष्वाग्रजन्मनि ॥
सुपूज्यपुत्रो मानुष्ये जायतां त्वं यथा भुवि ॥ ४९ ॥

यत्पादवन्दनं सर्वे करिष्यन्तीदृशः सुतः ॥
भवत्वेवमुपायं मे वदेत्येषा[4] पदेऽग्रहीत् ॥ ५० ॥

पुनः सा प्राह पुत्रेण येन मे न पुनर्भवः ॥
सर्वेऽपि पितरो येन स्वर्गे स्थास्यन्ति शाश्वतम् ॥५१॥

वासनेयं मम ब्रह्मज्ञानी पुत्रो हि जायताम् ॥
द्रष्टव्यः प्राग्वयस्येव सर्वपूज्यो भवानिव[5] ॥ ५२ ॥

सुखं न दृष्टं। सत्पुत्रा नष्टाः सौभाग्यं भ्रष्टं। शिष्टोऽयमेकः पुत्रः कष्टदोऽजागलस्तनवत्। श्रीगुरो, मे याच्ञां शृणु। मानुष्ये भाविजन्मनि सुपुत्रो मे जायतां। यं सर्वे नमन्ति तादृक्सुतोत्पत्त्युपायं वद। ते पादौ धृतौ ॥४४-५०॥ येन पुत्रेण मे मोक्षो भवेत्पितरोऽपि स्वर्गे ध्रुवं स्यास्यंतीदृशी मे वासना। भवानिव ब्रह्मज्ञानी सर्वपूज्यः पुत्रः प्राग्वयस्येव

१ उत्पन्ना भूत्वा २ कष्टेन संजाताः ३ हे अभीष्टार्थप्रद ४ ब्राह्मणी ५ त्वमिव.

इत्येतद्ब्राह्मणीवाक्यं श्रुत्वा सकरुणोऽवदत् ॥
कुर्वीशाराधनं पुत्रो भविष्यति यथा हरिः ॥ ५३ ॥

गोप्या दृष्टं व्रतं पूर्वं तेन गोपगृहे सुतः ॥
कृष्णः कारुणिको जात ईश्वरार्चनयोगतः ॥ ५४ ॥

तथैवाराधय शिवं सुपुत्रस्ते भविष्यति ॥
प्राज्ञोऽव्यवहितागामिजन्मनीशप्रसादतः ॥ ५५ ॥

ब्राह्मणी पुनराहेदं गोप्या दृष्टं कथं व्रतम् ॥
कदा कथं चन्द्रमौलिः पूजितो विस्तराद्वद ॥ ५६ ॥

अहमप्याचरिष्यामि तथैव विधिना व्रतम् ॥
साऽऽभाष्यैवं कृपामूर्तिश्रीगुरुप्रपदेऽग्रहीत् ॥ ५७ ॥

श्रीपदो ब्राह्मणीं प्राह प्रदोषे पूजयेश्वरम् ॥
मन्दवारे विशेषेण भक्तिभावसमन्विता ॥ ५८ ॥

पूजा गोपिकया दृष्टा स्पष्टा स्कन्दपुराणके ॥
कथा विस्तरतः प्रोक्ता सगुणेशयशोन्विता ॥ ५९ ॥

भवतु ॥५१-५२॥ इति श्रुत्वा सदयः स आह । शिवमाराधय । हरिवत्ते पुत्रो भविष्यति । गोप्या ईशार्चनं दृष्टं । तस्याः कारुणिकः कृष्णः पुत्रो जातः । तथैवेशमाराधयाग्रे जन्मनीशप्रसादात्ते सुपुत्रो भविष्यति । ब्राह्मणी आह । गोप्या कथं शिवपूजा दृष्टा, कथं कदा वा पूजितः । अहमपि व्रतं विधिनाऽऽचरिष्ये । इति पदलग्नाभूत्तां श्रीपाद आह ॥ ५३-५८॥ प्रदोषे मन्दवारे गोपिकयेशपूजनं दृष्टं स्कन्दपुराणे तच्चोक्तं । तत् श्रुत्वा तुष्टा

---

१ एतज्जन्मनोऽनंतरजन्मनि २ शिवः ३ सगुणरूपीश्वरकीर्तियुता.

श्रीगुरोर्वचनं श्रुत्वा सन्तुष्टा सा द्विजाङ्गना ॥
श्रीगुरोश्चरणौ नत्वा पुनः पप्रच्छ सादरम् ॥ ६० ॥
कथां कथयसि स्वामिन् चित्रां[1]मभिनवां[2]मिव ॥
यत्कृष्णोऽपि सुतो जातः प्रदोषेशार्चनेक्षणात् ॥ ६१ ॥
प्रदोषेशार्चनान्मेऽपि लभेत फलमीदृशम् ॥
पूजितोऽर्च्यैः[3] कथं पूर्वं तन्मे कथय विस्तरात् ॥ ६२ ॥
श्रीगुरुः प्राह वक्ष्ये ते स्कान्दोक्तां सत्कथामिमाम् ।
आस्त[4] उज्जयिनी नाम नगरं सुन्दरं परम् ॥ ६३ ॥
चित्रं तथाऽभवच्चन्द्रसेनराजोऽतिधार्मिकः ॥
तस्य प्राणसखो नाम्ना मणिभद्र इति श्रुतः ॥ ६४ ॥
स ईशभक्तिसम्पन्न ईशपूजापरायणः ॥
शिवं प्रसादयामास सो[5]ऽस्मै चिन्तामणिं ददौ ॥ ६५ ॥
कोटिसूर्यप्रकाशोऽभूत्स मणिर्धरिणीतले ॥
मणिभद्रस्तरणिभं[6] स्वकण्ठेऽधारयत्सदा ॥ ६६ ॥

ब्राह्मणी नत्वा पप्रच्छ । चित्राऽभिनवा कथा श्रुता । प्रदोषेश्वरार्चनात्कथं कृष्णः पुत्रो जातः, प्रदोषेशार्चनान्ममापीदृक्फलं लभेत्, कथमीशोऽर्चितस्तन्मे कथय ॥५९-६२॥ श्रीपाद आह । स्कान्दोक्तां कथां शृणु । पवित्रे उज्जयिनीनगरे चित्रं जातं । तत्र धार्मिक इंद्रसेनो राजा तत्सखो मणिभद्रः पूजयेशं प्रसादयामास । शिवः कोटिसूर्यप्रभं चिंतामणिं ददौ । मणिभद्रः कंठेऽधारयत् ॥६३-६६॥ मणेस्तेजस्पर्शाल्लोहं सुवर्णतां

१ आश्चर्यरूपां २ नवीनामिव ३ पूजनार्हैः शिवः ४ अस्ति ५ शिवः ६ सूर्यसंकाशं.

चिन्तामणिरिव मणेस्तेजः संस्पर्शनादपि ॥
लोहं काञ्चनतां याति सद्यो विद्योतितात्मनः ॥ ६७ ॥
यद्यद्विचिन्त्यते तत्तन्मणिस्मरणतोऽपि च ॥
लभ्यमेवेति तत्ख्यातिं श्रुत्वा भूपा उपागमन् ॥ ६८ ॥
केचन स्निग्धभावेन कौतुकेन च केचन ॥
बलात्कारेण मूल्येन तं स्मेच्छन्ति क्षितीश्वराः ॥ ६९ ॥
मणिं नो देहि केनापि प्रकारेणेति भूमिपाः ॥
दूतानपीरयामासुर्योध्दुं चापि समागताः ॥ ७० ॥
तत्र सङ्गम्य राजान उज्जयिन्यां महाबलैः ॥
तद्राष्ट्रं वेष्टयामासुर्मणिग्रहणलालसाः ॥ ७१ ॥
शनिवारे त्रयोदश्यां प्रदोषे मंत्रिणा नृपः ॥
निःशङ्कमुपविष्टोऽभूद्विधिना शङ्करार्चने ॥ ७२ ॥
महाकालेशलिङ्गं स पूजयामास हर्षतः ॥
तदा शिवालये द्रष्टुं गोपपुत्राः समागताः ॥ ७३ ॥
पूजां लिङ्गस्य दृष्ट्वा ते गोपपुत्रा अपि स्वयम् ॥
मुदा पूजयितुं तद्वत्पाषाणे स्वाङ्गणे स्थिताः ॥ ७४ ॥

याति ॥६७॥ यद्यच्चिन्त्यते तन्मणेः स्मरणाल्लभ्यते। इति ज्ञात्वा राजानः केचित्स्नेहेन केचित्कौतुकेन केचिद्बलात्केचिन्मूल्येन चायाचंत। केनापि प्रकारेण मणिं देहि। नोचेत् युद्धायागमिष्याम इति दूतान्प्रैरयन्। तथाऽपि मणिर्न दत्तः। तदा सैन्यैः सहागत्य राजानस्तद्राष्ट्रं वेष्टयामासुः। त्रयोदश्यां शनिवारे प्रदोषे राजा मणिभद्रेण सह हर्षेण विधिवन्महाकालेशलिङ्गं पूजयामास। तदा गोपपुत्राः पूजां दृष्ट्वा स्वांगणे शिवालयं पाषाण-

शिवालयं कल्पयित्वा पाषाणेन निजाङ्गणे ॥
स्वगेहसन्निधौ भक्त्या विनोदेन समर्चयन् ॥ ७५ ॥

ते पाषाणमयं लिङ्गं बालका अर्चनोत्सुकाः ॥
यथादृष्टं धियाऽऽनर्चुः कल्पितैरुपचारकैः ॥ ७६ ॥

पत्रादिभिर्यथालब्धैरुपचारैरपूजयन् ॥
समर्प्योदकनैवेद्यं गोपबालाः कुतूहलात् ॥ ७७ ॥

गोप्यस्तन्मातरस्तत्र[1] प्राप्य पुत्रान्निवार्य ताः ॥
भोजनार्थं निजगृहान्निन्युः सर्वान्कुमारकान् ॥ ७८ ॥

एकस्तु गोपिकातोकः[2] पूजासक्तो गतो न हि ॥
माता तस्योपसङ्क्रम्य[3] ताडयामास तं सुतम् ॥ ७९ ॥

सा प्राह गच्छ भुक्त्यर्थं[4] भोजनावसरस्त्वयम् ॥
किं करोषि निशि ध्वान्ते इत्युक्तोऽपि बुबोध[5] नो ॥८०॥

क्रुद्धा तस्मै तदा गोपी भङ्क्त्वा पूजां निजाङ्गणे ॥
दूरात्पाषाणमुत्क्षिप्य सा गता निजमन्दिरम् ॥ ८१ ॥

मयं लिङ्गं च कल्पयित्वा ॥६७-७५॥ कौतुकेन यथा दृष्टं तथा कल्पितोपचारैः पत्रादिभिश्च संपूज्य नैवेद्यार्थं जलं ददुः॥७६-७७॥ गोप्यस्तन्मातर एत्य तान्निवार्य भोजनार्थं निन्युः। पूजासक्त एकः गोपसुतो न यातस्तन्माताऽऽगत्य तं ताडयित्वाऽऽह। भोजनावसरे रात्रौ अंधकारे किं करोषि। उत्तिष्ठ भोजनार्थं गच्छेत्युक्तोऽपि न बुबोध। तदा क्रुद्धा माता पूजां भङ्क्त्वा पाषाणं दूरतस्त्यक्त्वा गृहं गता। पूजां विसर्जितां दृष्ट्वा बालो

१ गोप्यः २ बालकः ३ समीपमेत्य ४ भोजनार्थं ५ जागृतो नाभूत्.

पूजां विसर्जितां दृष्ट्वा बालको विललाप सः ॥
क्षणमात्रं तदा भूमौ मूर्च्छितो निपपात ह ॥ ८२ ॥
लिङ्गं चित्ते समालक्ष्य त्यक्तुं प्राणान्समुद्यतम् ॥
ज्ञात्वा बालं शूलपाणिः प्रसन्नोऽभवदीश्वरः ॥ ८३ ॥
शिवालयोऽङ्गणं जातं रत्नयुक्प्रस्तरोऽपि सः ॥
सूर्यतेजोऽभवल्लिङ्गं बालो बुद्धोऽभवत्तदा ॥ ८४ ॥
गौरीरमण आस्थाय निजरूपेण बालकम् ॥
उत्थाप्योचे करं धृत्वा वृणीष्वेष्टान्वरानिति ॥ ८५ ॥
बालकः प्राह शम्भो ते पूजा मात्रा विसर्जिता ॥
क्षमां कुरुष्व मे मात्रे कोपं मा कुरु शङ्कर ॥ ८६ ॥
दयालुचक्रवर्तीशः सुप्रीतः प्राह बालकम् ॥
या ददर्श प्रदोषे मे पूजां सा देवसूर्भवेत् ॥ ८७ ॥
सुतो भवान्तरे तस्या विष्णुः कृष्णो भविष्यति ॥
इति मे वचनं सत्यं नात्र कार्या विचारणा ॥ ८८ ॥

विललाप। मूर्च्छितो निपपात च। लिङ्गं चित्ते आनीय प्राणांस्त्यक्तुमुद्युक्तं बालं ज्ञात्वा शूलपाणिः प्रसन्नोऽभूत् ॥७८-८३॥ अङ्गणं शिवमन्दिरं जातं। सूर्यसंकाशं लिङ्गं तत्रोद्गतं। बालः प्रबुद्धोऽभूत् ॥८४॥ शिवः स्वरूपेण प्रादुर्भूय बालं स्वांके धृत्वा वरान्वृणीष्वेति प्राह। बाल आह। मे मात्रा ते पूजा विसर्जिता। हे शंकर, कृपां कुरु। कोपं मा कुरु। दयालुः शिवः प्रीत आह। तव मात्रा मे प्रदोषपूजा दृष्टा। सा जन्मान्तरे विष्णु-माता भविष्यतीति मे वचः सत्यं। नात्र संशयः। यद्वांछसि तत्त्वं मे

१ पाषाणः २ अतिदयालूनामपि राजा ३ देवमाता.

यद्यद्वांछसि बाल त्वं मत्प्रसादादवाप्स्यसि ॥
भुंक्ष्व त्वं सौख्यमखिलं त्वादृग्वंशोऽपि ते भवेत् ॥८९॥

इति प्रसन्नो गिरिजापतिस्तदा सदाशिवोऽदात्[1] परमं वरं मुदा ॥
पदारविन्दं प्रणतस्य पश्यतः सुतस्य लिङ्गेऽन्तरधादधीश्वरः ॥९०

रत्नोपमं बभौ लिङ्गं कोटिसूर्यप्रकाशकः ॥
शिवालयोऽपि[2] लोकास्तु मेनिरेऽभ्युदितो रविः ॥९१॥

युद्धार्थमागता भूपा शङ्कितास्ते स्वमानसे ॥
आहुर्द्वेषं परित्यज्य कर्तव्यं राजदर्शनम् ॥ ९२ ॥

पवित्रे नगरे रात्रौ पश्यतार्कोऽधुनोदितः ॥
अतोऽयं पुण्यवान्राजा कोऽनेन द्वेषमाचरेत् ॥ ९३ ॥

इत्युक्त्वा प्रेषयामासुस्तस्मै दूतान्दिदृक्षवः[3] ॥
प्रत्युद्गम्या[4]पि राजा तानानयामास हर्षितः ॥ ९४ ॥

प्रसादादवाप्स्यसि। उत्तमं सुखं भुंक्ष्व। ते वंशो धन्यो भविष्यति ॥८९-८९॥ इति प्रसन्नो गिरिजापतिस्तदा सदशिवोऽदात्परमं वरं मुदा॥ पदारविन्दं प्रणतस्य पश्यतः सुतस्य लिङ्गेऽन्तरधादधीश्वरः ॥ ९० ॥ लिंगं रत्नवद्बभौ। कोटिसूर्याभः शिवालयश्च। लोकाः सूर्य उदित इति मेनिरे। युद्धायागता नृपाः शंकिता ऊचुः। द्वेषं त्यक्त्वा राजदर्शनं कर्तव्यं ॥९१-९२॥ पवित्रपुरे रात्रावपि सूर्य उदितः। पुण्यवान्राजाऽयं। अतो द्वेषो न कार्य इत्युक्त्वा दिदृक्षवस्ते दूतान् प्रैरयन्। राजाऽपि हर्षेणा-

१ दत्तवान् २ शिवमंदिरमपि कोटिसूर्यप्रकाशकृत् ३ द्रष्टुं इच्छवः ४ अभिमुखं गत्वा.

स्नेहेन समवेतास्ते द्योतं दृष्ट्वा परस्परम् ॥
ऊचू रात्रावन्धकारे जातः सूर्योदयः कथम् ॥ ९५ ॥

ततस्ते चन्द्रसेनेन सहिताः कौतुकान्विताः ॥
तत्रैत्य रत्नखचितं ददृशुस्ते शिवालयम् ॥ ९६ ॥

लिङ्गं च बालकमुखात्सर्वं श्रुत्वाऽतिहर्षिताः ॥
तस्मै गोपाधिपत्यं ते ददुरन्याश्च सम्पदाः ॥ ९७ ॥

स्वं स्वं स्थानं ययुः सर्वे स राजाऽप्यभयोऽभवत् ॥
शनिप्रदोषपूजायाः सुफलं ब्राह्मणीदृशम् ॥ ९८ ॥

शैवो गोपकुमारोऽपि गृहमेत्याह मातरम् ॥
भवान्तरे त्वदुदरे विष्णुस्त्ववतरिष्यति ॥ ९९ ॥

इतीश्वरो वरं मह्यं दत्तवान्हृष्टमानसः ॥
कर्पूरगौरः प्रसन्नः प्रदोषे यस्त्वयेक्षितः ॥ १०० ॥

मया ते याचितं मातरपराधक्षमापनम् ॥
शूलपाणिः क्षमां कृत्वा दत्तवान्मेऽपि सद्वरान् ॥ १ ॥

गत्य तान्स्वपुरं निन्ये । ते परस्परं ऊचुः । कथं रात्रौ सूर्य उदित इति । ततस्ते सकौतुकाश्चन्द्रसेनसहिता रत्नखचितं शिवालयं लिंगं च दृष्ट्वा गोपालात्सर्वं श्रुत्वा तस्मै गोपाधिपत्यं सम्पदश्च दत्वा स्वं स्वं स्थानं ययुः । राजाप्यभयोऽभूदिदं प्रदोषपूजाफलम् ॥९३-९८॥ गोपपुत्रो मातरमेत्याह । भवान्तरे त्वदुदरे विष्णुरवतरिष्यति । प्रसन्नः शिवो वरं ददौ ॥९९-१००॥ मया तवापराधक्षमापनं याचितं । स क्षमापनं दत्वा

एवं मात्रे स वृत्तान्तं प्राह जातं तथैव हि ॥
प्रसन्न ईश्वरे जाते किं केषां दुर्लभं वद ॥ २ ॥

एवं प्रदोषकाले तु पूजादर्शनमात्रतः ॥
ईश्वरः सुप्रसन्नोऽभूद्विप्रस्त्रि वरदस्तदा ॥ ३ ॥

तव चित्तेऽपि सत्पुत्रवासना चेदसंशयम् ॥
प्रदोषे पूजय शिवं मादृक्पुत्रो भविष्यति ॥ ४ ॥

इत्युक्त्वाऽपि प्राप्तदुःखासहनाभूत्ततः प्रभुः ॥
तद्भावं श्रीपदो ज्ञात्वा प्रसन्नो भक्तवत्सलः ॥ ५ ॥

तस्याः कुमारमाहूय करं तन्मस्तकोपरि ॥
दधौ तदैव सहसा ज्ञानी जातस्त्रिवेदवित् ॥ ६ ॥

स वेदभाष्यतर्कादिनिपुणः सुगुणोऽभवत् ।
पठन्तं तं सुतं दृष्ट्वा तन्माता विस्मिताऽभवत् ॥ ७ ॥

विस्मिता विप्रवनिता प्राहेशोऽयं विनिश्चितः ॥
कार्यार्थमवतीर्णोऽत्र भूमौ मानुषवेषधृक् ॥ ८ ॥

मे वरान्ददौ। एवं पुत्रो मात्रेऽकथयत्। ईशे प्रसन्ने किं दुर्लभं। हे विप्रस्त्रि, एवं प्रदोषपूजादर्शनादीशः प्रसन्नोऽभूत्। सत्पुत्रेच्छा चेत्प्रदोषे शिवं पूजय। मादृक्पुत्रो भविष्यति। इत्युक्तामपि प्राप्तदुःखासहनां तां ज्ञात्वा प्रसन्नो भक्तवत्सलः श्रीपादस्तत्पुत्रमाहूय तन्मस्तके करं दधौ। तदा स ज्ञानी त्रिवेदभाष्यतर्कादिनिपुणोऽभूत् ॥ १-६ ॥ तं दृष्ट्वा विस्मिता माता प्राह ॥ ७ ॥ कार्यार्थं भूमौ अवतीर्णोऽयं मानुषवेषीश्वर एव प्राग्ज-

पूर्वजन्मार्जितात्पुण्याद्गुरुनाथोऽत्र सङ्गतः ॥
इत्युक्त्वा स्वगतं[1] श्रीशं सा ननाम क्षणे क्षणे ॥ ९ ॥
सा प्राहेशस्त्वमेवासि प्रदोषे त्वां समर्चये[2] ॥
मिथ्यावाक्यं न ते पुत्रो मम त्वादृग्भविष्यति ॥११०॥
इति निश्चित्य मनसा पूजयामास साऽपि तम् ॥
ग्रामं गत्वा प्रदोषेऽपि ततः प्रभृति शङ्करम् ॥ ११ ॥
वेदशास्त्रार्थसम्पन्नो ज्ञानी तस्याः सुतोऽभवत् ॥
सर्वेभ्योऽप्यधिकः पूज्यो विनीतः सुप्रसादतः ॥ १२ ॥
कृतोद्वाहः स तद्ग्रामे पुत्रपौत्रसमन्वितः ॥
हृष्टोऽतिष्ठद्गुरुकृपा यस्योपरि स चेदृशः ॥ ११३ ॥
एवं गुरुः कृपासिन्धू रांति[3] भक्तजनाय हि ॥
सानन्दाखिलसम्पत्तीर्भोः श्रीमन्नामधारक ॥ ११४ ॥
एवं बुद्धः सिद्धः प्रोचे तं नामधारकं भक्तम् ॥
तच्छृण्वन्तु समस्ता हर्षेणेत्थं सरस्वती वदति ॥११५॥

न्मपुण्याल्लुब्ध इत्युक्त्वा पुनः पुनर्नत्वा प्राह। त्वमेवेशः प्रदोषे त्वां पूजयामि। ते वाक्यं न मृषा। त्वादृङ्मे पुत्रो भविष्यति ॥८-१०॥ इति निश्चित्य मनसा तं संपूज्य ग्रामं गत्वा प्रदोषे शिवमपूजयत्। वेदशास्त्रसम्पन्नः सर्वेभ्योऽधिकस्तत्पुत्रो ज्ञानी बभूव। स कृतविवाहः पुत्रादिसहितोऽभूदीदृशी गुरुकृपा। एवं कृपाब्धिर्गुरुर्भक्तेभ्यः सानन्दसम्पत्तीर्दत्ते ॥११-१४॥ एवं बुद्धः सिद्धः प्रोचे तं नामधारकं सिद्धम्। तच्छृण्वन्तु समस्ता हर्षेणेत्थं सरस्वती वदति ॥ ११५ ॥ इति चूर्णिकायाम् अष्टमोऽध्यायः ॥

---

१ स्वमनसि २ पूजयिष्यामि। वर्तमानसामीप्यं ३ ददाति.

(इति) श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्यगङ्गाधरा-
त्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञितमहाराष्ट्रभाषान्वित-
गुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वतीयतिविरचितायां
श्रीगुरुसंहितायां ज्ञानकाण्डे अष्टमः ( अध्यायः ) ॥

॥ आदितः श्लोकाः ॥ ११३० ॥

॥ इति अष्टमोऽध्यायः ॥ ८ ॥

---

## ॥ अथ नवमोऽध्यायः ॥ ९ ॥

॥ श्रीगणेशाय नमः ॥ ॥ श्रीदत्तात्रेयाय नमः ॥

इति सिद्धवचः श्रुत्वा प्रणतो नामधारकः ॥
सन्धाय स्वकरौ भक्त्या पप्रच्छ पुनरादरात् ॥ १ ॥

श्रीपदे कुरुपुरे वरे स्थिते तत्कथा कथमभूद्वदाग्रतः ॥
विस्तरेण भगवन्नुदार[1] मे त्वं कृपातनुरनुत्तमोऽस्यहो ॥२॥

इति सम्प्रार्थितस्तेन तद्भावं भक्तवत्सलः ।
ज्ञात्वा गुरुचरित्रं स प्रारेभे वक्तुमादृतः ॥ ३ ॥

सिद्ध ऊचे प्रवक्ष्यामि कौतुकं नामधारक ॥
तद्ग्रामे रजकस्त्वेकः सेवकः श्रीगुरोरभूत् ॥ ४ ॥

प्रत्यहं श्रीपदः स्नातुं कृष्णां याति यथाविधि ।
त्रीशः स्वयं कृतार्थोऽपि सम्पश्यँल्लोकसङ्ग्रहम् ॥ ५ ॥

आख्यानकीर्तिः श्रुतितोऽस्य मुक्तिर्भवान्तरेऽसौ रजकाय राज्यम् ।
दास्यंस्तिरोऽभून्नवमेऽत्र कृष्णातटेऽपि सम्पूरयति स्वतृष्णाम् ॥ १ ॥

इति सिद्धवचः श्रुत्वा नामधारको नत्वा पप्रच्छ । श्रीपादे तत्र स्थिते कथमग्रतः कथा जाता । कृपया तां वद । इति श्रुत्वा तद्भक्तिं ज्ञात्वा सिद्धो वक्तुमारेभे । हे नामधारक कौतुकं वच्मि । तद्ग्रामे रजको गुरुसेवकोऽभूत् ॥१-४॥ यद्दर्शनाद्गङ्गास्नानाधिपुण्यं स्वयं कृतार्थोऽपि स

---

१ हे महन् हे दातृतम वा । उदारो दातृमहतोः । २ कृपामूर्तिः.

गङ्गास्नानाधिपुण्यं यद् दृष्ट्[1]वा तस्य तु तेन किम् ।
असौ लोकानुग्रहार्थमथापि स्नाति नित्यशः ॥ ६ ॥
मध्ये[2]कृष्णाप्रवाहं स श्रीपादो भक्तकामदः ॥
स्नानं कर्तुं समुद्युक्त एकदा नामधारक ॥ ७ ॥
कृष्णातटे स रजको वस्त्राणि क्षालयत्यपि ।
भक्त्या श्रीपादमागत्य प्रत्यहं नमति स्म सः ॥ ८ ॥
त्रिकालं नित्यमागत्य दण्डवत्प्रणनाम ह ॥
कायेन मनसा वाचा विनयेन च भक्तितः ॥ ९ ॥
एवं दिनानि कतिचिन्नमति श्रीपदं स्म तम् ॥
श्रीवल्लभः सुप्रसन्नो नमन्तं रजकं जगौ ॥ १० ॥
रजक त्वं प्रण[3]त्याऽत्र प्रत्यहं कष्टमीदृशम् ॥
किमर्थं कुरुषे तुष्टो राज्यं दास्यामि भक्त ते ॥ ११ ॥
इति तद्वचनं श्रुत्वा ग्रन्थिं बध्वा स पल्लवे ॥
प्राह बद्धकरः सत्यसङ्कल्पोऽसि त्वमीश्वरः ॥ १२ ॥

श्रीपादो लोकसंग्रहार्थं प्रत्यहं यथाविधि स्नातुं कृष्णां याति ॥५-६॥ तत्र स्नानं कर्तुमुद्युक्ते श्रीपादे कदाचिद्वस्त्रक्षालकः रजकः श्रीपादमेत्य ननाम। एवं कायेन मनसा वाचा प्रत्यहं त्रिकालं भक्त्या दण्डवन्ननाम। एवं कियति काले गते प्रसन्नः श्रीपादस्तमाह। रे रजक, किमर्थमीदृक्कष्टं कुरुषे। तुष्टोऽस्मि ते राज्यं दास्ये। इति श्रुत्वा वस्त्रप्रान्ते ग्रन्थिं बध्वाऽऽह। त्वं सत्यसंकल्प ईश्वरोऽसीति। ततः संसारचिंतां त्यक्त्वा सेवको

१ यद्दर्शनेन २ कृष्णाप्रवाहमध्ये। पारे मध्ये षष्ठ्या वा। ३ नमस्कारेण.

ततः संसारचिन्तां स त्यक्त्वा तत्सेवकोऽभवत् ॥
दूराद् दृष्ट्वा यान्तमपि प्रणनाम स दण्डवत् ॥ १३ ॥

एवं सुबहुकालं स सेवको रजकोऽन्वहम् ॥
कृत्वाऽङ्गणं नीरजस्कं प्रोक्षयामास वारिणा ॥ १४ ॥

ततो वासन्तिके काले वैशाखे मासि कश्चन ॥
क्रीडन्यवनजातीयो राजा तत्र समागतः ॥ १५ ॥

स्त्रीभिः सहालंकृताभिः स्वयं चाभरणैर्वरैः ॥
भूषितो नौस्थितो हृष्टो जगाम जलमध्यतः ॥ १६ ॥

हस्तिघोटकपादातींस्तटद्वितयचारिणः ॥
दृष्टवानमितान्हृष्टान्भूषितान्सेवकानपि ॥ १७ ॥

नानाविधानि वाद्यानि नेदुः कृष्णातटद्वये ॥
राजा स्वयं प्रवाहेऽपि चिक्रीडन् स्त्रीभिरुन्मदः ॥१८॥

रजको वाद्यशब्दं स श्रुत्वा श्रीगुरुचिन्तनम् ॥
त्यक्त्वा ददर्श कृष्णायां भूपं विस्मयमाययौ ॥ १९ ॥

भूत्वा श्रीपादं दूरतो दृष्ट्वा दण्डवन्ननाम ॥७-१३॥ मठांगणं नीरजस्कं कृत्वाऽद्भिः प्रत्यहं प्रोक्षयामास ॥ १४ ॥ ततो वासंतिके कालेऽलंकृताभिः स्त्रीभिः सहालंकृतो यवनजातीयो राजा नौकास्थः क्रीडञ्जलमध्यप्रदेशतो जगाम। उभयतटतो हस्त्यश्वादयो जग्मुर्वाद्यानि च नेदुः। रजको गुरुचिंतनं त्यक्त्वा वाद्यध्वनिं श्रुत्वा कृष्णायां सपरिवारं भूपं दृष्ट्वा

प्राहोत्पद्यात्र संसारे यदि सौख्यं न चेद्दशम् ॥
सुवैभवं न लब्धं चेत्तज्जन्म पशुना समम् ॥ २० ॥
राज्ञोऽस्य जीवितं धन्यं भुङ्क्ते सौख्यं य ईदृशः ॥
स्त्रियोऽनेकाः सुभूषाश्च भक्त ईशस्य भाति मे ॥ २१ ॥
कथं तेनार्जितं पुण्यं लब्धो वाऽस्य कथं गुरुः ॥
देव आराधितः को वा ततः प्राप्तेदृशी दशा ॥ २२ ॥
मनसा चिन्तयित्वैवं गुरुं दृष्ट्वा स दण्डवत् ॥
ननाम ज्ञातवाञ्श्रीपात्कृपालुस्तस्य वासनाम् ॥ २३ ॥
एवं तद्धृद्गतं ज्ञात्वा श्रीपदो भक्तवत्सलः ॥
तमाहूय स पप्रच्छ किं चिन्तयसि मानसे ॥ २४ ॥
रजकः प्राह भोः स्वामिन्दृष्टं मे[1] राजवैभवम् ॥
तुष्टोऽस्मि केवलं मन्ये दासं हि श्रीगुरोरमुम् ॥ २५ ॥
देवमाराध्य तपसा पुराऽवस्थामिमां गतः ॥
इति मे चित्त आयातं कृपामूर्ते वदान्यराट्[2] ॥ २६ ॥

विस्मित आह। संसारे यदीदृक्सुखं न चेत्पशुवज्जन्म। राज्ञोऽस्य जीवितं धन्यं यस्येदृक्स्त्रीरत्नभूषणादि। ईशभक्तोयं वा कथं पुण्यमर्जितं को वा गुरुराराधितः यत ईदृगभूत् ॥१९-२२॥ इति विचिंत्य गुरुं दण्डवन्नाम। श्रीपादस्तद्धृदयं ज्ञात्वा भक्तवत्सलस्तमाहूय किं चिंतयसीति पप्रच्छ ॥२३-२४॥ स आह। भोः स्वामिन्राजवैभवं दृष्टं। तुष्टोऽस्मि। तं श्रीगुरुदासं मन्ये। पुरा देवमाराध्येदृशीं दशां गत इति कृपाब्धे

१ मया २ हे दानशूर.

अविद्यावशतो नानावासना उदयन्ति हि ॥
किं प्रमाथींद्रियार्थैर्मे[1] त्वत्पदं [2]मेऽतिसौख्यदम् ॥२७॥

श्रीपादो रजकं प्राह जन्मतः कष्टभागसि ॥
तवास्ति राज्यभोगेच्छा सुखेनानुभविष्यसि ॥ २८ ॥

तृप्तानि नेंद्रियाण्यस्य मनस्तस्य न निर्मलम् ॥
वासनाऽप्यवशिष्टा चेत्सा जन्मान्तरकष्टदा ॥ २९ ॥

इति स्वामिवचः श्रुत्वा हस्तौ सन्धाय[3] सोऽब्रवीत् ॥
कृपासागर कर्तव्या नोपेक्षा श्रीगुरो मम ॥ ३० ॥

गुरुः प्राहास्ति ते प्रीती राज्यभुक्तेरतो द्रुतम् ॥
प्रयाहीन्द्रियतुष्ट्यर्थं भव त्वं म्लेच्छजन्मभाक् ॥ ३१ ॥

रजकः प्राह चरणवियोगो माऽस्तु तेऽनयोः ॥
दर्शनं मेऽस्तु ते ज्ञानं पुनश्चानुग्रहं कुरु ॥ ३२ ॥

चिंतितं । अविद्यावशान्नानावासना उद्यंति । किं तादृशैर्विषयैस्त्वत्पदं मे सुखदं । श्रीपाद आह । त्वं जन्मतः कष्टभागसि । राजभोगेच्छाऽपि तेऽस्ति । यस्य नेंद्रियतृप्तिस्तस्य मनो न निर्मलं । अवशिष्टा चेद्वासना जन्मान्तरकष्टदाऽतो राज्यं भुंक्ष्वेति श्रुत्वा नत्वा रजक आह । दयाब्धे, ममोपेक्षां मा कुरु ॥२९-३०॥ श्रीपाद आह । ते राज्ये प्रीतिरस्त्यत इंद्रियतुष्ट्यर्थं म्लेच्छकुले जनिष्यसे । रजक आह । चरणवियोगो मास्तु ।

---

१ मम २ मह्यं ३ प्रणम्य.

श्रीगुरुः प्राह वैडूर्यनगरे त्वं जनिष्यसे ॥
दर्शनं मेऽन्तकाले ते भविष्यति भवान्तरे ॥ ३३ ॥

मम दर्शनमात्रेण ज्ञानं तेऽपि भविष्यति ॥
चिन्तां मा कुरु वाक्यं मे सत्यमेव न संशयः ॥ ३४ ॥

पुनः प्रयोजनवशाद्भविष्यामि धरातले ॥
अवतीर्णो यतिर्नाम्ना नरसिंहसरस्वती ॥ ३५ ॥

पुनराभाष्य तं प्राह म्लेच्छयोनिं व्रजेति सः ॥
रजकस्तत्पदे ध्यात्वा साष्टाङ्गं प्रणनाम ह ॥ ३६ ॥

तमाहूय स्वनिकटं कृपामूर्तिरुवाच तम् ॥
इह जन्मनि भोक्तुं ते वाञ्छा वा परजन्मनि ॥ ३७ ॥

रजकः श्रीपदं प्राह वृद्धोऽस्म्यद्य जरद्वपुः ॥
परजन्मनि भोक्ष्येऽतो यौवने ह्युत्तमा रुचिः ॥ ३८ ॥

रजकस्य वचः श्रुत्वा श्रीपादः प्राह सेवक ॥
गच्छ जन्मान्तरं शीघ्रं भुङ्क्ष्व राज्यमकण्टकम् ॥ ३९ ॥

पुनर्दर्शनानुग्रहं कुरु। श्रीपाद आह। वैडूर्यपुरे त्वं जनिष्यसेऽन्तकाले दर्शनं भविष्यति। दर्शनाच्च मे ज्ञानं भविष्यति। चिंतां मा कुरु। मे वचः सत्यं। म्लेच्छयोनिं व्रज। कार्यवशान्नरसिंहसरस्वतीसंज्ञको मेऽवतारो भविष्यति। तत् श्रुत्वा रजकः साष्टांगं ननाम। श्रीपादस्तं निकटमाहूय प्राह। इह जन्मनि ते राज्यभोगेच्छा जन्मांतरे वा। रजक आह। वृद्धोऽस्मि जीर्णोऽतः परजन्मनि भोक्ष्ये। यौवने हि भोगरुचिः ॥ ३१-३८ ॥ श्रीपाद आह। गच्छ शीघ्रं जन्मांतरेऽकंटकं राज्यं भुंक्ष्व ॥ ३९ ॥

इति श्रीगुरुणाऽऽज्ञप्तः प्राणांस्त्यक्त्वा स तत्क्षणम् ॥
वैडूर्यनगरे म्लेच्छकुले जज्ञे स दैवतः ॥ ४० ॥
रजकस्य कथा चित्रा सञ्जाता नामधारक ॥
तां विस्तरेण वक्ष्यामि प्रसङ्गवशतोऽग्रतः ॥ ४१ ॥
तत्र प्रत्यक्षरूपेण कञ्चित्कालमुपावसत् ॥
श्रीपादो महिमानं स्वं लोके प्रख्यापयन्निव ॥ ४२ ॥
सर्वमाहात्म्यसंख्याने ग्रन्थो विस्तरतामियात् ॥
अतः संक्षिप्य वक्ष्येऽन्यावतारं नामधारक ॥ ४३ ॥
सर्वमाहात्म्यसंख्याने कुतः शक्तिर्ममेदृशी ॥
स्थानमाहात्म्यमप्यस्यामृतदृष्टेस्तु को वदेत् ॥ ४४ ॥
श्रीगुरुर्यत्र वसति स्थानस्यापि च तस्य तु ।
विचित्रं महिमानं नो वक्तुं शक्नोमि कात्स्न्र्यतः ॥४५॥
वक्ष्ये संक्षेपतस्तस्मात्स्थानमाहात्म्यमीशितुः ॥
प्रख्यातं तत्कुरुपुरं सिध्येद्यत्राशु कामना ॥ ४६ ॥
कतिकालं वसंस्तत्र श्रीपादो भक्तवत्सलः ॥
अदृश्योऽभूल्लोकदृष्ट्याऽवतरिष्यंस्ततः परम् ॥ ४७ ॥

इत्युक्तः स प्राणांस्त्यक्त्वा वैडूर्यनगरे म्लेच्छकुले जज्ञे। चित्रा तत्कथाऽग्रे प्रसंगतो वक्ष्ये। श्रीपादस्तत्र कंचित्कालं स्थित्वा महिमानं ख्यापयामास। तद्वर्णने ग्रंथविस्तरो भवेदतः संक्षेपतो वक्ष्ये। सर्ववर्णने मे का शक्तिः। अमृतदृष्टेः सर्वमाहात्म्यं को वदेत्। श्रीगुरोः स्थानमहिमानमपि सर्वं वक्तुं न शक्नोमि। तस्मात्संक्षेपतो वक्ष्ये। यत्र सर्वकामसिद्धिस्तस्मिन्कुरुपुरे कंचित्कालं स्थित्वाऽऽश्विनकृष्णद्वादश्यां हस्तर्क्षे कृष्णाप्रवाहे

द्वादश्यामाश्विने कृष्णे हस्तर्क्षे भगवान्प्रभुः ॥
कृष्णायां समदृश्योऽभूल्लोकदृष्टया न तत्त्वतः ॥ ४८ ॥

भूत्वा स्वयमदृश्योऽपि भक्तानां कामपूरकः ॥
आस्ते त्रिमूर्तिरद्यापि भक्तानामभिहितार्थदः ॥ ४९ ॥

श्रीपादोऽदृश्यरूपेण तत्र तिष्ठति सर्वदा ॥
अवतारप्रसङ्गेन प्रत्यक्षो ज्ञानिनामिह ॥ ५० ॥

श्रीपादस्तत्र जागर्तीत्येवंप्रत्ययहेतवे ॥
वक्ष्ये निदर्शनं श्रोतः सावधानतया शृणु ॥ ५१ ॥

स्थानं व्रजन्ति ये भक्त्या तेषां प्रत्यक्ष एव सः ॥
भूमण्डले प्रसिद्धं तत्क्षेत्रं कुरुपुरं वरम् ॥ ५२ ॥

सिद्धोऽवदद्यत्खलु नामधारकं पूर्वं यथा श्रीगुरुसत्कथानकम् ॥
श्रोतॄनुवाचापि तु तत्सरस्वतीसंज्ञो द्विजो यस्य परा सरस्वती ५३

भगवान् लोकदृष्टयाऽदृश्यो भूत्वाऽपि ॥४०-४८॥ तत्राद्यापि भक्तेष्टदोऽस्ति। तत्रादृश्यरूपेण सर्वदा तिष्ठति। ज्ञानिनां तु प्रत्यक्षोऽस्ति। श्रीपादस्तत्र जागर्तीति प्रत्ययार्थमेकं निदर्शनं वक्ष्ये। सावधानेन शृणु। तत्स्थानं ये व्रजंति तेषां स प्रत्यक्षः। तत्क्षेत्रं कुरवपुरं प्रसिद्धमस्ति ॥४९-५२॥ सिद्धोऽवदद्यत्खलु नामधारकं पूर्वं यथा श्रीगुरुसत्कथानकं। श्रोतॄनुवाचापि तु तत्सरस्वतीसंज्ञो द्विजो यस्य परा सरस्वती ॥ ५३ ॥
इति चूर्णिकायां नवमोऽध्यायः ॥

१ उत्कृष्टा २ वाणी.

(इति)श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्यगङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञितमहाराष्ट्रभाषान्वित-गुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वतीयतिविरचितायां श्रीगुरुसंहितायां ज्ञानकाण्डे नवमः ( अध्यायः )

॥ आदितः श्लोकाः ॥ ११८३ ॥

॥ इति नवमोऽध्यायः ॥ ९ ॥

---

## ॥ अथ दशमोऽध्यायः ॥ १० ॥

॥ श्रीदत्त ॥ इति सिद्धवचः श्रुत्वा नत्वा तं नामधारकः ॥
श्रोष्यंञ्छ्रीपादमाहात्म्यं पुनः पप्रच्छ सादरम् ॥ १ ॥

अवतारान्तरं जातं श्रीपादस्तत्र हि स्थितः ॥
इत्युक्तं तत्कथं स्वामिन्विस्तरेण वदाखिलम् ॥ २ ॥

सिद्ध आहास्य माहात्म्यं किं ब्रुवे नामधारक ॥
विश्वव्यापी परात्मा यो नानारूपधरोऽप्यजः ॥ ३ ॥

कार्यार्थमवतीर्णोऽपि गुप्तरूपेण चात्र हि ॥
कुरुक्षेत्रे निवसति स्वभक्तवरदो विभुः ॥ ४ ॥

पश्य भार्गवरामोऽपि चिरजीव्यधुनाऽस्ति हि ॥
ततः परेऽवतारास्तु तस्य जाता अनेकशः ॥ ५ ॥

अध्यायसारसंग्रहश्लोकोऽयम्—

पथि तस्करघातितभक्तं सार्थमजीवयदेत्य चिरस्य ॥
विनिहत्य च तान्दशमे श्रीपादतिवेगवती गतिरस्य ॥ १ ॥

श्रीपादमाहात्म्यं श्रोष्यन्नामधारकः सिद्धं नत्वा पप्रच्छ। श्रीपादस्तत्र स्थितोऽवतारोऽन्यश्च जात इति कथितं तद्विस्तराद्वद। सिद्ध आह। माहात्म्यं कति वक्ष्ये! विश्वव्यापी नानारूपधरः परात्मा भक्तवरदः कार्यार्थमवतीर्णोऽपि गुप्तरूपेण तत्र निवसति। पश्य भार्गवो रामोऽधुनास्त्यपि परेऽनेकेऽवतारा जाताः।

१ श्रोतुमिच्छन्.

नारायणोऽत्र वसति सर्वत्रापि त्रिमूर्तिधृक् ॥
ब्रह्मविष्ण्वीशरूपैः स सर्गस्थितिविनाशकृत् ॥ ६ ॥
हृषीकेशोऽवतरति स्वभक्तजनरक्षकः ॥
दुर्वासःशापमाश्रुत्य[1] गोप्तुं[2] धर्मं सतः[3] सुरान् ॥ ७ ॥
त्रिमूर्तेरवतारोऽयं केऽस्य पारं परं विदुः ॥
निधिः कुरुपुरं तीर्थं त्रिमूर्तेर्वसतिस्त्विह ॥ ८ ॥
यं यं चिन्तयते तं तं प्राप्नोति क्षेत्रदर्शनात् ॥
श्रीगुरोर्वसतिर्यत्र कामधेनुस्तु तत्र हि ॥ ९ ॥
श्रीपादस्थानमहिमा वर्ण्यते केन भूतले ॥
कात्स्न्र्येनाथापि चैकं ते वक्ष्यामीह निदर्शनम् ॥१०॥
तुभ्यं कथयितुं मेऽतिप्रीतिस्त्वं गुरुभक्तिमान् ॥
सर्वथोपेक्षते नैव भक्तं तन्मार्गमीक्षते ॥ ११ ॥
गांभीर्येण दृढा भक्तिर्यस्य धीरस्य सोऽचिरात् ॥
इह सौख्यं परं भुक्त्वा परं पारं गमिष्यति ॥ १२ ॥

ब्रह्मविष्णुरुद्ररूपैरुत्पत्तिस्थितिकृन्नारायणः हृषीकेशोऽयं स्वभक्तपालकः दुर्वासःशापं स्वीकृत्य धर्मं साधून्देवान्रक्षति। तस्य पारं के विदुः। यत्र त्रिमूर्तिः तत्कुरुपुरं निधिरेव ॥२-८॥ यो यो यस्य कामः स क्षेत्रदर्शनात्सिध्यति। श्रीपादस्थानवसतिः कामधेनुरेव ॥ ९ ॥ तन्माहात्म्यं वक्तुं भूमौ कः शक्नोति। तव गुरौ प्रीतिरतस्ते एकं निदर्शनं वक्ष्ये। भक्तमार्गप्रतीक्षकः स सर्वथा भक्तान्नोपेक्षते। यस्यातीव दृढा भक्तिः सोऽचिरादिह परत्र च सुखं भुक्त्वा मोक्षं याति। हे नामधारक, पूर्ववृत्तं शृणु।

---

१ अंगीकृत्य　२ रक्षितुं　३ साधून्.

अवधारय दृष्टान्तं प्राग्वृत्तं नामधारक ॥
वल्लभेश इति ख्यातो विप्रः काश्यपगोत्रजः ॥ १३ ॥
आचारवान्सुशीलः स वणिग्वृत्तिः कुटुम्बवान् ॥
श्रीपाददर्शनार्थं स प्रतिवर्षं स्म गच्छति ॥ १४ ॥
एवं सन्नेकदा विप्रो वाणिज्यार्थं समुद्यतः ॥
सङ्कल्प्य मनसा विप्रभोजनं कार्यसिद्धये ॥ १५ ॥
वाणिज्ये मेऽतिलाभश्चेद्भूयात्कुरुपुरे ततः ॥
दास्ये सहस्रविप्रेभ्य इच्छाभोजनमित्यसौ ॥ १६ ॥
सङ्कल्प्य निश्चयेनासौ वाणिज्यार्थं ततो गतः ॥
श्रीपादश्रीवल्लभांघ्रि मनसा चिन्तयन्सदा ॥ १७ ॥
यद्यत्स्थानं गतस्तत्र लाभोऽस्याभूद्विशेषतः ॥
स सङ्कल्पाच्छतगुणं धनं लब्ध्वाऽतिहर्षितः ॥ १८ ॥
श्रीपादचरणे चित्तं निवेश्य गृहमागतः ॥
सङ्कल्पितद्विजंभुजिं ततः कर्तुं समुद्यतः ॥ १९ ॥

वल्लभेशः काश्यपगोत्रजः शीलाचारवान्कश्चिद्विप्रः कुटुंबपोषणार्थं वाणिग्वृत्तिरास। स प्रत्यब्दं श्रीपाददर्शनार्थं याति। एकदा वाणिज्यार्थं जिगमिषुर्विप्रः कार्यसिद्धये मनसा संकल्पयामास। यद्यभीष्टधनलाभो भवेत्तर्हि चतुःसहस्रविप्रेभ्य इच्छाभोजनं दास्ये ॥१०-१६॥ इति संकल्प्य श्रीपादश्रीवल्लभांघ्रि चिंतयन्यत्र यत्र गतस्तत्र तत्र विशेषतः शतगुणितो लाभोऽभूत्। हर्षाच्छ्रीपादपादं चित्ते निधाय गृहमेत्य विप्रभोजनं कर्तुं धनमादाय प्रतस्थे। तज्ज्ञात्वा चोरा व्याजमैत्र्या द्वित्रादिनं

१ ब्राह्मणभोजनं.

द्रव्यमादाय गच्छन्तं द्विजं विज्ञाय तस्कराः ॥
व्याज[1]मैत्र्या तदनुगा अभवन्द्रव्यलोलुपा[2]ः ॥ २० ॥

द्वित्रैर्धस्रैस्तदनुगा विश्वासेनैव तस्कराः ॥
ततस्ते विजने मार्गे कान्तारे[3] द्विजमेकदा ॥ २१ ॥

प्राहुः कुरुपुरं यामः प्रत्यब्दनियमेन हि ॥
श्रीपाददर्शनं कुर्म इति मेने द्विजोऽपि सत्[4] ॥ २२ ॥

एवमाभाष्य विजने शिरश्छित्त्वा द्विजस्य ते ॥
खड्गेन शित[5]धारेण द्रव्यं हर्तुं समुद्यताः ॥ २३ ॥

म्रियमाणेन विप्रेण संस्मृतो भक्तवत्सलः ॥
श्रीपादो जटिलो भस्मलिप्तः कुरुपुरादगात् ॥ २४ ॥

त्रिशूलखड्गहस्तः स संस्थितस्तस्कराग्रतः ॥
शूलेन तिग्म[6]धारेण क्रुद्धश्चोराञ्जघान ह ॥ २५ ॥

तदा हतेषु तेष्वेकः श्रीपदं विपदन्तकम् ॥
जगन्नाथमनुप्राप्य शरणं करुणं जगौ ॥ २६ ॥

तमनु गत्वा मार्गे विजने घोरे वने प्राहुः । वयं प्रत्यब्दं नियमेन कुरुपुरे श्रीपाददर्शनं कुर्मः । द्विजः सत्यं मेने । एकदा रहसि द्रव्यं हर्तुं चोराः खड्गेन द्विजशिरश्छित्वाऽर्थं जगृहुः । म्रियमाणेन विप्रेण स्मृतो भस्मलिप्तो जटिलो भक्तवत्सलः ॥१७-२४॥ श्रीपादस्तदैव खड्गशूलहस्त एत्य क्रुधा चोरान् जघान ॥ २५ ॥ तत्रैकश्चोरो जगन्नाथं श्रीपादं शरण-

---

१ कपट २ द्रव्यलम्पटाः ३ महारण्ये दुर्गपथे वा ४ सत्यं ५ तीक्ष्णधारेण ६ तीक्ष्ण.

स्वामिन्निरपराधोऽस्मि सङ्गतोऽज्ञानतः खलु ॥
चोरभावो न मे ज्ञातः सर्वात्मन् विश्वसाक्षिक ॥२७॥

इति श्रुत्वाऽभयं दत्वा श्रीपादः प्राह भस्म तु ॥
इदं गृहीत्वा विप्रस्य क्षिप्त्वाङ्गे कं नियोजय ॥ २८॥

शीर्ष्णः संधीयमाने तु कबंधे भस्मभूषिते ॥
श्रीपादोऽमृतदृष्ट्या तं दृष्टवान्स च जीवितः ॥ २९ ॥

अत्रान्तरे निशाऽतीता सूर्योऽप्यभ्युदितस्ततः ॥
श्रीपादोऽदृश्यतां यातश्चोर एक उपस्थितः ॥ ३० ॥

स सुप्तोत्थितवद्बुध्वा हतशेषं जगौ द्विजः ॥
मां बिभर्षि कुतः केन हता एते वदाधुना ॥ ३१ ॥

तस्करः प्राह विप्रात्र चित्रं जातं हि कश्चन ॥
आगत्य तापसश्चोराञ्शूलेनाहंस्तवान्तकान् ॥ ३२ ॥

मेत्य करुणं प्राह। स्वामिन्सहागतोऽप्यहं निरपराधोऽस्मि। चोरभावेन न संगतोऽस्मि। विश्वात्मन्सर्वसाक्षिन्त्राहीति श्रुत्वाऽभयं दत्वा श्रीपाद आहेदं भस्म गृहीत्वा शिरः संधायांगे क्षिप। तथेति तेन शीर्ष्णि संधीयमाने श्रीपादेनामृतदृष्ट्या वीक्षिते च स विप्रो जीवितः। अत्रांतरे सूर्य उदितः। श्रीपादोऽप्यदृश्योऽभूत्। द्विजः सुप्तोत्थितवदुत्थाय हतशेषमाह। कुतो मां धारयसि केनैते हताः वद। स आह। विप्रात्र चित्रं जातं। कश्चित्तापस एत्यैताञ्शूलेनाहन् ॥२६-३२॥ रक्षार्थं मां नियोज्य छिन्न-

१ शीर्ष्णे २ धारयसि.

रक्षार्थं मां नियोज्यात्र मंत्रितेन च भस्मना ॥
शीघ्रं त्वां जीवयामास छिन्नशीर्षमपि द्विज ॥ ३३ ॥
संस्थितोऽप्यधुनाऽत्रैव सहसाऽदृश्यतां गतः ॥
न ज्ञातो मे मुनिः कोऽयं यस्ते प्राणानरक्षत ॥ ३४ ॥
भातीशस्त्रिपुरारिः स भस्मलिप्तो जटाधरः ॥
त्वं भक्तोऽसीति मे भाति तत एष समागतः ॥ ३५ ॥
इति तद्वचनं श्रुत्वा खिन्नः श्रीशांघ्र्यदर्शनात्[1] ॥
विश्वस्तस्तद्धनं विप्रो गृहीत्वाऽगाद्गुरोः पुरम् ॥ ३६ ॥
नानोपचारैः सम्पूज्य श्रीपादस्य च पादुके ॥
चतुःसहस्रसद्विप्रभोजनं श्रद्धया व्यधात्[2] ॥ ३७ ॥
एवं भक्ता अनन्तास्तु तत्र सिद्धिं गताः खलु ॥
माहात्म्यं श्रीपदस्येत्थं ख्यातं कुरुपुरं ततः ॥ ३८ ॥
तस्माददृश्यरूपेण श्रीपादो नामधारक ॥
असंशयं कुरुपुरे निवसत्येव सर्वदा ॥ ३९ ॥

शीर्षे त्वां भस्मना जीवयित्वाऽत्र स्थितोऽप्यधुनाऽत्रैवादृश्योऽभूत्। कोऽयं तन्न जाने। ते प्राणा रक्षिताः ॥३३-३४॥ एष आगतो भस्मलिप्तो जटाधारीश्वरो भाति। त्वं भक्तोऽसि। इति श्रुत्वा श्रीपादादर्शनात्खिन्नः संस्तद्धनं गृहीत्वा कुरुपुरं गत्वा श्रीपादुके संपूज्य चतुःसहस्रविप्रभोजनं चक्रे। एवमनेके सिद्धिं गताः। इत्थं श्रीपादपादमाहात्म्यं। ततस्तत्पुरं ख्यातं। तत्रादृश्यरूपेण श्रीपादः सदा निवसति। सर्वगो नारायणोऽवतीर्यापि

---

१ श्रीपादपादादर्शनात् २ अकरोत्.

अवतीर्याप्यनन्तोऽसौ स्थितो नारायणोऽत्र हि ॥
अग्रतो भूष्णुरप्यत्र परिपूर्णोऽस्ति सर्वगः ॥ ४० ॥

स्थित्वाऽपि श्रीपदस्त्वत्र गुप्तः प्राकृतदृष्टितः ॥
ततोऽग्रतोऽवतीर्णोऽभूत्स नृसिंहसरस्वती ॥ ४१ ॥

गङ्गाधरद्विजसुतः स सरस्वतीति
ख्यातो गुरोश्चरितमाह सुविस्तरेण ॥
श्रोतुर्मनोहरमिदं सकलानभीष्टा-
नर्थान्प्रदास्यति लघु श्रवणादपीह ॥ ४२ ॥

(इति)श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्यगङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञितमहाराष्ट्रभाषान्वितगुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वतीयतिविरचितायां श्रीगुरुसंहितायां ज्ञानकाण्डे दशमः (अध्यायः)

॥ आदितः श्लोकाः ॥ १२२५ ॥

प्राकृतदृष्टितः गुप्तः स्थितः ॥३९-४०॥ ततोऽग्रतोऽस्य नरसिंहसरस्वतीसंज्ञकोऽन्योऽवतारोऽभूत् ॥ ४१ ॥ गंगाधरद्विजसुतः स सरस्वतीति ख्यातो गुरोश्चरितमाह सुविस्तरेण। श्रोतुर्मनोहरमिदं सकलानभीष्टानर्थान्प्रदास्यति लघु श्रवणादपीह ॥४२॥ इति चूर्णिकायां दशमोऽध्यायः ॥

॥ इति दशमोऽध्यायः ॥ १० ॥

१ भविष्णुः २ शीघ्रं.

## ॥ अथ एकादशोऽध्यायः ॥ ११ ॥

॥ श्रीगणेशाय नमः ॥

नामधारक आहेदं श्रीपादः कावतीर्य च ॥
किं चकार कृपामूर्ते स्वामिन्मे वद विस्तरात् ॥ १ ॥
सिद्ध ऊचे शृणुष्वेदं भो वत्स श्रीपदस्ततः ॥
पूर्वोक्तवरसंसिध्द्यै जातो विप्रस्त्रियाः सुतः ॥ २ ॥
शनिप्रदोषे सर्वेशं पूजयामास याऽम्बिका ॥
गुरूपदेशतो दैवात्पञ्चत्वं प्राप सा ततः ॥ ३ ॥
उदग्देशे द्विजकुले करञ्जनगरेऽथ सा ॥
आत्मजा समभूद्वाजसनेयिब्राह्मणस्य तु ॥ ४ ॥
जातकर्म पिता तस्या अकरोद्विधिना तथा ॥
नामकर्म पितृभ्यां तन्नामाम्बेति प्रतिष्ठितम् ॥ ५ ॥

अध्यायसारसंग्रहश्लोकोऽयम्—

एकादशे नृहरिसंज्ञक आस सोऽम्बा-
पुत्रः प्रदोषफलदः प्रणवं पठिष्यन्।
भूत्वाऽप्यवाक्श्रुतिगणानुपनीत ऊच
उद्धर्षिणीं स्वजननीं बहुधा करिष्यन् ॥ १ ॥

नामधारक आह। श्रीपादः कावतीर्य किं चक्रे कृपाब्धे तद्वद। सिद्ध आह। शृणु। स पूर्वोक्तवरसिध्द्यै विप्रस्त्रीसुतोऽभूत्। गुरूपदेशाच्छनिप्रदोषे शिवं संपूज्य मृताऽम्बिका ॥२-३॥ उदग्देशे करंजपुरे वाजसनेयिविप्रपुत्री जाता। तस्याः पिता जातकर्म नामकर्म च

स्नेहं संवर्धयन्ती सा पित्रोर्वेश्मन्यवर्धत ॥
तस्मिन्ग्रामे द्विजायाथ सा प्रदत्ता महोत्सवैः ॥ ६ ॥

शिववृत्तिं माधवाख्यमनुरूपं द्विजं पिता ॥
दृष्ट्वा तत्रैव तां तस्मै गृह्योक्तविधिना ददौ ॥ ७ ॥

माधवस्य गृहे पत्युः शुभाचारा सदाऽवसत् ॥
साध्वी सा पूर्वसंस्कारात्पूजयामास चेश्वरम् ॥ ८ ॥

तौ दंपती प्रदोषेऽपि श्रद्धाभक्तिपुरःसरम् ॥
ईश्वरं पूजयामासुर्नियमेन निरन्तरम् ॥ ९ ॥

उभावपि त्रयोदश्यां मन्दवारे विशेषतः ॥
अन्तर्वत्नी ततः साऽभूदम्बा षोडशवत्सरे ॥ १० ॥

तृतीये मास्युत्सवेन पुंसवानवलोभने ॥
चक्रे द्विजोऽवदज्ज्ञानं सा सुदोहदलक्षणा ॥ ११ ॥

ततो द्विजवरश्चक्रे सीमन्तोन्नयनं ददौ ॥
वायनानि सुवासिन्यश्चक्रुर्नीराजनाविधिम् ॥ १२ ॥

कृत्वाऽम्बेति नाम ददौ । सा कन्या पित्रोः स्नेहमवर्धयत् । ततः सा तद्ग्रामे तदनुरूपाय माधवाय महोत्सवैर्गृह्योक्तविधिना दत्ता । शुभाचारा साध्वी सा पूर्वसंस्काराच्छिवमानर्च । प्रदोषे तौ दंपती ईशं भक्त्या नियमेनापूजयताम् । शनिप्रदोषे तु विशेषतः । ततः साऽम्बा षोडशवर्षे गर्भिणी जाता ॥४-१०॥ तृतीये मासे द्विजः पुंसवनावलोभने चक्रे । सा सुदोहदाचिह्ना तत्त्वज्ञानमाह । ततः सीमंतोन्नयनं कृत्वा सुवासिनीभ्यो वायनादि ददौ । ताश्च नीराजयामासुः ॥४-१२॥ ततः शुभे कालेऽम्बा पुत्रमसूत ।

नवमासेष्वतीतेषु शुभे काले शुभे दिने ॥
अंबाऽसूत सुतं हृष्टा पिताऽभूद्धर्षनिर्भरः ॥ १३ ॥

स्वावतारज्ञापनाय जातमात्रोऽपि चोंकृतिम्[1] ॥
वाल उच्चारयामास तदा लोका विसिष्मिरे ॥ १४ ॥

जातकर्माकरोद्वित्तं द्विजेभ्योऽदान्मुदाऽऽप्लुतः[2] ॥
लग्नं ज्योतिषिकाः सम्यक् सद्भावं वीक्ष्य तेऽब्रुवन् १५

जन्मोदयो[3]ऽस्य बालस्य विशेषेणोत्तमो द्विज ॥
पुत्रः कारुणिकोऽयं ते गुरूणामपि सद्गुरुः ॥ १६ ॥

अस्यानुग्रहतः कोऽपि विश्ववन्द्यो भवेदिह ॥
अस्य वाक्यं श्रुतिसमं चिन्तामणिसमं पदम् ॥ १७ ॥

तिष्ठन्ति सिद्धयोऽप्यष्टावस्य द्वारि निरन्तरम् ॥
द्विजोत्तम वसन्त्यस्य गेहेऽपि निधयो नव ॥ १८ ॥

भविष्यन्त्यस्य न सुता गृहिणीं न वरिष्यति ॥
पूज्यस्त्रिभुवने दृष्ट्या पतितान् पावयिष्यति ॥ १९ ॥

पिता हृष्टः । स्वावतारज्ञापनाय प्रभुः ॐकारं प्राह । लोका विस्मिताः । मुदा स्नातो माधवो जातकर्माकरोत् । ज्योतिषिका लग्नं वीक्ष्योचुः । पुत्रोऽयं कारुणिको गुरूणामपि गुरुः ॥१३-१६॥ अस्यानुग्रहात्कोऽपि वंद्यो भविष्यति । अस्य वाक्यं श्रुतिवत् । पादश्चिंतामणिः । सदाऽस्य द्वारि सिद्धयो निधयश्च तिष्ठंति । नास्य पुत्रा भविष्यंति । स्त्रियं न वरिष्यति ।

---

१ प्रणवं २ स्नातः ३ लग्नं.

ईश्वरस्यावतारोऽयमिति भाति सुनिश्चितम् ॥
सन्देहो नात्र कर्तव्य इत्युक्त्वा तेऽभवन्नताः ॥ २० ॥

पुनरप्यूचिरे विप्र दैन्यमेष हरिष्यति ॥
अस्यानुग्रहमात्रेण कलिकालभयं न हि ॥ २१ ॥

युष्माकं वासना या यास्तास्ताः सिध्यन्त्ययत्नतः ॥
सम्यग्रक्षाऽस्य कर्तव्या निधिरेष गृहागतः ॥ २२ ॥

इति जातकवेत्तारः प्राहुः सम्यङ्निरीक्ष्य च ॥
जननीजनकौ हृष्टौ ददतुर्वस्त्रभूषणम् ॥ २३ ॥

हृष्टा द्विजवरा जग्मुराशीर्भिरभिनन्द्य तम् ॥
पितरौ चक्रतू रक्षां[1] प्रेम्णा दृष्टिभिया शिशोः ॥ २४ ॥

शिशुरुच्चारयामास प्रणवं जातमात्रतः ॥
इति वार्ता प्रवृत्ताऽभून्नगरे तत्र सर्वतः ॥ २५ ॥

इष्टा नागरिका मित्रजनाश्चित्रं निरीक्षितुम् ॥
प्राप्ता दृग्दोषभीत्याऽम्बा तेभ्यो नादर्शयच्छिशुम् ॥ २६ ॥

त्रिभुवने पूज्योऽयं। दृष्ट्या पतितान्पावयिष्यति। ईश्वरावतारोऽयं भाति न संशयः ॥१७-२०॥ अस्यानुग्रहात्कलिकालभयं न। अयं वो दैन्यहर्ता। युष्माकं कामा अयत्नतोऽतः सिध्यंति। निधिरेष गृहागतः। रक्षाऽस्य कर्तव्या ॥२१-२२॥ इति श्रुत्वा पितरौ हृष्टौ। तेभ्यो वस्त्रादि ददतुः। ते हृष्टा आशिषो दत्वा जग्मुः। दृग्दोषभिया पितरौ रक्षां चक्रतुः। जातमात्रः शिशुः ॐकारं पपाठेति श्रुत्वा इष्टा नागरिकाश्चाजग्मुः। दृग्दोषभिया

१ रक्षाबंधनं.

दृग्भीत्या चक्रतू रक्षां पितरौ मोहितान्तरौ ॥
मंत्रितासितसत्सूत्रबन्धनेन च भस्मना ॥ २७ ॥
परमात्मावतारोऽयं कुतो दृग्दोषभीरिह ॥
अथापि लोकदृष्ट्याऽमुं रक्षयामासतुर्गुरू[2] ॥ २८ ॥
द्वादशाहेऽथ सम्प्राप्ते नामकर्म यथाविधि ॥
चकार माधवो विप्रः स्वस्तिवाचनपूर्वकम् ॥ २९ ॥
भूयान्नरो हरिरिव नरतापाघदैन्यहृत् ॥
अयमित्याख्यया चक्रे बालं नरहरिं द्विजः ॥ ३० ॥
ममत्वेनैव महता माता प्रीत्या ररक्ष तम् ॥
स्वल्पस्तन्या[3] प्रसूर्मेने बालकं तं बुभुक्षितम् ॥ ३१ ॥
अम्बोवाच पतिं नाथ नालं बालाय मे पयः ॥
अन्वेष्टव्याऽधुना शीघ्रमुपमाता पयस्विनी ॥ ३२ ॥
अथवाऽजा[4] यतो नास्य क्षुच्छान्तिर्मम दुग्धतः ॥
इति श्रुत्वैव पस्पर्श बालो हस्तेन तत्कुचम् ॥ ३३ ॥

शिशुं नादर्शयत्। मोहितौ पितरौ कृष्णसूत्रेण भस्मना च रक्षां चक्रतुः। परात्मनः कुतो दृग्दोषभीः। अथापि प्राकृतदृष्ट्या रक्षा कृता ॥२३-२८॥ पिता द्वादशाहे स्वस्तिवाचनपूर्वकं नामकर्म कृत्वा बालाय नरहरिरिति नाम ददौ। माता ममत्वेन ररक्ष। स्वल्पस्तन्यतोऽयं बुभुक्षित इति मत्वाऽम्बा पतिमाह। बालाय मे पयो नालं। पयस्विनी उपमाताऽजा वाऽन्वेष्या। इति श्रुत्वा बालः करेण तत्कुचं पस्पर्श। तदा कंचुकीमार्द्रीकृत्य द्वात्रिं-

---

१ बालके २ मातापितरौ ३ स्वल्पदुग्धा ४ मेषी.

करस्पर्शनतस्तस्या आर्द्रीकृत्य च कंचुकीम् ॥
स्तन्यं द्वात्रिंशद्धाराभिः क्षरति स्म सुधोपमम्[1] ॥ ३४ ॥
गलितं भुव्यपि प्रेक्ष्य प्रादुश्चक्रे न दृग्भिया ॥
ननाम विस्मिता माता लालयामास तं मुदा ॥ ३५ ॥
बालं निधाय पर्यंके जगौ हर्षेण सा स तु ॥
तिष्ठति स्म न पर्यंके भुवि क्रीडति सर्वदा ॥ ३६ ॥
एवं सन्नप्येके[2]वर्णं बभाषे नोंकृतिं विना ॥
खिन्नान्तरौ तेन मातापितरौ तस्य नित्यशः ॥ ३७ ॥
वाचयामास तं माता स श्रुत्वा प्रणवं जगौ ॥
दैवयोगेन मूकः किं जात इत्यन्वचिन्तयत् ॥ ३८ ॥
पप्रच्छतुर्ज्योतिषिकं गुरू मूकत्वकारणम् ॥
मौनत्वपरिहाराय सूपायांश्च विशेषतः ॥ ३९ ॥
आहुर्ज्योतिषिकाः कार्यं कुलदेव्यर्चनं परम् ॥
[3]सौर्येऽह्न्यश्वत्थपत्रान्नभोजनार्पणमप्युत ॥ ४० ॥

शद्धाराभिरमृतोपमं दुग्धमस्रवत्। भुवि गलितं दृष्ट्वा हृष्टा माता दृग्भिया न प्रादुश्चक्रे। सा तं लालयंती पर्यंके निधाय हर्षाज्जगौ। बालः पर्यंके न तिष्ठति। भुवि क्रीडति ॥२९-३६॥ ॐकारं विनाऽन्यन्नोचे। पितरौ खिन्नौ ॥ ३७ ॥ मूक इति चिंतया मातोवाच यत्स ॐकारमाह। ज्योतिषिकाय मूकत्वकारणं तत्परिहारं च माताऽपृच्छत्। ते ऊचुः कुलदेव्यर्चनं अर्कवारेऽश्वत्थपत्रस्थान्नभोजनं कारयितव्यमिति। केचि-

१ अमृतोपमं २ अक्षरं ३ अर्कवारे मंदवारे वा.

केचिदाहुर्मूकमेनं वाचयाथ स वक्ष्यति ॥
केचित्सम्बोध्य रे बाल वदस्वेति तमब्रुवन् ॥ ४१ ॥

सर्वं श्रुत्वा प्रहस्याथ प्राह प्रणवमेव सः ॥
उक्तमोङ्कारमाकर्ण्य विस्मिताः सकला जनाः ॥ ४२ ॥

केचिदूचुरिदं चित्रं बधिरोऽयं न बालकः ॥
श्रुत्वा ज्ञात्वाऽपि नो वक्ति हेतुं जानीमहेऽत्र नो ॥४३॥

नोवाच येन केनापि प्रकारेण स बालकः ॥
सप्ताब्द इति चिन्तार्तौ पितरौ दैवमूचतुः ॥ ४४ ॥

व्रतयोग्योऽपि मूकोऽयं कुमारः सप्तवार्षिकः ॥
कथं व्रतविधिः कार्यो ब्रह्मन्मूकस्य सम्प्रति ॥ ४५ ॥

ब्राह्मणः प्राह संस्कार्य एष ब्रह्मकुलोद्भवः ॥
सम्प्राप्ते ह्यष्टमे वर्षे विप्रं तूपनयेदिति ॥ ४६ ॥

एवमुक्तौ तु पितरौ चिन्तयामासतुः कथम् ॥
मूकोऽयमुपदेश्योऽद्य दैवयोगः कथं नु वाम् (नौ) ॥४७॥

दूचुर्मूकमेनं वाचय । केचित्संबोध्याहुर्वदेति । सर्वं श्रुत्वा प्रहस्योंकारमाह । लोका विस्मिताः । केचिदूचुश्चित्रमिदं श्रुत्वा वक्ति नायं बधिरः नात्र हेतुं विद्म इति । एवं केनापि प्रकारेण स नोचे । पितरौ ब्राह्मणमूचतुः ॥३८-४४॥ सप्ताब्दः व्रतयोग्यः कुमारोऽयं न वक्ति । नो दैवमिदं । कथमस्य व्रतबन्धः कार्यः । विप्र आह । ब्रह्मकुलोद्भूतस्याष्टमेऽब्दे प्राप्ते उपनयन-संस्कारः कर्तव्य इति श्रुत्वा पितरौ प्रोचतुर्वां (नौ) दैवयोगः । कथं मंत्रोपदेशः

आराधितो महादेवस्त्रयोदश्यां विशेषतः ॥
गौरीश्वरः प्रदोषेऽपि व्यर्थं किं नु शिवव्रतम् ॥ ४८ ॥

ईश्वरेण वरो दत्तो जातः सल्लक्षणः सुतः ॥
न वक्ति किमतः कार्यमिति चिन्तान्वितौ तु तौ ॥४९॥

पितरावूचतुर्बाल एक एवावयोरयम् ॥
स्वप्नेऽप्यन्यो न दृष्टोऽयं पालयिष्यति वा कथम् ५०

न मनोवासना पूर्णा यतः पुत्रोऽयमीदृशः ॥
शनिप्रदोषेऽर्चितेशा वर ईदृक्कुतोऽर्पितः ॥ ५१ ॥

एवं नानाप्रकारेण विलपन्तीं सुदुःखिताम् ॥
संज्ञया सान्त्वयामास समुपागत्य बालकः ॥ ५२ ॥

तथाऽपि दुःखितां दृष्ट्वा लोहं धृत्वा गृहं गतः ॥
स्पर्शमात्रेण कनकं कृत्वा मात्रे न्यवेदयत् ॥ ५३ ॥

पुत्रेण दत्तं कनकमादायाम्बा शुचिस्मिता ॥
विस्मिता पतिमाहूय दर्शयामास धीमते ॥ ५४ ॥

कार्यः। विशेषतः प्रदोषे गौरीशौ पूजितौ। शिवव्रतं व्यर्थं किं। ईशेन वरो दत्तः। सल्लक्षणः पुत्रो जातोऽपि न वक्ति। किं कर्तव्यं। एक एवावयोः पुत्रः स्वप्नेऽप्यन्यो न दृष्टः। आवां वा कथं पालयिष्यति। पुत्रोऽयमीदृशोऽतो न वासना पूर्णा। ईश्वरेण प्रदोषार्चनफलमीदृक्कुतो दत्तं। एवं विलपंतीं दुःखितां मातरं मुद्रयाऽऽश्वास्य करस्पर्शमात्रेण लोहस्य स्वर्णं कृत्वा मात्रेऽदात् ॥४९-५३॥ विस्मिता सा तदादाय

अग्रकाश्यैव तन्नीत्वा गृहमन्यच्च तत्करे ॥
तौ लोहं ददतुस्तच्च हेमाभूत्स्पर्शमात्रतः ॥ ५५ ॥

बालोऽपश्यद्गृहगतं लोहं तत्सर्वमेव हि ॥
स्वर्णं जातं समृद्धिं तां वीक्ष्य विश्वासमापतुः ॥ ५६ ॥

ततः पुत्रं समालिंग्य पितरौ प्राहतुः सुतः ॥
असि नौ त्वं कारुणिकस्तारकः कुलदीपकः ॥ ५७ ॥

त्वत्तो लब्धं सर्वसुखं किं तु ते मौनकारणम् ॥
अज्ञात्वा माययाऽऽविष्टौ वदावस्त्वामभाषणम् ॥५८॥

नन्दनापूरयास्माकं वासना अमृतोपमम् ॥
वचनं श्रावयेच्छाऽस्ति भाषणश्रवणस्य ते ॥ ५९ ॥

ततो बालो हसन्मौंजीबन्धनाच्च कटौ गले ॥
धारणादुपवीतस्य वक्ष्यामि तदनन्तरम् ॥ ६० ॥

इत्थं स संज्ञया ताभ्यां दर्शयामास सर्वशः ॥
मौंज्यूर्ध्वं संप्रवक्ष्यामीत्याशयं स व्यदर्शयत् ॥ ६१ ॥

पतिमाहूयादर्शयत् । पितरौ तद्रोपयित्वा बालं गृहं नीत्वाऽन्यल्लोहं ददौ । तत्करस्पर्शात्तदपि स्वर्णं जातं । बालो गृहस्थं सर्वं लोहं ददर्श तत्स्वर्णं जातं । तदा विश्वस्तौ ॥५४-५६॥ तौ पुत्रमालिंग्योचतुः । त्वं तारकः कुलदीपकः । त्वत्तः सुखं लब्धं । तेऽज्ञानकारणमज्ञात्वा मायया त्वां वदावः । हे नंदन, नौ कामं पूरयामृतोपमं भाषणं श्रावय । भाषण-श्रवणेच्छास्ति । तदा कटौ मौंजीबंधनादुपवीतधारणादनंतरं वक्ष्य इति सहास्यं बालः करसंज्ञया व्यदर्शयत् । ततः पितरौ हृष्टौ । विद्वज्ज्योति-

ततस्तौ पितरौ हृष्टौ विद्वज्ज्योतिषिकं तदा ॥
आहूय मौंजीलग्नस्य चक्रतुर्निश्चयं मुदा ॥ ६२ ॥

सर्वान्संभृत्य संभारानाहूय स्वान्द्विजानपि ॥
मण्डपं रत्नखचितं रचयामास माधवः ॥ ६३ ॥

चतुर्वेदविदो विप्राः स्वशाखापठनोत्सुकाः ॥
सम्बन्धिनः सगोत्राश्च आप्ता इष्टाः समागताः ॥ ६४ ॥

आनन्दं लेभिरे विप्रा मण्डपे समलंकृते ॥
विप्रोऽपरिमितं द्रव्यं व्ययीचक्रे व्रते बटोः ॥ ६५ ॥

लोका नागरिका दृष्ट्वा प्रोचुर्मूढः सुतस्त्वयम् ॥
भ्रान्तो भाति पिता व्यर्थं क्षिणोति वसु सञ्चितम् ६६

इयद्द्रव्यं स दत्त्वाऽपि करिष्यति कथं व्रतम् ॥
सावित्रीं वाऽस्मा आचारमुपदेक्ष्यत्यसौ कथम् ॥ ६७ ॥

अपरे तूचिरे रेऽलं विस्तरेण धनं हि नः ॥
स्वाद्वन्नं च लभत्येव किं तन्मंत्रप्रयोजनम् ॥ ६८ ॥

षिकानाहूय मौंजीलग्ननिश्चयं कृत्वा ॥६७-६२॥ संभारान्संभृत्य ज्ञाती-न्द्विजांश्चाहूय मंडपं रचयामास ॥ ६३ ॥ वेदपाठकाश्चतुर्वेदविदो विप्राः संबंधिनः सगोत्रा आप्ता इष्टाश्चागताः । बटोर्व्रतबंधेऽमितं द्रव्यं व्ययीकृतं । सर्वे मुदं लेभिरे । तद्दृष्ट्वा नागरिका ऊचुः । सुतोऽयं मढः । भ्रांतः पिता व्यर्थं सञ्चितद्रव्यव्ययं करोति । किमनेन करिष्यति । कथं सावित्रीं वाचयति । कथं वाऽऽचारमुपदेक्ष्यति । अन्ये ऊचुरलं वितर्केण । धनं स्वाद्वन्नं च नो लभ्यं । किं तन्मंत्रप्रयोजनं । एवमनेकेऽनेकवितर्कांश्चक्रुः ।

एवं लोका अनेकार्थान्वितर्कांश्चक्रुरागताः ॥
देवोऽयमिति सद्बुध्द्या हृष्टौ माता पिता च तौ ॥६९॥

पुण्याहं वाचयित्वा तावभ्यङ्गस्नानपूर्वकम् ॥
पूर्वेद्युश्चौलकर्मापि यथाविधि चकार सः ॥ ७० ॥

स्वगृह्योक्तविधानेन पूर्वाङ्गं स यथाविधि ॥
कृत्वाप्याज्ञापयामास बटुं भोक्तुं सहाम्बया ॥ ७१ ॥

मात्रा सह बटुर्भुक्त्वा मातुराज्ञां प्रगृह्य च ॥
मौनी मौंजीमुहूर्तेऽथ उपागात्पितरं गुरुम् ॥ ७२ ॥

धारयित्वोपवीतादि सुमुहूर्ते यथाविधि ॥
दत्वा मंत्रोपदेशं च कट्यां मौंजीं बबन्ध सः ॥ ७३ ॥

बटुर्लब्ध्वाऽपि गायत्र्या उपदेशमनुक्रमात् ॥
मौनी जजाप न व्यक्तं बभाषे भाषणेरकः ॥ ७४ ॥

ततो भिक्षामुपादाय माताऽऽशीर्वचनान्विता ॥
समागता सुतालापश्रवणामृतलालसा ॥ ७५ ॥

पितरौ देवोऽयमिति बुद्ध्वा पूर्वेद्युरभ्यंगस्नानपूर्वकं पुण्याहं वाचयित्वा यथाविधि चौलं कृत्वा गृह्योक्तविधिना पूर्वाङ्गं चक्रे। आज्ञापितो बटुः मात्रा सह भुक्त्वा मौनी मातुराज्ञां गृहीत्वा सुमुहूर्ते पितुरंतिकमेत्योपवीतादि दधौ। पिता सुमुहूर्ते गायत्र्युपदेशं कृत्वा तत्कट्यां मौंजीं बबन्ध। बटुर्मौनी मंत्रं जजाप। व्यक्तं नावदत्। ततः सुतोक्तिश्रवणोत्कंठा माता प्रीत्याऽऽशिषा सह भिक्षां प्रथमं ददौ। बालोऽग्निमीळ इत्यृग्वेदं पपाठ।

प्रथमं प्रीतिसंयुक्ता सा भिक्षां ब्रह्मचारिणे ॥
प्रददौ सोऽप्यग्निमीळ इत्यृग्वेदं जगाद ह ॥ ७६ ॥
ततो द्वितीयभिक्षां सा प्रददौ ब्रह्मचार्यपि ॥
इषे त्वेति यजुर्वेदं जगौ लोका विसिष्मिरे ॥ ७७ ॥
ददौ तृतीयभिक्षां सा बटुः सामपटुर्जगौ ॥
अग्न आयाहीति सामवेदं वेदप्रवर्तकः ॥ ७८ ॥
सभा सुविस्मिता जाता मूकोऽयं कथमीदृशम् ॥
ब्रूते परः पुमान्वा किमिति हृष्टतरां पिता ॥ ७९ ॥
अहो देवावतारोऽयं न नरोऽयं जगद्गुरुः ॥
इत्युक्त्वा सोत्सुका लोकाः प्रणेमुर्भक्तिभाविताः ॥८०॥
ततो मातरमानम्य बटुः पटुमतिर्जगौ ॥
भिक्षेथा इति मे मातरुपदेशस्त्वया कृतः ॥ ८१ ॥
न मिथ्या ते वचो नूनमनुज्ञामम्ब देहि मे ॥
भिक्षुर्भूत्वाऽथ भिक्षाशी कुर्वे तीर्थाटनं भुवि ॥ ८२ ॥
युक्तोऽहं ब्रह्मचर्येण भिक्षां कृत्वा गृहे गृहे ॥
वेदान्तनिरतोऽटामि लोकानुग्रहकांक्षया ॥ ८३ ॥

पुनर्माता भिक्षां ददौ । बाल इषे त्वेति यजुर्वेदमाह । लोका विस्मिताः । पुनर्माता भिक्षां ददौ । बटुरग्न आयाहीति साम जगौ । मूकः कथं ब्रूते । परमपुरुषोऽयं वेति सभा विस्मिता । पिता च हृष्टः । अहो जगद्गुरुर्देवावतारोऽयं न नर इति लोकाः प्रणेमुः ॥६४-८०॥ बटुर्मातरं नत्वा प्राह । भिक्षेथा इति त्वयोपदेशः कृतः ॥ ८१ ॥ ते वचो न मिथ्या । मामाज्ञापय । भिक्षुर्भूत्वा तीर्थाटनं कुर्वे । ब्रह्मचर्ययुक्तो वेदांतरतोऽहं

इति पुत्रवचः श्रुत्वा माता साऽतीव दुःखिता ॥
बाष्पोदकानि मुञ्चन्ती पपात भुवि मूर्च्छिता ॥ ८४ ॥

माता जाता मृतप्राया क्षणं भूयो निरीक्ष्य तम् ॥
शोकार्ता प्राह हा पुत्र रक्षकाशा वृथा गता ॥ ८५ ॥

आशेयमग्रतोऽस्मांस्त्वं रक्षयिष्यसि सर्वतः ॥
न चोक्तं वाक्यमप्येकं धृतं मौनं च शैशवे ॥ ८६ ॥

न श्रुतं ते वचः क्वापि श्रावितं त्वधुनाऽमृतम् ॥
जातेशपूजा सफला किमिदं भाषसेऽधुना ॥ ८७ ॥

इति नानाप्रकारेण विलपन्तीं सतीं तु ताम् ॥
कृपया परयाऽऽश्वास्य समालिंग्याब्रवीद्गुरुः ॥ ८८ ॥

शृणु मातर्वचो मेऽद्य ब्रह्मज्ञानेन मा खिदः ॥
अवतीर्णोऽस्म्यहं धर्मत्राणकारणतो भुवि ॥ ८९ ॥

चत्वारश्चतुराः पुत्रास्ते भविष्यन्ति निश्चितम् ॥
मनोभावेन वः सेवां करिष्यन्ति न संशयः ॥ ९० ॥

भिक्षां कृत्वा लोकानुग्रहेच्छयाऽटामि। इति श्रुत्वा दुःखिताऽश्रूणि मुंचंती मूर्च्छिता माता पपात। क्षणं मृतप्राया भूत्वा पुनः पुत्रं प्रेक्ष्य प्राह। रे रक्षक पुत्र, अग्रतोऽस्मान्रक्षयिष्यसीत्याशा वृथा गता। त्वया मौनं धृतं। ते वचो न श्रुतं। ईशपूजाऽधुना सफला जाताऽमृतं श्रावितं। अथापि किमिदं भाषसे। इति विलपंतीं तां कृपयाऽऽश्वास्यालिंग्य सुत आह। मातः शृणु। विवेकेन मा खिदः। धर्मत्राणार्थमवतीर्णोऽस्मि ॥८२-८९॥ चत्वारः पुत्रास्ते भविष्यंति। वः सेवां करिष्यंति। नात्र संशयः। त्वया

पुरा पुरारिरीशस्ते[1] सद्भक्त्या शङ्करोऽर्चितः ॥
इत्युक्त्वा श्रीगुरुः पूर्वस्मृत्यै[2] मूर्ध्नि दधौ करम् ॥९१॥
सस्मार करसंस्पर्शात्तस्यै[3] वृत्तान्तमादितः ॥
श्रीपादमपि तं पुत्रं श्रीवल्लभमवेक्ष्य च ॥ ९२ ॥
ननाम तत्पदे धृत्वा सा प्रेमाश्रुपरिप्लुता ॥
तदोत्थाप्य समालिंग्य प्राहासौ मा प्रकाशय ॥ ९३ ॥
शृणु मातर्वचो मेऽद्य गोप्यं कुर्विदमादितः ॥
अलिप्तोऽस्मि हि संसारे विद्धि संन्यासिनं हि माम् ९४
अत आज्ञापयाशु त्वं भुवि तीर्थान्यटाम्यहम् ॥
कारणान्तरमस्त्यन्यदत आज्ञां प्रदेहि मे ॥ ९५ ॥
गुरुमूर्तिरिति प्रोक्त्वा विरराम[4] ततस्तु सा ॥
पुनरप्यब्रवीन्माता श्रोता सम्यक्शृणोतु तत् ॥ ९६ ॥
माता पुत्रमुवाचेदं मां हित्वा यदि यास्यसि ॥
न धर्मस्ते परो नास्ति पुत्रो मे जीवनं कथम् ॥ ९७ ॥

भक्त्या शंकरोऽर्चित इत्युक्त्वा पूर्वस्मृत्यै तन्मूर्ध्नि करं दधौ। तदाऽऽदितः सर्वं श्रुत्वा पुत्रं श्रीपादं ज्ञात्वा प्रेमाश्रुक्लिन्ना तत्पदे दधौ। पुत्रस्तामुत्थाप्यालिंग्याह। मातः, शृणु। इदं मा प्रकाशय। संसारेऽलिप्तो यतिरस्मि। मामाज्ञापय। भुवि तीर्थाटनं करिष्यामि। इति श्रुत्वा माता तमाह। मां हित्वा यास्यसि चेत्कथं मे जीवनं। नायं धर्मः। बाल्ये तापसत्वं क

१ त्रिपुरांतकः २ पूर्वस्मरणं दातुं ३ पुत्रस्य करस्पर्शात् ४ तूष्णीं बभूव.

तापसत्वं बाल्य एव कुतो धर्मस्त्वयेक्षितः ॥
ख्यातो धर्मोऽयमेवाद्य ब्रह्मचर्यं गुरोः कुले ॥ ९८ ॥

द्वादशाब्दं ब्रह्मचर्यं कृत्वा भूत्वा गृही ततः ॥
कुर्यान्नानाविधं पुण्यं यतो मुख्यो गृहाश्रमः ॥ ९९ ॥

मुख्यगेहाश्रमाचारात्समर्थोऽग्रे भविष्यति ॥
ततो वीतैषणः[1] शान्तः प्रव्रजेदिति हि श्रुतम् ॥ १०० ॥

आर्षर्ण[2]मुक्तये ब्रह्मचारी वेदानधीत्य च ॥
उद्वाह्य सदृशीं पत्नीं पुत्रानुत्पाद्य तन्तवे[3] ॥ १ ॥

यज्ञैरिष्ट्वेश्वरं शुद्धो मतिमान्संन्यसेत्ततः ॥
एवं क्रमेण संन्यासान्मुच्येद्बाल्ये ततः[4] पतेत् ॥ २ ॥

क्रमो मुख्यस्त्विन्द्रियाणि प्रसाद्यापि च वासनाः ॥
शमयित्वा तपस्तप्त्वा संन्यसेन्मुख्यमार्गतः ॥ ३ ॥

इति मातृवचः श्रुत्वा श्रीगुरुः प्रहसन्निव ॥
तत्त्वज्ञानं जगौ वच्मि शृणु तन्नामधारक ॥ ४ ॥

दृष्टं। प्रथमं द्वादशाब्दं ब्रह्मचर्येण गुरुकुले वासः ॥९०-९८॥ ततः पुण्यो मुख्यो गृहस्थाश्रमः। ततः शांतः सन्यासी भवेत्। ऋषिऋण-मुक्तये ब्रह्मचर्येण वेदानधीत्य, देवपित्रर्णमुक्तये सदृशीं पत्नीमुद्वाह्य यज्ञैरीशमिष्ट्वा पुत्रानुत्पाद्यैवं क्रमेण शुद्धः संन्यासान्मुच्यते। बाल्येऽधः पतेत्। पुरेंद्रियाणि प्रसाद्य तपस्तप्त्वा वासनाः शमयित्वा मुख्यमार्गेण

---

१ वीताः पुत्रैषणा वित्तैषणा लोकैषणाश्च यस्य सः   २ ऋषिऋणमुक्तये
३ संतानाविच्छेदाय   ४ संन्यासात्.

गंगाधरस्य तनयो विनयोपपन्नः
श्रोतॄनुवाच सकलान्सकलानभीष्टान् ॥
रा[1]त्यत्र सद्गुरुचरित्रममुत्र चार्था-
ञ्छृण्वंत्वमत्सरतया च न सन्त्वनर्थाः ॥ ५ ॥

एष्याध्यायेऽपूर्वं सिद्धो यन्नामधारकं प्राह ॥
तल्लौकिक्या वाण्या पुण्यात्मिकया सरस्वती चाह ॥१०६॥

(इति)श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्यगङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञितमहाराष्ट्रभाषान्वितगुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वतीयतिविरचितायां श्रीगुरुसंहितायां ज्ञानकाण्डे एकादशो (अध्यायः)

॥ आदितः श्लोकाः ॥ १३३१ ॥

संन्यसेदिति श्रुत्वा बालो हसंस्तत्त्वज्ञानमाह । तत श्र्णु ॥गंगाध०॥ एष्याध्याय० ॥ ९९-१०६ ॥ इति चूर्णिकायां एकादशोध्यायः ॥

॥ इति एकादशोऽध्यायः ॥ ११ ॥

---

१ ददाति.

## ।। अथ द्वादशोऽध्यायः ।। १२ ।।

श्रीदत्त ।। श्रीगुरुः प्राह जननीमेवमाज्ञापयस्यपि ।।
देहोऽनित्यो भौतिको नो विश्वासः क्षणजीविते ।। १ ।।

अनित्यानि शरीराणि वैभवं नैव शाश्वतम् ।।
नित्यः सन्निहितो मृत्युः कर्तव्यो धर्मसङ्ग्रहः ।। २ ।।

यः कश्चिच्चिरजीवी स्यादेवं भवतु तस्य धीः ।।
देहेऽनित्येऽपि विभवे भवेत्कस्य मतिः स्थिरा ।। ३ ।।

नास्ति कोऽप्यमरो यस्माद्देहोऽयं क्षणभङ्गुरः ।।
यावद् दृढशरीरं हि तावत्पुण्यं समाचरेत् ।। ४ ।।

मृत्युं जेष्यति यो नित्यं शरीरं स तु पश्यतु ।।
स तु त्वदुपदेशार्हो योऽग्रे धर्मं चरिष्यति ।। ५ ।।

।। श्रीगणेशाय नमः ।।

अध्यायसारसंग्रहश्लोकोऽयम्—

माणवकाक्रीडितकृद्द्वादश आश्वास्य विभुः ।।
मातरमेत्य च काशीं न्यास्यभवत्स निराशीः ।।

श्रीगुरुराह । मातर्माऽऽज्ञापय । भौतिके देहे क्षणजीविते च को विश्वासः ।। १ ।। अनित्यानि शरीराणि विभवो नैव शाश्वतः ।। नित्यः सन्निहितो मृत्युः कर्तव्यो धर्मसंग्रहः ।। २ ।। चिरजीविनस्तवोपदेशः । देहे वैभवे चानित्ये कुतः स्थिरा मतिः । देहः क्षणभंगुरः । कोप्यमरो न । यावद्दृढदेहस्तावत्पुण्यं कार्यं । यो मृत्युं जेष्यति स त्वदुपदेशार्होऽग्रे स

क्षणे क्षणेऽप्यहोरात्रमायुष्यं नाशमृच्छति ॥
सद्यः कार्यस्ततो धर्मः सदा पूर्ववयस्यपि ॥ ६ ॥
अल्पोदके यथा मत्स्यास्तथाऽल्पायुषि मानवाः ॥
क्लिश्यन्त्यतो दृढो देहस्तावद्धर्मं समाचरेत् ॥ ७ ॥
यथा सूर्यरथो याति निमेषाद्बहुयोजनम् ॥
तान्द्वाविंशतिसाहस्रग्रामानायुस्तथा चलम् ॥ ८ ॥
यथा पिप्पलवृक्षस्य पर्णाग्रे पतितं जलम् ॥
पर्जन्यजं तिष्ठति नो सद्यः पतति तद्भुवि ॥ ९ ॥
शरीरं न स्थिरं तद्वज्जीवतः सहसा मृतिः ॥
यूनो जरायुजो[1] वाऽपि नश्यत्येव कलेवरम् ॥ १० ॥
अतोऽमुं नश्वरं देहं विश्वसेन्नैव सर्वथा ॥
मृत्युः सहैव वसति सद्यो धर्मं ततश्चरेत् ॥ ११ ॥
पक्वं पर्णं यथा वृक्षात्सहसा पतति क्षितौ ॥
तथा कदा पतेदेष देहो न ज्ञायते बुधैः ॥ १२ ॥

धर्मं करिष्यति। क्षणे क्षणे आयुर्नश्यति। ततः प्राग्वयसि शीघ्रं धर्मः कार्यः। यथाऽल्पोदके मत्स्यस्तथाऽल्पायुर्नरः क्लिश्यति। अतिदृढदेहो यावत्तावद्धर्मं चरेत्। यथा सूर्यो निमेषाद्द्वाविंशतिसहस्रग्रामानत्येति तथाऽऽयुश्चंचलं ॥३-८॥ यथा पर्जन्यजलं पिप्पलपत्राऽग्रे पतितं सद्यः पतति तद्वच्छरीरं न स्थिरं। जीवतः सहसा मृत्युः। वृद्धस्य यूनोऽपि देहो नश्यति। नश्वरदेहस्य को विश्वासः। सहैव मृत्युरतो धर्मः कार्यः। पक्वपर्ण-

१ वृद्धस्य.

ऋणं दत्वा धनी यद्वदनिशं गणयत्यहः ॥
तथैव मृत्युर्गणनां कुरुते मानुषायुषः ॥ १३ ॥
यथा नद्योऽप आदाय समुद्रं यान्ति वेगतः ॥
पुनर्नायान्ति नुस्[1]तद्वन्नायुष्यं परिवर्तते ॥ १४ ॥
अहोरात्राः पलायन्ते गृहीत्वाऽऽयुः पुनर्न ते ॥
आयास्यन्ति ततः पुण्यं यो न कुर्यात्स वै पशुः ॥१५॥
नाचीर्णं यद्दिने पुण्यं तद्दिनं हि वृथा गतम् ॥
सद्यः पुण्यं ततः कार्यं करुणा नारुणात्मजे[2] ॥ १६ ॥
दारागारार्थगोपुत्रशरीरायूंषि ये नराः ॥
शाश्वतान्येव मन्यन्ते ज्ञेयाः पशुसमा हि ते ॥ १७ ॥
नरं नक्रो वक्रदंष्ट्रान्तरे धत्तेऽत्तुम्[3]अंबुनि ॥
तथा जरा दुस्तराऽपि संसारे दुस्तरे वशम् ॥ १८ ॥
तारुण्य एव पुण्यं तत्कर्तव्यं विदुषाऽनिशम् ॥
केयं तव मतिर्मातः कुतो मां वारयस्यहो ॥ १९ ॥

वद्देहः सहसा कदा पतेन्न ज्ञायते। यथा ऋणदाता दिनानि गणयति यमस्तथायुर्गणयति। यथा नद्योऽप आदायाब्धिं यांति पुनर्न निवर्तते तद्वद्गतायुः पुनर्न प्रत्यागच्छति। अहोरात्रा आयुर्गृहीत्वा पलायंते। एवंविद्यः पुण्यं न कुर्यात्स पशुः। यद्दिने पुण्यं न कृतं तद्दिनं व्यर्थं। यमस्य न करुणाऽतः पुण्यं कार्यं ॥९-१६॥ स्त्रीपुत्रादिदेहांतं शाश्वतं ये मन्यंते ते पशुसमाः। दुस्तरसंसाराब्धौ नक्रवज्जरा नरं ग्रसति। ततस्तारुण्य एव पुण्यं कर्तव्यं।

---

१ जीवस्य २ यमे ३ भक्षयितुं.

शठो वा योऽमरभट इष्टश्चापि यमस्य यः ॥
हठस्तेन तु कर्तव्यः करिष्येऽग्रे वृ[1]षं त्विति ॥ २० ॥

असारः खलु संसारः स्वप्नवन्मालतीसुमम् ॥
यथा पर्युषितं शीघ्रं भवत्येव तथा भवः ॥ २१ ॥

चं[2]ञ्चला चपला यद्वच्चलति क्षणतः पुनः ॥
पश्यतां न[3]श्यतां याति तथा देहः स्थिरो न हि ॥२२॥

एवं नानाप्रकारेण बोधयामास तां सता[4]म् ॥
शृण्वतां विस्मिता प्राह सभाऽयं वक्त्यहो कथम् ॥२३॥

माता सुतामृतवचः श्रुत्वा नत्वाऽवदत्पुनः ॥
देव ज्ञानं त्वयोक्तं मे सम्यक्शृणु तथाऽपि हि ॥२४॥

त्वयोक्तं साध्वहं मन्ये भविष्यन्ति सुता इति ॥
विश्वासं न मनो धत्ते कुलदैवत पुत्रक ॥ २५ ॥

यावत्पुत्रो भवेदेकस्तावन्मम समीपतः ॥
वस तावन्न ते दास्य आज्ञां विज्ञापनं त्विदम् ॥ २६ ॥

कुतो मां वारयसि। केयं तव मतिः। योऽमरो यमस्येष्टस्तेनाग्रे करिष्य इति मंतव्यं। असारः संसारो मालतीपुष्पवत्क्षणभंगुरः। विद्युद्वद्देहः पश्यतां सतां क्षणान्नश्यति न स्थिर एवं बोधिता माता भयं त्यक्त्वाऽहो कथमयं वक्तीति विस्मिता पुत्रं नत्वाऽऽह। देव, त्वया सम्यग्ज्ञानामृतं श्रावितं। हे कुलदैवत पुत्र, पुत्रा भविष्यंतीति त्वयोक्तं ॥१७-२५॥ तर्हि यावत्पुत्रो भवेत्तावद्वस। तत आज्ञां दास्ये। मद्वचोऽतीत्य यास्यसि चेत्प्राणांस्त्यक्ष्ये।

---

१ धर्मं २ विद्युत् ३ नाशभावं ४ साधूनां.

अतीत्य मे वचः पुत्र गेहाच्चेत्प्रव्रजिष्यसि ॥
दास्यामि तत्क्षणं प्राणान्निर्धारं मेऽवधारय ॥ २७ ॥
त्वं न पुत्रोऽसि मेऽस्माकं रक्षकः कुलदीपकः ॥
देवोऽसि वचनं सत्यं कुरूक्तं यद्धि संसदि ॥ २८ ॥
इति मातृवचः श्रुत्वा श्रीगुरुः प्रहसन्निव ॥
प्राह मे वचनं सत्यं त्वं तथा सत्यवाग्भव ॥ २९ ॥
द्वौ पुत्रौ वीक्ष्य देह्याज्ञां सन्तोषेण ततः परम् ॥
न स्थास्याम्येव ते गेहे सत्यं कुर्वात्मनो वचः ॥ ३० ॥
जननि त्वद्गृहे वर्षमेकं वत्स्यामि सुव्रते ॥
पूर्णायां वासनायां ते तत आज्ञां प्रदेहि मे ॥ ३१ ॥
एवं तदा विनिश्चित्य तस्थौ श्रीगुरुरात्मनः ॥
पित्रोर्गेहे स शिष्येभ्यः साङ्गान्वेदानुपादिशत् ॥ ३२ ॥
सकौतुका नागरिका लोका आसन्नसौ बटुः ॥
चतुरश्चतुरो वेदान्साङ्गान्पाठयतीति हि ॥ ३३ ॥
विद्वज्जनास्त्रिवेदज्ञाः षट्शास्त्रनिपुणा अपि ॥
तेऽपि विद्यार्थिनो भूत्वा सर्वेऽशिक्षन्त सद्गुरोः ॥ ३४ ॥

खलु। त्वं न पुत्रः किंतु त्राता कुलदीपको देवोऽस्यतो यद्वाचः सभाया-मुक्तं तत्सत्यं कुर्विति श्रुत्वा श्रीगुरुर्हसन्नाह। मे वचः सत्यं। त्वं सत्य-वाग्भव। द्वौ पुत्रौ वीक्ष्याज्ञां देहि। ततो न स्थास्ये। ते वचः सत्यं कुरु। त्वद्गृहे वर्षमेकं स्थास्यामि। पूर्णायां ते वासनायां मे आज्ञां देही-ति निश्चित्य श्रीगुरुस्तस्थौ। तत्र शिष्येभ्यः सांगान्वेदानध्यापयामास। सांगान् चतुरो वेदान्पाठयतीति लोके कौतुकं जातं। तदा वेदज्ञाः षट्-शास्त्रनिपुणा अपि तस्य शिष्या अभूवन् ॥२६-३४॥ निधिवल्लब्धं पुत्रं

एवं पित्रोर्गृहे शिष्यान्पाठयन्वत्सरं गुरुः ॥
उवास साऽपि सुप्रीता माता जाताऽथ गर्भिणी ॥३५॥
देवभावनयाऽऽनर्च[1] प्रत्यहं सा सुतं तु तम् ॥
निखिलाभाद्यथा हर्षस्तथाऽस्या अभवत्सदा ॥ ३६ ॥
नवमासेष्वतीतेषु माता जाता प्रसूतिका ॥
सुपुत्रयुग्ममभवत्तस्यास्तदतिसुन्दरम् ॥ ३७ ॥
द्वौ पुत्रौ वीक्ष्य रुचिरौ पितरौ मुदमापतुः ॥
गुरोराशीर्वचो यत्तु तदसत्यं कथं भवेत् ॥ ३८ ॥
अत एव गुरोर्वाक्यं सत्यं मानयतूत्तमम् ॥
विद्वान्यस्यान्तरे यादृङ्निष्ठा तादृक्फलोदयः ॥३९॥
एवं वर्षं वसन्दृष्ट्वा लालयन्तीं स्वमातरम् ॥
त्रैमासिकौ तावनुजौ प्रहसन्नुपगम्य सः ॥ ४० ॥
जननीं प्राह शृणु ते कामना पूर्णतां गता ॥
द्वावेतौ तनयौ जातौ मातः पूर्णायुषौ मतौ ॥ ४१ ॥
भविष्यतः सुतौ द्वौ च दुहिता च ततः परम् ॥
जाता ते वासना पूर्णा मुदा वस सुखं सदा ॥ ४२ ॥

देवभावनयाऽपूजयत् । ततः सा गर्भिणी भूत्वा दशमे मासि सुंदरौ द्वौ पुत्रौ सुषुवे । पितरौ हृष्टौ । गुरोर्वचनमन्यथा कथं भवेत् । अतो गुरुवाक्ये विश्वासः करणीयः । यस्य यादृग्भावना तादृक्फलं ॥३५-३९॥ एवं वर्षेऽतीते पुत्रौ लालयंतीं मातरमेत्याह । मातः, शृणु । ते कामः पूर्णः, सुखं वस,

1 पूजयमास.

आज्ञापय गमिष्यामि वचः सत्यं मया कृतम् ॥
अतः सन्तोषतो मातरनुज्ञां दातुमर्हसि ॥ ४३ ॥
ततः सन्तोषतो माता पिता चापि प्रणम्य तम् ॥
ऊचतुः कुलदैवं त्वं स्वामिन्वक्तुं न शक्यते ॥ ४४ ॥
तव ज्ञानं न जानीमस्तव रूपमपीश्वर ॥
मायामोहनिबद्धास्ते महिमानं न विद्महे ॥ ४५ ॥
[1]मत्वा त्वां तनयं मायाप्रपंचेनैव वेष्टिता ॥
स्वामिन्क्षमस्व यत्काले काले निष्ठुरमब्रुवम् ॥ ४६ ॥
गृहे रुध्वा त्वामशनशयनादावपीडयम् ॥
उत्थाप्यालिंग्य न कटौ [2]सम्भृतोऽसि क्षमस्व भोः॥४७॥
त्वं वंशतारकोऽस्माकमवतीर्णोऽसि भोः पितः ॥
प्रदोषपूजा सफला जाता स्वामिन्न संशयः ॥ ४८ ॥
इत ऊर्ध्वं कृपामूर्ते स्वामिन्नः का गतिर्वद ॥
यातना जननाद्या नो देवराज निवारय ॥ ४९ ॥

स्ववचः सत्यं कुरु। संतोषेण मामाज्ञापय। द्वौ सुतौ जातौ। द्वौ पुत्रौ पुत्री च भविष्यंति। ततः संतोषेण पितरौ तं नत्वोचतुः। त्वं नः कुलदैवतः इतःपरं वक्तुं न शक्यते ॥४०-४३॥ त्वन्मायामोहिता वयं त्वद्रूपं त्वन्माहात्म्यं च न विद्मः। जननी आह। स्वामिन्, त्वन्मायावेष्टिताऽहं त्वां पुत्रं मत्वा निष्ठुरमब्रुवं गृहे रुध्वा शयनाशनादौ अपीडयं। उत्थाप्यालिंग्य कटौ न धृतः तत्सर्वं क्षमस्व। भोः पितस्त्वं वंशतारकोऽवतीर्णोऽसि। प्रदोषपूजा सफला जाता न संशयः। हे कृपाब्धे, इत ऊर्ध्वं नः का गतिः।

---

१ इदं मातृवाक्यं २ न धृतोऽसि.

सागरोपरि गङ्गेव त्वं ममोदरमागतः ॥
मदङ्गं पावितं तात कुलमप्युभयं तथा ॥ ५० ॥

अस्मान्स्थापयसि स्वामिन्संसारे दुस्तरे कथम् ॥
त्वद्दर्शनं न लब्धं चेज्जीविष्यामः कथं सुत ॥ ५१ ॥

इति मातृवचः श्रुत्वा श्रीगुरुर्मुदितोऽब्रवीत् ॥
यदा यदा दर्शनेच्छा तदा मां स्मर सुव्रते ॥ ५२ ॥

समीपमागमिष्यामि स्मरणादेव तत्क्षणम् ॥
क्षणं क्षणं मा कुरु त्वं चिन्तां हस्तं ददामि ते ॥५३॥

मान्या कन्या सुतौ चापि भविष्यन्ति न संशयः ॥
दैन्यं वो भवने नैव तिष्ठेच्छ्रीर्नन्दते सदा ॥ ५४ ॥

जन्मान्तरे परेशस्य कृता पूजा प्रदोषके ॥
अयं तन्महिमा भूमा श्रीमान्वंशो भविष्यति ॥ ५५ ॥

देहान्ते परमो लोक इह सौख्यमनुत्तमम् ॥
पिनाकिनः पूजनतः पुनर्जन्म न विद्यते ॥ ५६ ॥

जननादियातनां निवारय। सागरोपरि गंगेव ममोदरे त्वमागत्य ममांगं कुलं च पावितं। कथं नु दुस्तरे संसारेऽस्मान्स्थापयसि। त्वद्दर्शनं न चेन्न जीविष्यामः ॥४४-५१॥ इति मातृवचः श्रुत्वा श्रीगुरुराह। क्षणे क्षणे मे ध्यानं कुरु। यदा मद्दर्शनेच्छा तदा मां स्मर ॥ ५२ ॥ ते समीपेऽस्मीति हस्तं ददामि। ते कन्या पुत्रौ(च) भविष्यंति। ते गृहे दैन्यं न। श्रीः स्थास्यति। जन्मान्तरे शिवः पूजितस्तन्महिमाऽयं। ते वंशः श्रीमान्भविष्यति। शिवपूजनादिह सौख्यं परत्र मोक्षो, न पुनर्जन्मातस्त्वया

त्वया शङ्करमाराध्य भक्त्याऽहमवतारितः ॥
जाताऽसि पूर्णकामाऽत आज्ञां देहि व्रजाम्यहम् ॥५७॥
त्रिंशताब्दैः पुनर्मातर्दर्शनं मे भविष्यति ॥
बदरीकाननं यास्य इत्युक्त्वा गन्तुमुद्यतः ॥ ५८ ॥

पितृभ्यां स तदाऽऽज्ञप्तः श्रीगुरुर्निर्गतो गृहात् ॥
धीरं प्रस्थापयामासुः पितृभ्यां सह नागराः ॥ ५९ ॥

ऊचुर्नार्यो नरास्तप्तुं तपो वर्ण्येष गच्छति ॥
मनुष्य इव भातोऽपि पुराणपुरुषः परः ॥ ६० ॥

अपरेऽप्यूचिरे चित्रं लोके पश्यैष गच्छति ॥
तपसे पितरौ हर्षात्तमाज्ञापयतः कथम् ॥ ६१ ॥

पाषाणवत्कथं चित्तमेतयोर्निर्द्रवं यतः ॥
मनो विधाय सुदृढं प्रस्थापयत आत्मजम् ॥ ६२ ॥

नेदं चित्रं परेऽप्यूचुरवतीर्णोऽब्ज एष तु ॥
नानुमानमिदं वै यद्यः शाखा अखिला जगौ ॥ ६३ ॥

भक्त्या शंकरमाराध्याहमवतारितः। ते कामः पूर्णोऽभूदत आज्ञां देहि व्रजामि। त्रिंशद्वर्षैः पुनर्दर्शनं भविष्यति। बदरीवनं यास्य इत्युक्त्वा प्रतस्थे। पितृभ्यां नागरिकैश्च प्रस्थापितो भगवान्गृहान्निर्गतः। नार्यो नराश्चोचुः तपस्तप्तुं प्रस्थितोऽतोऽप्ययं मनुष्य इव भातोऽपि पुराण-पुरुषः ॥५३-६०॥ अपरे ऊचुः चित्रमिदं एष बालस्तपसे गच्छति। कथं पितरावाज्ञापयतः ॥ ६१ ॥ पाषाणवन्निर्द्रवं तयोश्चित्तं। मनो दृढं कृत्वा कथमाज्ञापयतः। परेऽप्यूचुः देवोऽवतीर्णोऽयं यतोऽखिलाः शाखा जगौ।

सप्तवर्षात्मको बालो वेदशाखा अशेषतः ॥
पपाठ न मनुष्योऽत इति प्रोचुश्च साधवः ॥ ६४ ॥

इत्युक्त्वा तेऽपि साष्टाङ्गं प्रणेमुस्तुष्टुवुश्च तम् ॥
तद्गुणद्योतकैर्नानाविधैस्तोत्रैश्च साधवः ॥ ६५ ॥

सर्वे तेऽप्यनुयातास्तु वारिता आययुर्गृहम् ॥
तं नत्वा पितरौ त्वग्रे प्रीत्या किञ्चित्प्रजग्मतुः ॥ ६६ ॥

त्रिमूर्त्यात्मकमात्मानं दर्शयामास स प्रभुः ॥
दत्तात्रेयः पितृभ्यां श्रीपादः श्रीवल्लभो विभुः ॥ ६७ ॥

तौ त्रिमूर्त्यवतारं तं निजरूपेण संस्थितम् ॥
कर्पूरगौरं नृहरिं वीक्ष्याथो चक्रतुर्नतिम् ॥ ६८ ॥

प्रोचुर्जय जयानन्त त्रयीमूर्ते जगद्गुरो ॥
महत्पुण्यं यतोऽस्माकं ततस्ते पदमीक्षितम् ॥ ६९ ॥

त्वं विश्वतारकोऽप्यस्मान्भवादुद्धृतवान्खलु ॥
पुनर्नो दर्शनं देहीति नतिं चक्रतुः पुनः ॥ ७० ॥

सप्तवर्षात्मकोऽयं सर्वशाखाः पपाठ। न मनुष्योऽयं। एवं भाषमाणा वारितास्ते गृहं जग्मुः। पितरौ किंचिदग्रतो जग्मतुः। स ताभ्यां श्रीपादस्वरूपं दर्शयामास। तौ त्रिमूर्त्यात्मकं कर्पूरगौरं तं दृष्ट्वा नत्वोचतुः। त्रिमूर्ते जगद्गुरो, जय। नो महत्पुण्यं यतस्ते पदं दृष्टं। विश्वतारकस्त्वमस्मानुद्धृतवानसि। पुनर्दर्शनं देहीति। तथेत्युक्तौ निवर्तितौ तौ शश्वत

स्थापयामासतुस्तस्य चरणोपरि तौ शिरः ॥
गुरुनाथोऽपि चोत्थाप्य प्रेम्णा तौ परिषस्वजे ॥ ७१ ॥
गुरुमूर्तिः पुनस्तुष्टो मुदाऽऽश्वास्याब्रवीत्तदा ॥
दास्यामि निश्चयेनैव दर्शनं वां पुनर्मम ॥ ७२ ॥
ततो निवर्तितौ तेन जननीजनकौ तु तौ ॥
पश्यन्तौ पृष्ठतः शश्वत्सन्तोषात्स्वगृहं गतौ ॥ ७३ ॥
यास्यन्वरदमूर्तिः स श्रीगुरुर्बदरीवनम् ॥
ययौ वाराणसीक्षेत्रं यदत्रानन्दकाननम् ॥ ७४ ॥
याऽविमुक्तपुरी लोके श्रेष्ठा वाराणसी त्विह ॥
त्रैलोक्ये या निरुपमा यत्र विश्वेश्वरः स्वयम् ॥ ७५ ॥
स्थित्वा तस्यामनुष्ठानं चक्रे गुरुशिरोमणिः ॥
चक्रे त्रिषवणं[1] चात्मारामविश्वेशदर्शनम्[2] ॥ ७६ ॥
एवं स श्रीगुरुमुनिः कश्चित्कालं वसन्द्विज ॥
नियतोऽष्टाङ्गयोगेन तत्र स्थाने तपोऽतपत् ॥ ७७ ॥
तत्र काशीपुरेऽप्यन्ये तापसास्तपसि स्थिताः ॥
संन्यासिनोऽवधूताश्च यतिनश्चातिदारुणे[3] ॥ ७८ ॥

पश्यंतौ तत्पादोपरि शिरः स्थापयामासतुः । श्रीगुरुस्तौ प्रेम्णोत्थाप्यालिंग्याश्वास्य चाह। पुनर्दर्शनं दास्ये। यास्ये इति परावर्तितौ तौ पुनः पुनः पृष्ठतः पश्यंतौ गृहं जग्मतुः। बदरीवनं यास्यन्नानंदकाननं वाराणसीक्षेत्रं ययौ। यत्र स्वयं विश्वेशस्तामविमुक्तपुरीं गत्वा त्रिषवणं स्नात्वाऽऽत्मारामदर्शनानुष्टानं व्यकरोत्। अष्टांगयोगनिरतं तं अन्ये तापसा

---

१ त्रिकालं २ आत्मारामरूपिविश्वेश्वरदर्शनं ३ अतिदारुणे तपसि.

सर्वेषां श्रीगुरुस्त्वेषां योगाभ्यासे धुरन्धरः ॥
ब्रह्मचारी निरीक्ष्यामुं कुतुकं मेनिरेऽधिकम् ॥ ७९ ॥
अहो तपस्तपत्येष ब्रह्मचारी सुदुश्चरम् ॥
कथमस्योदरे त्वीदृग्वैराग्यं यो न लिप्यते ॥ ८० ॥
शरीरस्वार्थहीनोऽयं संन्यासे योग्य उत्तमः ॥
त्रिकालं प्रत्यहं स्नाति गत्वा यो मणिकर्णिकाम् ॥८१॥
इति ब्रुवत्सु सर्वेषु यतिष्वथ महामतिः ॥
आसीदेको यतिर्नाम्ना यो हि कृष्णसरस्वती ॥ ८२ ॥
ब्रह्मज्ञानी स वृद्धोऽपि तपस्वी च महामुनिः ॥
सदा प्रेम्णा गुरुं दृष्ट्वा भावयामास भक्तितः ॥ ८३ ॥
स तान्यतीश्वरान्प्राह नृदृष्ट्या ब्रह्मचारिणम् ॥
न पश्यतावतारोऽयं पुरुषो विश्ववन्दितः ॥ ८४ ॥
वयसा न्यूनमप्येनं नमस्कुरुत भक्तितः ॥
प्रख्यातोऽयं त्रिभुवने वन्द्योऽस्माकं त्रिमूर्तिधृक् ॥८५॥

यतयोऽवधूताश्चोचुः ॥ ७८ ॥ अहो योगाभ्यासधुरंधरोऽयं ॥ ७९ ॥ ब्रह्मचारी कथं दुश्चरं तपस्तपति। कथमस्येदृग्वैराग्यं। यो न लिप्यते ॥ ८० ॥ संन्यासार्होऽयं। नास्य शरीरममता यत्त्रिकालं स्नातीति ब्रुवत्सु तेषु महामतिर्ज्ञानी तपस्वी वृद्धकृष्णसरस्वती प्रेम्णा गुरुं दृष्ट्वाऽऽह। नृदृष्ट्यैनं मा पश्यतावतारोऽयं विश्ववंदितः पुरुषः। वयोन्यूनमप्येनं नमस्कुरुत। त्रिभुवनवंद्योऽयं त्रिमूर्तिरूपी। ज्येष्ठस्य कनिष्ठोऽवंद्य इति मूर्खदृष्टि-

१ विषयसंबंधादिभिरिति शेषः.

न वन्दनीयो ज्येष्ठेन कनिष्ठ इति दूषणम् ॥
मूर्खदृष्ट्यैव नास्माकं विदुषां विश्ववन्दितः ॥ ८६ ॥

अतः परोपकारार्थं प्रार्थनीयोऽयमेव नः ॥
संन्यासस्थापनादस्माद्भक्तिर्नः सुस्थिरा भवेत् ॥ ८७ ॥

अयं लोकानुग्रहाय समर्थः सर्वदेहिनाम् ॥
गुरुर्यद्दर्शनात्सद्यः पतितोऽपि शुचिर्भवेत् ॥ ८८ ॥

अतोऽपि बालकममुं प्रार्थयामो विशेषतः ॥
ग्राहयित्वा च संन्यासं यास्यामः कृतकृत्यताम् ॥८९॥

एवमाभाष्य तं प्राप्य सर्वे प्रोचुर्मुनीश्वराः ॥
नमस्ते तापसश्रेष्ठ शृणुष्व प्रार्थनामिमाम् ॥ ९० ॥

त्वं हि लोकानुग्रहार्थं संन्यासं स्वीकुरु प्रभो ॥
उद्धारयास्मानस्मत्तः पूजां स्वीकुरु मानद ॥ ९१ ॥

लोका निन्दन्ति संन्यासं वर्तमाने कलौ युगे ॥
भूतले दृश्यते नैव तन्मार्गस्थापनक्षमः ॥ ९२ ॥

र्नास्माकमेष विश्ववंद्यः । परोपकारार्थमेष प्रार्थ्यः । संन्यासमार्गस्थापनान्नो भक्तिः स्थिरा भवेत् ॥८१-८७॥ अयं लोकानुग्रहसमर्थः सर्वगुरुर्यद्दर्शनात्सद्यः पतितमुक्तिरतोऽमुं प्रार्थयामः । संन्यासं ग्राहयित्वा कृतार्थतां यास्यामः । इत्याभाष्य सर्वे तं प्राप्योचुः। तापसश्रेष्ठ, ते (नम):। नः प्रार्थनां शृणु । लोकानुग्रहार्थं संन्यासं स्वीकुरु । न उद्धर । पूजां स्वीकुरु । कलौ लोकाः संन्यासं ।निंदति तन्मार्गस्थापनक्षमोऽन्यो न दृश्यते । अग्निहोत्रं गवालंभं

अग्निहोत्रं गवालम्भं संन्यासं पलपैतृकम् ॥
देवराच्च सुतोत्पत्तिं कलौ पञ्च विवर्जयेत् ॥ ९३ ॥
इत्येकदेशवचनं गृहीत्वाऽत्र कलौ जनैः ॥
निषिध्यते वेदसिद्धः संन्यासो लोकविश्रुतः ॥ ९४ ॥
पूर्वलोकैर्निषिद्धोऽपि वचसा दुर्बलेन तु ॥
यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्तते ॥ ९५ ॥
अग्निहोत्रं च संन्यासं तावत्कुर्यात्कलौ युगे ॥
इति श्रीशङ्कराचार्यैः स्थापितोऽयं सनातनः ॥ ९६ ॥
ततः प्रभृत्यद्य यावत्संन्यासश्चलितस्तराम् ॥
प्रबलेऽस्मिन्कलेः काले पुनर्निन्दन्ति पामरा[1]ः ॥ ९७ ॥
आश्रमस्य कुरूद्धारमुपकारं जनोपरि ॥
कृपासागर संसारतारकोऽसि मुनीश्वर ॥ ९८ ॥
इति श्रुत्वा वचस्तेषां गुरुः संन्यासमाद[2]दे ॥
वृद्धकृष्णसरस्वत्याः सकाशाल्लोकपावनः ॥ ९९ ॥

संन्यासं पलपैतृकं देवरात्सुतोत्पत्तिं(च) कलौ वर्जयेदित्येकदेशवचनेन संन्यासो निषिध्यते। स च लोकख्यातो वेदसिद्धः यावद्वर्णविभागो यावद्वेदास्तावदग्निहोत्रं संन्यासश्च कार्य इति शंकराचार्यैः स्थापितस्तत आरभ्य संन्यासः (प्रवृत्तः) ॥८८-९६॥ पुनः कलौ पामरास्तं निंदंति। हे तारक मुनीश्वर, आश्रमोद्धारं लोकोपर्युपकारं च कुरु ॥९७-९८॥ इति श्रुत्वा भगवान्वृद्धकृष्णसरस्वतीं गुरुं कृत्वा संन्यासं कृतवान्।

१ अल्पमतयः २ जग्राह; स्वीकृतवान्.

इति सिद्धवचः श्रुत्वा प्राह तं नामधारकः ॥
सन्देहो मम चित्तेऽभून्मुनिराज कृपानिधे ॥ १०० ॥
जगद्गुरुः श्रीगुरुर्यस्तस्याप्यन्योऽभवद्गुरुः ॥
त्रयीमूर्त्यवतारस्य गुरुणा किं प्रयोजनम् ॥ १०१ ॥
उवाच सिद्धः पूर्वं श्रीरघुनाथेन सद्गुरुः ॥
यथा कृतो वसिष्ठाख्यः स्वयं भगवताऽपि हि ॥१०२॥
तथाऽष्टमावतारेण श्रीकृष्णेनापि सद्गुरुः ॥
सान्दिपनिर्मुनिर्यद्वत्कृतो मर्त्यानुसारिणा ॥ १०३ ॥
तथा सद्गुरुणाप्येष कृतः कृष्णसरस्वती ॥
ज्ञानवृद्धो वयोवृद्धो यतीशोऽतोऽस्य सम्मतः ॥१०४॥
शिष्यः प्राह पुनः सिद्धं स्वामिन्यद्भवतोदितम् ॥
गुरुत्वेन वृतः प्रीत्या वृद्धकृष्णसरस्वती ॥ ५ ॥
यतीश्वरेभ्यः सर्वेभ्यो बहुमानोऽर्पितः कथम् ॥
प्रेम्णा कृष्णसरस्वत्यै मूलपीठं गुरोः[1] कथम् ॥ ६ ॥

इति श्रुत्वा नामधारक आह। हे कृपाब्धे, त्रिमूर्त्यवतारस्य जगद्गुरोर्गुरुणा किं प्रयोजनं। सिद्ध आह। यथा रामेण वसिष्ठो गुरुः कृतः ॥९९-१०२॥ नरानुसारिणा श्रीकृष्णेन च सांदीपनिर्गुरुः कृतः तथा श्रीगुरुणा ज्ञानवयोवृद्धः मतः कृष्णसरस्वतीयतिर्गुरुः कृतः ॥९९-१०४॥ नामधारक उवाच। स्वामिन्सर्वेभ्योऽपि यतिभ्यः कृष्णसरस्वत्यै कुतो मानो दत्तः। एतद्गुरुपीठं वद। श्रोतुमिच्छामि। कृपां कुरु। इति श्रुत्वा

१ गुरोः.

तत्सर्वं श्रोतुमिच्छामि सन्तोषः श्रवणान्मम ॥
ममोपरि कृपां कृत्वा स्वामिन्कथय विस्तरात् ॥ ७ ॥
इति शिष्यवचः श्रुत्वा हृष्टः सिद्धः सविस्तरम् ॥
मूलपीठं समारभ्य गुरुसन्ततिमब्रवीत् ॥ ८ ॥
श्रीशङ्करो मूलपीठं गुरूणां विष्णुरस्य च ॥
विष्णोः शिष्योऽभवद्ब्रह्मा नामधारक संश्रृणु ॥ ९ ॥
वसिष्ठो ब्रह्मणः शिष्यस्तस्य शक्तिस्ततोऽस्य च ॥
पराशरस्तस्य शिष्यो व्यासो नारायणः स्वयम् ॥११०॥
व्यासस्याभूच्छुकः शिष्यो गौडपादोऽस्य तस्य च ॥
गोविन्दाचार्यकस्तस्य शङ्कराचार्य ईट् स्वयम् ॥ ११ ॥
विश्वरूपः शङ्करस्य बोधज्ञानगिरिस्ततः ॥
तस्य सिंहगिरिः शिष्यस्तस्य चेश्वरतीर्थकम् ॥ १२ ॥
तस्य चेश्वरतीर्थस्य शिष्योऽभून्नामधारक ॥
नृसिंहतीर्थसंज्ञोऽथ श्रृण्वन्यां गुरुसन्ततिम् ॥ १३ ॥
विद्यारण्यमिति ख्यातः सर्वविद्याविशारदः ॥
नृसिंहतीर्थस्य शिष्यो विद्यातीर्थं ततः परम् ॥ १४ ॥

सिद्धः आह। मूलपीठं श्रीशंकरो गुरुः, तस्य शिष्यो विष्णुस्तस्य ब्रह्मा, तस्य वसिष्ठः, तस्य शक्तिः, तस्य पराशरः। तस्य व्यासः, स्वयं नारायणः। तस्य शुकः, तस्य गौडपादः, तस्य गोविंदाचार्यः, तस्य शंकराचार्यः स्वयं शिवः। तस्य विश्वरूपः, तस्य बोधज्ञानगिरिः, तस्य सिंहगिरिस्तस्येश्वरतीर्थस्तस्य नृसिंहतीर्थः तस्य विद्यारण्यं ॥९-१४॥ तस्य

तस्याभून्मलयानन्दो देवतीर्थमथास्य च ॥
सरस्वती यादवेन्द्रमुनिः शिष्यस्ततः परम् ॥ १५ ॥
यादवेन्द्रमुनेः शिष्य एष कृष्णसरस्वती ॥
पुरातनोऽभूत्संन्यासी विशेषेणास्य सम्मतः ॥ १६ ॥
एवं गुरुः स संन्यासमार्गसंस्थापनाय हि ॥
तुर्याश्रमं गतो नाम्ना यो नृसिंहसरस्वती ॥ १७ ॥
अथ तत्रैव वेदार्थं गुरुनाथ उपादिशत् ॥
अतोऽल्पं वयसाऽप्येनं काश्यां सर्वेऽप्यपूजयन् ॥१८॥
समस्तेभ्यो हि तेभ्योऽसौ विद्वद्भ्योऽपि विशेषतः ॥
वाराणस्यामभूत्ख्यातः श्रीगुरुर्यतिसेवितः ॥ १९ ॥
बहुशिष्यानुपादाय ततो बदरिकावनम् ॥
जगामानन्ततीर्थानि पश्यन्त्स उपकारकृत् ॥ १२० ॥
सव्यं कृत्वा मेरुगिरिं सर्वतीर्थानि पर्यटन् ॥
नवखण्डक्षितिस्थानि स ययौ नामधारक ॥ २१ ॥
पश्यन्त्समस्ततीर्थानि यतिशिष्यसमन्वितः ॥
भूमिं प्रदक्षिणीकृत्य गङ्गासागरमभ्यगात् ॥ २२ ॥

मलयानंदः, तस्य देवतीर्थं। तस्य यादवेंद्रसरस्वती, तस्यैष वृद्धकृष्णसरस्वती ॥११५-११६॥ संन्यासमार्गस्थापनार्थं भगवांस्तस्य शिष्यः नृसिंहसरस्वतीत्यभवत्सः काश्यां वेदार्थमुपादिशत्ततः सर्वेऽपूजयन्। तत्र सर्वयतिभ्यः ख्यातः श्रीगुरुः सर्वसेवितोऽभवत्। लोकोपकाराय बहुशिष्यान्गृहीत्वा तीर्थानि पश्यन्बदरिकाश्रमं गत्वा मेरुं सव्यं कृत्वा नवखंडभूमिष्ठतीर्थानि पश्यन्भूमिं प्रदक्षिणीकृत्य गंगासागरं ११७-१२३॥

कृतानि यानि कर्माणि लोकोद्धारक्षमाणि हि ॥
गुरुणा लोकगुरुणा तानि सर्वाणि वेद कः ॥ २३ ॥

अशेषलीलासंख्याने यायाद्विस्तरतां कथा ॥
वक्ष्याम्यहं तु निजधीपरिणामावधि द्विज ॥ २४ ॥

पर्यटंस्तटयात्रां स गङ्गासागरतीर्थतः ॥
ब्रह्मक्षेत्रं प्रयागाख्यं तीर्थराजं ययौ गुरुः ॥ २५ ॥

श्रुत्वाऽऽगतं गुरुं तत्र द्विज एकः समागतः ॥
माधवाख्यो द्विजश्रेष्ठो गुरुदर्शनलालसः ॥ २६ ॥

तुर्याश्रमं ग्राहयित्वा स तस्मा अधिकारिणे ॥
ब्रह्मज्ञानं द्वैतहरं श्रीसद्गुरुरुपादिशत् ॥ २७ ॥

नामधारक सञ्जाताः शिष्या हि बहवो गुरोः ॥
तेषु सर्वेषु शिष्येषु यो माधवसरस्वती ॥ २८ ॥

तस्योपरि बहुप्रीतिः समभूदस्य सद्गुरोः ॥
सर्वाञ्छिष्यानुपादाय निर्गतः स ततोऽग्रतः ॥ २९ ॥

ततः प्रयागं चागमत्। लोकोद्धारक्षमाणि तस्य सर्वकर्माणि को वेद। अशेषलीलावर्णने ग्रंथविस्तरो भवेत्तस्माद्यथाशक्ति वच्मि ॥२४-२५॥ तत्रागतं श्रीगुरुं ज्ञात्वा तद्दर्शनलालसः माधवद्विज आगतः। तं चातुर्थाश्रमं ग्राहयित्वा तत्त्वज्ञानं चोक्तवान्। हे नामधारक, श्रीगुरोः शिष्या बहवो जातास्तेषु माधवसरस्वती मुख्यस्तदुपरि सद्गुरोर्बहुप्रीतिः। ततः

इति नामधारकनुतो विरत-
स्तदु कामधुग्गुरुचरित्रमतः ॥
उदितं शृणोति य इहाखिलदं
स लभेदभीष्टमपि चात्मविदम् ॥ १३० ॥

(इति) श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्यगङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञितमहाराष्ट्रभाषान्वितगुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वतीयतिविरचितायां श्रीगुरुसंहितायां ज्ञानकाण्डे द्वादशः (अध्यायः) ॥

॥ आदितः श्लोकाः ॥ १४६० ॥

सर्वाञ्च्छिष्यानुपादाय श्रीगुरुरग्रतो गतः । इति नामधारकनुतो० ॥१२६-१३०॥ इति गु० चू० द्वादशोऽध्यायः ॥१२॥

॥ इति द्वादशोऽध्यायः ॥ १२ ॥

---

## ॥ अथ त्रयोदशोऽध्यायः ॥ १३ ॥

॥ श्रीगुरुदत्तः ॥

नामधारकसच्छिष्यो नत्वा सिद्धपदद्वयम् ॥
करद्वयं समानीय विनयावनतोऽब्रवीत् ॥ १ ॥

जय सिद्ध महायोगिंस्त्वं भवार्णवतारकः ॥
प्रकाशिता गुरुकथा त्वया तेनाभवत्सुखम् ॥ २ ॥

निषेव्याद्यापि हि गुरोः सच्चरित्रकथामृतम् ॥
तृष्णा वृद्धा नैव शान्ता समर्थ शमयाद्य ताम् ॥ ३ ॥

सच्चरित्रं कामधेनुः कथितं विस्तरेण ते ॥
तेन नो मन्मनस्तृप्तिर्भवतीच्छाऽधिका यतः ॥ ४ ॥

क्षुधया पीडिता यद्वद्गौः प्राप्य बहुलं तृणम् ॥
न हीच्छति ततो गन्तुं तद्वदद्य ममाप्यभूत् ॥ ५ ॥

अध्यायसारसंग्रहश्लोकः—

प्रसूमुखैर्जनिभुवि संगतः स्वकैस्त्रयोदशेऽनुगयुगुपेत्य गौतमीम् ॥
मृतोत्सुकं जठररुजाऽऽर्तमुद्धरन् व्यदर्शयद्भुवि रुचिरां प्रभुर्गतिम् ॥१॥

नामधारकः सिद्धं नत्वा सविनयमाह। महायोगिन् जय। त्वं भवाब्धितारकः। त्वया प्रकटिता गुरुकथा। तया सुखं जातं। कथामृतं निषेव्य तृष्णा न शांता किंतु वृद्धा। चरितं विस्तरात् श्रुतमपि मे मनो न तृप्तं। क्षुधिता गौस्तृणदेशं प्राप्य ततोऽन्यत्र गंतुं नेच्छति तथा ममाभवत् ॥ २-५ ॥

स्वप्नेऽपि दुर्लभं तक्रं यस्य तस्य पयोनिधिः ॥
प्राप्तश्चेदग्रतो गन्तुमुत्सहेत कुतस्ततः ॥ ६ ॥
तथाऽहमपि चाल्पज्ञो न जाने गुरुकीर्तनम् ॥
अविद्यावेष्टितो भ्रष्टः स्वामिन्कष्टार्दितोऽभवम् ॥ ७ ॥
प्राप्याज्ञानध्वान्तमोहरजनीस्थं हि मां त्वया ॥
स्वामिन्नश्रीगुरो रूपं दर्शितं ज्योतिरात्मना ॥ ८ ॥
त्वया तूपकृतं साधु तत्प्रतीकारकारकम् ॥
नेक्षे कल्पद्रुद[1]स्योपकारोत्तारो यथा न हि ॥ ९ ॥
नालं[2] प्रत्युपकाराय चिन्तामण्यर्पकस्य भूः ॥
अतः क्वाप्युपकारो न कृपामूर्तेस्तथा तव ॥ १० ॥
वंशपरम्परयाऽपि प्रत्युपकारः क्रियेत किं भवतः ॥
भवतप्ततापशामक सेवेऽङ्घ्री तेऽङ्ग[3]तश्च वैभवतः ॥११॥
स्वामिन्मे कथितो धर्मस्तेन शर्माभवन्मम ॥
जाता मनसि सर्वार्था गुरुभक्तिर्निरन्तरा ॥ १२ ॥

यत्स्वप्ने तक्रं दुर्लभं तस्य क्षीराब्धिप्राप्तौ ततो गंतुं स नेच्छति तथाऽहम् अल्पज्ञोऽविद्यावृतोऽत्र कष्टार्दितोऽभवम् । त्वयाऽज्ञानरजनीस्थं मां प्राप्य स्वाभिन्नं गुरुरूपं दर्शितम् ॥६-८॥ त्वया साधूपकृतं । प्रत्युपकारं न जाने । कल्पद्रोश्चिंतामणेर्वा दातुर्भूदानं प्रत्युपकार इति क्वापि न दृष्टः । तद्वत्तवापि । ( आर्या । ) वंशपरंपरयाऽपि प्रत्युपकारः क्रियेत किं भवतः । भवतप्ततापशामक सेवेऽङ्घ्री तेऽङ्गतश्च वैभवतः ॥९-११॥ भवतोक्तेन धर्मेण मे शं जातं निरंतरा च गुरुभक्तिर्जाता । माधवाय दीक्षां दत्वा

१ कल्पवृक्षदानकर्तुः २ न पर्याप्ता ३ देहतः.

प्रयागं गुरुरागत्य माधवाय ददौ मुदा ॥
दीक्षां ततः कुतः प्राप्तो वदैतद्विस्तरेण मे ॥ १३ ॥
इति शिष्यवचः श्रुत्वा सन्तुष्टः सिद्ध उत्तमः ॥
निधाय मस्तके हस्तं तमाश्वास्याब्रवीन्मुदा ॥ १४ ॥
शिष्य सद्गुण धन्योऽसि लब्धं गुरुपदं हि ते ॥
संसारसागरप्राप्ततारकस्त्वं भविष्यसि ॥ १५ ॥
गुरुभाव[1]स्त्वया ज्ञातस्ततो भूयोऽपि पृच्छसि ॥
सन्तुष्टोऽस्मि तव प्रश्नादानन्दोऽतीव वर्धते ॥ १६ ॥
शृणु ते कथयिष्यामि विख्यातं चरितं गुरोः ॥
कञ्चित्कालं स्थितस्तत्र भगवाँल्लोकतारकः ॥ १७ ॥
दीक्षां दत्वा माधवाय प्रख्यातमहिमो गुणी ॥
तस्यानेकेऽभवञ्छिष्यास्तेषां मुख्यस्तु माधवः ॥ १८ ॥
तच्छिष्यनामकथने ग्रन्थोऽयं विस्तृतिं व्रजेत् ॥
प्रख्यातसप्तशिष्याणामतो नामानि वच्मि ते ॥ १९ ॥

भगवान्प्रयागात्क्व गतः तद्वदेति श्रुत्वा तुष्टः सिद्धस्तत्के हस्तं दत्वा मुदाऽऽह । हे सद्गुण शिष्य, ते गुरुपदं लब्धं संसारात्तरिष्यसि । गुरुभक्तिस्त्वया लब्धाऽतः पृच्छसि । तुष्टोऽस्मि । ते प्रश्नादानंदो वर्धते ॥ १२-१६ ॥ ख्यातं गुरुचरित्रं शृणु । कंचित्कालं तत्र स्थित्वा माधवाय दीक्षा दत्ता । तदाऽनेके शिष्या अभवन् ॥ १८ ॥ तत्र मुख्यो माधवः । सर्वशिष्याऽख्या-कथने ग्रंथविस्तरभिया सप्तमुख्यशिष्यनामानि शृणु । बालसरस्वती

१ भक्तिरभिप्रायो वा.

आद्यो बालसरस्वत्यथ कृष्णसरस्वती उपेंद्रश्च ॥
माधवसरस्वतीयतिरथो सदानन्दनामकोऽन्यश्च ॥२०॥

षष्ठः शिष्यो जातो ज्ञानज्योतिःसरस्वती ख्यातः ॥
सिद्धोऽहं सप्तमक एकैकस्तूत्तरोत्तरं ह्यधिकः ॥ २१ ॥

श्रीगुरुः समवेतस्तैर्दक्षिणं देशमागतः ॥
गत्या पुनानः क्षेत्राणि करञ्जनगरं ययौ ॥ २२ ॥

जननीजनकाभ्यां च सङ्गतो वन्दितो गुरुः ॥
प्रेम्णा स्वस्रानुजाभ्यां च समस्तैरितरैरपि ॥ २३ ॥

दृष्ट्वा नागरिका हृष्टा गुरुमूर्तिं यतिं तदा ॥
समस्ता आगता द्रष्टुं पूजां चक्रुर्जगद्गुरोः ॥ २४ ॥

गृहे गृहेऽपि भिक्षार्थं ददुर्विप्रा निमन्त्रणम् ॥
बहुरूपधरो भूत्वाऽऽददे भिक्षां गृहे गृहे ॥ २५ ॥

समस्ता विस्मिता जाता मेनिरे विष्णुमेव तम् ॥
यतिवेषधरोऽप्येष ज्ञेयः परमपूरुषः ॥ २६ ॥

कृष्णसरस्वती उपेंद्रसरस्वती माधवसरस्वती सदानंदसरस्वती ज्ञानज्योतिःसरस्वती सिद्धोऽहं चैत उत्तरोत्तराधिकाः। श्रीगुरुस्तैः सहानेकक्षेत्राणि पुनानः करंजनगरं ययौ ॥१९-२२॥ तत्र प्रेम्णा पितृभ्यां स्वस्राऽनुजैश्च वंदितः समस्तैर्नागरिकैः पूजितः श्रीगुरुर्गृहे गृहे भिक्षार्थं निमंत्रितो बहुरूपधरो भूत्वा भिक्षां जग्राह ॥२३-२५॥ लोका विस्मिता ऊचुः। यतिवेषधरोऽयं परमपुरुषो विष्णुः ॥ २६ ॥ इमं ये नरं वदन्ति

वन्दतीमं नरं ये ते यास्यन्ति नरकं प्रति ॥
कार्यार्थमवतीर्णोऽयं ब्रह्मविष्णुशिवात्मकः ॥ २७ ॥

इत्याहुरन्ये पितरौ पूजयामासतुर्गुरुम् ॥
मात्रे प्राक्स्मरणं दातुं जातः श्रीपादरूपधृक् ॥ २८ ॥

तदा तं जननी वीक्ष्य शिरो विन्यस्य तत्पदे ॥
प्राह प्रदोषः फलितः सत्यसङ्कल्प चन्द्रधृक् ॥ २९ ॥

पूर्वजन्मचरित्रं सा स्मृत्वा स्वपतिमब्रवीत् ॥
आराधितो मया देवो विश्ववन्द्यसुताप्तये ॥ ३० ॥

श्रीपादस्यास्य मे पूजा विहिता पूर्वजन्मनि ॥
भवेऽस्मिन्सुप्रसन्नोऽभूत्सफलं जन्म मे कृतम् ॥ ३१ ॥

ततो नत्वोचतुरुभौ करुणं शरणं गतौ ॥
यतिराज जगन्नाथ समुद्धर भवार्णवात् ॥ ३२ ॥

श्रीगुरुः प्राह पितरौ संन्यासी यत्कुले भवेत् ॥
द्विचत्वारिंशत्संख्याककुलोद्धर्ता भविष्यति ॥ ३३ ॥

ते नरकभाजः। कार्यार्थं ब्रह्मविष्णुशिवावतारोऽयमिति पितरौ पूजयमासतुः। मात्रे प्राक्स्मरणार्थं श्रीपादरूपं दर्शयामास। तदा तत्पदे शिरो निधायाह। प्रदोषः फलितः। चन्द्रमौले, सत्यसंकल्पोऽसीति। पूर्वजन्म स्मृत्वा पतिमाह। प्रागजन्मनि विश्ववन्द्यपुत्राप्तये मयाऽऽराधितः श्रीपादः प्रसन्नोऽभूत्। जन्म मे सफलं कृतं। इति नत्वा शरणं गत्वा करुणमाह॥ हे जगन्नाथ, भवार्णवान्नौ समुद्धर। श्रीगुरुराह। कुले संन्यासी जातश्चेद्-

कुलाय ब्रह्मलोकं स शाश्वतं प्रददाति च ॥
अचलं शाश्वतं ब्रह्मपदं तत्कुलजन्मनाम् ॥ ३४ ॥

तत्सन्ततेर्भयं दुःखं यमादपि न जायते ॥
ते यास्यन्ति ब्रह्मलोकं पूर्वं ये नरकं गताः ॥ ३५ ॥

भवतामथ किं वाच्यं संन्यासी यत्कुलेऽभवम् ॥
यमशङ्कापि वां नास्ति सत्यं ब्रह्मपदं हि वाम् ॥३६॥

इत्युक्त्वा पितरौ स्वामी समाश्वास्याब्रवीत्पुनः ॥
अष्टैश्वर्यैर्हि नन्दन्ते पुत्रा एते शतायुषः ॥ ३७ ॥

एषां पुत्रांश्च पौत्रांश्च दृष्ट्वा शर्मानुभूय च ॥
काशीक्षेत्रे निवासो वामन्तकाले भविष्यति ॥ ३८ ॥

ख्यातं काशीपुरं मोक्षस्थानं वेदादिषूत्तमम् ॥
इत ऊर्ध्वं न कर्तव्या काऽपि चिन्ता विनिश्चितम् ॥३९॥

इत्युक्तवन्तं सम्प्राप्ता श्रीगुरुं भक्तवत्सलम् ॥
पूर्वाश्रमस्वसा रत्नानामिका विनताऽभवत् ॥ ४० ॥

द्विचत्वारिंशत्कुलोद्धर्ता कुलाय शाश्वतब्रह्मलोकदाता च । तत्कुलजानां ब्रह्मपदं ॥२७-३४॥ तत्सन्ततेर्भयदुःखादि न । पूर्वं नरकगता अप्यूर्ध्वं यान्ति । भवतां किन्नु वाच्यं यत्कुलेऽहं संन्यासी यमशंकाऽपि न । वां ब्रह्मपदमित्याश्वास्याह । शतायुषस्ते पुत्रा अष्टैश्वर्यभाजः । एषां पुत्रादि-सुखं दृष्ट्वा वां काश्यामन्तकालो भविष्यति । काशी तु वेदोक्तं मोक्षस्थानं इतश्चिन्ता न कार्या ॥३५-३९॥ एवं वदन्तं भक्तवत्सलं रत्नाख्या भगिनी

विनयावनता प्राह स्वामिंस्तारय मामितः ॥
भवसिन्धौ निमग्नाहमविद्याजालवेष्टिता ॥ ४१ ॥

त्रितापवडवादग्धा भीता कामादिनक्रतः ॥
अलिप्तां कुरु मां देव तप्तुं यास्याम्यहं तपः ॥ ४२ ॥

इति तस्या वचः श्रुत्वा गुरुः प्राह हसन्निव ॥
स्त्रियाः किं तपसा पत्युः सेवया परमा गतिः ॥ ४३ ॥

व्योमकेश इतोऽप्यासां भवसिन्धोः परं पदम् ॥
ददात्यभीष्टकामांश्च पातिव्रत्यान्न संशयः ॥ ४४ ॥

भवपारोत्तारणाय स्त्रिया एकः पतिः स्मृतः ॥
तस्मान्मनः स्थिरीकृत्य पतिं शिवसमं भज ॥ ४५ ॥

ततस्ते गतिरुद्धारो नान्यथा वेदभाषणात् ॥
त्वं नान्तःकरणे दुःखं कुर्वनेन गतिर्भवेत् ॥ ४६ ॥

इति श्रुत्वा गुरूक्तिं सा विनयावनताऽब्रवीत् ॥
ब्रह्मज्ञानी त्वमेवासि गुरुमूर्ते नमोऽस्तु ते ॥ ४७ ॥

विनयेन नत्वाऽऽह स्वामिन्भवाब्धिमग्नामविद्याजालवेष्टितां मामुद्धर। त्रितापवडवादग्धां कामादिनक्रभीतां मामलिप्तां कुरु। ततस्तपस्तप्स्यामीति श्रुत्वा हसन् श्रीगुरुराह। स्त्रियाः पतिसेवया गतिः किं तपसा ॥४३॥ तया तुष्टः शिवः परं पदं ददाति। पातिव्रत्यादिष्टातिश्च न संशयः ॥४४॥ भवताराय पतिसेवैका। ततो मनः स्थिरीकृत्य शिवं पतिं भज। ततस्ते सद्गतिः श्रुतिवचनात्। त्वं मा खिदः। इति श्रुत्वा सविनया सा प्राह।

भूतं भविष्यं जानासि प्रारब्धं वद मे कथम् ॥
अग्रतो मे गतिः का वा विस्तराद्ब्रूहि मेऽग्रतः ॥४८॥

श्रीगुरुः प्राह तां रत्ने वासना तव तामसी ॥
सञ्चितं चापि ते पापं तस्य भोगाल्लयो भवेत् ॥४९॥

पूर्वजन्मनि भोः सुभ्रु धेनुस्ते लत्तया हता ॥
उत्पादितः समीपस्थदम्पत्योः कलहस्त्वया ॥ ५० ॥

दोषद्वयं तवास्त्यस्य विपाकोऽत्रैव जन्मनि ॥
लत्ताप्रहारदोषात्ते देहे कुष्ठं भविष्यति ॥ ५१ ॥

दम्पत्योर्वैरजातपापात्पतिस्ते भविता यतिः ॥
त्वां त्यक्ष्यतीति ते पूर्वदोषजं फलमीदृशम् ॥ ५२ ॥

इत्युक्त्वा दुःखिता जाता पतिता गुरुपादयोः ॥
गुरुनाथोद्धराशु त्वमिति तच्चरणेऽग्रहीत् ॥ ५३ ॥

श्रीगुरुः प्राह तां बाले कञ्चित्कालं सुखं वस ॥
यतिर्भविष्यति पतिर्वयस्यपर एव ते ॥ ५४ ॥

गुरुमूर्ते, ते नमः। त्वं त्रिकालज्ञोऽतो मे प्रारब्धं किमग्रे का वा गतिर्वद ॥ ४८ ॥ श्रीगुरुराह। ते वासना तामसी। ते पापं सञ्चितं तद्भोक्तव्यं। प्राग्जन्मनि ते धेनुर्लत्तया हता। दम्पत्योः कलहः सम्पादितः। तद्विपाकं शृणु। लत्ताप्रहारदोषतस्तेऽङ्गे कुष्ठं। दम्पत्योर्वैरसम्पादनात्ते पतिर्यतिर्भविता त्वां त्यक्ष्यति चेदृक्प्रारब्धफलं ॥४९-५२॥ इति श्रुत्वा खिन्ना सा पादयोः पतित्वा गुरुनाथ, मामुद्धरेति पादौ दधौ ॥ ५३ ॥ स आह। बाले, कञ्चित्कालं सुखं वस। वार्धक्ये ते पतिर्यतिर्भविष्यति कुष्ठं च

ततस्तव शरीरेऽपि कुष्ठरोगो भविष्यति ॥
भुक्त्वा पापफलं पश्चात्सद्गतिस्ते भविष्यति ॥ ५५ ॥
कुष्ठरोगे समुत्पन्ने दर्शनं मम ते भवेत् ॥
त्वत्पापपरिहाराय क्षेत्रं ते कथयाम्यहम् ॥ ५६ ॥
भीमातटे दक्षिणस्यां तीर्थं पापविनाशनम् ॥
कुष्ठरोगे समुत्पन्ने गच्छ तत्क्षेत्रमुत्तमम् ॥ ५७ ॥
गान्धर्वनगरे भीमामरजासङ्गमे शुभे ॥
भूमण्डलेऽतिविख्याते तीर्थं पापविनाशनम् ॥ ५८ ॥
इत्याभाष्य ततः शिष्यैः सह श्रीगुरुरागमत् ॥
दक्षिणे त्र्यम्बकक्षेत्रे गौतमी यत्र तूदिता ॥ ५९ ॥
गुरुमूर्तिस्ततः शिष्यैर्नाशिकं क्षेत्रमाययौ ॥
यत्रामितानि तीर्थानि पुराणे महिमाऽस्य सन् ॥ ६० ॥
महिम्नो वर्णने त्वत्र कथा विस्तरतामियात् ॥
तस्मात्सङ्क्षेपतो वक्ष्ये शृणु त्वं नामधारक ॥ ६१ ॥
गोदावर्यास्तु माहात्म्यमपारं लोकदुर्लभम् ॥
तीर्थानि वृद्धगङ्गाया अमितानि तटद्वये ॥ ६२ ॥

शरीरे। एवं पापफलं भुक्त्वा पश्चात्ते सद्गतिः। कुष्ठे उत्पन्ने मे दर्शनं भवेत्। दक्षिणस्यां दिशि भीमामरजासंगमे भुवि ख्याते गंधर्वपुरे पापनाशतीर्थं गच्छ। मे दर्शनं भविष्यतीत्युक्त्वा यत्र त्र्यम्बकक्षेत्रे गौतम्युद्गता तत्क्षेत्रं नाशिकं च शिष्यैः सह गुरुर्ययौ। एतत्कथावर्णने ग्रंथविस्तरो भवेदतः संक्षेपतो वक्ष्ये ॥५४-६१॥ गोदावर्या माहात्म्यं लोके दुर्लभं।

सर्वेश्वरजटायां या स्थिता सोत्तारिता भुवि ॥
ब्रह्माण्डव्यतिरिक्तेयं प्राप्तोपायैर्ऋषीश्वरैः ॥ ६३ ॥

ब्रह्मर्षिर्गौतमः ख्यातस्तपस्वी सोऽन्वहं पुरा ॥
उप्त्वा व्रीहीननुष्ठातुं ततः स्मोपनिषीदति ॥ ६४ ॥

ऋषयो मुनयः पूर्वं शालीनुप्त्वैव चान्वहम् ॥
फलं गृह्णन्ति ते मन्त्रमाहात्म्यात्प्रत्यहं मुदा ॥ ६५ ॥

कदाचिदृषयस्तत्र मिलित्वाऽमन्त्रयन्निति ॥
सर्वेशमुख्यभक्तोऽयं गौतमर्षिर्महामुनिः ॥ ६६ ॥

यत्नाद्दुःसङ्कटे योज्यः स गङ्गामानयिष्यति ॥
ततो भूमण्डलेऽस्माकं गङ्गास्नानं भविष्यति ॥ ६७ ॥

या गतिर्योगयुक्तानां मुनीनामूर्ध्वरेतसाम् ॥
सा गतिः सर्वजन्तूनां गौतमीतीरवासिनाम् ॥ ६८ ॥

ऊर्ध्वरेतोमुनीनां यत्कोटिवर्षं तपस्यताम् ॥
या गतिर्निश्चिता सैव गौतमीस्नानमात्रतः ॥ ६९ ॥

वृद्धगङ्गायास्तीरयोरमिततीर्थानि । ऋषिभिर्यत्नात्सर्वेश्वरजटात उत्तारितेयं ब्रह्माण्डदुर्लभा ॥६२-६३॥ पूर्वं मुनयः शालीनुप्त्वा मन्त्रमाहात्म्याद-न्वहं फलमन्वगृह्णन् । तथा गौतमर्षिः शालीनुप्त्वाऽनुष्ठातुमुपाविशत् । कदाचित्तत्र मिलिता मुनयो विचारयामासुः । ईशभक्तोऽयं गौतमर्षिर्महा-मुनिः यत्नाद्भुवि गङ्गामानयिष्यति चेन्नः स्नानं भवेत् । ऊर्ध्वरेतसां योगिमुनीनां या गतिर्गौतमीवासिनां सा गतिः । गौतमीस्नानमात्रात्को-

१ ओदनं पचतीतिवद्भाविवृत्त्या गौतमी नाम.

अयं यत्नेन तां भूमिमानयिष्यत्यतोऽस्य च ॥
सङ्कटं योज्यमस्माभिर्गङ्गालाभो भवेत्ततः ॥ ७० ॥

एवं विचार्य दूर्वाभिः कृत्वा मायामयीं तु गाम् ॥
सवत्सां गौतमव्रीहिभक्षणाय समैरयन् ॥ ७१ ॥

अनुष्ठानरतो दृष्ट्वा वारयामास तां मुनिः ॥
तत्सस्यं भक्षयन्तीं गां तदा दर्भपवित्रतः ॥ ७२ ॥

दुर्वारं तद्भूच्छस्त्रं लग्नं वज्रास्त्रवद्गवि ॥
द्रुतं गौः पञ्चतां याता गोहत्या गौतमं गता ॥ ७३ ॥

मिलित्वा ऋषयः सर्वे प्रायश्चित्तं तमब्रुवन् ॥
गङ्गामानय गां तेन तत्र शुद्धिर्भविष्यति ॥ ७४ ॥

गौतमः स तथेत्युक्त्वा सहस्राब्दं तपोऽतपत् ॥
व्योमकेशः प्रसन्नोऽभूद्वरं ब्रूहीत्यभाषत ॥ ७५ ॥

गौतमस्त्वीश्वरं प्राह प्रसन्नोऽसि यदीश्वर ॥
मह्यं चराचरोद्धृत्यै गङ्गां भूमण्डलेऽर्पय ॥ ७६ ॥

टिवर्षतपःफलं ॥६४-६९॥ अतोऽयं सङ्कटे योज्यो गङ्गामानयिष्यति चेन्नो गङ्गालाभ एवं विचार्य दूर्वामयीं सवत्सां गां निर्माय गौतमव्रीहि-भक्षणार्थं प्रैरयन् ॥७०-७१॥ अनुष्ठानस्थो मुनिः सस्यं भक्षयन्तीं तां दर्भेण निवारयामास। तद्वज्रास्त्रं जातं। तेन धेनुर्मृता। गोहत्या गौतमं गता। तदा ऋषयो गौतमं प्रायश्चित्तमब्रुवन् गङ्गां भुवमानय तेन तत्र शुद्धिरिति ॥७२-७४॥ तथेति मुनिस्तपस्तेपे। सहस्रवर्षान्ते शिवः प्रसन्नो वरं ब्रूहीत्याह। गौतम आह। प्रसन्नोऽसि चेल्लोकोद्धृत्यै गङ्गामर्पयेति श्रुत्वा

इति गौतमवाक्यं स श्रुत्वा गङ्गां समार्पयत् ॥
क्षालयन्ती मनुष्याणां पापं भूमण्डलं गता ॥ ७७ ॥

यथा भागीरथी गङ्गा तथेयं केन वर्ण्यते ॥
अतः श्रीगुरुनाथोऽत्र सम्प्राप्तो नामधारक ॥ ७८ ॥

गौतमीतटयात्रां स गुरुनाथः समाचरत् ॥
पर्यटन्त्सर्वतीर्थानि लोकानुग्रहकांक्षया ॥ ७९ ॥

तटं तटं त्वटनविन्नटवद्धृतविग्रहः ॥
मञ्जरीके गुरुः प्राप माधवारण्यकं मुनिम् ॥ ८० ॥

नरसिंहार्चनरतो मानसैरुपचारकैः ॥
ददर्श श्रीगुरुं चित्ते यथा ध्यातस्तथैव तम् ॥ ८१ ॥

प्रणम्य श्रीगुरुं स्तोत्रैस्तुष्टाव बहुभिर्भृशम् ॥
मानसे विस्मितो भक्त्या गुरुं प्राह सगद्गदम् ॥ ८२ ॥

यद्दिव्यपादद्वयमेव साक्षादधिष्ठितं देवनदीसमीपे ॥
यदुत्तरं तीरनिवासि रामं लक्ष्मीसमीपं वसतीह नित्यम् ॥८३॥

इत्युक्त्वा माधवारण्यमुनिर्हृष्टो ननाम तम् ॥
सन्तुष्टः श्रीगुरुः प्राह माधवारण्यकं मुनिम् ॥ ८४ ॥

शिवो गंगामदात्। सा नृपापं क्षालयंती भुवमागता। यथा भागीरथी तथेयं ॥७६-७८॥ अतः श्रीगुरुर्लोकानुग्रहेच्छया तत्तटे तीर्थानि पर्यटन्मञ्जरीके माधवारण्यमगात्। स नृसिंहार्चको मानसपूजायां श्रीगुरुं ददर्श। तथैव तं दृष्ट्वा नत्वा विस्मितो बहुस्तोत्रैस्तुष्टाव। भक्त्या प्रणम्य सगद्गदमाह। यद्दिव्यपादद्वय० इत्युक्त्वा हृष्टो माधवो ननाम। श्रीगुरुस्तुष्ट आह ॥७९-

अत्यन्तसन्मार्ग इह त्वयाप्तः[1] सेवाधिकारेण ततः समाप्तः ॥
संसारमार्गो मम दर्शनेन पश्यात्मना[2] मामविमर्शनेन[3] ॥ ८५ ॥

इत्युक्त्वा तं समाश्वास्य श्रीगुरुर्हर्षनिर्भरः ॥
स्वरूपं दर्शयामास तस्मै दिव्यमनुत्तमम् ॥ ८६ ॥

स्वरूपं श्रीगुरोर्दृष्ट्वा सन्तुष्टः स मुनिस्तदा ॥
विनयावनतो भूत्वा नानास्तोत्रैः स्तुवञ्जगौ ॥ ८७ ॥

जगद्गुरो जय जय लोकदृष्ट्या नरोऽपि हि ॥
त्वं त्रिमूर्त्यवतारोऽसि जगज्ज्योतिः परः पुमान् ॥ ८८ ॥

त्वं तारकोऽसि विश्वेषामवतीर्णोऽस्यतो भुवि ॥
अस्मान्कृत्वा कृतार्थांस्ते दत्तं चरणदर्शनम् ॥ ८९ ॥

इति स्तुत्वा श्रीगुरुं स तापसस्तापसाधिपम् ॥
सन्तुष्टो हृष्टचित्तोऽभूत्तमाश्वास्याब्रवीद्गुरुः ॥ ९० ॥

माधवारण्य ते मंत्रसिद्धिर्जाता न संशयः ॥
लब्धा ते सद्गतिर्ब्रह्मलोकं यास्यसि शाश्वतम् ॥ ९१ ॥

८४॥ अत्यंतसन्मा० इत्युक्त्वा तमाश्वास्य हर्षाद्दिव्यं स्वरूपमदर्शयत ॥८५-८६॥ स श्रीगुरोः स्वरूपं दृष्ट्वा विनयावनत आह। जगद्गुरो, जय। लोकदृष्ट्या नरोऽपि त्वं परं ज्योतिस्त्रिमूर्त्यवतारो विश्वतारकोऽवतीर्णोसि। ते चरणदर्शनाद्वयं कृतार्थाः ॥८७-८९॥ श्रीगुरुराह। ते मन्त्रसिद्धिर्जाता। ते सद्गतिर्लब्धा। शाश्वतं ब्रह्म यास्यसि। नित्यं नृसिंह-

१ प्राप्तः २ मनसा ३ निःसंशयेन.

नित्यं नृसिंहमूर्तेर्मे मनसा पूजनं कृतम् ॥
प्रत्यक्षं दर्शनं त्वेतल्लब्धं तेन न संशयः ॥ ९२ ॥

इत्युक्त्वा तमनुज्ञाप्य गङ्गातीरेण सद्गुरुः ॥
निर्गच्छन्वासरब्रह्मेश्वरं शिष्यैः सहागतः ॥ ९३ ॥

स्थितो गङ्गातटे शिष्यैः सह स्नातुं स सद्गुरुः ॥
मर्तुं समागतं तत्र विप्रमेकं ददर्श सः ॥ ९४ ॥

तीरे लुठञ्छूलरोगव्यथाव्याप्तो भृशं द्विजः ॥
प्राणांस्त्यक्तुं प्रवृत्तोऽभूत्स पीडां सोढुमक्षमः ॥ ९५ ॥

कृते तु भोजने दुःखं मरणप्रायमेव सः ॥
जठरेऽनुभवत्येव परिणामाख्यशूलतः ॥ ९६ ॥

अत एव द्विजो नित्यं निराहारोऽभवत्सदा ॥
अन्नेन वैरमापन्नो भुक्तोऽन्नंस्त्यक्ष्यतीव किम् ॥ ९७ ॥

मासा पक्षेण वाऽप्यन्नभोजनाद्भवति व्यथा ॥
एवं कतिदिनान्येष कष्टं प्राप्तोऽतिदुःसहम् ॥ ९८ ॥

महानवम्युत्सवे स पूर्वस्मिन्दिवसे द्विजः ॥
मासैकेन तु मिष्टान्नं भुक्त्वा कष्टमवाप ह ॥ ९९ ॥

मूर्तेर्मे मानसपूजा कृता तत इदं प्रत्यक्षदर्शनं लब्धं। इति तमाज्ञाप्य गङ्गातीरेण सशिष्यः श्रीगुरुर्वासरब्रह्मेश्वरमेत्य सस्नौ। तत्र शूलरोग-व्यथितं मर्तुमुद्युक्तमेकं विप्रं ददर्श ॥९०-९५॥ भोजने कृते मरणप्रायां पीडां सोढुमक्षमः परिणामशूलार्दितः स द्विजोऽन्नविद्वेषान्मासा पक्षेण वाऽन्नभोजनादतीव कष्टं प्राप्तः। पूर्वदिने बह्वन्नभोजनादत्यंतं पीडितो

बह्वन्नभोजनाद्विप्रो जठरेऽत्यन्तपीडितः ॥
गङ्गातीरे लुठन्प्राणान्परित्यक्तुं समुद्यतः ॥ १०० ॥

कृत्वाऽपारं द्विजो दुःखं त्यजन्देहं जगाविदम् ॥
संसारेण त्वसारेण ममालं पापरूपिणः ॥ १ ॥

प्राणोऽन्नं जीवनं चान्नं विनाऽन्नं कोऽत्र तिष्ठति ॥
अन्नेन वैरमापन्ने मरणं शरणं मम ॥ २ ॥

इति निश्चित्य गङ्गांबु प्रवेष्टुं स द्विजस्तदा ॥
प्रवृत्तोऽभूद्गले बद्ध्वा पाषाणं सुदृढं श्वसन् ॥ ३ ॥

कर्पूरगौरं स्मृत्वान्तः प्राह भूत्वेह भूभरः ॥
जातोऽस्मि नान्नदानाद्यैरुपकारोऽपि नो कृतः ॥ ४ ॥

इह जन्मनि नो पुण्यं कृतं जन्मान्तरेऽपि वा ॥
यतः पुण्यफलं नेक्षे ततः कष्टं पुरार्जितम् ॥ ५ ॥

ब्राह्मणस्य हृतो ग्रासो यद्वा कपिलगोस्त[1] ॥
कृतो विश्वासघातो वा ततः कष्टं पुरार्जितम् ॥ ६ ॥

गङ्गातीरे लुठन्प्राणांस्त्यक्तुमुद्युक्तोऽपारं दुःखं कृत्वाऽऽह। पापस्य मे संसारेणालं। अन्नं प्राणोऽन्नं जीवनम्। विनाऽन्नात्कस्तिष्ठेत्। अन्नवैरत्वे मरणं वरमिति निश्चित्य गङ्गां प्रवेष्टुं गले शिलां बद्ध्वेश्वरं स्मरन्नाह। इह भूभारोऽभवं। नान्नदानाद्युपकारो मे कृतः ॥९९-१०४॥ इह जन्मनि जन्मान्तरे वा पुण्यं न कृतम्। कष्टमर्जितम् ॥१०५॥ विप्रस्य धेनोश्च ग्रासो हृतो वा विश्वासघातो वा कृतस्ततः कष्टमिदम्। नेश्वरः पूजितः।

१ कपिलायाः धेनोः.

नेश्वरः पूजितो वाऽपि सद्गुरुर्निन्दितोऽथवा ॥
पितरौ वाऽप्यवज्ञातौ ततः कष्टं पुरार्जितम् ॥ ७ ॥

अथवा प्राग्भवे विप्रा धिक्कृता गृहमागताः ॥
नान्नेनातिथयोऽपीष्टास्ततः कष्टं पुरार्जितम् ॥ ८ ॥

वधूवरौ हतौ वा मे दत्तोऽग्निरथवा वने ॥
पितरौ वा परित्यक्तौ ततः कष्टं पुरार्जितम् ॥ ९ ॥

विहाय पितरौ भुक्तमिष्टमन्नं स्त्रिया सह ॥
भाति पूर्वार्जितं त्वीदृक्ततः कष्टं पुरार्जितम् ॥१०॥

स्मृत्वा स्मृत्वैव पापानि प्रविष्टो गौतमीजलं ॥
तं दृष्ट्वा श्रीगुरुः प्राह शिष्यानाह्वयत द्विजम् ॥ ११ ॥

[3]आनयानय शिष्यामुमात्महत्याऽतिदोषदा ॥
पृच्छेयं कस्य कोऽयं हि प्राणांस्त्यजति वा कुतः॥१२॥

इति श्रीगुरुणोक्तास्ते धावन्तः प्राप्य तं द्विजम् ॥
सलिलादानयामासुर्निष्कास्य गुरुसम्मुखम् ॥ १३ ॥

पितरौ अवज्ञातौ । गुरुर्निंदितो वा विप्रा धिक्कृता वाऽतिथयो हापिता वा दम्पती हतौ वा वनेऽग्निर्दत्तो वा पितरौ त्यक्त्वा स्त्रिया सह मिष्टान्नं भुक्तं वेदृक्पूर्वार्जितं भातीति स्मृत्वा स्मृत्वा गौतमीं गतं तं दृष्ट्वा श्रीगुरुः शिष्यमाह । शिष्यामुमानयात्महत्याऽतिदुस्तरा । कोऽयं प्राणांस्त्यजति तं पृच्छेत्येवं श्रीगुरुणोक्ता धावन्तः शिष्या जलात्तं निष्कास्य गुरु-

२ अपमानितौ ३ एकं शिष्यमुद्दिश्याह.

अनाथानां कल्पतरुर्दुःखितानां कृपाकरः ॥
पप्रच्छ तं गुरुवरः प्रणतानां सुशङ्करः ॥ १४ ॥

ब्रह्मन्निह कुतः प्राणान्बुद्ध्या त्यक्तुं त्वमिच्छसि ॥
आत्महत्या महादोषा श्रुता यत्तद्वदाखिलम् ॥ १५ ॥

विप्रः प्राह यतीशाद्य मां पृष्ट्वा किं करिष्यसि ॥
जातं जन्म मम व्यर्थं भूभारोऽहं न संशयः ॥ १६ ॥

मासा पक्षेण भुक्तं चेदुदरेऽतीव दुःसहम् ॥
कष्टं भवति तत्सोढुं न क्षमोऽतस्त्यजाम्यसून् ॥ १७ ॥

शरीरं स्यादन्नमयं तदन्नं वैरितां गतम् ॥
गुरुनाथ विनाऽन्नेन जीवनं मे कथं वद ॥ १८ ॥

श्रीगुरुर्ब्राह्मणं प्राह व्यथा ते सर्वथा गता ॥
क्षणेनैकेन भो ब्रह्मन्नौषधं कथयामि ते ॥ १९ ॥

मा भीर्जहीहि स्वान्तस्थं संशयं निश्चयं वह ॥
व्याधिस्ते निर्गतो भूमौ कुरु स्वाद्वन्नभोजनम् ॥१२०॥

सम्मुखमानिन्युः ॥१०६-११३॥ अनाथकल्पद्रुः कृपाब्धिर्भगवांस्तं प्राह। ब्रह्मन्कुतो बुद्धया प्राणांस्त्यक्ष्यसि तत्सर्वं वदाऽऽत्महत्या महादोषा श्रुता। विप्र आह। मां पृष्ट्वा किं करिष्यसि। मे जन्म व्यर्थं। भूभारोऽहं। मासा पक्षेण वा भुक्तं चेदतीव दुःसहं कष्टं सोढुं न क्षमोऽतः प्राणांस्त्यक्ष्ये। गुरुनाथ, देहोऽन्नमयोऽन्नवैरे कथं जीवनम्। श्रीगुरुराह। व्यथा ते गता। क्षणेनौषधं वक्ष्ये। मा भीः। संशयं त्यज। निश्चयं कुरु। भूमौ स्वाद्वन्नं

श्रीगुरोर्वचनं श्रुत्वा स्थिरीकृत्य मनः शनैः ॥
निधाय श्रीगुरुपदे शीर्षं भक्त्या ननाम तम् ॥ २१ ॥

तस्मिन्नवसरे कश्चिद्द्विज एकः समागतः ॥
स तद्ग्रामाधिकारीह गङ्गां स्नातुं समागतः ॥ २२ ॥

सहसा श्रीगुरुं दृष्ट्वा स आगत्य गुरोः पदे ॥
ववन्दे भक्तिसंयुक्तः कायेन मनसा गिरा ॥ २३ ॥

श्रीगुरुस्तं समाश्वास्य विप्रं पप्रच्छ कुत्र ते ॥
निवासस्तव किं नाम मह्यं कथय विस्तरात् ॥ २४ ॥

इति श्रीगुरुवाक्यं स श्रुत्वाऽथ ब्राह्मणोऽब्रवीत् ॥
अस्म्यापस्तम्बशाखीयो द्विजः कौण्डिण्यगोत्रजः ॥२५॥

सायन्देव इति ख्यातः काञ्चीपुरि वसाम्यहम् ॥
प्राप्तोऽस्म्युदरपूर्त्यर्थं सेवको यवनेशितुः ॥ २६ ॥

वसाम्यधिकृतत्वेन ग्रामेऽस्मिन्नेकहायनम् ॥
धन्योऽहमद्य धन्योऽहं कृतार्थोऽस्मि न संशयः ॥२७॥

भुंक्ष्व। इति श्रुत्वा मनः समाधाय गुरुपदे शीर्षं दधौ ॥११४-२१॥ तदा कश्चिद्ग्रामाधिकारी द्विजः स्नातुमागत्य सहसा श्रीगुरुं दृष्ट्वा भक्त्या कायेन वाचा मनसा च तत्पदे ववन्दे। तमाश्वास्य श्रीगुरुराह। क ते वासस्ते नाम किमिति। स आहापस्तंबशाखीयः कौण्डिण्यगोत्रजः काञ्चीवासी सायन्देवाख्यो द्विजोऽहम्। यवनराजसेवकोऽत्रोदरपूर्त्यर्थ-मागतोऽस्मि। ग्रामेऽस्मिन् अधिकृतत्वेनाब्दं वसामि। अद्य धन्योऽहम्।

त्वद्दर्शनात्कृतार्थोऽस्मि त्वं नूनं विश्वतारकः ॥
दत्तं मे दर्शनं दोषा गता जन्मान्तरार्जिताः ॥ २८ ॥
यस्मिंस्तेऽनुग्रहः सोऽपि तरिष्यति भवार्णवात् ॥
स्वामिंस्ते दर्शनं लब्धमप्रयत्नेन मेऽधुना ॥ २९ ॥
गङ्गा पापं शशी तापं दैन्यं कल्पतरुर्हरेत् ॥
पापं तापं च दैन्यं च सद्यः श्रीगुरुदर्शनम् ॥ १३० ॥
पापं गङ्गा हरेत्स्नानात्तापं चंद्रो हरेन्निशि ॥
दैन्याद्वियोजयत्येव कल्पवृक्ष उपस्थितः[१] ॥ ३१ ॥
नैवं भवद्दर्शनं यत्तापपातकदैन्यहृत् ॥
दृष्टमीदृक्तव पदं चतुर्वर्गफलप्रदम् ॥ ३२ ॥
एवं स्तुत्वा पुनरपि श्रीगुरोश्चरणेऽग्रहीत् ॥
जगद्गुरुस्तमाश्वास्य स्वाग्रे समुपवेशयत् ॥ ३३ ॥
श्रीगुरुः प्राह तं विप्रं मद्वाक्यमवधारय ॥
जठरे व्यथितो विप्रः क्षुधा प्राणाञ्जहाति हि ॥ ३४ ॥

कृतार्थोऽस्मि न संशयस्त्वया विश्वतारकेण दर्शनं दत्तम्। जन्मान्तरार्जिता दोषा नष्टाः ॥१२३-१२८॥ यस्मिंस्तेऽनुग्रहः स भवार्णवात्तरिष्यति। तेऽप्रायत्नतो दर्शनं लब्धम् ॥१२९॥ गङ्गा पापं, शशी तापं, दैन्यं कल्पद्रुश्च हरति। भवांस्तु त्रयमपि पापतापदैन्यहृत् ॥१३०॥ चतुर्वर्गफलदं ते दर्शनं जातमित्युक्त्वा पदे जग्राह। तमाश्वास्योपवेश्य गुरुराह। मद्वचः शृणु। जठरव्यथितोऽयं विप्रः क्षुधा प्राणाञ्जहाति।

१ समीपस्थितः न दूरतः.

व्याधेरुपशमार्थाय कथयाम्यहमौषधम् ॥
नीत्वा स्वमन्दिरे तस्मै देहि मिष्टान्नभोजनम् ॥ ३५ ॥

अस्यान्नभोजनात्पीडा व्याधिश्च लयमेष्यति ॥
नयामुं त्वरितं विप्रं क्षुधाक्रान्तोऽयमस्ति हि ॥ ३६ ॥

इति श्रुत्वा गुरूक्तिं स विनयावनतोऽब्रवीत् ॥
प्राणांस्त्यक्ष्यति भुक्त्यैव ब्राह्मणोऽयं न संशयः ॥३७॥

गतेऽह्नि भुक्तो मासेन तेनासूंस्त्यक्तुमिच्छति ॥
अस्मा अन्नप्रदानेन ब्रह्महत्यां समाप्नुयाम् ॥ ३८ ॥

उवाच श्रीगुरुर्विप्रं कथयाम्यथ चौषधम् ॥
माषान्नं परमान्नं च सापूपं परमौषधम् ॥ ३९ ॥

एतदन्नाशनादस्य व्याधिर्नाशं गमिष्यति ॥
निःसंशयं नयाश्वेनं भोजनं देहि सत्वरम् ॥ १४० ॥

ओमित्याश्रुत्य स तदा भिक्षार्थमपि सद्गुरुम् ॥
सशिष्यं प्रार्थयामास स्वामिन्नेहीति भक्तितः ॥ ४१ ॥

तद्रोगोपशमार्थं स्वमंदिरं नीत्वाऽस्मै मिष्टान्नं देहि। ततोऽस्य पीडा व्याधिश्च नाशमेष्यति। शीघ्रममुं नय क्षुधितोऽस्ति ॥१३१-१३६॥ इति श्रुत्वा सायन्देवो नत्वाऽऽहान्नभक्षणादयं प्राणांस्त्यक्ष्यति। गतेऽह्नि मासा भुक्तोऽयं प्राणांस्त्यक्तुमुद्यतोऽतोऽन्नदानाद्ब्रह्महत्या भवेत्। गुरुराहाहं ब्रुवे। सापूपमाषान्नं परमान्नमस्यौषधं ॥१३७-१३९॥ तदशनाद्व्याधिर्नश्येत्। नात्र संशयोऽन्नं शीघ्रमस्मै देहि ॥१४०॥ द्विजस्तथेत्युक्त्वा भिक्षार्थं सशिष्यं सद्गुरुं प्रार्थयामास। श्रीगुरुणा ओं तथेत्युक्ते

अथ श्रीगुरुनाथः स तथेत्यंगीचकार सः ॥
सायन्देवोऽतिहृष्टोऽभूद्भक्तिमान्नामधारक ॥ ४२ ॥

अहमन्ये च ये शिष्या रोगी विप्रश्च तैः सह ॥
श्रीगुरुस्तद्गृहं यातो भिक्षां कर्तुं मुदा युतः ॥ ४३ ॥

पतिव्रताऽस्य वनिता सा तदाऽतीव हर्षिता ॥
पूजयामासतुरुभौ विचित्रं तत्र चेक्षितम् ॥ ४४ ॥

उपचारैः षोडशभिस्तावानर्चतुरादरात् ॥
श्रीसद्गुरुं तथान्यांश्च तच्छिष्यान्त्सकलानपि ॥ ४५ ॥

गुरुपूजाविधानं तु चित्रं तत्र मयेक्षितम् ॥
एकैकं रङ्गवल्लीभी रचयामास मण्डलम् ॥ ४६ ॥

नानारङ्गैरञ्चितानि पद्मान्यष्टदलान्यपि ॥
पञ्चवर्णैः सुचित्रैः स भूषयामास तत्स्थलम् ॥ ४७ ॥

ततः सङ्कल्प्य साष्टाङ्गं प्रणम्य विधिना द्विजः ॥
विनयावनतो भूत्वा प्रणनाम पुनः पुनः ॥ ४८ ॥

भक्तिमान्सायन्देवो हृष्टस्तं स्वगृहं निन्ये। अहमन्ये शिष्या रुग्णो विप्रश्चैतैः सह श्रीगुरुर्मुदा तद्गृहं गतः। साध्वी तद्भार्या हृष्टा। तया सह स श्रीगुरुमानर्च तच्चित्रं दृष्टं ॥१४१-१४४॥ षोडशोपचारैर्गुरुमन्या-ञ्छिष्यांश्चापूजयत्। चित्रं पूजाविधानं शृणु। प्रत्येकं नानारंगवल्ली-भिश्चित्रैः पंचरंगचूर्णपद्मैर्मंडलानि व्यरचयत्। ततः साष्टांगं प्रणम्य संकल्प्य विनतो विप्रः ॥१४५-१४८॥ चित्रासने गुरुमुपवेश्यान्यांश्च

चित्रासने तूपवेश्य गुरूंश्चान्यान्पृथक्पृथक् ॥
कृत्वा गन्धादियुक्तानि पाद्यार्घ्यादीनि च क्रमात् ४९

उपचारैः क्रमेणैव पादौ पञ्चामृतादिभिः ॥
रुद्रसूक्ताभिषेकैश्च पूजयामास भक्तितः ॥ ५० ॥

भक्त्या श्रीगुरुमापूज्य सन्माल्यादिभिरादरात् ॥
ज्ञानी विप्रः पादतीर्थं दधौ पात्रान्तरे तदा ॥ ५१ ॥

भक्त्या चरणतीर्थं तत्पूजयामास स द्विजः ॥
नीराज्य गीतवाद्यैश्च तोषयामास सद्गुरुम् ॥ ५२ ॥

श्रद्धाभक्त्या क्रमेणैव श्रीगुरोः पूजनं मुदा ॥
अन्यान्संन्यासिनः षोडशोपचारैरपूजयत् ॥ ५३ ॥

पुष्पाञ्जलिं वेदमन्त्रघोषपूर्वकमादरात् ॥
तस्मै समर्पयामास गुरवे प्रीतिसंयुतः ॥ ५४ ॥

सुगीतैर्नमनैश्चापि तोषयामास सद्गुरुम् ॥
स पतिव्रतया पत्न्या साकमेवं समार्चयत् ॥ ५५ ॥

पृथक्पृथक्पीठेषूपवेश्य पाद्यार्घ्याद्युपचारान्दत्वा पञ्चामृतादिभिः रुद्र-सूक्तैश्चाभिषिषेच। श्रीगुरुं वस्त्रमाल्यादिभिरापूज्य पादावनेजनं तीर्थं भक्त्या पूजयामास। श्रीगुरुं नीराज्य गीतादिभिस्तोषयामास। एवं षोडशोपचारैर्गुरुपूजां विधायान्यांस्तथैव सम्पूज्य प्रीत्या गुरवे वेदमन्त्र-घोषपूर्वकं पुष्पाञ्जलिं दत्त्वा सुगीतैर्गुरुं तोषयामास। एवं साध्व्या पत्न्या

एवं श्रीगुरुमापूज्य सायन्देवोऽतिभाविकः ॥
शिष्यानन्यानपि तथा ववन्दे परमादरात् ॥ ५६ ॥
गुरुमूर्तिरतिप्रीतो वरं तस्मै ददौ मुदा ॥
वृद्धिं यायात्सन्ततिस्ते मद्भक्तिरपि ते कुले ॥ ५७ ॥
ज्ञातं गुरुचरित्रं ते सुपुत्रादिभिरस्तु ते ॥
गोत्राभिवृद्धिः सततं गुरुभक्तिरतीव च ॥ ५८ ॥
इत्थमाश्वासयामास तथाऽस्त्विति स चाददे ॥
कृत्वाऽथ मण्डलान्याशु पात्राण्यासाद्य च क्रमात् ॥५९॥
पायसान्नेन पक्वान्नैर्माषान्नैर्विविधैरपि ॥
सशर्करैरपूपाद्यैर्भक्ष्यभोज्यादिसंयुतैः ॥ १६० ॥
शाकैर्नानाविधैश्चापि संस्कृतैर्व्यंजनैरपि ॥
परिविष्टैः सूपविष्टं भोजयामास सादरम् ॥ ६१ ॥
उदरे व्यथितः शूली यथेष्टं बुभुजे द्विजः ॥
निर्गतस्तत्क्षणं व्याधिः कृपादृष्ट्यैव सद्गुरोः ॥ ६२ ॥

सह स गुरुमन्यांश्च संपूज्य ववन्दे। प्रीतः श्रीगुरुर्वरं दास्यन्नाह। ते सन्ततिर्वृद्धिं यायात्। ते कुले मद्भक्तिश्च ॥१४९-१५७॥ गुरुचरित्रं ते ज्ञातं। पुत्रादिभिस्ते गोत्रवृद्धिरस्तु। तत्र मद्भक्तिश्चेत्याश्वासयामास ॥१५८॥ तथेत्युक्त्वा मण्डलानि कृत्वा पात्राण्यासाद्य पायसान्नपक्वान्नमाषान्नशर्करापूपविविधभक्ष्यभोज्यानि विविधशाकसंस्कृतव्यंजनानि परिवेष्य भोजयामास। उदरे व्यथितः शूली विप्रः श्रीगुरुकृपया यथेष्टं भुक्त्वा

१ आशीर्वादं स्वीचकार.

स्पर्शस्पर्शादयो यद्वत्स्वर्णं षोडशवर्णकम् ॥
भवतीशदृशा तद्वन्नीरोगोऽभूद्द्विजः सुखी ॥ ६३ ॥

यथाऽन्धकारसंहारो भवेद्दिनकरोदयात् ॥
श्रीगुरोः कृपया तद्वत्कुतो दैन्यादि शिष्यते ॥ ६४ ॥

एवं श्रीगुरुनाथेन स्वशिष्यैः सह भोजनम् ॥
कृतमानन्दयुक्तोऽभूद्द्विजोऽन्ये विस्मयं गताः ॥६५॥

अहो अस्या[2]हितं ह्यन्नं तदेवाभवदौषधम् ॥
अत्र चित्रमिदं दृष्टं नष्टो दुष्टोऽपि तद्गदः ॥ ६६ ॥

नामधारक किं वच्मि यस्योपरि गुरोः कृपा ॥
नश्यन्ति जन्मांतरजा दोषा व्याधेस्तु का कथा ॥६७॥

एवं गङ्गाधरसुतः श्रोतृनाह सरस्वती ॥
कामधेनूपमं रम्यं श्रीगुरोश्चरितं हितम् ॥ ६८ ॥

नीरोगोऽभवत् ॥१५९-१६२॥ स्पर्शस्पर्शाल्लोहं स्वर्णमिव गुरुकृपयाऽसौ नीरोगोऽभूत्। सूर्येऽभ्युदिते ध्वान्तमिव गुरुकृपया कुतो दैन्यं तिष्ठेत्। एवं शिष्यैः सह श्रीगुरुणा भोजनं कृतम्। विप्रो हृष्टोऽन्ये विस्मिताः ॥१६३-१६५॥ अहो चित्रम्। यदहितमन्नं तदौषधं जातं रोगो नष्टश्च। हे नामधारक, यस्योपरि गुरुकृपा तस्य जन्मान्तरदोषा नश्यन्ति। कुतो

---

१ चिंतामणिः २ शत्रुभूतं.

पठन्ति ये भक्तियुता विनीताः
शृण्वन्ति वाऽऽख्यानमिदं गदघ्नम् ॥
तेषां गृहे व्याधिभयं न नित्यं
तेषां सुखं भूरि वदे त्रिसत्यम् ॥१६९॥

(इति)श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्यगङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञितमहाराष्ट्रभाषान्वित-गुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वतीयतिविरचितायां श्रीगुरुसंहितायां ज्ञानकाण्डे त्रयोदशः (अध्यायः)

॥ आदितः श्लोकाः ॥ १६२९ ॥

व्याधिः । एवं परमं रम्यं श्रीगुरोश्चरितं । पठंति ये० ॥१६६-१६९॥ इति चूर्णिकायां त्रयोदशोऽध्यायः ॥

॥ इति त्रयोदशोऽध्यायः ॥ १३ ॥

---

## ॥ अथ चतुर्दशोऽध्यायः ॥ १४ ॥

॥ श्रीदत्तात्रेयाय नमः ॥

नामधारकसच्छिष्यः सिद्धं प्राह सकौतुकम् ॥
पुनः पृच्छाम्यहं प्रीत्या कथयातिविचक्षण[1] ॥ १ ॥

जय योगेश्वर जय ज्ञानसागर सिद्ध भोः ॥
कथयाग्रे कथं वृत्ता कथा ज्ञानं यतो हि नः ॥ २ ॥

प्रसन्नः कृपया शूलिद्विजरोगमपाहरत् ॥
ततोऽग्रतः कथां वृत्तां विस्तरात्कथयस्व नः ॥ ३ ॥

इति शिष्यवचः श्रुत्वा सिद्धः सन्तोषसंयुतः ॥
श्रीगुरोश्चरितं कामधेनुं प्राह सविस्तरम् ॥ ४ ॥

अध्यायसारसङ्ग्रहश्लोकोऽयम्—

सायन्देवं शक्रमिताध्याय उवाच
त्रीशो म्लेच्छं याहि न भीस्ते स तथेति ॥
गत्वाऽभीतो म्लेच्छनृपेणार्चित एत्य
नृत्यन्नेजे मत्तमयूरो हि यथा सः ॥ १ ॥

नामधारकः सकौतुकं पुनः पप्रच्छ । सिद्ध, प्रीत्या कथय । हे ज्ञानसागर योगेश सिद्ध, जयाग्रतो वृत्तां कथां कथय ॥ २ ॥ प्रसन्नः श्रीगुरुः शूलरोगमहरत् । ततोऽग्रतो वृत्तां कथां कथयेति श्रुत्वा तुष्टः सिद्धः सविस्तरं कामधुक्चरितमाह ॥ ३-४ ॥ हे शिष्य, यद्गृहे

१ अतिपंडित.

शृणु शिष्यशिरोरत्न भिक्षा यद्भवने कृता ॥
[1]ततः सन्तोषमापन्नः प्रसन्नोऽभूद्गुरुर्भृशम् ॥ ५ ॥

सायन्देवद्विजः पूर्णगुरुभक्तिप्रकारवित् ॥
दृष्ट्वा पूजां कृतां चित्रां तत आनन्दितो गुरुः ॥ ६ ॥

सायन्देवमुपाहूय श्रीगुरुस्तुष्ट आह तम् ॥
तवोपरि मम प्रीतिर्भक्तास्त्वद्वंशजा मम ॥ ७ ॥

इति श्रुत्वा गुरुवचस्तत्पादाम्बुजयोः शिरः ॥
पुनः पुनः स विन्यस्य विनयावनतोऽब्रवीत् ॥ ८ ॥

श्रीसद्गुरो जय जय त्वं नरो भासि मायया ॥
त्वं त्रिमूर्त्यवतारस्ते महिमा श्रुत्यगोचरः ॥ ९ ॥

त्वं विश्वव्यापको ब्रह्मविष्णुशर्वात्मकः परः ॥
मानुषं रूपमास्थाय भक्तानुद्धरसीह हि ॥ १० ॥

महिमानं वर्णयितुं तव शक्तिर्विभो न नः ॥
एका याच्ञा ममास्तीश कृपया तां शृणुष्व भोः ॥ ११ ॥

भिक्षा कृता तस्मिंस्तुष्टः प्रसन्नोऽभूत्। सायन्देवोऽपि भक्तिप्रकारज्ञश्चित्रां पूजां चक्रे। तत आनन्दितो गुरुस्तुष्टस्तमाहूयाह। तवोपरि मम प्रीतिस्त्वद्वंशजा मे भक्ता इति श्रुत्वा सायन्देवः पुनः पुनर्नत्वा विनयेनाह। श्रीगुरो, जय। त्वं मायया नरो भासि। त्रिमूर्त्यवतारस्य ते महिमा वेदागोचरः। त्वं विश्वव्यापको ब्रह्मविष्णुशिवात्मको मायया नृरूपं धृत्वा भक्तानुद्धरसि ॥९-१०॥ ते महिमवर्णने कः शक्तः।

१ तस्मिन्.

मद्वंशे ये भवंतीश तेभ्यो भक्ति प्रदेहि ते ॥
पुत्रपौत्रादिसौख्यं च तथाऽन्तेऽपि च सद्गतिम् ॥१२॥

इति प्रार्थ्य नमस्कृत्य विनतः पुनरब्रवीत् ॥
सेवां करोमि यवनद्वारि क्रूरः स दैत्यवत् ॥ १३ ॥

प्रत्यब्दं ब्राह्मणं हन्ति घातकोऽद्यैव मामपि ॥
तदर्थमेव स क्रूर आह्वयत्यतिसम्भ्रमम् ॥ १४ ॥

तत्समीपे मयि गते स प्राणान्मे ग्रहीष्यति ॥
मरणं मे कुतो दृष्टं चरणं शरणं हि ते ॥ १५ ॥

सन्तुष्टो गुरुमूर्तिः स मूर्ध्नि दत्त्वाऽभयं शयम् ॥
सायन्देवं प्राह मा भीश्चिंतां मा कुरु मा शुचः ॥१६॥

यवनं याह्यपि क्रूरं भयं त्यक्त्वैव सर्वथा ॥
प्रेम्णा तुष्टः पुनरपि त्वां मह्यं प्रेरयिष्यति ॥ १७ ॥

आगमिष्यसि यावत्त्वं तावत्तिष्ठामि चात्र तु ॥
आगते त्वयि सन्तुष्टो गमिष्यामि ततस्त्वितः ॥ १८ ॥

एका याच्ञाऽस्ति तां शृणु ॥ ११ ॥ मद्वंशे ये भवन्ति तेषां पुत्रादिसौख्यं त्वयि भक्तिरन्ते सद्गतिश्चास्तु। इति प्रार्थ्य नत्वा पुनराह। यद्द्वारि सेवां करोमि स क्रूरो यवनः प्रत्यब्दं ब्राह्मणं हन्ति घातकोऽद्यापि तदर्थमेव मां ससंभ्रममाह्वयति। मयि तत्समीपं गते स मे प्राणान्हरिष्यति। ते चरणं दृष्टमतः कुतो मे मरणम् ॥१२-१५॥ तत् श्रुत्वा तन्मूर्ध्न्यभयकरं दत्वा। मा भीश्चिन्तां मा कुरु। शोकं त्यज। क्रूरमपि यवनं गच्छ। स प्रेम्णा पुनः प्रेरयिष्यति। यावदागमिष्यसि तावत्तिष्ठामि। त्वय्यागते गमिष्यामि।

अस्माकं त्वं हि भक्तोऽसि तथैव तव वंशजाः ॥
प्राप्स्यसे त्वमभीष्टार्थान्वृद्धिं यायाच्च सन्ततिः ॥१९॥

सर्वेऽपि सुखिनः पुत्रपौत्राद्याः श्रीरखण्डिता ॥
आरोग्यं त्वत्कुले चापि दीर्घायुश्च भविष्यति ॥ २० ॥

इति लब्धवरो हृष्टः सायन्देवद्विजो ययौ ॥
यत्र स्थितः स यवनस्त्वरया तमुपागतः ॥ २१ ॥

कालान्तकोपमो हृष्टो यवनोऽपि तदा द्विजम् ॥
सायन्देवं निरीक्ष्यैव समभूज्ज्वलितान्तरः ॥ २२ ॥

कुपितोऽपि द्विजं प्रेक्ष्य विमुखः सन्गृहं गतः ॥
भीतोऽपि चकितो विप्रो दध्यौ चित्तेन सद्गुरुम् ॥२३॥

भृशं कुप्येत वम्री चेदग्निं स्पृशति किं तथा ॥
कृपा यस्योपरि गुरोः किं क्रूरोऽस्य करिष्यति ॥२४॥

ग्रसिष्यति कथं सर्पो गरुडस्यार्भकानपि ॥
तथा गुरुकृपायुक्तं यवनः किं करिष्यति ॥ २५ ॥

त्वं मे भक्तस्ते वंशजा अपि मे भक्तास्त्वमिष्टार्थान्प्राप्स्यसे । ते सन्ततिवृद्धिं यायात् ॥१६-१९॥ सर्वेऽपि पुत्राद्याः सुखिनः सन्तु । त्वत्कुले श्रीरखण्डिताऽऽरोग्यं दीर्घायुश्चेति लब्धवरो हृष्टः सायन्देवः यवनसमीपं ययौ । स च कालान्तकोपमो दुष्टो द्विजं वीक्ष्य कुपितोऽपि विमुखो गृहं गतः । चकितो भीतोऽपि विप्रः श्रीगुरुं दध्यौ ॥२०-२३॥ वम्री ( वाळवी ) कुपिताऽग्निं स्पृशेत्किं । यदुपरि गुरुकृपा तस्य यवनः किं करिष्यति । सर्पो गरुडपोतं ग्रसति किं । ऐरावतः सिंहं ग्रसेत्किं । यदु-

कथमैरावतः सिंहं ग्रसिष्यति तथाऽप्ययम् ॥
कलिकालभयं नास्य यस्योपरि गुरोः कृपा ॥ २६ ॥

क्व भयं दारुणं तस्य यच्चित्ते सद्गुरुस्मृतिः ॥
कालमृत्यू न बाधेते अपमृत्युभयं कुतः ॥ २७ ॥

मृत्योर्भयं न यस्यास्य कुतस्तु यवनाद्भयम् ॥
यमादपि भयं नास्ति यस्योपरि गुरोः कृपा ॥ २८ ॥

एवं स यवनो भीतो गत्वाऽन्तःपुरमातुरः ॥
श्रान्तः प्रगाढं सुषुप्त्या शरीरमपि विस्मरन् ॥ २९ ॥

सन्तप्तहृदयो बुद्ध्वा लब्ध्वा प्राणान्तिकव्यथाम् ॥
परमं कष्टमापन्नो यवनोऽभूत्तदैव हि ॥ ३० ॥

स्मृतिविस्मृतिसंयुक्तो यवनः प्राह मे द्विजः ॥
शस्त्रेणावयवान्सर्वाञ्छिनत्ति भृशदुःखदः ॥ ३१ ॥

इत्युक्त्वा ब्राह्मणं स्मृत्वा प्रधावंस्तमुपेत्य सः ॥
लोलद्गात्रः पदे तस्य प्राह स्वामी त्वमेव मे ॥ ३२ ॥

परि गुरुकृपा तस्य कलिकालभयं न। यच्चित्ते गुरुस्मरणं तस्य कुतो भयम्। कालमृत्युर्न बाधते कुतोऽपमृत्युः। यदुपरि गुरुकृपा तस्य यमान्मृत्योश्च भयं न। कुतो यवनाद्भयम् ॥२४-२८॥ स भीतो यवनोऽन्तःपुरं गत्वा श्रान्तस्तन्द्या देहं विस्मृत्य तप्तहृदयः प्राणान्तिकव्यथां गत्वा स्मृतिविस्मृतियुक्तः सन्नाह। भृशदुःखदो द्विजः शस्त्रेण मेऽङ्गानि छिनत्तीत्युक्त्वा ब्राह्मणमुपेत्य लोलद्गात्र आह। त्वमेव मे स्वामी। केन आहू-

केन वाऽऽकारितोऽसि त्वं स्वगृहं याहि सत्वरम् ॥
इति प्रस्थापयामास वस्त्रभूषाः समर्प्य तम् ॥ ३३ ॥

सन्तुष्टः स द्विजो हृष्टो ग्राममागत्य सत्वरम् ॥
गङ्गातीरमनुप्राप्तो गुरुदर्शनलालसः ॥ ३४ ॥

स एत्य श्रीगुरुं दृष्ट्वा सद्भावेन प्रणम्य च ॥
स्तोत्रैस्तुष्टाव बहुभिस्तद्वृत्तान्तं न्यवेदयत् ॥ ३५ ॥

सन्तुष्टो गुरुराश्वास्य प्राहाहं दक्षिणां दिशम् ॥
यास्ये तीर्थानि विद्यन्ते स्थाने स्थानेऽपि तत्र तु॥३६॥

इति श्रुत्वा गुरोर्वाक्यं विनयावनतः करौ ॥
सन्धायोवाच ते पादसेवकोऽनुचराम्यहम् ॥ ३७ ॥

शरणे चरणे हित्वा तव भावहरे हरे ॥
क्षणं स्थातुं न शक्नोमि कृपाब्धे देव तारक ॥ ३८ ॥

सागरोद्धारणायैव यथा गङ्गा हि गां गता ॥
दर्शनं तेऽद्य नः स्वामिन्दातुमत्रागमः कृतः ॥ ३९ ॥

तोऽसि । सत्वरं गृहं गच्छेति वस्त्रभूषाः समर्प्य प्रस्थापयामास ॥२९-३३॥ तुष्टो द्विजः शीघ्रं ग्राममेत्य गुरुदर्शनलालसो गङ्गातीरमेत्य गुरुं दृष्ट्वा नत्वा स्तोत्रैः स्तुत्वा वृत्तान्तं न्यवेदयत् । तुष्टो गुरुस्तमाश्वास्याह दक्षिणादिशं यास्ये तत्र स्थाने स्थाने तीर्थानि ॥३४-३६॥ इति श्रुत्वा प्रणतः सायन्देव आह ॥ ३७ ॥ अहमप्यागमिष्यामि । भवहारि ते पदं हित्वा क्षणं स्थातुं न शक्नोमि । सागरोद्धाराय यथा गङ्गाऽऽगता तथा नो

भक्तवत्सल ते ख्यातिं को वेदास्मान्न सन्त्यज ॥
सहैव चागमिष्यामीत्युक्त्वा तच्चरणेऽग्रहीत् ॥ ४० ॥

विनयावनतस्येत्थं प्रार्थनां तस्य चेश्वरः ॥
श्रुत्वा सन्तोषमापन्नः श्रीगुरुस्तं तदाऽब्रवीत् ॥ ४१ ॥

कार्यार्थं दक्षिणां यास्ये सन्ति तीर्थानि दक्षिणे ॥
दास्यामि दर्शनं भूयस्ते पंचदशवत्सरैः ॥ ४२ ॥

तव ग्रामसमीपे तु वासो मे नियतो भवेत् ॥
तदा कलत्रपुत्रेष्टैर्मम त्वं दर्शनं कुरु ॥ ४३ ॥

चिन्तां मा कुर्वरिष्टं ते गतं दुःखं सुखं वस ॥
इति दत्त्वा करं मूर्ध्नि तस्मै सत्योक्तिमार्पयत् ॥ ४४ ॥

इत्याश्वास्य परावर्त्य तं शिष्यैः सह सोऽगमत् ॥
वैद्यनाथं महाक्षेत्रं यत्रारोग्यभवानिका ॥ ४५ ॥

शिष्यैः समस्तैः सहितः पश्यंस्तीर्थानि सद्गुरुः॥
प्राप्य ख्यातं वैद्यनाथं तत्र गुप्तोऽभवत्प्रभुः ॥ ४६ ॥

दर्शनं दातुमागतोऽसि । भक्तवत्सल, ते गतिं (?) को वेद । नास्मांस्त्यज । सहायास्य इति पादौ दधौ । नतस्य तस्य प्रार्थनां श्रुत्वा तुष्टो गुरुराह । कार्यार्थं तीर्थान्वितदक्षिणदिशं गत्वैत्य पुनर्दर्शनं ते दास्ये। चिन्तां माकुर्वरिष्टं दुःखं गतं । सुखं तिष्ठेति मूर्ध्नि करं दत्त्वा सत्योक्त्याऽऽश्वास्य तं परावर्त्य च सशिष्यो गुरुर्यत्रारोग्यभवानीं तद्वैद्यनाथक्षेत्रं गत्वा तीर्थानि पश्यन्गुप्तोऽभवत् ॥३८-४६॥ इति श्रुत्वा नामधारक आह।

इति सिद्धोदितं श्रुत्वा प्राब्रवीन्नामधारकः ॥
कुतो गुप्तोऽभवच्छिष्या बहवस्ते क्व वा स्थिताः ॥४७॥

इति तद्वचनं निशम्य सिद्धस्तमवोचदशेषवित्स बुद्धः ॥
गुरुसच्चरितं तदेव गङ्गाधरजः कथयिष्यति प्रसङ्गात् ॥४८॥
अग्रतः कथयति प्रविस्तरं प्रश्नमेतमनुसृत्य चोत्तरम् ॥
संशृणोतु विहितैकमानसः श्रोतृवर्ग इह दत्तमानसः ॥ ४९ ॥

(इति)श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्यगङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञितमहाराष्ट्रभाषान्वित-गुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वतीयतिविरचितायां श्रीगुरुसंहितायां ज्ञानकाण्डे चतुर्दशः (अध्यायः)

॥ आदितः श्लोकाः ॥ १६७८ ॥

कुतो गुप्तोऽभूत्तदा शिष्याः क्व स्थिताः ॥ ४७ ॥ इति श्रुत्वा सर्ववित्सिद्ध आह । तत्सरस्वती वक्ति ॥ ४८ ॥ अग्रतः कथयति प्र० ॥ ४९ ॥
इति चूर्णिकायां चतुर्दशोऽध्यायः ॥

॥ इति चतुर्दशोऽध्यायः ॥ १४ ॥

## ॥ अथ पंचदशोऽध्यायः ॥ १५ ॥

॥ श्रीदत्तात्रेयाय नमः ॥ ॥ श्रीगुरुभ्यो नमः ॥

धन्या धन्या हि ते वाणी शृणु शिष्यशिखामणे ॥
दृढभक्तिर्हि चरणे गुरोर्लीनोऽसि सर्वथा ॥ १ ॥
त्वं मां पृच्छसि यत्तेन सन्तोषो जायते मम ॥
अन्तर्धाने गुरोर्वच्मि कारणं शृणु सादरम् ॥ २ ॥
प्रसृतो महिमाऽस्यात्र ततो लोका अनेकशः ॥
दर्शनार्थं समायान्ति दूरतोऽपि सकामनाः ॥ ३ ॥
साधवोऽसाधवो धूर्ता अखिला अपि सद्गुरोः ॥
वयं शिष्या भविष्याम इत्यायान्ति कलौ सति ॥ ४ ॥
भूत्वाऽपि भार्गवो रामः कृत्वा निःक्षत्रियां महीम् ॥
दत्त्वा द्विजेभ्यः पाश्चात्त्यलवणोदतटं[1] गतः ॥ ५ ॥

अध्यायसारसंग्रहश्लोकोऽयम्—

चित्रपदोक्तित ईशस्तीर्थगमाय स शिष्यान् ॥
पञ्चदशे कथयित्वा तद्विधिमैरयदेत्र ॥ १५ ॥

सिद्ध आह। धन्या ते वाणी। हे शिष्यशिखामणे शृणु। ते गुरुपदे दृढा भक्तिर्लीनोऽसि। ते प्रश्नान्मे तोषोऽन्तर्धानकारणं शृणु। गुरुमहिमा प्रसृतोऽतोऽनेके दूराद्दर्शनार्थं सकामत्वेनायान्ति ॥ १-३ ॥ अत्र कलौ साधवोऽसाधवो धूर्ता अपि शिष्या भविष्याम इत्यागमिष्यन्ति। भार्गवरामो निःक्षत्रां महीं कृत्वा द्विजेभ्यो दत्त्वाऽब्धितटं गतः। तत्रापि

---

१ पश्चिमसमुद्रतीरं.

हत्वा भूपान् द्विजेभ्यो भृगुपतितनयो दत्तवान्सर्वभूमिं
तस्थौ तप्तुं तपोऽसौ पुनरवनिसुरा याचमानास्तमाहुः ॥
त्वं दत्त्वाऽपि क्षमां तां ननु कथमधितिष्ठस्यपीत्यब्धितोऽन्या-
मादायास्थाद्भृगुस्तं पुनरपि च गता याचमाना महाशाः ॥६॥

सह्यदक्षिणत उत्तमं वृतं कौंकणाख्यममलं स भूतलम् ॥
तत्प्रदाय जलधौ तिरोऽभवद्याचमानमुखजातशंकितः ॥ ७ ॥

तद्वदेव गुरुमूर्तिरत्र तु प्राविरास भवमुक्तिहेतवे ॥
याचते स्म तु जनो बहून्वरान्साधु नेदमिति सोऽभवत्तिरः॥८॥

वरं दातुमीशोऽप्यनीशो भवेत्किं
जगद्व्यापकोऽसौ वरैर्नैश्वरैः किम् ॥
विचिन्त्येति पात्रानुसारेण दास्यं-
स्तिरोऽभूत्तिरोभूतमायः समायः ॥ ९ ॥

श्रीगुरुस्त्वेकदा शिष्यानाहूय सकलानपि ॥
तिरोभवितुमिच्छन्संस्तीर्थयात्रां न्यवेदयत् ॥ १० ॥

याचमाना द्विजास्तमेत्य दत्तभूमौ कथं तिष्ठसीत्याहुः । पुनः सोऽब्धेरन्यां भुवमाहृतवान् ॥ ४-६ ॥ सह्यदक्षिणत उ० ॥ ७ ॥ तद्वदेव गुरुमू० ॥ ८ ॥ वरं दातुमी० ॥ ९ ॥ श्रीगुरुस्तिरोधानमिच्छन्त्सर्वशिष्यानाहूयाह ॥ भो शिष्यास्तीर्थयात्रां गच्छत ॥ १० ॥ श्रीशैले पुनर्मे दर्शनं

१ विप्राः २ अधिशीङ्स्थासां कर्म ३ तिरोहितः [गुप्तः] ४ तिरोभूता माया यस्मात् ५ सोपाधिक ईश्वरः.

नृसिंहमुनिराहेदं भोः शिष्या गच्छताधुना ॥
तीर्थयात्रां दर्शनं मे श्रीशैले भवतां भवेत् ॥ ११ ॥

इति श्रुत्वा गुरूक्तिं ते सर्वेऽस्य जगृहुः पदम् ॥
गुरुराज कृपामूर्ते किमद्यास्मानुपेक्षसे ॥ १२ ॥

त्वत्पाददृष्टिमात्रेण सर्वतीर्थानि नः खलु ॥
श्रीगुरोश्चरणे हित्वा क्व गन्तव्यं न विद्महे ॥ १३ ॥

सर्वतीर्थानि सन्ति श्रीगुरुपाद इति श्रुतिः ॥
शास्त्राणामपि सिद्धान्त एष एव सुनिश्चितः ॥ १४ ॥

सन्निधाने निधाने तु कः पर्यटति काननम् ॥
कल्पवृक्षं परित्यज्य को दूरं याति बंर्बुरम् ॥ १५ ॥

श्रीगुरुस्तान्पुनः प्राह शिष्याः सन्यासिनो वयम् ॥
पञ्चाहं नैव चास्माभिरेकत्र क्रियते स्थितिः ॥ १६ ॥

चतुर्थाश्रममासाद्य तीर्थानि भुवि सेव्यताम् ॥
ततः स्थिरीकृते चित्ते त्वेकवासः प्रशस्यते ॥ १७ ॥

भविष्यतीति श्रुत्वा ते पादौ धृत्वाऽऽहुः । कृपाब्धेऽस्मानुपेक्षसे किं त्वत्पददर्शनान्नः सर्वतीर्थानि तद्धित्वा क्व गन्तव्यं न जानीमः । त्वत्पदे सर्वतीर्थानीति श्रुतिशास्त्रसिद्धांतः । सन्निधाने निधाने क्व पर्यटनम् । कल्पवृक्षं हित्वा को बर्बुरं गच्छेत् । श्रीगुरुराह । वयं संन्यासिन एकत्र पञ्चाहं न स्थेयम् । तीर्थानि सेव्यानि । ततो मनः स्थिरीकृत्यैकवासः

---

१ कंटकवृक्षं.

मद्वाक्यतो विशेषात्स्वाश्रमधर्मो हि सेव्यताम् ॥
स्नात्वा तीर्थानि यतयः समागच्छन्तु मां पुनः ॥१८॥

श्रीशैले बहुधान्याख्ये संवत्सर उपेत्य माम् ॥
सर्वे मिलन्तु तत्रैव दर्शनं मे भविष्यति ॥ १९ ॥

इति श्रीगुरुणाऽऽदिष्टाः सर्वे शिष्याः पुनर्गुरोः ॥
दृढं धृत्वा पदे दीनास्तमूचुर्नामधारक ॥ २० ॥

श्रीगुरो भवतो वाक्यं प्रमाणं नः सुसम्मतम् ॥
द्रष्टुं तीर्थानि यास्यामो निश्चयेन महीतले ॥ २१ ॥

गुरुवाक्यं न गृह्णाति यः स यास्यति रौरवम् ॥
गृहं यमपुरे तस्य स वै नरकभाक्सदा ॥ २२ ॥

तीर्थे कस्मिन्क गतव्यमाज्ञापय गुरूत्तम ॥
चित्ते धृत्वा दृढं वाक्यं स्वामिन्गच्छामहे वयम् ॥२३॥

भवान्यथाऽऽज्ञापयति गच्छामोऽद्य तथैव हि ॥
अस्माकं तव वाक्यं हि भोः स्वामिन्सर्वसिद्धिदम् २४

प्रशस्यते ॥११-१७॥ मद्वाक्यात्स्वाश्रमधर्मः सेव्यः। भो यतयस्तीर्थयात्रां कृत्वा श्रीशैले बहुधान्येऽब्दे मे दर्शनं भविष्यति ॥१८-१९॥ इति गुरुणाऽऽज्ञप्ताः शिष्याः पदे धृत्वोचुस्ते वाक्यं नः प्रमाणं मतम्। तीर्थं द्रष्टुं यास्यामः। यो गुरुवाक्यं न गृह्णाति तस्य यमपुरे रौरवनरकं गृहम्। ते पदे धृते। स्वामिन्, केषु तीर्थेषु गन्तव्यं तदाज्ञापय। तद्धृदि दृढं धृत्वा यास्यामः। ते वाक्यं नः सर्वसिद्धिदमिति श्रुत्वा प्रसन्नो

इति शिष्यवचः श्रुत्वा प्रसन्नवदनो गुरुः ॥
तत आज्ञापयामास तीर्थयात्रां यथायथम् ॥ २५ ॥

ब्रह्माण्डगोले विख्यातस्तीर्थराजो विशेषतः ॥
काशी तां प्राप्य भजत गङ्गां भागीरथीं शुभाम् ॥२६॥

भागीरथीतीरयात्रा पवित्रा षष्टियोजना ॥
षष्टिकृच्छ्रफला गङ्गाद्वारं तु द्विगुणं स्मृतम् ॥ २७ ॥

यमुनातटयात्रा तु स्मृता विंशतियोजना ॥
तावत्कृच्छ्रफलं तत्र सावधानोऽवधारय ॥ २८ ॥

सरस्वती महागङ्गा कन्यकाऽपीह भूमिगा ॥
चतुर्विंशतिकृच्छ्राप्तिश्चतुर्विंशतियोजना ॥ २९ ॥

यावन्ति योजनानीह तावत्कृच्छ्रफलं मतम् ॥
पितृतृप्तिर्यज्ञफलं ब्रह्मलोकश्च शाश्वतः ॥ ३० ॥

वरुणा च कुशावर्ता शतद्रूश्च विपाशका ॥
शरावती वितस्ता च तथाऽसिक्नी मनोहरा ॥ ३१ ॥

गुरुस्तीर्थयात्रामाह । ब्रह्माण्डे तीर्थराजः प्रयागः ख्यातः काशी च तत्र गङ्गा सेव्या । भागीरथीयात्रा षष्टियोजना षष्टिकृच्छ्रफला च । गङ्गाद्वारे द्विगुणम् । यमुनायात्रा विंशतियोजना तावत्कृच्छ्रफलं च ॥२०-२८॥ कुमारी सरस्वती चतुर्विंशतियोजना । तावत्कृच्छ्रफला च । सर्वत्र यावन्ति योजनानि तावन्तः कृच्छ्राः । पितृतृप्तिर्यज्ञफलं ब्रह्मलोकाप्तिश्चेति सर्वत्र । वरुणा–कुशावर्ता–शतद्रु–विपाशू–शरावती– वितस्ताऽसिक्नी– मरुद्वृधा–

मरुद्वृधा नदी चैव तथा मधुमती शुभा ॥
पयस्वतीघृतवतीतीरयात्रा विधीयताम् ॥ ३२ ॥

या तु देवनदी प्रोक्ता विख्याता भूमिमण्डले ॥
यात्रा तस्याः पञ्चदशयोजनानि फलं तथा ॥ ३३ ॥

यावन्ति योजनानीह तावत्कृच्छ्रा इतीरितम् ॥
स्नानात्पवित्रतां याति ब्रह्महत्यादि नश्यति ॥ ३४ ॥

चन्द्रभागा रेवती च सरयूर्गोमती तथा ॥
वेदिका कौशिकी नित्यजला मन्दाकिनीति च ॥३५॥

श्रेष्ठा सहस्रवक्त्रा च पूर्णा पुण्यनदी तथा ॥
अरुणा बाहुदा चैव प्रोक्ता षोडशयोजना ॥ ३६ ॥

बहु पुण्यं यत्र नदीसंगमस्तत्र चाप्लवात्[1] ॥
त्रिवेणीस्नानफलदः सङ्गः[2] स्नायात्ततस्ततः ॥ ३७ ॥

वैरोचनी सन्निहितं पुष्करं तीर्थमुत्तमम् ॥
तथा फल्गुनदी श्रेष्ठा गयाक्षेत्रं महाफलम् ॥ ३८ ॥

मधुमती–घृतवती–यात्रा विधीयताम्। देवनद्याः पञ्चदशयोजनफलं। स्नानात्पवित्रता ब्रह्महत्यादिनाशश्च। चन्द्रभागा रेवती गोमती वेदिका कौशिकी नित्यजला मन्दाकिनी सहस्रवक्त्रा पूर्णा पुण्यनदी बाहुदारुणा बहुफला। यत्र नदीसङ्गस्तत्र स्नानात्त्रिवेणीस्नानफलम् ॥२९-३७॥ वैरोचनी पुष्करतीर्थं कुरुक्षेत्रं महापुण्यम्। श्रीशैलोऽनन्तो रामेश्वरः सेतुः श्रीरङ्गः

१ स्नानात् २ संगमः.

नारायणो बद्र्यां चालकानन्दाऽतिपुण्यदा ॥
कुरुक्षेत्रं महापुण्यं श्रीशैलोऽनन्त एव च ॥ ३९ ॥
रामेश्वरः सेतुबंधे श्रीरङ्गः पद्मनाभकः ॥
नैमिषारण्यतीर्थं च मनोहृत्पुरुषोत्तमः ॥ ४० ॥
स्यान्महालयतीर्थं यत्पितॄणामतितृप्तिदम् ॥
द्विचत्वारिंशत्कुलानि स्वर्गं यास्यन्ति वै यतः ॥ ४१ ॥
केदारः कोटिरुद्रश्च नर्मदा च महाफला ॥
मातृकेशः कुब्जतीर्थं तथा कोकामुखी वरा ॥ ४२ ॥
प्रसादतीर्थं विजयं चन्द्रतीर्थं तथैव च ॥
गोकर्णं शङ्खकर्णं च स्नाने एते मनोहरे ॥ ४३ ॥
अयोध्या मथुरा काञ्ची द्वार्वती मोक्षदा पुरी ॥
शालग्रामश्च शबलग्रामो मुक्तिप्रदः स्मृतः ॥ ४४ ॥
गोदावरीतीरयात्रा सा षड्योजनसम्मिता ॥
अनन्तमहिमा यस्या वाजपेयफलप्रदः ॥ ४५ ॥
सव्येन तटयात्रां यो गोदावर्याः करिष्यति ॥
त्रिवारं स महापापमुक्तो ज्ञानी भविष्यति ॥ ४६ ॥

पद्मनाभः पुरुषोत्तमः सेव्यः । महालयतीर्थं पितृतृप्तिदं द्विचत्वारिंशत्कुलोद्धर्तृ च । नैमिषारण्यं केदारः कोटिरुद्रश्च सेव्यः नर्मदा च महाफला । मातृकेशः कुब्जतीर्थं कोकामुखी प्रसादतीर्थं गोकर्णः शङ्खकर्णश्चायोध्या मथुरा काञ्ची द्वारवती शालग्रामः शबलग्रामश्च मुक्तिदः ॥३८-४४॥ गोदावरीयात्रा षड्योजना वाजपेयफलदा । सव्यतास्त्रिवारं तटयात्रातो महापापहानिर्ज्ञानं च ॥४५-४६॥ भीमेश्वरवञ्जराख्यतीर्थे प्रयागसमे ।

प्रयागेन समाने द्वे तीर्थे परमपावने ॥
भीमेश्वरं वज्जराख्यं सङ्गमश्चेति ये विदुः ॥ ४७ ॥

कुशतर्पणतीर्थं च श्रुतं द्वादशयोजनम् ॥
गोदाब्धिसङ्गमोऽयं षट्त्रिंशत्कृच्छ्रफलप्रदः ॥ ४८ ॥

पूर्णानदीतीर्थयात्रा त्रिंशद्योजनपुण्यदा ॥
कृष्णावेणी पञ्चदशवरकृच्छ्रफलप्रदा ॥ ४९ ॥

तुङ्गभद्रातीरयात्रा स्मृता विंशतिकृच्छ्रदा ॥
पम्पासरः पवित्रं स्यादनन्तमहिमाऽस्य तु ॥ ५० ॥

तथा हरिहरक्षेत्रे सर्वपापापहारके ॥
भीमातटं पर्यटतो दशकृच्छ्रफलप्रदम् ॥ ५१ ॥

पाण्डुरङ्गो मातुलिङ्गं गन्धर्वपुरमुत्तमम् ॥
तत्र तीर्थान्यनेकानि देवा अपि च कामदाः ॥ ५२ ॥

तद्भीमामरजायोगे कोटितीर्थानि सन्ति हि ॥
कल्पवृक्षोपमोऽश्वत्थवृक्षः सकलकामदः ॥ ५३ ॥

कुशतीर्थं द्वादशकृच्छ्रफलम्। गोदाब्धिसङ्गमः षट्त्रिंशत्कृच्छ्रफलदः पूर्णानदी त्रिंशद्योजनपुण्या कृष्णावेणी च पञ्चदशकृच्छ्रफलदा। तुङ्गभद्रा विंशतिकृच्छ्रफलदा। पम्पासरः पवित्रम्। हरिहरक्षेत्रं सर्वपापहरम्। भीमातटयात्रा दशकृच्छ्रफला। पांडुरङ्गो मातुलिङ्गं च पवित्रम्। गन्धर्वपुरेऽनेकतीर्थदेवाः कामदाः। भीमाऽमरजायोगे कोटितीर्थानि। तत्र

नृसिंहतीर्थमश्वत्थसम्मुखे च तदुत्तरे ॥
अस्ति वाराणसी काशी सर्वपापहरा परा ॥ ५४ ॥

तत्प्राक्पापविनाशाख्यं तीर्थं परमपावनम् ॥
ततोऽग्रतो रुद्रपादतीर्थं सकलपापहृत् ॥ ५५ ॥

चक्रतीर्थं स्थितं यत्र केशवो देवनायकः ॥
कोटितीर्थं ततो ज्ञेयं ततो मन्मथतीर्थकम् ॥ ५६ ॥

कल्लेश्वरो यत्र तत्र साक्षाद्गोकर्णकं स्मृतम् ॥
गन्धर्वपूः सिद्धभूमिः पुरी साऽनुपमा भुवि ॥ ५७ ॥

इष्टार्थसिद्धिर्द्राक्तेषां येऽनुतिष्ठन्ति तत्र तु ॥
कल्पवृक्षो यत्र तत्र किं किं न स्यान्नु कांक्षितम् ५८

अनन्तपुण्यफलदः काकिणीसङ्गमः परः ॥
प्रयागसङ्गमसम एवं भीमा महाफला ॥ ५९ ॥

तुङ्गभद्रा वरनदी सङ्गमोऽस्या महाफलः ॥
मलापहासङ्गमश्च शतजन्माघनाशनः ॥ ६० ॥

कल्पवृक्षोऽश्वत्थः कामदः । तत्र नृसिंहतीर्थं तदुत्तरे पापघ्नी वाराणसी तत्प्राक्पावनं पापविनाशतीर्थं ततोऽग्रतोऽघहृद्रुद्रपादतीर्थं ॥४७-५५॥ केशवसन्निधौ चक्रतीर्थम् । ततः परं कोटितीर्थं मन्मथतीर्थं च ॥ ५६ ॥ यत्र कल्लेश्वरस्तद्गोकर्णम् । गन्धर्वपुरं सिद्धभूमिः । अत्रानुष्ठानाच्छीघ्रसिद्धिः । यत्र कल्पद्रुस्तत्र किं न सिध्येत् । काकिणीसङ्गमोऽनन्तफलः प्रयागसमः । तुङ्गभद्रा वरदा अस्याः सङ्गमो महाफलः । मलापहासङ्गमः शतजन्मा-

निवृत्तिसङ्गमश्चापि ब्रह्महत्यानिवारकः ॥
भोः शिष्या गच्छत प्रीत्या पापनाशो भविष्यति ॥६१॥

यदा बृहस्पतिः सिंहराशिं गच्छति वै तदा ॥
गोदावरीं समागम्य वर्षं गङ्गाऽत्र तिष्ठति ॥ ६२ ॥

कन्यागते गुरौ चैव गङ्गा कृष्णायुता भवेत् ॥
तुलागते गुरौ तुङ्गभद्रा गङ्गायुता भवेत् ॥ ६३ ॥

गोपतौ कर्कटस्थेऽपि तथैव च मलापहा ॥
स्नानादेवात्र सर्वेषां ब्रह्महत्याद्यघक्षतिः ॥ ६४ ॥

भीमाकृष्णासङ्गमे तु स्नानाच्छुद्धो भवेन्नरः ॥
षष्टिजन्मसु सद्विप्रकुले स च भविष्यति ॥ ६५ ॥

तुङ्गभद्रासङ्गमोऽपि ततस्त्रिगुणपुण्यदः ॥
निवृत्तिसङ्गमश्चापि चतुर्गुणफलस्ततः ॥ ६६ ॥

पातालगङ्गास्नानं तु मल्लिकार्जुनदर्शनम् ॥
ततः षड्गुणपुण्यं यत्पुनरावृत्तिनाशनम् ॥ ६७ ॥

घहृत्। निवृत्तिसङ्गमो ब्रह्महत्याहरः। एवमाचीर्णात्पापविनाशः। बृहस्पतौ सिंहगे गोदावरी, कन्यागते च कृष्णा, तुलागते तुङ्गभद्रा, कर्कटस्थे मलापहा च गङ्गायुक्ता भवेत्। तदा तत्र स्नानादिना ब्रह्महत्याद्यघनाशः ॥५७-६४॥ भीमाकृष्णायोगे स्नानाच्छुद्धिः षष्टिजन्मसु विप्रत्वं। तुङ्गभद्रासङ्गमे ततस्त्रिगुणं पुण्यम्। निवृत्तिसङ्गमे चतुर्गुणम्। पातालगङ्गास्नानं मल्लिकार्जुनदर्शनं च षड्गुणफलम्। न पुनर्जन्म च ॥६५-६७॥

युगालयं द्विघ्नपुण्यं कावेरीसिन्धुसङ्गमः ॥
पुण्यं पञ्चदशगुणः कृष्णाऽब्ध्योरमितः स्मृतः ॥ ६८ ॥

महानदी ताम्रपर्णी महापुण्यप्रदाऽऽप्लवात् ॥
कृतमालानदी चापि सर्वपापापहारिणी ॥ ६९ ॥

पयस्विनीनदी श्रेष्ठा तथैव भवनाशिनी ॥
सर्वपापापहृच्चैव समुद्रस्कंददर्शनम् ॥ ७० ॥

शेषाद्रिः श्रीरङ्गनाथः पद्मनाभस्तथैव च ॥
पूज्यः श्रीमदनन्तश्च मल्लिकार्जुन उत्तमः ॥ ७१ ॥

समस्ततीर्थैः समानं कुम्भकोणं सुपुण्यदम् ॥
कन्याकुमारिकामत्स्यतीर्थस्नानाच्च तारकम् ॥ ७२ ॥

पक्षितीर्थं च रामेशधनुष्कोटयाख्यतीर्थकम् ॥
रङ्गनाथसमीपं च कावेरीतीर्थमुत्तमम् ॥ ७३ ॥

पुमुत्तमश्चन्द्रकुण्डं महालक्ष्मीपुरं महत् ॥
स्मृता दक्षिणकाशीति करवीरपुरं परम् ॥ ७४ ॥

युगालयं द्विगुणपुण्यम्। कृष्णाब्धिसङ्गमे कावेरीसिन्धुसङ्गमे च पुण्यं पञ्चदशगुणम्। ताम्रपर्णी महापुण्या। कृतमाला सर्वपापहरा। पयस्विनी भवहरा। सर्वपापहृत्समुद्रस्कन्ददर्शनं च ॥६८-७०॥ शेषाद्रिः श्रीरङ्गनाथः पद्मनाभः श्रीमदनन्तो मल्लिकार्जुनश्च पूज्यः। सर्वतीर्थफलदं कुम्भकोणम्। कन्याकुमारी, मत्स्यतीर्थं, पक्षितीर्थं, रामेश्वरधनुष्कोटितीर्थं, रङ्गनाथसमीपे कावेरीतीर्थम् ॥७१-७३॥ पुरुषोत्तमश्चन्द्रकुण्डं च पापहृत्।

महाबलेश्वरः श्रेष्ठो यत्र कृष्णासमुद्भमः ॥
पुण्यं रामेश्वरस्थानं कृष्णातीरे सुपावनम् ॥ ७५ ॥

कोल्हाग्रामो महापुण्यो यत्र देवो नृसिंहकः ॥
सदाशिवः परात्मा च स च प्रत्यक्ष ईश्वरः ॥ ७६ ॥

कृष्णातटे भिल्लवाटीह शक्तिर्भुवनेश्वरी ॥
तपस्तपति यस्तत्र स ईश्वरकलामियात् ॥ ७७ ॥

वरुणासङ्गमोऽघघ्नस्ततोऽग्रत उदाहृतः ॥
गच्छतात्र स्नानमात्रान्मार्कण्डेयसमानता ॥ ७८ ॥

अत्युत्तमस्ततः कृष्णातीरे ऋष्याश्रमो महान् ॥
स्नानाज्ज्ञानी भवेत्तत्र कृष्णायां नैव संशयः ॥ ७९ ॥

कृष्णावेणीपञ्चनदीसङ्गमोऽथामरे पुरे ॥
माघस्नानात्प्रयागाधिपुण्यं नित्यमपीदृशम् ॥ ८० ॥

तपस्तप्त्वाऽपि मुनयः सिद्धिं याता इहैव हि ॥
क्षेत्रं निरुपमं चैतत्सर्वतीर्थानि चात्र तु ॥ ८१ ॥

लक्ष्मीपुरं करवीरं दक्षिणकाशी। यत्र कृष्णोद्गमस्तत्र महाबलेशः। ततः पुण्यं रामेशतीर्थं पावनम्। पुण्ये कोल्हाग्रामे नृसिंहदेवः प्रत्यक्षः परात्मा सदाशिवश्च ॥७४-७६॥ कृष्णातीरे शक्तिर्भुवनेश्वरी तत्र तपसेश्वरसाम्यम्। वरुणासङ्गमः पापहृत्तत्र स्नानान्मार्कंडेयसाम्यम्। अमरपुरे कृष्णावेणीपञ्चगङ्गासङ्गमोऽत्र माघस्नानात्प्रयागाधिपुण्यम्। अत्र मुनयस्तपस्तप्त्वा सिद्धिं याता अत्र च सर्वतीर्थानीदं भुवि ख्यातम्। त्र्यह-

इदं क्षेत्रं भुवि ख्यातमनुष्ठानात् त्र्यहं त्विह ॥
नरो लब्धाखिलाभीष्टः परमार्थं लभेद्द्रुतम् ॥ ८२ ॥

ततो युगालयं तीर्थं दर्शनादेव मुक्तिदम् ॥
ततः शूर्पालयं तीर्थं परमं पावनं स्मृतम् ॥ ८३ ॥

विश्वामित्रमुनेः स्थानं पावनं भगवत्यपि ॥
तथा मलापहाकृष्णासङ्गमः सर्वदोषहा ॥ ८४ ॥

ऋषिस्तु कपिलः साक्षाद्विष्णुमूर्तिस्तदाश्रमः ॥
महातीर्थं ततो यत्र कृष्णा चोत्तरवाहिनी ॥ ८५ ॥

महाक्षेत्रं ततो यत्र कृष्णा चोत्तरवाहिनी ॥
एकवारं मन्त्रजपात्कोटिजाप्यफलं लभेत् ॥ ८६ ॥

केदारेश्वरतीर्थं च ततः पीठापुरं त्विह ॥
दत्तात्रेयो महादेव आस्ते नित्यं सनातनः ॥ ८७ ॥

ख्यातं ततो महातीर्थं वरो मणिगिरिस्त्विह ॥
बहुकालं तपस्तेपुर्धन्याः सप्तर्षयोऽमलाः ॥ ८८ ॥

ज्ञानादखिलार्थलब्धिः ॥७७-८२॥ ततो युगालयं दर्शनान्मुक्तिदम्। ततः पावनं शूर्पालयं च। तथा विश्वामित्रस्थानं यत्र भगवती मलापहा कृष्णासङ्गमः सर्वदोषहरः। ततः कपिलाश्रमः यत्र कृष्णोत्तरवाहिनी तत्र महातीर्थं एकमन्त्रजपात्कोटिफलम्। ततः केदारतीर्थं। ततः पीठापुरं यत्र दत्तात्रेय आस्ते। ततो महातीर्थं मणिगिरिर्यत्र सप्तर्षयस्तपस्तेपुः।

ऋषभाद्रिर्महापुण्यः कल्याणनगरं तथा ॥
तत्र तीर्थनिषेवी यः स भूयो नैव जन्मभाक् ॥ ८९ ॥

षष्टियज्ञफलं चाहोबलदर्शनतो नृणाम् ॥
श्रीरङ्गदर्शनाच्चापि न पुनर्जननं नृणाम् ॥ ९० ॥

भजताशेषतीर्थानि भूमिष्ठानि विधानतः ॥
रजस्वला यदि नदी स्नानाद्दोषस्तदा भवेत् ॥ ९१ ॥

आरभ्य कर्कसंक्रान्तिं रवेर्मासद्वयं त्यजेत् ॥
नदीतीरस्थितानां तु नैष दोषो विशेषतः ॥ ९२ ॥

वर्षाकाले विशेषेण सर्वा नद्यो रजस्वलाः ॥
रजोदोषे तु सम्प्राप्ते त्र्यहं स्नानादि वर्जयेत् ॥ ९३ ॥

भागीरथी चन्द्रभागा तथा सिंधुश्च गौतमी ॥
नर्मदा शरयूश्चासां न स्नानं रजसि त्र्यहम् ॥ ९४ ॥

ग्रीष्मेऽतीते सर्वनद्यो दशाहं हि रजस्वलाः ॥
वापीकूपतडागाद्या अहोरात्रं रजस्वलाः ॥ ९५ ॥

ऋषभाद्रिर्महापुण्यः। कल्याणनगरं मुक्तिदम्। अहोबलदर्शनं षष्टियज्ञफलम्। श्रीरङ्गदर्शनान्न पुनर्जन्म ॥८३-९०॥ एवं विधिना तीर्थानि भजत। यदा रजस्वला नदी तदा स्नाने दोषः ॥ ९१ ॥ कर्कसंक्रान्तिमारभ्य मासद्वयं नदीतीरस्थान्विनाऽन्येषां नदीस्नाने दोषः। वर्षाकाले सर्वा नद्यो रजस्वलास्तदा त्र्यहं न स्नानादि। भागीरथीचन्द्रभागासिन्धुगौतमीसरयूनर्मदानां त्र्यहं रजः। वर्षासु सर्वासां दशाहं

नदी रजस्वला ज्ञेया यद्दिने नूतनोदकम् ॥
तदा स्नानान्महादोषस्ततो वर्ज्यं पुरोक्तवत् ॥ ९६ ॥

एष साधारणः पक्षः कथितस्तीर्थ[1]सेवने ॥
स्नानक्षौरोपवासादिविधिमाचरतेक्षणात् ॥ ९७ ॥

इति श्रुत्वा श्रीगुरूक्तिं मतिं कृत्वा दृढां नतिम् ॥
कृत्वोचुः कामधुक्ते वागित्युक्त्वा ते ययुस्तथा ॥९८॥

गुरूक्तिं ते गुरूकृ[2]त्य प्रययुर्नामधारक ॥
अप्रकाशतया तस्थौ श्रीगुरुः सेवकस्त्वहं[3]म् ॥ ९९ ॥

इतोऽग्रतः काथसारं श्रोतॄणां सुमनोहरम् ॥
सर्वेष्टदं वक्ति गङ्गाधरपुत्रः सरस्वती ॥ १०० ॥

क्षणे क्षणे ब्रह्मरसानुसेवी
हातुं क इच्छेद्रुचिमस्य भा[4]वी
रुचिं रसानां रसिकस्त्यजेत्किं
त्वीदृक्परार्थोऽन्यरसो भवेत्किम् ॥ १०१ ॥

रजस्वलात्वं वापीकूपतडागानामहोरात्रम्। यद्दिने नवोदकं तद्दिने रजस्वलात्वम्। तदा स्नानान्महादोषः। न तीरस्थानाम्। एष साधारणो विधिः कथितः। विधिना तु क्षौरस्नानोपवासादि कार्यम्। इति श्रुत्वा सर्वे गुरुं नत्वा गुरुवाक्कामधेनुरित्युक्त्वा ते जग्मुः। मया तु सेवार्थं श्रीगुरुसन्निधौ स्थितिः कृता। इतः परं मनोहरं चरित्रं तत्सरस्वती

---

१ तीर्थदर्शनात् २ प्रसादरूपेण सत्कृत्य ३ अहं तु सेवको भूत्वा तदग्रे स्थितोऽभवं ४ भाविकः.

गुरुचरित्रमिदं खलु कामधुक् श्रवणलालसनापरकामधुक् ॥
इत उतापि समग्रपुंमर्थदं[1] शृणुत चित्रचरित्रमनर्थदम्[2] ॥ १०२॥

(इति) श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्यगङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञितमहाराष्ट्रभाषान्वितगुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वतीयतिविरचितायां श्रीगुरुसंहितायां ज्ञानकाण्डे पंचदशः (अध्यायः) ॥

॥ आदितः श्लोकाः ॥ १७८० ॥

वक्ष्यति ॥९२-१००॥ क्षणे क्षणे व्र० ॥ गुरुचरित्रमिदं० ॥ १०१-१०२ ॥ इति चूर्णिकायां पंचदशोऽध्यायः ॥

॥ इति पंचदशोऽध्यायः ॥ १५ ॥

---

१ सर्वपुरुषार्थदं २ अनर्थहरं.

## ॥ अथ षोडशोऽध्यायः ॥ १६ ॥

॥ श्रीदत्तात्रेयाय नमः ॥

श्रीः ॥ विनयावनतः प्राह सच्छिष्यो नामधारकः ॥
स्वामिन्गुरुचरित्रं मे सिद्धयोगिन्वदाग्रतः ॥ १ ॥

यात्रार्थे के गताः शिष्याः सेवार्थे केऽवशेषिताः ॥
गुरुणा स्वांतिकं सिद्ध कथयस्वाग्रतः कथाम् ॥ २ ॥

इति शिष्यवचः श्रुत्वा तुष्टः सिद्धमुनिर्जगौ ॥
नामधारक धन्योऽसि गुरुभक्तशिखामणे ॥ ३ ॥

मायया तन्द्रितं चित्तं गुरुचर्चाद्यभावतः ॥
बुद्धं प्रश्नेन ते लब्धं सुखं मे चरितं स्मृतेः ॥ ४ ॥

मम प्राणसखस्त्वं हि सच्छिष्यो नामधारक ॥
त्वद्योगान्मे सुखं लब्धं चरितं स्मृतमादितः ॥ ५ ॥

अध्यायसारसंग्रहश्लोकोऽयम्—

षोडशे गुरुरथोद्धतात्मने धौम्यशिष्यचरितोपदेशतः ॥
ब्राह्मणाय विदमर्पयद्गुरुद्रोहिणेऽलमनुतप्तचेतसे ॥ १ ॥

श्रीः ॥ विनतो नामधारक आह। स्वामिन्नग्रतो गुरुचरित्रं वद। यात्रार्थं के गताः सेवार्थं के स्थितास्तद्वद। इति श्रुत्वा तुष्टः सिद्ध आह ॥१-३॥ हे भक्तचूडामणे, मच्चित्तं निद्रितमपि ते प्रश्नेन बुद्धं, सुखं लब्धं, त्वं मे प्राणसखः सच्छिष्यः, त्वद्योगादादितश्चरितं स्मृतम् ॥ ४-५ ॥

श्रान्तः संसृतितापेन कष्टेनाहं सुपीडितः ॥
त्वयाऽमृतकथासिन्धौ प्रक्षिप्तः शान्ततां गतः ॥ ६ ॥
त्वयाऽद्योपकृतं[1] साधु सन्तुष्टो मनसा भृशम् ॥
नन्दते ते कुलं पुत्राद्यैर्दैन्यं द्वारि नैव ते ॥ ७ ॥
गुर्वनुग्रहबालस्त्वं लोके मान्यो भविष्यसि ॥
सन्देहो माऽस्तु हस्तं मे वह[2] स्याः[3] सर्वभूतियुक् ॥८॥
विस्तराद्वच्मि चरितं श्रीगुरोः कामधुग्वरम् ॥
अप्रकाशतया तस्थौ गुरुर्वैद्येशसन्निधौ ॥ ९ ॥
तीर्थाटनाय शिष्यास्ते गता गुर्वाज्ञया यदा ॥
तदाऽहमभवं श्रीमत्पादसेवापरोऽनिशम् ॥ १० ॥
संवत्सरं वैद्यनाथे रहोऽब्दं सद्गुरुः स्थितः ॥
यत्रारोग्यभवान्यम्बा तत्स्थानं सुमनोहरम् ॥ ११ ॥
आगतो ब्राह्मणः कश्चित्सद्गुरौ तत्र तिष्ठति ॥
विलोक्य श्रीगुरुं भक्त्या साष्टाङ्गं प्रणनाम ह ॥ १२ ॥

पर्यटनेन श्रान्तं मां त्वं कथामृताब्धिमध्ये क्षिप्तवानासि। शान्तोऽभवं। त्वया साधूपकृतम्। भृशं तुष्टोऽस्मि। पुत्राद्यैस्ते कुलं नन्दते। ते द्वारि न दैन्यम् ॥ ६-७ ॥ गुर्वनुग्रहपात्रस्त्वं लोकमान्यो भविष्यसि। सन्देहो माऽस्तु। हस्तं गृहाण ॥ ८ ॥ कामधुक्चरित्रं विस्तराद्वच्मि। वैद्येश्वर-समीपेऽप्रकाशतया श्रीगुरुस्तस्थौ। शिष्यास्तीर्थाटनाय गताः। अहं पादसेवापरोऽभवम्। यत्रारोग्यभवानी तत्र वैद्यनाथेऽब्दपर्यन्तं गुरु-स्तस्थौ। तत्रैको ब्राह्मण एत्य भक्त्या गुरुं साष्टाङ्गं नत्वा पादयोः शीर्षं

१ उपकारः २ हस्तं गृहाण ३ भव.

विन्यस्य पादयोः शीर्षं स्तुत्वा स्तोत्रैरनेकशः ॥
अज्ञानाब्धौ निमग्नं मां स्वामिंस्तारय तारय ॥ १३ ॥
तपस्तप्तं बहुदिनं मनोऽद्यापि न मे स्थिरम् ॥
न ज्ञायते किमपि मे सन्मार्गो नापि दृश्यते ॥ १४ ॥
ज्ञानं विना तु तपस आयासो व्यर्थ एव हि ॥
भवतो दर्शनादद्य प्रहृष्टं मम मानसम् ॥ १५ ॥
बहुकालं न हि कृता गुरुसेवाऽत एव किम् ॥
न ज्ञायते मनःस्थैर्यं स्वामिञ्जाने न कारणम् ॥ १६ ॥
त्वं विश्वतारको देवः सद्गुरो मामुपादिश ॥
तवोपदेशतो ज्ञानं सत्वरं मे भविष्यति ॥ १७ ॥
इति श्रुत्वा मुनिवचः पप्रच्छ श्रीगुरुर्हसन् ॥
कथं मुने तपस्तप्तं त्वया वद गुरुं विना ॥ १८ ॥
गुरुमूर्तिवचः श्रुत्वा मुञ्चन्नश्रूणि नेत्रतः ॥
उवाच दुःखितः स्वामिन्गुरुनाथ शृणुष्व मत्[1] ॥ १९ ॥

निधायाह । अज्ञानाब्धौ मग्नं मां तारय ॥ ९-१३ ॥ बहुकालं तपस्तप्तं नाद्यापि मे मनः स्थिरम् । सन्मार्गो न दृश्यते । ज्ञानं विनाऽऽयासो व्यर्थ एव । भवद्दर्शनान्मे चित्तं हृष्टम् । मनःस्थैर्याभावे किं कारणं न जाने । त्वं तारको देवः । सद्गुरो, मामुपादिश । ततो मे सत्वरं ज्ञानं भविष्यति ॥१४-१७॥ श्रीगुरुर्हसंस्तं पप्रच्छ । मुने, गुरुं विना त्वया कथं तपस्तप्तं वद । तच्छ्रुत्वा सोऽश्रु मुञ्चन्दुःखित आह । स्वामिन्, शृणु ।

---

१ मत्तः सकाशात्.

कश्चिन्मम गुरुश्चण्डो[1]ऽत्यन्तनिष्ठुरभाषणः ॥
पीडयामास मां सेवां कथयामास दुष्कराम् ॥ २० ॥
वेदं शास्त्रं व्याकरणं तर्कं भाष्यमथापि न ॥
शशंस[2] शश्वदूचे मां मनो नाद्यापि ते स्थिरम् ॥ २१ ॥
आदिदेश पुनः सेवां ततो मे न स्थिरं मनः ॥
जातं निष्ठुरवाक्यं तं कोपात्त्यक्त्वाऽऽगतोऽस्म्यहम् २२
नाश्रुतं तस्य वाक्यं मे ततो मे कुपितो भृशम् ॥
एवं ममाभूत्सुकष्टं ततस्त्यक्तः स मे गुरुः ॥ २३ ॥
गुरुमूर्तिरिति श्रुत्वा प्रहसन्प्राह तं द्विजम् ॥
अहहा ब्राह्मण कथं त्वं जातोऽस्यात्मघातकः ॥ २४ ॥
यथा मूढनरः कृत्वा देवागारे मलोत्सृतिम् ॥
अदृष्टमीदृङ्ममेति ब्रवीति शपतो यथा ॥ २५ ॥
तादृक्त्वमात्मनः कर्णौ नासां छित्त्वाऽग्रतो व्रजन् ॥
व्रजतां चापशकुनं कर्ता त्वमिति मे मतिः ॥ २६ ॥

कश्चिन्मे गुरुश्चण्डोऽत्यन्तनिष्ठुरः दुष्करसेवां कथयन्मामपीडयत्। वेदशास्त्रभाष्यादिकं नाकथयत्। शश्वन्मामाह। नाद्यापि ते मनः स्थिरम् ॥१८-२१॥ इत्युक्त्वा सेवामादिशत्। तद्वचो मे न श्रुतम्। ततः स मे कुपितः। क्रूरवाक्यं तं त्यक्त्वाऽऽगतोऽस्मि। श्रीगुरुर्हसन्नाह अहहा कथं त्वमात्मघातको जातोऽसि। कश्चिन्मूढो देवालये मलमुत्सृज्य शपंतमाह। मेऽदृष्टमिति। तादृक्त्वं स्वनासाकर्णौ छित्त्वाऽन्यान्दुःशकुनं

१ अत्यंतकोपनः २ कथयामास.

कथं लभेत्तव ज्ञानमविज्ञायागुणान्निजान् ॥
गुरुं निन्दसि दुर्बुद्धे गुरुद्रोही त्वमेव हि ॥ २७ ॥

सन्निधानं निधानं त्वं हित्वाऽरण्यं किमिच्छसि ॥
कामधेनुं गुरुं त्यक्त्वा ब्राह्मण त्वं क धावसि ॥ २८ ॥

स्वमुखात्स्वगुरोर्दोषान्हर्षाद्ब्रूषे कथं सदा ॥
कुतो भवेन्मनःस्थैर्यं ज्ञानलाभोऽपि वा कुतः ॥ २९ ॥

गुरुद्रोहिनरस्येह सुखं नापि परत्र च ॥
कुतो ज्ञानं भवेत्तस्य योऽज्ञानध्वान्तसंवृतः ॥ ३० ॥

गुरुसेवापद्धतिं यो वेद वेदादि वेद सः ॥
सर्वज्ञत्वं लभेत्तस्य सन्तुष्टो येन सद्गुरुः ॥ ३१ ॥

तोषिते सद्गुरौ चाष्टसिद्धयो यान्ति वश्यताम् ॥
वेदशास्त्रादिकं सर्वं सुलभं क्षणमात्रतः ॥ ३२ ॥

इति श्रुत्वा गुरोर्वाक्यं शीर्षं विन्यस्य तत्पदे ॥
विनीतो दीनवचनो गुरुदृष्टिहताशुभः ॥ ३३ ॥

करोषि। गुरोरवज्ञया कथं ज्ञानं भवेत्। गुरुद्रोही त्वं गुरुं निंदसि। निधानं त्यक्त्वाऽरण्यमिच्छसि किं। कामधेनुं त्यक्त्वा क धावसि। स्वमुखाद्गुरोर्दोषान्ब्रूषे। कुतो मनःस्थैर्यं ज्ञानलाभो वा। गुरुद्रोहिणोऽत्र परत्र च न सुखम्। कुतोऽस्याज्ञस्य ज्ञानम् ॥ २२-३० ॥ गुरुसेवा-मार्गं यो वेत्ति स वेदादिकं वेद। गुरौ तुष्टे सर्वज्ञत्वम्। अष्टौ सिद्धयो वश्यतां यान्ति। वेदादिकं च क्षणात्सुलभम्। द्विज इति श्रुत्वा गुरुदृष्टि-

द्विज ऊचे जय जय ज्ञानाब्धे पारसद्गुरो ॥
निर्गुणो निर्विकारस्त्वं मामुद्धर सुदुर्मतिम् ॥ ३४ ॥
स्वरूपं सद्गुरोर्जाने न मायाजालवेष्टितः ॥
कृपां कुरु मयि स्वामिस्ततो ज्ञानं भविष्यति ॥ ३५ ॥
आदौ गुरुः कथं ज्ञेयः कथं सेवाविधिर्गुरोः ॥
गुरुमूर्ते विश्ववन्द्य सर्वमेतत्प्रकाशय ॥ ३६ ॥
मनो मे स्यात्स्थिरं येन जानीयां श्रीगुरोर्गतिम् ॥
कुर्वीदृशं तूपकारमित्युक्त्वा तत्पदेऽग्रहीत् ॥ ३७ ॥
इति श्रुत्वा सकरुणं गुरुनाथस्तुतोष ह ॥
विस्तरेणाब्रवीत्तस्मै गुरुसेवाविधानकम् ॥ ३८ ॥
मुने श्रृणुष्व वक्ष्यामि जननी जनको गुरुः ॥
हितकर्तोपदेष्टा च स गुरुः परमो मतः ॥ ३९ ॥
साक्षाद्गुरुर्ब्रह्मविष्णुशिवरूपी न संशयः ॥
सावधानं मनः कृत्वा सेवा कार्याऽस्य यत्नतः ॥४०॥

हताशुभो नम्रः सन्नाह । ज्ञानाब्धे सद्गुरो, जय । त्वं सुदुर्मतिं मामुद्धर । मायाजालवेष्टितोऽहं गुरुरूपं न जाने । कृपां कुरु । ततो ज्ञानं भविष्यति । आदौ गुरुः कथं ज्ञेयः, कथं वा तत्सेवाविधानं, तत्सर्वं प्रकाशय । येन मे मनः स्थिरं स्याद्गुरुगतिं जानीयामीदृशमुपकारं कुर्विति पादौ दधौ ॥३१-३७॥ ततः सदयो गुरुनाथस्तुष्ट आह । मुने, श्रृणु । वक्ष्ये । जननी पिता हितकर्तोपदेष्टा च गुरुः ॥३८-३९॥ विद्याप्रदो गुरुः साक्षाद्ब्रह्मविष्णुशिवरूपी न संशयस्तत्सेवा कार्या । तदर्थं भारतोक्तां कथां श्रृणु ।

एतदर्थं कथामेतां कथयिष्यामि ते शृणु ॥
गुरुसेवाभक्तिरुक्ता भारते चादिपर्वणि ॥ ४१ ॥

द्वापरेऽभून्महाबुद्धिर्विप्रर्षिर्धौम्यनामकः ॥
आसंस्तस्य त्रयः शिष्या वेदाभ्यासपरायणाः ॥ ४२ ॥

आद्योऽरुणोऽभूत्पाश्चालो द्वितीयो बैदनामकः ॥
तृतीय उपमन्युश्च गुरुसेवापरायणाः ॥ ४३ ॥

प्राग्गुरूणामियं रीतिः सेवामादाय शिष्यतः ॥
अन्तःकरणशुद्ध्यर्थं परीक्षार्थं च सूरताः ॥ ४४ ॥

ज्ञात्वाऽन्तःकरणं सम्यग्भक्तिमात्मनि ते दृढाम् ॥
कृपां कुर्वन्ति सहसा सर्वकामप्रपूरणीम् ॥ ४५ ॥

तादृग्धौम्यो मुनिश्रेष्ठः शिष्यं सोऽरुणमेकदा ॥
स्वसेवानिरतं धीरमाहूयेदं जगौ द्विजम् ॥ ४६ ॥

शृणुष्वारुण भोः शिष्य गत्वाऽद्य त्वं त्वरान्वितः ॥
क्षेत्रमातृप्तिपर्यन्तं सरसो जलमानय ॥ ४७ ॥

द्वापरे महामतिर्धौम्यर्षिः तस्य वेदाभ्यासरतास्त्रयः शिष्याः गुरुसेवारता अरुणबैदोपमन्युसंज्ञाः। मनःशुद्ध्यर्थं परीक्षार्थं च पूर्वं सेवा ग्राह्येति गुरूणां रीतिः। ततः शुद्धान्तःकरणं दृढभक्तिं च ज्ञात्वा सहसा कृपां कुर्वन्ति। तादृशो धौम्यगुरुः स्वसेवारतमरुणमाहूयाह। हे शिष्य, त्वरया क्षेत्रं गत्वा क्षेत्रतृप्तिपर्यन्तं सरसो जलमानय। जलं विना सस्यं

क्षेत्रं मदीयं शालेयं यत्नात्पानीयमानय ॥
सस्यं मरिष्यति न चेत्ततोम्बु द्रुतमानय ॥ ४८ ॥
इति विज्ञापितः शिष्यः क्षेत्रमागत्य सत्वरम् ॥
आनयामास निर्माय कुल्यां वारि तडागतः ॥ ४९ ॥
गर्जमानोऽम्बुप्रवाहो गच्छति स्मान्यतो द्रुतम् ॥
औन्नतां[1] क्षेत्रभूमिं तां प्रवाहो न गतोऽम्बुनः ॥ ५० ॥
उवाच स्वगतं शिष्यः कुप्येत श्रीगुरुर्हि मे ॥
उदकं त्वन्यथा याति किं कर्तव्यमतः परम् ॥ ५१ ॥
इत्युक्त्वाऽऽनीय पाषाणान्बबन्ध क्षीरवारणम् ॥
पाषाणान्दूरतस्त्यक्त्वा प्रवाहोऽन्यत्र निर्ययौ ॥ ५२ ॥
यत्नं नानाप्रकारेण चकारापि न वारि तत् ॥
क्षेत्रं गतं स च प्राह श्रीहरे किं करोम्यतः ॥ ५३ ॥
ततो विचार्य मनसि क्षेत्रं नायाति चेज्जलम् ॥
प्राणांस्त्यक्ष्यामि वा अत्र गुरुवृत्तिनिमित्ततः ॥ ५४ ॥

मरिष्यति। ततः शालेयक्षेत्रं द्रुतं जलमानय ॥४०-४८॥ इत्याज्ञप्तः शिष्यः सत्वरं गत्वा कुल्यां निर्माय तडागतो जलमानयत्। गर्जमानो जलप्रवाहोऽन्यत्र गतः। तदा शिष्यः स्वगतमाह। गुरुः कुप्येत, जलमन्यत्र याति, किं कर्तव्यमित्युक्त्वाऽश्मभिर्वारिवारणं बबन्ध ॥४९-५१॥ पाषाणान्दूरतस्त्यक्त्वा प्रवाहोऽन्यत्र गतोऽनेकयत्नैर्जलं क्षेत्रं न यातम्। तदा श्रीहरे, किं करोमि जलं क्षेत्रं न याति चेद्गुरुवृत्त्यर्थं प्राणांस्त्यक्ष्ये।

१ ईषदुच्चां.

इति निश्चित्य मनसा ध्यायञ्छ्रीगुरुमात्मनः ॥
प्रयत्नान्तरतो नेष्ये इति निश्चित्य बुद्धिमान् ॥ ५५ ॥

अत्र प्रवाहे पाषाणा न तिष्ठन्त्यपि तत्र तु ॥
देहो मदीयः संस्थाप्यस्ततोऽम्बु क्षेत्रमेष्यति ॥ ५६ ॥

इति निश्चित्य सञ्चिन्त्य श्रीगुरुं मध्यतो जलम् ॥
देहं संस्थापयामास कुल्या[1]तटसुघट्टितम् ॥ ५७ ॥

निर्विण्णे तत्क्षणे त्वर्णस्तूर्णं शिष्यशिरोमणौ ॥
प्रवाहार्धजलं क्षेत्रे प्रविवेश सुवेगतः ॥ ५८ ॥

प्रवाहार्धोऽन्यथा यातः शिष्यस्तन्मध्यतः स्थितः ॥
निमग्नोऽपि जले शिष्यो गुरुकार्यार्पितात्मकः ॥ ५९ ॥

एवं जले निमग्नेऽस्मिन्प्रवाहार्धजलं त्वलम् ॥
क्षेत्रे बभूव नितरां तदा धौम्यमुनेर्गुरोः ॥ ६० ॥

ततो धौम्यगुरुः प्राप्य क्षेत्रं दृष्ट्वा जलान्वितम् ॥
बभूवात्यन्तसन्तुष्टः पर्याप्तजलवीक्षणात् ॥ ६१ ॥

यत्र पाषाणा न तिष्ठन्ति तत्र मे देहः स्थाप्यस्ततोऽम्बु क्षेत्रमेष्यतीति निश्चित्य गुरुं ध्यात्वा जलमध्ये देहं स्थापयामास ॥५२-५७॥ कुल्यातटयोः शिरः पादौ च संस्थाप्य तस्मिन्स्थिते प्रवाहार्धजलं क्षेत्रं गतम्। अर्धजलमन्यतस्तन्मध्ये निर्विण्णो गुरुकार्यार्पिताङ्गो जलमग्नः स्थितस्तदा प्रवाहार्धजलेन क्षेत्रं पूर्णम्। ततो धौम्यः क्षेत्रं जलपूर्णं दृष्ट्वा

---

१ कृत्रिमा नदी.

जातः सूर्यास्तसमयः शिष्योऽद्यापि न चागतः ॥
इति खिन्नान्तरो धौम्यो मार्गयामास तं तदा ॥६२॥

इतस्ततस्तमन्वेष्य नापश्यत्स तदाऽवदत् ॥
श्रान्तो जलनिमित्तं स व्याघ्रैर्वा भक्षितो न किम् ६३

इत्थमुक्त्वाऽऽह्वयामास रे शिष्या हे सखे इति ॥
दीर्घस्वरेण चाहूय सोऽभवत्प्रेमविह्वलः ॥ ६४ ॥

एवं सकरुणाह्वानवाक्यमुच्चैः स सद्गुरोः ॥
शिष्यकर्णेऽपतद्यत्नादुत्तस्थौ स शनैस्ततः ॥ ६५ ॥

स एत्य श्रीगुरुपदे ववन्दे भक्तिभावतः ॥
सर्वं श्रुत्वा समालिंग्य समाश्वास्य जहर्ष सः ॥ ६६ ॥

वरं दास्यन्नुवाचैष शिष्यस्तोमशिरोमणे[1] ॥
वेदशास्त्रव्याकरणविद्याज्ञस्त्वं भवाधुना ॥ ६७ ॥

सन्तुष्टो विचारयामास। सूर्यास्तसमयो जातः शिष्यो न दृश्यत इति खिन्न इतस्ततोऽन्वेष्य जलनिमित्तं श्रान्तः शिष्यो व्याघ्रादिभिर्भक्षितो न किम्। इत्युक्त्वा हे सखे २ शिष्या २ इति प्रेमविह्वलो दीर्घस्वरेणाह्वयामास। तत्सकरुणमाह्वानमुच्चैः श्रुत्वा यत्नाच्छनैरुत्थायागत्य भक्त्या गुरुपदे ववन्दे। धौम्यस्तमालिंग्य सर्वं श्रुत्वा हृष्टः ॥५८-६६॥ वरं दास्यन्नुवाच। हे शिष्यश्रेष्ठ, वेदशास्त्रविद्याज्ञो भवेत्युक्तस्तत्क्षणं विद्या-

---

१ समुदायः। शिखामणे इति क्वचित्पुस्तके पाठः.

विद्याज्ञानयुतस्त्वेवं गुरौ ब्रुवति तत्क्षणम् ॥
स जातो भक्तिसंयुक्तो जग्राह प्रपदे गुरोः ॥ ६८ ॥
कृपानिधिर्धौम्यमुनिस्तुष्टः प्राह निजालयम् ॥
गच्छ त्वं सदृशीं भार्यां समुद्वाह्य कृती भव ॥ ६९ ॥
इति प्रस्थापितः शिष्यो गृहं गत्वा तथाऽभवत् ॥
अवशिष्टौ ततो विप्र द्वौ शिष्यौ गुरुसन्निधौ ॥ ७० ॥
शिष्यो द्वितीयो बैदाख्यो गुरुशुश्रूषणे रतः ॥
तस्यान्तःकरणं ज्ञातुमिति धौम्यश्चकार सः ॥ ७१ ॥
एकदा शिष्यमाहूय धौम्यः प्राहाद्य पुत्रक ॥
गत्वा क्षेत्रमहोरात्रं क्षेत्ररक्षां समाचर ॥ ७२ ॥
वृत्तिं संरक्ष्य यत्नेन धान्यं सर्वं समानय ॥
इत्युक्तो हृष्टचित्तः स क्षेत्रं बैदो ययौ द्रुतम् ॥ ७३ ॥
यावत्पंक्[1]महोरात्रं कष्टेनैव ररक्ष सः ॥
धान्यराशिं वि[2]धायाथ प्राप्तः श्रीगुरुसन्निधिम् ॥ ७४ ॥

ज्ञानयुतो भूत्वा भक्त्या पादौ जग्राह । कृपाब्धिर्धौम्यस्तुष्ट आह । त्वमालयं गच्छ । सदृशीं भार्यामुद्वाह्य कृती भव । इति प्रस्थापितः शिष्यो गृहं गत्वा तथाऽभवद्द्वौ शिष्यौ गुरुसन्निधौ स्थितौ । द्वितीयो बैदाख्यः शिष्यो गुरुशुश्रूषारतस्तन्निश्चयं ज्ञातुं धौम्यस्तमाहूयाह । हे पुत्र, क्षेत्ररक्षां कृत्वा यत्नेन सर्वं धान्यं समानयेत्युक्तो हृष्टः स बैदो द्रुतं गत्वा यावत्पक्कमभूत्तावत्कष्टेन रक्षयित्वा धान्यराशिं विधाय गुरुमेत्याह ॥६७-

१ यावत्पक्कमभूत्तावत् २ कृत्वा.

शशंस गुरवे व्रीहिराशिः क्षेत्रे मया कृतः ॥
ततस्तं गृहमानेतुमाज्ञापयतु मां भवान् ॥ ७५ ॥
ततो धौम्यमुनिः प्राह साधु शिष्यशिरोमणे ॥
कृतं कार्यं सुकष्टेन धान्यं वेश्मानयाधुना ॥ ७६ ॥
इत्युक्त्वैकेन शकटं महिषेण युतं ददौ ॥
गुरुः प्राहाग्रतो गत्वा शीघ्रं धान्यं समानय ॥ ७७ ॥
तथेत्येकत्र महिषं नियोज्यैकत्र च स्वयम् ॥
धृत्वैकं शकटं नीत्वा क्षेत्रे विन्यस्य यत्नतः ॥ ७८ ॥
चत्वारिंशन्मणमिताञ्छालीनापूर्य शिष्यकः ॥
वाहयामास शकटं प्रयत्नेनैव पूर्ववत् ॥ ७९ ॥
द्रुतं जगाम महिषो न शशाक स्वयं तथा ॥
गन्तुं ततः स्वकण्ठे स योजयामास तद्युगम्[१] ॥ ८० ॥
स सत्रा[२] तेन सहसा जगाम महिषस्ततः ॥
मार्गे गर्ते निमग्नोऽभूत्स तदा वोढुमक्षमः ॥ ८१ ॥

७४॥ क्षेत्रे व्रीहिराशिः कृतः गृहमानेतुमाज्ञापय ॥ ७५ ॥ धौम्य आह । शिष्यशिरोमणे, कष्टेन साधु कृतम्। धान्यमानयेत्युक्त्वैकेन महिषेण युक्तं शकटं दत्त्वा शीघ्रं धान्यमानयेत्याह। स तथेत्येकत्र महिषं नियोज्यान्यत्र स्वयं धृत्वा यत्नाच्छकटं नीत्वा चत्वारिंशन्मणमिताञ्शालीनापूर्य यत्नेन शकटं वाहयामास। महिषो द्रुतं ययौ। स स्वयं तथा गन्तुमशक्तः स्वकण्ठे युगं योजयित्वा ॥७६-८०॥ तेन सह जगाम।

---

१ यानांगं २ तेन सार्धं.

गर्तमध्ये लुलाये स चिन्तयामास भूरिशः ॥
स्वयं वोढुं प्रवृत्तोऽपि पाशेनापीडयद्गले ॥ ८२ ॥

ततो विसृज्य महिषं धृत्वा च शकटं स्वयम् ॥
बलात्संवाहयामास मुमूर्षुरपतद्भरात् ॥ ८३ ॥

अत्रान्तरे धौम्यमुनिः प्रययौ तस्य संमुखम् ॥
शिष्यं तथाविधं दृष्ट्वा कृपया परयान्वितः ॥ ८४ ॥

शिष्यं कष्टान्मोचयित्वा समालिंग्यानुकम्पया ॥
प्रसन्नोऽदाद्वरं शिष्य भव त्वं वेदशास्त्रवित् ॥ ८५ ॥

सर्वविद्याप्रवीणोऽभूद्वरमात्रात्स तत्क्षणम् ॥
गेहाय प्रैरयत्सोऽपि गत्वा विख्यातिमागतः ॥ ८६ ॥

तृतीय उपमन्युस्तच्छिष्यः सेवापरायणः ॥
बहुशुश्रूषया नित्यमुपतस्थे स तं गुरुम् ॥ ८७ ॥

महिषः पंके मग्नोऽभूत्तदा शिष्यो वोढुमक्षमोऽभूत्तदा गर्ते महिषो निमग्नोऽभत् ॥८१-८२॥ बहुचिन्ताविष्टः शिष्यो महिषं विसृज्य बलात्संवाहयन्भारपीडितो मुमूर्षुरभूत्तदा धौम्यः संमुखमेत्य तथाविधं शिष्यं दृष्ट्वा कृपया शिष्यं सङ्कटान्मोचयित्वा प्रसन्नः शिष्यमालिंग्य वेदशास्त्रविद्भवेति वरं ददौ। स वरदानमात्रतोऽपि सर्वविद्याप्रवीणोऽभूत्तं गृहाय प्रैरयत्स गृहं गत्वा ख्यातोऽभवत् ॥८३-८६॥ तृतीय उपमन्युः शिष्यो गुरुसेवानिरतो विद्याभ्यासेऽस्थिरोऽभूत् बह्वाहारत्वादयमीदृश इति विचार्य

१ महिषे.

स बह्वाहार एवातो विद्याभ्यासेऽस्थिरोऽभवत् ॥
धौम्यो गुरुर्विचार्यैव तत्रोपायमयोजयत् ॥ ८८ ॥

एकदाऽऽहूय धौम्यर्षिरुपमन्युमुवाच ह ॥
नीत्वा गाः सुतृणारण्यं पालयंश्चारयान्वहम् ॥ ८९ ॥

इति श्रुत्वा गुरुमुनेर्वाक्यं नत्वा पदे गुरोः ॥
नीत्वा चिरं वनं गाः स चारयामास बालकः ॥९०॥

क्षुधितो गाः परावर्त्य सत्वरं गृहमानयत् ॥
तस्मै गुरुः प्रकुपितः प्राहानयसि किं द्रुतम् ॥ ९१ ॥

यावदस्तं गतः सूर्यो भवेत्तावद्धि चारय ॥
एवं दिने दिनेऽपि त्वं कुरु मद्वाक्यतस्त्विति ॥ ९२ ॥

तच्छिष्यराजोऽङ्गीकृत्य गा आदाय गतो वनम् ॥
तत्र भूत्वा क्षुधाक्रांतश्चिन्तयामास तं गुरुम् ॥ ९३ ॥

गाश्चारयन्नदीतीरे स्नात्वा संध्यामुपास्य च ॥
तत्र विप्रगृहान्दृष्ट्वा भिक्षां कर्तुं समुद्यतः ॥ ९४ ॥

धौम्य उवाच। गाः वनं नीत्वाऽन्वहं चारयेति श्रुत्वोपमन्युर्गुरुं नत्वा वनं नीत्वा गाश्चारयामास। क्षुधितो गाः परावर्त्य गृहमागतः। तस्मै गुरुश्चुकोप ॥८७-९१॥ कुतः शीघ्रमानयसि प्रत्यहं। सूर्यास्तमानपर्यन्तं प्रत्यहं गाश्चारयेत्युक्तोऽपि तथेत्यङ्गीकृत्य गा आदायापरेऽह्नि वनं गत्वा क्षुधितो गुरुं चिन्तयित्वा नदीतीरे स्नानं संध्यावन्दनं च कृत्वा तत्र विप्रगृहान्दृष्ट्वा गास्तृणे निरुध्य विप्रगृहे माधुकरीं भिक्षित्वा

निरुध्य गास्तृणे विप्रगृहे माधुकरं स च ॥
भिक्षित्वा सावधानः स भुक्त्वा गा अप्यचारयत् ९५

एवं प्रतिदिनं कृत्वा रक्षयित्वा स गा निशि ॥
समानयत्सुपुष्टोऽभूत्तं गुरुः पर्यपृच्छत ॥ ९६ ॥

वद शिष्योपवासी त्वं वनवासी च नित्यशः ॥
कथं पुष्टा तव तनुः कारणं तत्र किं वद ॥ ९७ ॥

इति श्रुत्वा गुरुवच उपमन्युरुवाच तम् ॥
भिक्षां विप्रगृहे तत्र कृत्वा गाश्चारयाम्यहम् ॥ ९८ ॥

एवं प्रतिदिनं कृत्वा सायमादाय गोधनम् ॥
एमीत्युक्तो गुरुः प्राह मां हित्वाऽश्नासि रे कथम् ९९

भिक्षित्वाऽऽनीय भिक्षां मे समर्प्य प्रत्यहं ततः ॥
गत्वा गाश्चारयित्वा त्वं समानय निशामुखे ॥ १०० ॥

स तथेति प्रतिश्रुत्य चारयामास गा वने ॥
याचितां गुरवे भिक्षां स आनीय न्यवेदयत् ॥ १ ॥

भुक्त्वा च गाश्चारयामास ॥९२-९५॥ एवं प्रत्यहं कृत्वा गाः रक्षयित्वा निश्यानयत्। पुष्टं तं दृष्ट्वा गुरुराह। त्वं नित्यं वने उपवासी। ते देहपुष्टेः कारणं किं वदेत्युक्तः शिष्य आह। प्रत्यहं वने विप्रगृहेषु भिक्षां कृत्वा गाश्चारयित्वा गोधनमादाय सायमेमीति श्रुत्वा गुरुराह। मां हित्वा कथमश्नासि। भिक्षामानीय प्रत्यहं मे दत्त्वा पुनर्गत्वा गाश्चारयित्वा सायं गामानयेति ॥९६-१००॥ स तथेत्युक्त्वाऽपरेऽह्नि गा वनं नीत्वा

कदाऽपि न गृहे तस्य परिपूर्णं हि भोजनम् ॥
अतः पुनश्च भिक्षित्वा भुक्त्वा शिष्यो ररक्ष गाः ॥२॥
द्विर्भिक्षित्वा स गुरवे पूर्वां दत्वाऽपरां स्वयम् ॥
बुभुजे प्रत्यहं त्वेवं कालक्षेपं चकार सः ॥ ३ ॥
एवं कालेन कियता तस्य स्थूलाऽभवत्तनुः ॥
पृच्छति स्मैकदा शिष्यं कृपालुः स गुरुः स्वयम् ॥४॥
शिष्यो निवेदयामास वृत्तान्तं क्षुत्प्रशामकम् ॥
द्विवारं ब्राह्मणगृहं भिक्षां याचाम्यहं गुरो ॥ ५ ॥
प्रथमां गृहमानीय दत्त्वा तुभ्यं ततः पराम् ॥
भिक्षितां भक्षयित्वा गाः प्रत्यहं चारयाम्यहम् ॥ ६ ॥
इति श्रुत्वा धौम्यमुनिः क्रुद्धस्तं प्राह शिष्य रे ॥
भिक्षां द्विवारमाहृत्य प्रत्यहं देहि मे शुभाम् ॥ ७ ॥
इत्युक्तो गुरुणा शिष्यस्तथेत्युक्त्वाऽन्वहं तथा ॥
भिक्षित्वा द्विर्ददौ क्लेशान्न मेने मनसाऽपि सः ॥ ८ ॥

नित्यवद्भिक्षित्वा गुरवे न्यवेदयत्। कदापि गृहे तस्य परिपूर्णं न भोजनम्। अतः पुनर्भिक्षित्वा भुक्त्वा गा अरक्षत्। एवं द्विर्भिक्षित्वैकां भिक्षां गुरवे निवेद्यान्यां स्वयं भुक्त्वा कालक्षेपं चक्रे। एवं कियता कालेन स्थूलं तं वीक्ष्य कृपया गुरुः स्वयं पप्रच्छ। शिष्य आह। क्षुच्छान्तये द्विवारं भिक्षित्वैकां भवते दत्त्वाऽपरां भुक्त्वा गाश्चारयामीति श्रुत्वा क्रुद्धो गुरुराह। रे शिष्य, द्विवारं भिक्षां मे देहीति। तथेति स द्विवारं भिक्षित्वा गुरवे ददौ। तादृशं क्लेशं न मेने।

एवं गोभिः सह वने सञ्चरन्क्षुधितः स तु ॥
ददर्श गलितं क्षीरं वत्सपीतावशेषकम् ॥ ९ ॥

प्राहेदं क्षीरमुच्छिष्टं व्यर्थं पतति भूतले ॥
पातुं योग्यं तु तन्मत्वा उपमन्युरुपागमत् ॥ ११० ॥

धावन्त्स गत्वा क्षुधितो बद्ध्वाऽपि दृढमञ्जलिम् ॥
वत्सपीतावशिष्टं तदुच्छिष्टं क्षीरमादधौ ॥ ११ ॥

पपौ तत्प्रत्यहं त्वेवं स स्वोदरमपूरयत् ॥
भक्त्या द्विवारं भिक्षित्वा भिक्षामपि ददौ गृहे ॥१२॥

जातस्तेनाधिकं पुष्टो दृष्ट्वा तत्पुष्टिमिष्टदः ॥
आलक्ष्य तच्छरीरं स प्राह पुष्टोऽभवत्कथम् ॥ १३ ॥

पुनः पप्रच्छ रे शिष्य कथं पुष्टो भवस्यहो ॥
स प्राह सर्ववृत्तान्तमुच्छिष्टक्षीरपानकृत् ॥ १४ ॥

तच्छ्रुत्वा स गुरुः प्राह मतिरुच्छिष्टपानतः ॥
हीयेत दोषा बहवस्तत्पानेऽतो न तत्पिब ॥ १५ ॥

॥ १०१-१०८ ॥ एवं गाश्चारयन्परेऽह्नि क्षुधितः वत्सपीतावशेषं गलितं क्षीरं दृष्ट्वा ॥ १०९ ॥ इदं पातुं योग्यं व्यर्थं भुवि पततीति मत्वा क्षुधितः सोऽञ्जलिं बद्ध्वा तत्क्षीरं पपौ । एवं स्वोदरमापूर्य द्विवारं भिक्षां गृहे ददौ । तेन पुष्टं तं दृष्ट्वा तच्छरीरमालक्ष्य गुरुः पप्रच्छ कथं पुष्टो भवसीति । ततस्तं न्यवेदयत् । गुरुराह । उच्छिष्टक्षीरपानान्मतिहा-

गुरुणा न पिबेत्युक्तो निराहारः क्षुधार्दितः ॥
अन्येद्युर्विपिनं गत्वा प्राह किं कार्यमद्य मे ॥ १६ ॥

इति चिन्तान्वितोऽरण्ये चारयन्गा ददर्श सः ॥
छिन्नपत्रार्कगलितं क्षीरं निपतितं भुवि ॥ १७ ॥

हृष्टोऽवददिदं दुग्धं नोच्छिष्टं तत्प्रयत्नतः ॥
पत्रेणादाय चाश्नामीत्युक्त्वा शिष्य उपाविशत् ॥ १८ ॥

पत्रमाच्छिद्य तत्क्षीरं पुटे धृत्वा स मूढधीः ॥
यावत्पातुं समारेभे तावन्नेत्रेऽपतत्तु तत् ॥ १९ ॥

नेत्रद्वयं ततो नष्टं बभ्राम स इतस्ततः ॥
जग्मुर्गाः क्वापि नापश्यच्चिन्तां प्राप दुरत्ययाम् १२०

नापि यष्टिः करे लब्धा चिन्ताग्रस्तः स हीनदृक् ॥
अन्वेष्टुं गोधनं यास्यन्वने कूपे पपात ह ॥ २१ ॥

स कूपे पतितः शिष्यश्चिन्तयामास सेऽधुना ॥
गावो गेहं गता भान्ति गुरुर्मां धिक्करिष्यति ॥ २२ ॥

निर्बहवो दोषाश्चातस्तन्न पिबेत्युक्तः क्षुधार्दितोऽन्येद्युर्वनं गत्वाऽद्य किं कार्यमिति चिन्तान्वितो गाश्चारयन् अर्कवृक्षाद्गलितं क्षीरं दृष्ट्वा नेदमुच्छिष्टं यत्नात्पत्रे गृहीत्वाऽश्नामीत्युपविश्य पर्णपुटे गृहीत्वा यावत्पातुमारेभे तावत्क्षीरं नेत्रयोरपतत् ॥१०-१९॥ तेनाक्षिणी गते गाः कापि याताः नापश्यच्चिन्तां प्राप ॥१२०॥ करे यष्टिर्न लब्धा । चिन्ताग्रस्तः सोऽन्धः गोधनमन्वेषमाणः कूपे पपात । गावो गेहं गता भान्ति गुरुर्मां

इति चिन्तान्वितो जातस्तावदस्तं गतो रविः ॥
धौम्योऽपि चिन्तयामास शिष्यो नाद्यापि चागतः २३

इत्युक्त्वा काननं गत्वा दृष्ट्वा तत्र स गोधनम् ॥
शिष्यं न वीक्ष्य दुःखार्तो दीर्घध्वन्या समाह्वयत्॥२४॥

उच्चैर्धौम्येन चाहूतः शिष्य आकर्ण्य तद्ध्वनिम् ॥
प्रत्युत्तरमदात्तेन स कृपालुरुपागतः ॥ २५ ॥

धौम्य एत्यास्य वृत्तान्तं श्रुत्वाऽत्यन्तकृपान्वितः ॥
उपमन्योऽश्विनौ देवौ संस्मरेत्यादिदेश सः ॥ २६ ॥

तेनैवं गुरुणाऽऽज्ञप्तो देवौ सस्मार सोऽश्विनौ ॥
दृष्टी द्वे तत आयाते प्रापाथ गुरुसम्मुखम् ॥ २७ ॥

उपमन्युर्नमस्कृत्वा तं गुरुं भक्तिभावितः ॥
शिष्योत्तमः स बहुभिः स्तोत्रैस्तुष्टाव तं तदा ॥ २८ ॥

मुनिर्धौम्योऽपि सन्तुष्टः शिष्यमाश्लिष्य चावदत् ॥
भक्त्या सौशील्यतस्तुष्टस्तव शिष्यशिखामणे ॥ २९ ॥

धिक्करिष्यतीति स चिन्तां प्राप। सूर्योऽप्यस्तं गतः। शिष्यो नाद्याप्यागत इति चिन्तयित्वा वनं गत्वा तत्र गाः दृष्ट्वा शिष्यं न दृष्ट्वा दुःखार्त उच्चैराह्वयत्॥ उच्चैर्ध्वनिं श्रुत्वा शिष्यः प्रत्युत्तरं ददौ। तच्छ्रुत्वा कृपालुर्धौम्य एत्य वृत्तान्तं श्रुत्वा कृपयोत्थाप्याहाश्विनौ देवौ स्मरेति। गुरुणाऽऽज्ञप्तोऽश्विनौ सस्मार। तदा दृष्टी प्राप्ते। तत उपमन्युर्भक्त्या गुरुं नमस्कृत्य स्तोत्रैस्तुष्टाव ॥२१-२८॥ तुष्टो धौम्य आह। हे शिष्य, ते

इति प्रसन्नः शिष्यस्य मस्तके हस्तमादधौ ॥
स शिष्यो वेदशास्त्रादिनिपुणस्तत्क्षणेऽभवत् ॥१३०॥

उवाच स गुरुः शिष्य गृहं गच्छ यथासुखम् ॥
उद्वाह्य सदृशीं भार्यां भूतले त्वं सुखं वस ॥ ३१ ॥

प्रसरिष्यति ते कीर्तिः शिष्याश्च त्वादृशोऽपि ते ॥
उत्तङ्काख्यश्च ते शिष्यः ख्यातो भुवि भविष्यति ३२

जित्वा शेषानशेषान्त्स दक्षिणार्थे हि कुण्डले ॥
तवानेष्यति लोकेषु भविष्यति सुकीर्तिमान् ॥ ३३ ॥

जनमेजयराजस्य सर्पसत्रे स एव हि ॥
कारयित्वा सर्पहोमं पन्नगान्मारयिष्यति ॥ ३४ ॥

इति प्रस्थापितोऽगात्स उत्तङ्कस्तस्य शिष्यकः ॥
जनमेजयराजेन सर्पसत्रमकारयत् ॥ ३५ ॥

भक्त्या सौशील्यात्तुष्टोऽस्मि। प्रसन्नो मस्तके करं दधौ। तदा शिष्यो वेदशास्त्रादिनिपुणोऽभूत्। तं गुरुराह। शिष्य, यथासुखं गृहं गच्छ। सदृशीं स्त्रियं विवाह्य सुखं वस। ते कीर्तिः प्रसरिष्यति। ते शिष्यास्त्वादृशो भविष्यन्ति। उत्तङ्काख्यस्ते शिष्यो भुवि ख्यातो भूत्वा शेषाञ्जित्वा त्वद्दक्षिणार्थं शेषलोकात्कुण्डले आनीय कीर्तिमान्भविष्यति। स च जनमेजयस्य सर्पसत्रे सर्पहोमं करिष्यतीति प्रस्थापित उपमन्युरगात ॥२९-३४॥ तच्छिष्य उत्तङ्को जनमेजयराजसत्रे सर्पान्हुत्वा गुरुकृपा-

हुत्वा समस्तसर्पान्त्स त्रिलोक्यां ख्यातिमानभूत् ॥
आनीयासौ गुरुकृपासामर्थ्यात्सेन्द्रतक्षकम् ॥ ३६ ॥

गुरुद्रोहिनरस्येह परत्रापि कुतः सुखम् ॥
कुम्भीपाके गुरुद्रोहिपातकात्स गमिष्यति ॥ ३७ ॥

गुरुसन्तोषमात्रेण किं किमत्र न सिध्यति ॥
गुरौ तुष्टे क्षणादेव वेदशास्त्रादि लभ्यते ॥ ३८ ॥

अज्ञात्वैवं वृथैवेह भ्रमसि त्वमविद्यया ॥
गच्छाधुनाऽपि स्वगुरुं स हि त्वां तारयिष्यति ॥३९॥

तुष्टे तन्मनसि क्षिप्रं मंत्रसिद्धिर्भवेत्तव ॥
मनसेदं विनिश्चित्य स्वगुरुं त्वरितं चर ॥ १४० ॥

इति श्रीगुरुणाऽऽज्ञप्तो विवेकी सोऽभवद्द्विजः ॥
तत्पदोः शिर आधाय विनयावनतोऽवदत् ॥ ४१ ॥

गुरुमूर्ते जय जय त्वं परार्थैकसाधनम् ॥
कृपया तत्त्वबोधोऽयं प्रीतिदः कथितोऽद्य मे ॥ ४२ ॥

सामर्थ्यात्सेंद्रतक्षकमानीय त्रैलोक्यां ख्यातोऽभूत ॥३५-३६॥ गुरुद्रोहिणोऽत्र परत्र च न सुखम्। स पापी कुम्भीपाकं गमिष्यति। गुरुतोषात्किं न सिध्यति। गुरौ तुष्टे क्षणाद्वेदशास्त्रादिलाभः। एवमज्ञात्वाऽविद्यया वृथा भ्रमासि। स्वगुरुं गच्छ। स त्वां तारयिष्यति। तस्मिंस्तुष्टे शीघ्रं सर्वमन्त्रसिद्धिरेवं ज्ञात्वा स्वगुरुं शरणं व्रजेति ॥१३७-१४०॥ इति श्रुत्वा स विवेकी भूत्वा गुरुपदयोः शिरो निधायाह। गुरुमूर्ते, परार्थसाधनं साधूक्तम्। कृपया बोधः कृतः। अहं गुरुद्रोही। मेऽनन्तापराधाः।

अहं सत्यं गुरुद्रोही ह्यपराधा मयाऽमिताः ॥
भिन्नं मे गुरुचित्तं तत्कथमद्य प्रतुष्यति ॥ ४३ ॥

स्वर्णादिधातवो भिन्नाः सन्धीयन्ते हि पूर्ववत् ॥
भिन्नं मुक्ताफलं भूयः कथमैक्यं गमिष्यति ॥ ४४ ॥

तथाऽन्तःकरणं भिन्नं गुरोर्मे नैकतां व्रजेत् ॥
जीवनेनोपयोगः किं नापेक्षा जीवनस्य मे ॥ ४५ ॥

शरीरं मे गुरुद्रोहि क्वोपयोगोऽस्य जीवनात् ॥
जीवित्वाशा न मे प्राणान्गुर्वर्थं सन्त्यजाम्यहम् ॥ ४६ ॥

इति श्रीगुरुमाभाष्य सोऽनुतप्तो नतो मुनिः ॥
नत्वाऽञ्जसा विरक्तः स प्राणांस्त्यक्तुं समुद्यतः ॥४७॥

ब्राह्मणस्यानुतापेन जातं दग्धमलं मनः ॥
यथाऽग्निस्पर्शमात्रेण भस्मसाज्जायते तृणम् ॥ ४८ ॥

यद्वाऽग्निस्पर्शमात्रेण कर्पूरं दहति क्षणात् ॥
तथाऽस्याप्यनुतापाग्निर्ददाहाशेषदोषकान् ॥ ४९ ॥

गुरोश्चित्तं भिन्नं कथं तुष्यति। भिन्नं सुवर्णादि सन्धीयते। न तु मौक्तिकम्। तथाऽन्तःकरणं गुरोर्मे भिन्नम्। कथं तस्यैक्यम्। किं मम जीवनेन। न जीवनापेक्षा ॥४१-४५॥ गुरुद्रोहिशरीरस्य क्वोपयोगः। न मे जीविताशा। गुर्वर्थं प्राणांस्त्यजामीत्युक्त्वा गुरुं नत्वा विरक्तोऽनुतप्तः स प्राणांस्त्यक्तुमुद्युक्तः ॥४६-४७॥ तस्यानुतापेन पापं दग्धम्। अग्निस्पर्शाद्भस्मेव कर्पूर इव च तस्यानुतापाग्निना सर्वे दोषा दग्धाः।

अत एवानुतापी यस्तस्य जन्मशतार्जितम् ॥
निःशेषं पातकं त्वत्र क्षिप्रं विलयमेष्यति ॥ १५० ॥

एवं द्विजः स निर्विण्णस्त्यक्तुं स्वीयकलेवरम् ॥
प्रवृत्तस्तं हि विज्ञाय जगद्गुरुरुपाह्वयत् ॥ ५१ ॥

आहूतं ब्राह्मणं प्राह श्रीगुरुर्जहि दूरतः ॥
चिन्तामेतामनन्तां ते सर्वं हि दुरितं गतम् ॥ ५२ ॥

वैराग्यं तेऽद्य सञ्जातं तेन ते दुष्कृतं गतम् ॥
स्वगुरुं सावधानेन हृदा द्विजवर स्मर ॥ ५३ ॥

इत्युक्तः स तदा नत्वा श्रीगुरोश्चरणेऽब्रवीत् ॥
त्वं त्रिमूर्त्यवतारोऽसि तारकोऽसि जगद्गुरो ॥ ५४ ॥

सर्वात्मनः कृपा ते चेत्पातकं कुह तिष्ठति ॥
कथं तिष्ठत्यन्धकारो भास्करेऽभ्युदिते सति ॥ ५५ ॥

एवं स श्रीगुरुं भक्त्या स्तुत्वाऽभूद्गद्गदाक्षरः ॥
प्रेमरुद्धगलो जातरोमहर्षोऽश्रुपूर्णदृक् ॥ ५६ ॥

अत एवानुतापिनः शीघ्रं शतजन्माशेषदोषनाशः । स द्विजः प्राणांस्त्यक्तुं प्रवृत्तः । तमाहूय श्रीगुरुराह । चिन्ता ते माऽस्तु । सर्वं पापं गतं । वैराग्यं ते जातं । स्वगुरुं सावधानेन हृदा स्मरेत्युक्तः स गुरुपदे नत्वाऽऽह । हे जगद्गुरो, त्वं त्रिमूर्त्यवतारस्तारकोऽसि ॥४८-९४॥ सर्वात्मनस्ते कृपा चेत्क्व मे पापम् । सूर्ये उदितेऽन्धकारः कथं तिष्ठेत् । एवं भक्त्या गुरुं स्तुत्वा प्रेमरुद्धकण्ठो गद्गदाक्षरः हृष्टरोमा प्रसन्नदृङ्निर्मलचित्तो विप्रः

स निर्मलमनाः शीर्षं निधाय गुरुपादयोः ॥
विनतः करुणं प्राह गुरो तारय तारय ॥ ५७ ॥

इति निर्विण्णमनसा पुनस्तत्पदयोः शिरः ॥
स्थापयामास तस्याभूत्तत्क्षणं ज्ञानमुत्तमम् ॥ ५८ ॥

वेदशास्त्राशेषविद्यानिपुणो ब्राह्मणोऽभवत् ॥
चन्द्रमौलौ प्रसन्नेऽस्य दैवं विप्रस्य किं ब्रुवे ॥ ५९ ॥

स्पर्शस्पर्शादयो यद्वत्स्वर्णं षोडशवर्णकम् ॥
तद्वद्गुरुपदस्पर्शाज्ज्ञानी जातो द्विजोत्तमः ॥ १६० ॥

आनन्दो ब्राह्मणस्याभूच्छ्रीगुरुस्तमथाब्रवीत् ॥
मद्वाक्यमवधार्यैव गच्छस्व गुरुसन्निधिम् ॥ ६१ ॥

गमनात्स भवेत्तुष्टो नमनाच्च विशेषतः ॥
स एवाहमिति ब्रह्मन्विद्धि त्वं नात्र संशयः ॥ ६२ ॥

इति श्रीगुरुमूर्तिस्तं कथयामास सोऽपि हि ॥
गुरुं गत्वा तथा दृष्ट्वा ततो मुक्तोऽभवद्द्विजः ॥६३॥

श्रीगुरोः पदयोः शिरो निधाय सकरुणमाह। मां तारयेति। निर्विण्णमनसा पुनः पादयोः शिरो दधौ। तदा तत्क्षणं ज्ञानमभूत्। वेदशास्त्रादिनिपुणोऽभवत्। गुरौ प्रसन्ने किं दुर्लभम्। स्पर्शस्पर्शादुत्तमस्वर्णवद्गुरुपादस्पर्शाद्द्विजो ज्ञानी अभत्। तस्यानन्दोऽभूत्तं श्रीगुरुराह। मद्वाक्यात्स्वगुरुं गच्छ। स दृष्टिमात्रतस्तुष्टो भवेन्नमनाच्च विशेषतः। स एवाहं ब्रह्मन्निति विद्धि। नात्र संशय इति श्रीगुरुणोक्तः स विप्रो गुरुं नत्वा स्वगुरुवत्तं दृष्ट्वा मुक्तोऽभूत् ॥५९-१६३॥ अथ श्रीगुरुः कृष्णातीरमेत्य

अथो श्रीगुरुनाथोऽटन्नाट कृष्णानदीतटम् ॥
भिल्लवाट्यभिधग्रामे यत्रास्ते भुवनेश्वरी ॥ ६४ ॥

कृष्णावेण्या एत्य पाश्चात्त्यतीरं नीरं यत्र स्वादु चोदुम्बरश्च ॥
मूले तस्य श्रीगुरुः साध्वतिष्ठत्तस्मिन्स्थाने सिद्धिवर्गोऽप्यतिष्ठत् ॥ ६५ ॥

तस्थौ श्रीगुरुनाथः कृष्णायां भिल्लवाटिकासन्नम् ॥
नूनं यन्माहात्म्यश्रवणाच्छ्रेयो भवेत्किलासन्नम् ॥ ६६ ॥

अत एव सरस्वतीद्विजः खलु गङ्गाधरभूसुरात्मजः ॥
स्वगुरोश्चरितं सविस्तरं वदति श्रोतृमनोहरं वरम् १६७

(इति)श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्यगङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञितमहाराष्ट्रभाषान्वितगुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वतीयतिविरचितायां श्रीगुरुसंहितायां ज्ञानकाण्डे षोडशः ( अध्यायः )

॥ आदितः श्लोकाः ॥ १९४७ ॥

भिल्लवाट्याख्यग्रामे भुवनेश्वरीसान्निधौ कृष्णावेण्याः पाश्चिमतीरे उदुंबरमूलेऽतिष्ठत् । यत्र सर्वासिद्धयः । तत्क्षेत्रमाहात्म्यश्रवणान्मोक्ष एव ॥६४-१६६॥ अत एव सरस्वती० ॥ १६७ ॥ चूर्णिकायां षोडशोऽध्यायः ॥

॥ इति षोडशोऽध्यायः ॥ १६ ॥

---

## ॥ अथ सप्तदशोऽध्यायः ॥ १७ ॥

॥ श्रीदत्तात्रेयाय नमः ॥

गुरुभक्तवरं सिद्धः प्राब्रवीन्नामधारक ॥
शृणु ते गुरुपादेऽस्ति भक्तिर्लीनोऽसि तत्र हि ॥ १ ॥
प्राग्वाति वातः पर्जन्यागमात्तत्सूचको यथा ॥
तथा गुरुकृपायाः प्राग्दैन्यहृत्ते कथारुचिः ॥ २ ॥
कामधुक्चरितं त्वेतत्कथयामि सविस्तरम् ॥
शृणु चित्तं समाधाय शिष्य त्वं नामधारक ॥ ३ ॥
कृष्णायां भुवनेश्वर्याः पश्चिमे श्रीगुरुः स्थितः ॥
उदुम्बराख्यकल्पद्रुमूले सुविमले स्थले ॥ ४ ॥
चातुर्मास्यमुवासात्र सोऽनुष्ठानधुरन्धरः ॥
अगोचरोऽपि भूत्वाऽत्र गोचरोऽप्यप्रकाशकः ॥ ५ ॥

अध्यायसारसंग्रहश्लोकोऽयम्—

आर्याविमानितोऽदादार्यायै मूढविप्र इह जिह्वाम् ।
सप्तदशे तत्प्रेरित ईशमवाप्यालभत्ततो जिह्वाम् ॥

सिद्ध आह । हे नामधारक, भक्त्या त्वं गुरुपदे लीनोऽसि । यथा पर्जन्यसूचको वातः प्राग्वाति तथा दैन्यहृत्ते कथारुचिः । कामधुक्चरितं वच्मि । सावधानतया शृणु ॥ १-३ ॥ भुवनेश्वर्याः पश्चात्कृष्णातीरे उदुंबरमूलेऽनुष्ठानकृद्गुरुश्चातुर्मास्यमस्थात् । तत्र पावने सिद्ध-

आसन्ने भुवनेश्वर्याः सिद्धस्थाने सुपावने ॥
निवासाच्छ्रीगुरोरासीत्तत्स्थानमहिमाऽधिकः ॥ ६ ॥
इति सिद्धवचः श्रुत्वा नत्वोचे नामधारकः ॥
गुरुराजः परात्माऽयं कुतो गुप्तोऽत्र वर्तते ॥ ७ ॥
तपोऽनुष्ठानमप्यस्य कुतो वा भैक्ष्ययाचनम् ॥
आप्तकामस्य तृप्तस्य सन्देहं मे निवारय ॥ ८ ॥
सिद्ध आह शृणुष्वेदं वत्स त्वं नामधारक ॥
पिनाकी याचते भिक्षां दत्तात्रेयस्तपत्यपि ॥ ९ ॥
त्रिमूर्तेर्भिक्षुरूपस्य भक्तानुग्रहकांक्षिणः ॥
तीर्थयात्रा तपो भिक्षा शिक्षार्थं केवलं किल ॥ १० ॥
गुप्तानि कालवशतस्तीर्थान्यनुपमानि हि ॥
तानि प्रकाशयत्येष भक्तानुग्रहकांक्षया ॥ ११ ॥
गुरुनाथः स्वयं तीर्थमुपकारार्थमेव नः ॥
तीर्थान्यटति गुप्तः सोऽवरयाचकवञ्चकः ॥ १२ ॥

स्थानेऽप्रकाशत्वेनापि स्थितस्य गुरोर्निवासात्तत्स्थानमहिमाऽधिकोऽभूत् ॥ ४-६ ॥ इति श्रुत्वा नामधारक आह । परमात्मा गुरुः कुतो गुप्तस्तिष्ठति । किमर्थमस्यानुष्ठानम् । तृप्तस्याप्तकामस्य कुतो भिक्षायाच्ञेति । सिद्ध आह शृणु । शिवात्मत्वाद्भिक्षायाच्ञाऽस्य त्रिमूर्तेर्भक्तानुग्रहार्थं । श्रीदत्तस्य तीर्थयात्रानुष्ठानादि लोकशिक्षार्थं । कालवशाद्गुप्ततीर्थानि भक्तानुग्रहार्थं प्रकाशयामास । स्वयं तीर्थरूपस्याटनं परोपकारार्थम् । खलवञ्चनाय गुप्तोऽभूत् ॥ ७-१२ ॥ तेजस्वी सूर्यः कथं गुप्तो भवेत् । तथा कस्तूरी-

तेजोराशिर्दिनकरः कथं गुप्तो भविष्यति ॥
छादितायाश्च कस्तूर्याः सुगन्धिर्गोप्यते कथम् ॥ १३ ॥

निर्दर्शनान्तरं[1] चान्यच्छृणु कल्पद्रुमो महान् ॥
अज्ञातोऽपि स्थितो यत्र तत्र कल्पितकामधुक् ॥ १४ ॥

एवं स्थिते गुरौ तत्र चित्रं वृत्तं वदामि ते ॥
येन प्रकटितो भूमौ महिमा तस्य पावनः ॥ १५ ॥

करवीराख्यनगरे विप्रो वेदरतोऽभवत् ॥
पुराणशास्त्रनिपुणोऽध्यापको विद्वदग्रणीः ॥ १६ ॥

तर्कव्याकरणाभिज्ञ आद्यशाखीय[2] उत्तमः ॥
आह्निकाचारनिरतः कर्ममार्गविशारदः ॥ १७ ॥

अजायत सुतस्त्वेकस्तस्य विप्रस्य धीमतः ॥
धीमन्दो दैववशतस्तत्पिता पञ्चतां गतः ॥ १८ ॥

अवर्धत ततो मन्दः सुतोऽभूत्सप्तवत्सरः ॥
तद्गृह्योक्तविधानेन व्रतबन्धो द्विजैः कृतः ॥ १९ ॥

गन्धश्च । यथाऽज्ञातोऽपि कल्पद्रुः सान्निध्यात्कल्पितकामधुक् तथा गुरुः । तत्र येन गुरोः पावनो महिमा प्रकटितस्तच्छृणु ॥ १३-१५ ॥ करवीरे वेदशास्त्रादिनिपुणोऽध्यापक आद्यशाखीयः स्वकर्मनिरतः कश्चन विप्रोऽभूत् । तस्य धीमन्दः सुतो जातः । विप्रो मृतः । मूर्खपुत्रो ववृधे । द्विजैः स गृह्योक्तविधानेन संस्कृतः । पशुप्रायस्य मूर्खस्य तस्य सन्ध्या-

१ द्वितीयदृष्टांतं २ कण्वशाखीयः.

स्नानसन्ध्यावन्दनादि ज्ञातवान्नैव दैवतः ॥
गायत्र्या अपि नो वार्ता कुतो मूर्खपशोः श्रुतेः[1] ॥२०॥

पठन्ति यत्र तत्रैष यत्नादभ्यस्य मन्दधीः ॥
सहैव विस्मृतिं प्राप पञ्चेषा[2]क्षरपाठकः ॥ २१ ॥

विद्वज्जनस्तु तत्रत्यो निन्दयामास तं सुतम् ॥
विद्वद्विप्रकुले भूत्वा मूर्खो जातोऽसि दुर्मते ॥ २२ ॥

पिता तव महाज्ञानी वेदशास्त्रपुराणवित् ॥
तस्योदरे कथं प्राप्तस्त्वं पाषाणसमः कुधीः ॥ २३ ॥

धिग्धिक्ते जीवितं तेऽद्य तातनाम कलङ्कितम् ॥
दृढां बद्ध्वा शिलां कुक्षौ विश[3] कूपं सरोऽथवा ॥२४॥

सम्भूय संसृतौ व्यर्थं जातस्त्वं सूकरोपमः ॥
गतिस्ते यमपुर्येव दुराचारो हि वर्तसे ॥ २५ ॥

वन्दनगायत्रीवार्ताऽपि न ॥ १९-२० ॥ यत्रान्ये पठन्ति तत्रापं मन्दधीः पठित्वा तदैव विस्मरति स्म। बुधास्तं विनिन्द्याहुः। हे दुर्मते, विद्वत्कुले भूत्वा मूर्खोऽभूः ॥ २१-२२ ॥ ते पिता ज्ञानी वेदादिवित्। तदुदरे कथं पाषाणतुल्यस्त्वम्। धिक्ते जीवितम्। पितृनाम कलङ्कितम्। गले शिलां बद्ध्वाऽऽपो विशात्र भूत्वा त्वं सूकरोऽसि। दुराचारस्य ते गतिर्यमपुरे। नृषु

१ श्रुतेर्वार्ता कुतः २ पंच षड्वा ३ प्रविश.

सोऽधिकोऽत्र मनुष्याणां विद्यया यः प्रकाशते ॥
निधिः स्वाधीन इव सा सद्विद्या भ्राजतेतराम् ॥ २६ ॥

सर्वसम्पद्भोगभाक्स विद्या यस्य हृदि स्थिता ॥
विद्वान्यशस्वी सम्पन्नः समस्तैरपि सोऽर्च्यते ॥ २७ ॥

विद्याहीनस्तु वयसा श्रेष्ठोऽपि न हि पूज्यते ॥
हीनोऽपि वयसा विद्वाञ्छ्रेष्ठैरपि च पूज्यते ॥ २८ ॥

न सन्ति सोदरा यस्य तस्य विद्यैव सोदराः ॥
विद्याभ्यासस्ततः कार्यो विद्वान्सर्वत्र पूज्यते ॥ २९ ॥

विदेशस्थोऽपि तत्रत्यसम्बन्धरहितोऽपि वा ॥
समस्तैर्वेदशास्त्रज्ञो बन्धुवत्पूज्यतेऽधिकम् ॥ ३० ॥

स एव भवति ज्ञानी बहुविद्या हि वेद यः ॥
सर्वे देवा हि तद्देहे सर्वपूजां स चार्हति ॥ ३१ ॥

भूमण्डलाधिपो राजा वन्द्यते सकलैरपि ॥
सोऽपि राजाऽतिहर्षेण विद्यावन्तं समर्चति ॥ ३२ ॥

विद्वानाधिकः ! विद्या निधिरेव स्वाधीनः । विद्वान्सम्पद्भोगभाक् । स च सर्वैः पूज्यते । वयोधिकोऽप्यविद्वान्नहि पूज्यतेऽल्पोऽपि विद्वान् श्रेष्ठैः पूज्यते ॥ २३-२८ ॥ यस्य सोदरा न तस्य विद्यैव सोदराः । अतो विद्याऽभ्यसनीया । विद्वान्सर्वत्र पूज्यते ॥ २९ ॥ स्वजनहीनो विदेशस्थोऽपि विद्वान्स्वजनैरिव तत्रत्यैः पूज्यते । विद्यावान् ज्ञानी भवति । तद्देहे सर्वदेवास्तिष्ठन्ति । स पूजामर्हति । लोकवन्द्योऽपि भूपो विद्यावन्तमर्चति । यस्य न

धनं नैवास्ति यद्वंशे तस्य विद्या धनं महत् ॥
विद्याभ्यासस्ततः कार्यो विद्याहीनः पशुः स्मृतः॥३३॥
इति विप्रवचः श्रुत्वा मूढविप्रः प्रणम्य तान् ॥
प्राह सत्यं भवद्वाक्यं विद्याभ्यासो हि शस्यते ॥ ३४ ॥
मया जन्मान्तरे नैव विद्यादानं कृतं खलु ॥
ततो मेऽद्य न विद्याप्तिः किं कर्तव्यमतः परम् ॥ ३५॥
एवं दोषविशिष्टं मां कृपयोद्धर्तुमर्हथ ॥
विद्याप्राप्तावुपायश्चेत्कथनीयः प्रयत्नतः ॥ ३६ ॥
इति तद्वचनं श्रुत्वा प्रहस्य ब्राह्मणा जगुः ॥
नेह जन्मनि विद्या ते विद्या लभ्या भवान्तरे ॥ ३७ ॥
कुतोऽद्य विद्याभ्यासस्ते न नरस्त्वं पशुः किल ॥
कुक्षिंभरि[1]र्भिक्षया त्वं मूर्खोऽसि कुलनाशकः ॥ ३८ ॥
इति नीचोत्तरैरुक्तो विद्वत्पुत्रोऽपि मूढधीः ॥
मनस्याधाय वैराग्यं[2] निर्गतो निर्जनं वनम् ॥ ३९ ॥

धनं तस्य विद्या धनम्। ततो विद्याभ्यासः कार्यो विद्याहीनः पशुः। इति श्रुत्वा मूर्खः प्रणम्याह। सत्यमुक्तम्। जन्मान्तरे मे विद्याभ्यासो न कृतः। ततो विद्या न लभ्यतेऽत्र प्रयत्न उपायो वाऽस्ति चेद् ब्रूत ॥ ३०-३६ ॥ इति श्रुत्वा ते प्रहस्योचुः। नेह जन्मनि ते विद्या। जन्मान्तरे भविष्यति ॥ ३७ ॥ क ते विद्यावार्ता। त्वं नृपशुः। रे मूर्ख कुलनाशक, भिक्षयोदरं भरेति श्रुत्वा सोऽनुतप्तो विरक्तो वनं गत्वाऽऽह। धीहीनं मां दूषयन्त्यतः

१ स्वोदरपूरकः २ वैराग्यं.

प्राह त्यक्ष्याम्यहं प्राणान्समस्ता दूषयन्ति हि ॥
मतिहीनः पशुरहं ततः किं जीवितेन मे ॥ ४० ॥

धिग्धिङ्मे जीवनं निन्द्यं वरं जन्माप्यतः शुनः ॥
अतो मे जीवितेनालमित्थं स विरतिं गतः ॥ ४१ ॥

स भिल्लवाटिकाग्रामं प्राप्याशनविवर्जितः ॥
कृष्णायाः प्राक्तटे दैवादुपवासमचीकरत् ॥ ४२ ॥

आस्ते यत्र जगन्माता भुवनेशीति विश्रुता ॥
आगत्य तत्र देव्याः स दर्शनं व्यकृणोद्द्विजः ॥४३॥

स्नानसन्ध्यावन्दनादि विसृज्यातीव दुःखितः ॥
स देव्याः सम्मुखं द्वारे चक्रे प्रायोपवेशनम् ॥ ४४ ॥

एवं त्रीणि दिनान्येष निर्विण्णो मनसा भृशम् ॥
प्रसीद देवीत्युक्त्वा स पानाशनविवर्जितः ॥ ४५ ॥

देव्याः प्रसादं स्वप्नेऽपि नाप्त्वा क्रुद्धोऽवदद्द्विजः ॥
अंब देवि भवानीह कुतो मां समुपेक्षसे ॥ ४६ ॥

प्राणांस्त्यक्ष्ये। पशोर्मे जीवितेन किम्। धिङ्मे जीवनम्। मत्तः श्वा वरः। मे जीवितेनालमिति विरज्य भिल्लवाट्यां कृष्णायाः प्राक्तटे यत्र जगन्माता भुवनेश्वरी तत्र देव्या दर्शनं कृत्वा दुःखितः स स्नानादि त्यक्त्वा देव्याः समीपे प्रायोपवेशनं चक्रे। एवं त्रिदिनं भृशं निर्विण्णो देवि, प्रसीदेत्युक्त्वोपवासं चक्रे ॥ ३८-४५ ॥ स्वप्नेऽपि देव्याः प्रसादो नातः। द्विज आह। भवा-

इत्याक्रोशेन स तदा शस्त्रं धृत्वा करे शितम्[1] ॥
स जिह्वां तरसा छित्त्वा देवीपद उपानयत्[2] ॥ ४७ ॥

जिह्वां समर्प्य स पुनर्यदि नाम्बा प्रसीदति ॥
तदा छित्त्वा शिरो दास्ये इति चक्रे स निश्चयम् ॥४८

एवं तस्मिन्सुनिर्विण्णे स्वशिरश्छेत्तुमुद्यते ॥
तत्स्वप्ने सान्द्रचित्ताम्बा निश्याह शृणु सादरम् ॥४९॥

शृणु बाल ब्रह्मचारिन्नाक्रुष्टोऽसि कथं मयि ॥
कृष्णापश्चिमतीरेऽस्ति यतिस्तं शरणं व्रज ॥ ५० ॥

उदुम्बरद्रुमतले तापसोऽस्ति महाबलः ॥
चन्द्रमौल्यवतारः स त्वद्वाञ्छां पूरयिष्यति ॥ ५१ ॥

इति स्वप्नेऽवदत्स्पष्टं द्विजस्य भुवनेश्वरी ॥
ततः प्रबुध्य हृष्टः स त्वरितं निर्ययौ द्विजः ॥ ५२ ॥

कृष्णामुत्तीर्य तरसा सम्प्राप्य सहसा द्विजः ॥
ददर्श गुरुनाथं तं सूपविष्टमनाथपम्[3] ॥ ५३ ॥

न्यम्ब कुतो मामुपेक्षसे । इत्याक्रोशेन जिह्वां छित्त्वा देवीपदे आर्पयत् पुनश्चाह । न प्रसीदसि चेन्निश्चयेन शिरश्छित्त्वा दास्ये । एवं निर्विण्णे तस्मिन् शिरश्छेत्तुमुद्यते च स्वप्नेऽम्बा तामाह ॥४६-४९॥ शृणु बाल क्रोधं मा कार्षीः परतीरे उदुम्बरमूले महाञ्छिवावतारोऽस्ति तं शरणं गच्छ । स तेऽभीष्टं पूरयतीति स्वप्ने श्रुत्वा स प्रबुद्धः सत्वरं कृष्णामुत्तीर्य तत्रोपविष्टं श्रीगुरुं

---

१ तीक्ष्णं २ समार्पयत् ३ अनाथपालकं.

निधाय तत्पदे शीर्षं तुष्टाव मनसा गुरुम् ॥
सन्तुष्टस्तं समाश्वास्य गुरुमूर्तिः प्रसन्नधीः ॥ ५४ ॥

स्वकरं स्थापयामास तस्य विप्रस्य मस्तके ॥
छिन्नाऽपि जिह्वा ववृधे प्राग्वज्ज्ञानी च सोऽभवत् ॥५५

वेदशास्त्रपुराणज्ञस्तर्कव्याकरणादिवित् ॥
समस्तमप्यसौ वेद पूज्योऽभूद्भुवनत्रये ॥ ५६ ॥

वायसो मानसं प्राप्य राजहंसो यथा भवेत् ॥
तथा श्रीगुरुसंस्पर्शान्मन्दधीरप्यभूत्सुधीः ॥ ५७ ॥

यथा चिन्तामणिस्पर्शाल्लोहं याति सुवर्णताम् ॥
यद्वा मृत्पतिता जम्बूनद्यां जाम्बूनदं भवेत् ॥ ५८ ॥

एवं स विप्रो गुरुहस्तपद्म-
संस्पर्शमात्रादपि कृत्तजिह्वः ॥
भूत्वा सुजिह्वोऽपि च वेदशास्त्र-
भाष्याद्यभिज्ञोऽभवदाशु विप्र ॥ ५९ ॥

ददर्श। तत्पदे शिरो निधाय तुष्टाव। तुष्टः प्रसन्नो गुरुस्तमाश्वास्य ॥ ५०-५४ ॥ तन्मूर्ध्नि करं दधौ। तदा छिन्नापि जिह्वा ववृधे। स ज्ञानी बभूव। वेदशास्त्रादि सर्वं वेद। सर्वत्र पूज्यश्चाभूत्। काको मानसं प्राप्य यथा राजहंसो भवति, यथा च चिन्तामणिस्पर्शाल्लोहं स्वर्णं भवति, यथा च जंबूनद्यां पतिता मृत्स्वर्णं भवति, तथा छिन्नजिह्वोऽपि गुरुहस्त-

श्रीनामधारक सुकारकशक्तिधर्तुः
श्रीसद्गुरोः सुमहिमा न हि मानमेति ॥
माहात्म्यमस्य वसतेरपि कोऽत्र वेद
प्रायः स्वयं स भगवान् गुरुरेव वेद ॥ ६० ॥
अत एव सरस्वतीद्विजः
खलु गङ्गाधरभूसुरात्मजः ॥
सुविचित्रचरित्रमात्मनः
प्रजगौ लब्ध्वापि तद्धरेन्मनः ॥६१ ॥

(इति) श्रीसिद्धना० रूपेण सरस्वत्याख्यगङ्गाध० चितनृसिंह० महा० गुरुचरित्रसमानार्थायां वासुदे० विरचितायां श्रीगुरुसंहितायां ज्ञानकाण्डे सप्तदशः अध्यायः॥ १७ ॥
आ० श्लो० ॥ २००८ ॥

स्पर्शात्सुजिह्वो वेदशास्त्राद्यभिज्ञोऽभूत्। श्रीनामधारक सुका०। अत एव सर०॥ ६०-६१ ॥ इति चूर्णिकायां सप्तदशोऽध्यायः ॥

॥ इति सप्तदशोऽध्यायः ॥ १७ ॥

---

१ इंद्रियादि २ प्रमाणं.

## ॥ अथ अष्टादशोऽध्यायः ॥ १८ ॥

॥ श्रीः ॥ जय सिद्ध मुने स्वामिंस्तारकस्त्वं भवार्णवात् ॥
कथासुधारसापूर्णे श्रवणे मे कृते त्वया ॥ १ ॥

कामधुक्चरितं श्रुत्वा गुरोस्तृप्तं न मे मनः ॥
तत्कथामृतपाने मे पिपासाऽतीव वर्धते ॥ २ ॥

गुरुपादाम्बुजध्यातुर्न तृप्ती रसिकस्य मे ॥
भाविकस्याशयकथामृतसञ्जीवनं पुनः ॥ ३ ॥

इति शिष्यो विनीतोऽसौ भक्तिमान्नामधारकः ॥
इच्छन्कृपां सिद्धपदोः स्थापयामास मस्तकम् ॥ ४ ॥

अध्यायसारसंग्रहश्लोकोयम्—

भिक्षार्थं गत्वा कुसुमितलतावेल्लितद्वारदेशं
गेहं विप्रस्य प्रभुरतिदरिद्रस्य भुक्त्वाऽपि शाकम् ॥
छित्त्वा वल्लीं स्ववसतिमगात्तल्लतामूलदेशे
लेभेऽर्थौघं द्विजवर इहाष्टादशे चाशिषोऽपि ॥ १ ॥

नामधारक आह । स्वामिन्सिद्ध, जय । त्वं भवतारकोऽसि । त्वया कथासुधया मे कर्णौ पूर्णौ । कामधुक्चरितं श्रुत्वाऽपि न तृप्तिः । किन्त्वतीव पिपासा वर्धते । गुरुपादाब्जचिन्तकस्य कथं तावता तृप्तिः । पुनः पाययेति विनीतो भक्तस्तत्पदे शिरो दधौ । तुष्टः सिद्धो हसन्नाह । शृणु । विस्तरात्क-

श्रुत्वा शिष्यवचोहार्दं तुष्टः सिद्धमुनिर्हसन् ॥
विस्तरात्कथयामास श्रोतृवर्गः शृणोतु तत् ॥ ५ ॥

धन्या धन्या हि ते वाणी शृणु शिष्यशिखामणे ॥
श्रीगुरोश्चरणे भक्तिस्तव लीनोऽसि नित्यशः ॥ ६ ॥

लाभोऽपि त्वत्कृतेऽस्माकं साकं तत्कथयाऽनया ॥
चरणे शरणे स्वेषां तेषां मत्स्मरणे स्थिते ॥ ७ ॥

कथितो भिल्लवाट्यास्ते महिमाऽनुपमो मया ॥
अग्रतश्चरितं वक्ष्ये त्वं शृणुष्वोत्तमोत्तमम् ॥ ८ ॥

कञ्चित्कालं त्विह स्थित्वा श्रीगुरुर्गूढरूपतः ॥
ततः प्रसिद्धो भूत्वाऽगादग्रतो भक्ततारकः ॥ ९ ॥

वरुणासङ्गमं दृष्ट्वा भक्तानुग्रहकांक्षया ॥
वाराणसीति विख्यातां दक्षिणे तामगात्प्रभुः ॥ १० ॥

कृष्णातटस्थतीर्थानि पुनानः पावनान्यपि ॥
कृष्णापञ्चनदीसङ्गे द्वादशाब्दान्स्थितो गुरुः ॥ ११ ॥

थयामि । हे शिष्याग्र्य, ते वाणी धन्या सदा त्वद्भक्तिः श्रीगुरुपदे । त्वत्प्रश्नान्मेऽपि लाभो यतस्तत्पदे स्थिते । उदुम्बरस्थानमहिमा कथितोऽग्रतः कथयिष्ये । तत्र भक्ततारको गुरुः कञ्चित्कालं स्थित्वा ततः प्रसिद्धोऽभूत्॥ १-९॥ भक्तानुग्रहार्थं ततो वरुणासङ्गमं गत्वा ततो दक्षिणतोऽगमत् । कृष्णास्थतीर्थानि पुनानः कृष्णापञ्चनदीसङ्गमे द्वादशवर्षाण्यस्थात् ॥ १०-११ ॥

मनोहरं ह्यनुपममविमुक्तपुरीसमम्[1] ॥
प्रयागवत्सङ्गमं च दृष्ट्वा तस्थौ परात्परः ॥ १२ ॥

कृष्णावेणीपञ्चनदीसङ्गमोऽनुत्तमोऽपि च ॥
कुरुक्षेत्राधिपुण्यं तत्क्षेत्रं सकलपावनम् ॥ १३ ॥

कुरुक्षेत्रे तु यत्पुण्यं पुण्यमत्र ततोऽधिकम् ॥
अमितानीह तीर्थानि यतोऽतः श्रीगुरुः स्थितः ॥१४॥

पञ्चगङ्गानदीतीरं पुराणान्तरविश्रुतम् ॥
एतासां पञ्चनामानि तानि मे गदतः शृणु ॥ १५ ॥

शिवा भद्रा भोगवती तथा कुम्भी सरस्वती ॥
पञ्चगङ्गा इति ख्याता महापातकनाशकाः ॥ १६ ॥

एवं ख्याताः पञ्चनद्यस्ताः संहत्य[2] च कृष्णया ॥
सङ्गताः सङ्गमोऽयं हृद्धृत्प्रयागाधिपुण्यदः ॥ १७ ॥

काशीसमं तत्पुरं प्रयागसमं च दृष्ट्वा तत्र तस्थौ। कृष्णावेणीपञ्चनदीसङ्गमोनुत्तमः। कुरुक्षेत्राधिपुण्यं पावनं तत्क्षेत्रम्। अत्रामितानि तीर्थानि। ततः श्रीगुरुः स्थितः। पुराणोक्ताः पञ्चगङ्गाः शृणु। शिवा, भद्रा, भोगवती, कुम्भी, सरस्वतीत्येताः पञ्चमहापापहाः कृष्णया सङ्गताः। सङ्गमोऽयं पापहा प्रयागाधिपुण्यप्रदः ॥ १२-१७ ॥

---

१ काशीसमं २ एकीभूय.

पूर्वेऽमरपुरग्रामः स्थानं निरुपमं हि तत् ॥
स्याद्दक्षिणप्रयागोऽयं सर्वेषां च मनोहरः ॥ १८ ॥

उदुम्बरस्तरुवरः ख्यातः कल्पद्रुमोऽपरः ॥
देवोऽमरेश्वरस्तत्र वरः षट्कूलतीर्थके ॥ १९ ॥

वाराणस्यां यथाऽभङ्गा गङ्गाभागीरथी तथा ॥
इयं कृष्णाऽपि तत्तुल्या स्मृता पञ्चनदीयुता ॥ २० ॥

योगिन्योऽपि चतुःषष्टिरमरेश्वरसन्निधौ ॥
तत्र ख्यातं शक्तितीर्थं समर्थं लोकपावनम् ॥ २१ ॥

सुन्दरं चामरं लिङ्गं विश्वनाथोऽत्र संस्थितः ॥
नरोऽप्यमरतां याति साक्षाद्ब्रह्मेव तत्परम् ॥ २२ ॥

माघस्नानात्प्रयागे यत्पुण्यं नियतवाग्हृदम् ॥
ततः शतगुणं पुण्यमत्रैकस्नानमात्रतः ॥ २३ ॥

प्रसङ्गेनापि तत्स्नानात्प्रयागादधिकं फलम् ॥
साक्षात्परब्रह्मवस्तु तत्र स्थानेऽमरेश्वरः ॥ २४ ॥

पूर्वेऽमरपुरग्रामो दक्षिणे प्रयागो मनोहरः सङ्गमः ॥ १८ ॥ मध्ये उदुम्बरः कल्पद्रुः । षट्कूलतीर्थसन्निधौ अमरेश्वरः । वाराणस्यां पञ्चगङ्गायुता भागीरथी तथाऽत्रेयं कृष्णाऽमरेश्वरसन्निधौ चतुःषष्टियोगिन्यो लोकपावनं शक्तितीर्थं चामरलिङ्गं सुन्दरं विश्वनाथ इव साक्षाद्ब्रह्म । यत्सेवनान्मर्त्योऽप्यमर्त्यो भवेत् ॥ १९-२२ ॥ प्रयागे माघस्नानाद्यत्पुण्यं ततः शतगुणमत्रैकस्नानतः । प्रसङ्गेनापि स्नानात् प्रयागाधिफलम् । यत्र साक्षात्परब्रह्मा-

अत एव हि तत्स्थाने कोटितीर्थानि सन्ति हि ॥
यत्र वेण्या युता कृष्णा कृष्णा दक्षिणवाहिनी ॥ २५ ॥

अमितानीह तीर्थानि न वक्ष्ये विस्तृतेर्भयात् ॥
ख्यातानीहाष्टतीर्थानि कृष्णावेणीतटेऽत्र तु ॥ २६ ॥

उत्तरस्यां दिशि ततः कृष्णा पश्चिमवाहिनी ॥
ब्रह्महत्यादिपापघ्नं तत्रैकं शुक्लतीर्थकम् ॥ २७ ॥

उदुम्बरसमीपे तु त्रीणि तीर्थानि सन्ति हि ॥
मनोहराणि प्रत्येकं धनुरन्तरतः स्मृतम् ॥ २८ ॥

एकं पापविनाशाख्यं काम्यतीर्थं द्वितीयकम् ॥
तृतीयं वरदं श्रेष्ठममरेश्वरसन्निधौ ॥ २९ ॥

सङ्गमेऽपि च षट्कूले त्रीणि तीर्थानि च क्रमात् ॥
शक्तितीर्थं चामरकं कोटितीर्थं द्विजोत्तम ॥ ३० ॥

अमितानीह तीर्थानि कथनाद्ग्रन्थविस्तृतिः ॥
भवेदिह द्वादशाब्दं श्रीपादोऽस्थात्त्र्यधीश्वरः ॥ ३१ ॥

मरेश्वरोऽतस्तत्र कोटितीर्थानि । यत्र कृष्णा दक्षिणवाहिनी तत्रामितानि तीर्थानि । विस्तरभयादष्टतीर्थानि वक्ष्यन्ते ॥२३-२६॥ यत्र कृष्णा पश्चिमवाहिनी तत्र ब्रह्महत्यादिहृच्छुक्लतीर्थं उदुम्बरसमीपे धनुरन्तरेण पापविनाशं काम्यं, वरदं, अमरेश्वरं चेति त्रीणि तीर्थानि । अन्यान्यमितानि तद्वर्णने विस्तरो भवेत् । अत्र द्वादशाब्दानि तस्थौ । यत्र कृष्णावेणीपञ्चनद्यो

कृष्णा वेणी पञ्चनद्य एताः सप्तैकतां गताः ॥
शीर्षण्यमिव तत्स्थानं माहात्म्यं तस्य को वदेत् ॥ ३२ ॥

ब्रह्महत्यादिपापानि नश्यंति स्नानमात्रतः ॥
सकलाभीष्टदं लोके सिद्धस्थानमिदं खलु ॥ ३३ ॥

अनुत्तमोऽस्य महिमा लोके नास्त्युपमाऽस्य तु ॥
दृष्टिमात्रेण काम्याप्तिः को वदेत्स्नानजं फलम् ॥ ३४ ॥

साक्षात्कल्पतरुर्यत्र तत्र किं दुर्लभं नृणाम् ॥
कलौ कालवशाद्गुप्तं गुरुणा प्रकटीकृतम् ॥ ३५ ॥

स्वभक्ततारणार्थाय तीर्थप्रख्यापनाय च ॥
अस्थाच्छ्रीगुरुनाथोऽत्र ततः प्रकटतां गतम् ॥ ३६ ॥

तत्र स्थित्वा प्रतिदिनं भिक्षां कर्तुं जगद्गुरुः ॥
मुदाऽमरपुरग्रामं प्रययौ भक्तभावनः ॥ ३७ ॥

तस्मिन् ग्रामे विप्र एको वैदिको भाविकोऽभवत् ॥
पतिव्रताशिरोरत्नं तद्भार्या पतिदेवता ॥ ३८ ॥

मिलितास्तच्छ्रेष्ठं स्थानं तन्माहात्म्यं को वदेत्। ब्रह्महत्यादि स्नानान्नश्यति। सकलाभीष्टदस्यास्योत्तमं माहात्म्यम्। यद्दर्शनात्कामपूर्तिस्तत्स्नानमाहात्म्यं को वदेत्। यत्र कल्पतरुस्तत्र नृणां किं दुर्लभम्। कलौ कालवशाद्गुप्तं गुरुणा प्रकटितम्। भक्ततारणाय तीर्थख्यापनाय च ॥ २७-३६ ॥ अत्र श्रीगुरुः स्थित्वा प्रतिदिनं भिक्षार्थं अमरपुरग्रामं ययौ। तस्मिन्ग्रामे एको भाविको विप्रः। तद्भार्या च पतिव्रताऽभूत्। सात्त्विकः क्षीणो दीनः स यायावरवृत्तिः

सुक्षीणो ब्राह्मणो दीनः स यायावरवृत्तिकः[१] ॥
कर्माचारोत्सुको लोकवन्द्यः सात्त्विकवृत्तिकः ॥ ३९ ॥
अङ्गणे तस्य विप्रस्य शाकवल्ली[२] महोन्नता ॥
यस्याः स्युरमिताः शम्बाः[३] कुटुम्बभरणक्षमाः ॥ ४० ॥
यस्मिन्कस्मिन्दिने भिक्षा दैवादस्य न लभ्यते ॥
शम्बापाकं स सन्तोषात्कृत्वाऽश्नाति कुटुम्बयुक् ॥४१॥
एवं विप्रो दरिद्रोऽपि स यायावरवृत्तिभुक् ॥
पञ्चयज्ञपरो नित्यं सर्वदाऽतिथिपूजकः ॥ ४२ ॥
एवं सत्येकदा तस्य वेश्म श्रीगुरुरागतः ॥
भिक्षार्थं वीक्ष्य तं विप्रः प्रत्युद्गम्य समानयत् ॥ ४३॥
उपचारैः षोडशभिर्भक्त्या सम्पूज्य सद्गुरुम् ॥
शाकाहारेणैव विभुं भोजयामास सादरम् ॥ ४४ ॥
भिक्षां विप्रगृहे कृत्वा तमाश्वास्याब्रवीद्गुरुः ॥
तुष्टोऽस्मि तव दारिद्रं प्रनष्टमिति चाब्रवीत् ॥ ४५ ॥

स्वकर्मरतोऽभूत् ॥ ३७-३९ ॥ तस्याङ्गणे शाकवल्ली विस्तृता । यस्याः कुटुम्बभरणक्षमा अमिताः शम्बाः ॥ ४० ॥ यद्दिने भिक्षा न लभ्यते तद्दिने शम्बापाकं कृत्वा सकुटुम्बः सोऽश्नाति । दरिद्रोऽपि शान्तो विप्रः पञ्चयज्ञपरोऽतिथिप्रियः । तद्वेश्म श्रीगुरुर्भिक्षार्थमागतः । विप्रः सम्मुखं गत्वा तमानीय षोडशोपचारैः सम्पूज्य सादरं भक्त्या शाकं ददौ ॥ ४१-४४ ॥ शाकभिक्षां भुक्त्वा तुष्टो गुरुस्तमाश्वास्याह । दारिद्रं ते नष्ट-

१ प्रत्यहं धान्ययाच्ञा २ घेवडा ३ शेंगा.

गच्छन् विप्राङ्गणे दृष्ट्वा सर्वतः प्रसृतां तु ताम् ॥
शम्बागुच्छसहस्राढ्यां वल्लीं श्रीगुरुरिष्टदः ॥ ४६ ॥

भगवान्स्वकरे धृत्वा विततां ममतामिव ॥
प्रभुः प्रच्छिद्य तरसा स्वाश्रमं सङ्गमं ययौ ॥ ४७ ॥

तदाऽभूद्विप्रवनिता दुःखिता तत्सुता अपि ॥
स्त्री प्राह दैव हा कष्टमदृष्टं नष्टमेव नः ॥ ४८ ॥

अस्माभिः किं यतीशाय तस्मै दत्त उपद्रवः ॥
ग्रासस्त्वपहृतोऽस्माकं वल्ली छित्त्वोज्झिता भुवि ॥४९॥

एवं तां दुःखितां प्राह पतिः संयच्छ सद्धिया ॥
श्रेयोघ्नं रोषमगदैः[1]र्यथा गदम[2]दृष्टवित् ॥ ५० ॥

प्रारब्धं नः प्रमाणं हि यद्यद्भावि यदा यदा ॥
चन्द्रमौलीहया[3] तत्स्यात्तदधीनमिदं जगत् ॥ ५१ ॥

मिति। ततो गच्छन्निष्टदो भगवान्विततां वल्लीं दृष्ट्वा विततां ममतामिव तां करेण धृत्वोत्पाट्य सङ्गमं ययौ। तदा ससुता दुःखिता ब्राह्मणी प्राह। हा कष्टं मेऽदृष्टं दुष्टम्। यतयेऽस्माभिरुपद्रवो न दत्तोऽथापि नो ग्रासो हृतः। वल्लीं छित्त्वा भुवि जहौ। एवं दुःखितां तां पतिराहादृष्टं ज्ञात्वौषधै रोगमिव श्रेयोघ्नं रोषं सद्धिया जहि। प्रारब्धं नः प्रमाणम्। यद्भावि तदीशेच्छया भविष्यति। तदधीनं जगत्। विभुर्गुणकर्मभिः सृष्ट्यादिकृदपि नाज्यते।

---

१ औषधैः २ रोगं ३ इच्छया.

सृष्ट्यादिकृद्व्यापकोऽपि नाज्यते गुणकर्मभिः ॥
रात्[1]या पिपीलिकाभ्योऽन्नमसक्तोऽप्यनहंकृतिः ॥ ५२ ॥
वदति स्मृतिरप्येवमायुरन्नं प्रयच्छति ॥
हस्त्याहारं मृगेन्द्राय ददाति प्रत्यहं कथम् ॥ ५३ ॥
निर्माय पूर्वमाहारं स्थूलान्सूक्ष्मांस्ततः परम् ॥
उत्पादयामास चतुरशीतिलक्षसम्मितान् ॥ ५४ ॥
रङ्कं भूनायकं वाऽपि पुष्णाति समदृग्विभुः ॥
यस्य पूर्वार्जितं यादृक्तादृक्तस्मै प्रयच्छति ॥ ५५ ॥
पूर्वजन्मनि निक्षिप्तं सुकृतं वाऽपि दुष्कृतम् ॥
तद्धि स्वस्य स्वयं भोग्यं विभागी तस्य कः परः॥५६॥
मूर्खो हि दैवहतकः स्वकर्मान्यत्र वीक्षते ॥
सुखं वाऽप्यथवा दुःखं यद्यदुप्तं तदुद्भवेत् ॥ ५७ ॥
यतौ दोषं योजयसि स्वकर्मापि न वीक्षसे ॥
अविद्यावेष्टिता ब्रूषे ग्रासोऽनेन हतस्त्वति ॥ ५८ ॥

सोऽसक्तोऽनहङ्कारोऽन्नमा पिपीलिकाभ्यो दत्ते । आयुरन्नं प्रयच्छतीति श्रुतिस्मृती वदतः । सिंहायान्वहं हस्त्याहारं दत्ते ॥ ४९-५३ ॥ पूर्वमाहारं निर्माय चतुरशीतिलक्षस्थूलसूक्ष्मभूतानि सृजति । स समदृक् भपं रङ्कं च पुष्णाति । यस्य यथाऽर्जितं तथा तस्मै दत्ते । प्राग्जन्मनि पुण्यं पापं वोप्तं तत्स्वयं भोक्तव्यं । कोऽन्यो भोक्ता । मूर्खः स्वकर्मान्यत्रेक्षते । पूर्वं यत्स्वयमुप्तं तद्भोग्यं । त्वं स्वकर्मास्मृत्वा यतौ दोषं योजयासि । मे ग्रासोऽनेन हत

१ ददाति.

स तारको गृहे भिक्षां बुभुजे नो दरिद्रहृत् ॥
ममाहमिति संरूढग्रन्थिभेत्ता स एव नः ॥ ५९ ॥

इति स्त्रियं समाश्वास्य विप्रवर्यः सुबोधतः ॥
वल्लीमूलं समुत्खाय विप्रस्तत्याज दूरतः ॥ ६० ॥

स्थूलं वल्ल्या आलवालं द्वारदेशेऽङ्गणे स्थितम् ॥
उत्खातयामास च तत्सर्वं द्विजवरस्तदा ॥ ६१ ॥

श्रीगुरोः संप्रसादेन धनपूर्णं महाघटम् ॥
लेभे लब्ध्वा परानन्दं गृहं निन्ये घटं द्विजः ॥ ६२ ॥

प्राह स्त्रियं पश्य चित्रं प्रसन्नोऽभूद्यतीश्वरः ॥
वल्ली कृत्ताऽत एवेयं यतो लब्धो महानिधिः ॥ ६३ ॥

योगीश्वरो नरो नायं परः साक्षान्महेश्वरः ॥
लब्धोऽस्माकं दैन्यहरो दर्शनार्थं चराधुना ॥ ६४ ॥

इत्युक्त्वा श्रीगुरुं गत्वा सस्त्रीकोऽभ्यर्च्य स द्विजः ॥
वृत्तान्तं कथयामास धनलाभादिकं मुदा ॥ ६५ ॥

इत्यविद्यावृता ब्रूषे । स तारको नो गृहे भिक्षां बुभुजे । दारिद्रं हृतवान् । ममाहमिति संरूढग्रंथिभेत्ताऽपि सः । इति स्त्रियं बोधेनाश्वास्य वल्लीं दूरतस्त्यक्त्वाऽङ्गणस्थं वल्ल्या आलवालमुत्खाय गुरोः प्रसादाद्धनपूर्णं घटं लब्ध्वा हृष्टो विप्रो गृहं नीत्वा स्त्रियै प्राह । चित्रं पश्य । यतिः प्रसन्नोऽभदतो वल्लीं चिच्छेद । यतः महानिधिर्लब्धः ॥ ५४-६१ ॥ नायं नरः साक्षाद्योगी महेश्वरो दैन्यहरो नो लब्धः । दर्शनार्थं चरेति सस्त्रीको गुरुं गत्वाऽभ्यर्च्य धनलाभादि कथयामास ॥ ६२-६५ ॥ श्रीगुरुः प्राह । हे

श्रीगुरुः प्राह भो विप्र क्वापि नैतत्प्रकाशय ॥
अस्मिन्प्रकाशिते लक्ष्मीर्न स्थास्यति गृहे तव ॥ ६६ ॥

अखण्डा श्रीस्तव कुले निवसिष्यत्यचञ्चला ॥
नन्दते ते कुलं पुत्रपौत्राद्यैर्मत्प्रसादतः ॥ ६७ ॥

इति लब्धवरो विप्र आज्ञप्तः स गृहं गतः ॥
सस्त्रीकोऽसौ गुरुकृपा यद्दृष्टिर्दैन्यहारिणी ॥ ६८ ॥

द्विज तस्य कुतो दैन्यं यस्योपरि गुरोः कृपा ॥
यद्द्वारि कल्पवृक्षोऽस्ति दैन्यं तस्यालये कुतः ॥ ६९ ॥

यो नरो दैन्यहतकः सोऽपि सेवेत चेद्गुरुम् ॥
सोऽपि भूत्वा सर्वपूज्यः परं पारं गमिष्यति ॥ ७० ॥

यः श्रीगुरुं भजेत्सोऽपि परत्रेह च सिद्धिभाक् ॥
तद्गृहेऽखण्डिता लक्ष्मीरष्टैश्वर्यैः समन्विता ॥ ७१ ॥

महिमा श्रीगुरोरेवं नामधारक भाविक ॥
मनसाऽतो भज गुरुं कामधुग्गृहमेष्यति ॥ ७२ ॥

विप्र, क्वापीदं न प्रकाशय। प्रकाशितेऽस्मिन् ते गृहे लक्ष्मीर्न स्थास्यति। ते कुलेऽखंडा श्रीर्निवसिष्यति। मत्प्रसादात्ते कुलं पुत्राद्यैर्नंदते। इति वरं लब्ध्वाऽऽज्ञप्तो विप्रः सस्त्रीको गृहं गतः। एवं दैन्यहारिणी गुरुकृपा। यस्योपरि गुरोः कृपा कुतोऽस्य दैन्यम्। यद्द्वारि कल्पवृक्षस्तत्र दैन्यं कथं तिष्ठेत्। दैन्ययुक्तोऽपि गुरुभजनात्सर्वपूज्यः सन्मुच्यते ॥ ६६-७० ॥ यो गुरुं भजेत्सोऽत्र परत्र च सिद्धिभाक्। तद्गृहेऽष्टैश्वर्ययुक्ताऽखंडा श्रीः। एवं गुरोर्महिमा। हे नामधारकातो गुरुं भज। कामधेनुर्गृहमेष्यति ॥ ७१-७२ ॥

श्रोतारस्ते सत्कथास्वादुपानं कुर्वन्त्वेतत्प्रार्थयेऽहं समानम् ॥
मानं हित्वा विप्रगङ्गाधरस्य पुत्रो भक्तः सर्वदेवावरस्य ॥७३॥

(इति) श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्यगङ्गाधरात्मज-
विरचितनरसिंहसरस्वत्युपाख्यानसंज्ञितमहाराष्ट्रभाषान्वित-
गुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वतीयतिवि-
रचितायां श्रीगुरुसंहितायां ज्ञानकाण्डेऽष्टादशः
( अध्यायः ) ॥
आदितः श्लोकाः ॥ २०८१ ॥

श्लो० ॥ श्रोतारस्ते सत्क० ॥ ७३ ॥ इति श्रीगुरुसंहिताचूर्णिकाया-
मष्टादशोध्यायः ॥

॥ इति अष्टादशोऽध्यायः ॥ १८ ॥

---

## ॥ अथ एकोनविंशोऽध्यायः ॥ १९ ॥

श्रीदत्तात्रेयाय नमः ॥ श्रीगुरुभ्यो नमः ॥ श्रीगणेशा० ॥

सिद्धस्य चरणौ धृत्वा विनतो नामधारकः ॥
करद्वयं च सन्धाय शिष्यराजोऽब्रवीदिदम् ॥ १ ॥

जय सिद्ध जयाज्ञानध्वान्तज्योतिर्हि योगिराट् ॥
त्वं भक्तमानसहरो भवसागरतारकः ॥ २ ॥

मोहरात्र्यां मनोऽज्ञानध्वान्तव्याप्तं हि निद्रितम् ॥
उद्बोध्य प्राशितं तेऽद्य गुरुलीलाऽमृतासवम् ॥ ३ ॥

ज्ञानार्कमुदितं दृष्ट्वा प्रबुद्धोऽहं सचेतनः ॥
अभवं बोधितस्तेऽद्य भोः स्वामिन्दयया मुने ॥ ४ ॥

अध्यायसारसंग्रहश्लोकोयम्—

अमरापुर ऊनविंशकेऽनुगगङ्गानुजपा उदुम्बरे ॥
वरदे स निधाय पादुके गुरुराश्वास्य च योगिनीरगात् ॥

सिद्धचरणौ धृत्वा नत्वा च शिष्यो नामधारक आह । हे सिद्धाज्ञानध्वान्तज्योतिस्त्वं जय । योगिराजस्त्वं मनोहरो भवसागरतारकश्चासि । मोहरात्र्यामज्ञानध्वान्ते निद्रितं मे मन उद्बोध्य गुरुलीलामृतासवं त्वया मह्यं दत्तम् ॥३॥ उदितं ज्ञानार्कं दृष्ट्वा प्रबुद्धं मे चेतः । त्वया कृपया बोधितोऽस्मि॥४॥

वदान्य सिद्ध योगीश कृपया मेऽग्रतः कथाम् ॥
कथयेत्थं द्विजः सिद्धपादलग्नोऽभवन्नतः ॥ ५ ॥

इति तस्य वचः श्रुत्वा सिद्धः सन्तोषसंयुतः ॥
प्राहानुपममाहात्म्यं विस्तरेण गुरोर्मुदा ॥ ६ ॥

वक्ष्ये शिष्योत्तम गुरोश्चरितं नामधारक ॥
शृणूदुम्बरवृक्षाधः प्रीत्या तस्थौ जगद्गुरुः ॥ ७ ॥

इति सिद्धवचः श्रुत्वा स भूयो नामधारकः ॥
प्राह हित्वा पुण्यवृक्षान्कुतोऽस्योदुम्बरे रतिः[1] ॥ ८ ॥

वेदशास्त्रपुराणेषु श्रेष्ठोऽश्वत्थः प्रकीर्तितः ॥
गुरोरुदुम्बरे प्रीतिः कुतस्तत्कारणं वद ॥ ९ ॥

सिद्धः प्राह प्रवक्ष्यामि वृत्तान्तं नामधारक ॥
हिरण्यकशिपुं हन्तुं नृसिंहोऽत्रावतीर्य च ॥ १० ॥

हे वदान्य योगीशाग्रतः कथां कथयेति पादलग्नोऽभवत्। सन्तुष्टः सिद्ध आह। अनुपमं माहात्म्यं मुदा विस्तराद्वक्ष्ये शृणु। श्रीगुरुः प्रीत्योदुम्बरस्याधः स्थितः। तच्छ्रुत्वा नामधारक आह। पुण्यवृक्षान् त्यक्त्वाऽस्य कुत उदुम्बरे प्रीतिः। वेदादिष्वश्वत्थः श्रेष्ठो मतोऽथाप्युदुम्बरप्रीतेः कारणं किं वद ॥ ५-९ ॥ सिद्ध आह। यदा क्रुद्धो नृसिंहो नखैर्हिरण्यकशिपोः कोष्ठं

---

१ प्रीतिः.

क्रुद्धो नखायुधैः कोष्ठं विदार्यांत्राणि माल्यवत् ॥
दधौ कण्ठे स हर्षेण भृत्योक्ति[1] सत्यतां नयन् ॥ ११ ॥
उदरे तस्य दैत्यस्य कालकूटोपमं विषम् ॥
वडवानलवद्दीप्तमसह्यं दुःप्रधर्षणम् ॥ १२ ॥
तद्विदारणकालेऽस्य विषं व्याप्तं नखेषु तु ॥
सन्तप्तानि नखान्यासंस्तदा शिष्यावधारय ॥ १३ ॥
दुःसहा वेदना जाता महालक्ष्मीस्तदैत्य तु ॥
औदुम्बराणि प्रददौ नखतापोपशान्तये ॥ १४ ॥
नखान् शीतौदुम्बरेषु स्थापयामास तत्क्षणम् ॥
शान्तो विषाग्निर्नृसिंहः परमां शान्तिमाययौ ॥ १५ ॥
उग्रोऽपि शान्तो नृसिंहो लक्ष्मीमालिंग्य तत्तदा ॥
वेदोभौ[2] सुप्रसन्नौ च वृक्षाय ददतुर्वरम् ॥ १६ ॥
हृषीकेशोऽवदत्कल्पवृक्षोदुम्बर सर्वदा ॥
फलैर्बहुभिराढ्यश्च कल्पवृक्षो भविष्यसि ॥ १७ ॥

विदार्यान्त्राणि मालावत्कंठे दधौ तदा दैत्योदरे वडवानलवद्दीप्तं कालकूटवदसह्यं विषं नखेषु लग्नम् ॥ १०-१२ ॥ तेन नखास्तप्ताः । दुःसहवेदना च जाता । तदा नखतापशान्तये लक्ष्म्योदुम्बरफलानि दत्तानि । तदौदुम्बरस्पर्शाद्विषाग्निः शान्तः । नृसिंहः शान्तिं ययौ । उग्रोऽपि शान्तो नृसिंहो लक्ष्मीमालिङ्गयत् । उभावपि प्रसन्नौ वृक्षाय वरं ददतुः । नृसिंह आह । हे उदुम्बर, त्वं कल्पवृक्षः सदा फलाढ्यो भविष्यसि । ये भक्त्या त्वां भजन्ति

१ नारदकश्यपप्रल्हादसनकादिवाक्यं २ विषशांतिकरणं वेद.

भक्त्या भजन्ति ये त्वां तत्काम्यसिद्धिर्द्रुतं भवेत् ॥
त्वद्दर्शनादुग्रविषशान्तिः सद्यो भविष्यति ॥ १८ ॥

ये सेवन्ते मनुष्यास्त्वां तेषामपि भविष्यति ॥
सर्वकामफलावाप्तिः सर्वपापक्षयोऽपि च ॥ १९ ॥

त्वत्सेवनादपि वधूर्वन्ध्या पुत्रवती भवेत् ॥
त्वरितं ते भविष्यन्ति श्रीमन्तो दैन्यपीडिताः ॥ २० ॥

त्वच्छायाजलमध्ये ये स्नानं कुर्वन्ति भक्तितः ॥
तेषां भागीरथीतोयस्नानपुण्यं न संशयः ॥ २१ ॥

त्वच्छायामाश्रिता मर्त्या जपानुष्ठानतत्पराः ॥
तेषां फलमनन्तं स्यादिष्टलाभश्च सत्वरम् ॥ २२ ॥

यः सेवते नरस्त्वां स व्याधिहीनो भवेत्सदा ॥
ब्रह्महत्यादिदोषास्तु नश्यन्त्येव त्वदर्चनात् ॥ २३ ॥

यं यं सङ्कल्प्य मनसा त्वां भजन्तीह भाविकाः ॥
ते प्राप्नुवन्ति त्वरितं तं तं काममसंशयम् ॥ २४ ॥

तत्कामसिद्धिः शीघ्रं भविष्यति । त्वद्दर्शनात्सर्वविषशान्तिः । ये त्वां भजन्ति तेषां सर्वकामसिद्धिः पापक्षयश्च । त्वत्सेवनाद्वन्ध्या पुत्रवती दरिद्रः श्रीमांश्चाशु भविष्यति ॥ १३-२० ॥ त्वच्छायाजलस्नानाद्भागीरथीस्नानफलम् ॥ २१ ॥ त्वच्छायाजपानुष्ठानादनन्तफलमिष्टलाभश्च । त्वत्सेवको व्याधिहीनो भवेत् । त्वदर्चनाद्ब्रह्महत्यादिनाशः । त्वद्भजकानां शीघ्रं सङ्कल्पितकामसिद्धिः । त्वदधीनाः सर्वे देवाः । श्रिया सहाहमपि त्वयि

त्वदधीनाः सर्वदेवास्त्वयि लक्ष्म्या सहाप्यहम् ॥
वसामीति हृषीकेशो नृसिंहोऽस्मै[1] वरं ददौ ॥ २५ ॥

तस्मात्कलौ कल्पतरुरेवंभूत उदुम्बरः ॥
उग्रोऽपि नरसिंहोऽभूत्सुशान्तो यत्फलाश्रयात् ॥ २६ ॥

येनोग्रविषशान्तिर्हि कृता यस्मै वरोऽर्पितः ॥
अतस्तत्रैव वसति श्रीनृसिंहसरस्वती ॥ २७ ॥

यतः स्वस्योग्रताशान्तिरवतारान्तरे[2]ऽभवत् ॥
तस्मादुदुम्बरतले श्रीगुरुर्वसतीष्टदः ॥ २८ ॥

उदुम्बरोऽतिसुलभः कल्पवृक्षसमो मतः ॥
विशेषाच्छ्रीगुरुस्थित्या सर्वकामफलप्रदः ॥ २९ ॥

तस्मिन्कल्पद्रुमे चन्द्रमौलिः श्रीगुरुरन्वहम् ॥
ब्रह्मविष्ण्वीशरूपोऽपि लीलया नृतनुः स्थितः ॥ ३० ॥

वसामीति हृषीकेशो नृसिंहो वरं ददौ ॥ २२-२५ ॥ तस्मादुदुम्बरः कलौ कल्पतरुः यत्फलादुग्रो नृसिंहः शान्तोऽभूत् । यतस्तस्मै वरो दत्तस्ततस्तत्रैव श्रीनृसिंहसरस्वती वसति ॥ २६-२७ ॥ यतोऽवतारान्तरे स्वविषशान्तिर्जाता ततस्तत्रेष्टदो वसति । सुलभोऽयं कल्पतरुः श्रीगुरुस्थित्या विशेषतः कामदः ॥ २८-२९ ॥ तत्र चन्द्रमौलिर्ब्रह्मविष्णुशिवरूपी नृदेहः

१ उदुंबराय २ नृसिंहावतारे.

भक्तानां तारणार्थाय त्रिमूर्तिर्गुरुनायकः ॥
अवतीर्णः क्षितौ तीर्थपावनार्थं नृविग्रहः ॥ ३१ ॥

अप्रकाशतया[1] वृक्षमूले तिष्ठति सद्गुरुः ॥
प्रत्यहं तत्र मध्याह्ने बभूव सुमहोत्सवः ॥ ३२ ॥

योगिन्योऽपि चतुःषष्टिः समागत्यामरेश्वरात् ॥
प्रणम्य श्रीगुरुं भक्त्या प्रत्यहं समपूजयन् ॥ ३३ ॥

प्रणम्य श्रीगुरुं भक्त्या प्रार्थ्य नीत्वा निजाश्रमम् ॥
गन्धाक्षतादिभिः सर्वैरुपचारैरपूजयन् ॥ ३४ ॥

तत्र भुक्त्वा पुनर्देवः स्माधितिष्ठत्युदुम्बरम् ॥
प्रत्यहं तदविज्ञाय विस्मिता अभवन्द्विजाः ॥ ३५ ॥

अहो न याति स यतिर्भिक्षार्थं ग्राममन्वहम् ॥
द्वीपेऽरण्ये कथं कालं स नयत्यशनं विना ॥ ३६ ॥

गूढा[2] चेष्टाऽस्य विज्ञेया संस्थाप्यैकं नरं त्विह ॥
कुतो भिक्षामाहरतीत्येको गूढोऽत्र योजितः ॥ ३७ ॥

श्रीगुरुर्भक्ततारणार्थं भूमौ अवतीर्य तीर्थानि पावयन्गुप्तरूपेण स्थितो मध्याह्ने महोत्सवं चक्रे। अमरेश्वराच्चतुःषष्टिर्योगिन्य एत्य श्रीगुरुं भक्त्या ( सं- ) पूज्य नत्वा प्राथ्र्य स्वाश्रमं नीत्वा गन्धादिभिरपूजयन् ॥ ३०-३४ ॥ गुरुस्तत्र प्रत्यहं भुक्त्वोदुम्बरे तिष्ठति। तच्चेष्टामविज्ञाय विस्मिता द्विजा आहुः। अहो भिक्षार्थमयं न गच्छति। द्वीपेऽरण्येऽशनं विना कथं कालं नयति। गुप्ताऽस्य चेष्टा कश्चिन्नरं संस्थाप्य कुतो भिक्षामानयतीति ज्ञेयेति

---

१ गुप्तरूपेण २ गुप्ता.

ततस्ते सङ्गमं जग्मुर्विलीयैकोऽत्र च स्थितः ॥
मध्याह्नसमये सोऽपि भीतभीतोऽभवत्स्वतः ॥ ३८ ॥

परीक्षितुं प्रभोरन्तं य इच्छन्तीह ते नराः ॥
द्रक्ष्यन्ति यममार्गं द्राक्ते चाधोगतिभागिनः ॥ ३९ ॥

स भीतोऽगान्निजस्थानं ब्राह्मणोऽत्रान्तरे तटे ॥
गङ्गानुजाख्यः कृषिको भाविकः क्षेत्ररक्षकः ॥ ४० ॥

पूजनाय गुरोर्गङ्गामध्याद्योगिन्य आगताः ॥
दिव्यास्ता वीक्ष्य मार्गं च जलमध्ये स विस्मितः ॥४१

स विस्मितः प्राह कोऽयं यतिर्मार्गः कथं जले ॥
द्विभागं दृश्यते नीरं मध्यतो यात्ययं कुतः ॥ ४२ ॥

इत्थं ध्यायन्नपश्यत्स योगिनीभिः प्रपूजितम् ॥
भोजितं गुरुनाथं तं पुनः पूर्ववदास्थितम् ॥ ४३ ॥

गङ्गानुजो निरीक्ष्येदं स्वगतं प्राह विस्मितः ॥
ईशावतारोऽयमत आनर्चुर्देवकन्यकाः ॥ ४४ ॥

विचार्यैकं नरं तत्र स्थापयामासुः । स विलीय स्थितोऽपि मध्याह्ने भीतोऽभवत् ॥ ३५-३८ ॥ गुरोरन्तं परीक्षितुमिच्छंति ते नरकभाजः । स भीतो ग्रामं गतः । तत्र कृषिरक्षको गङ्गानुजभक्तो जलमध्यात् पूजार्थमागता योगिनीर्वीक्ष्य जलमध्ये मार्गं च वीक्ष्य विस्मित आह । कोऽयं यतिः जलमार्गः कथम् । द्विभागं जलं दृश्यते । इत्थं ध्यायन्योगिनीभिः पूजितं भोजितं पुनः पूर्ववत्स्थितं च दृष्ट्वा स विस्मितः स्वगतं प्राह । ईशावतारोऽयमतो देवकन्या आनर्चुरिति । ततः परेद्युः स महोत्सवं दृष्ट्वा

ततः परेद्युस्तीरस्थः स ददर्श महोत्सवम् ॥
गुरुं नीराज्य योगिन्यो नमश्चक्रुः प्रपूज्य च ॥ ४५ ॥

ताभिः सह प्रवाहान्तर्मार्गेणागाद्गुरुस्त्विति ॥
स निरीक्ष्य स्वयं तेन मार्गेणान्वाययौ मुदा ॥ ४६ ॥

द्विभागं तीरतो जातं जलं नद्यास्तु मध्यतः ॥
पुरं ददर्शानुपमं सद्रत्नाञ्चितगोपुरम् ॥ ४७ ॥

वराऽमरावतीतुल्या पुरी दिनकरप्रभा ॥
दृष्ट्वा तावद्दीपहस्ताः प्राप्ता नेतुं गुरुं जनाः ॥ ४८ ॥

नीराज्य श्रीगुरुं नीत्वा मन्दिरे रत्नमण्डिते ॥
ददुः सिंहासनं रत्नखचितं देवकन्यकाः ॥ ४९ ॥

उपचारैः षोडशभिर्विधिना पूज्य सद्गुरुम् ॥
चतुर्विधैः षड्रसान्नैर्भोजयामासुरादरात् ॥ ५० ॥

भुक्तो गुरुर्वीक्ष्य नरं किमर्थं त्वमिहागतः ॥
इत्यपृच्छत्स तं प्राह दर्शनायागतोऽस्मि ते ॥ ५१ ॥

योगिन्या पूजितं नमस्कृतं च ताभिः सह प्रवाहमध्ये मार्गं च वीक्ष्य स्वयं स च तेनैव मार्गेणान्वगात् ॥ ३९-४६ ॥ तीरतो द्विभागं जलं मध्ये रत्नाञ्चितगोपुरं पुरं चापश्यत् ॥ ४७ ॥ दीपहस्ताः श्रीगुरुं नीराज्यामरावतीसमं सूर्याभं पुरं नीत्वा रत्नखचितसिंहासने उपवेश्य देवकन्या विधिना पूज्य षड्रसचतुर्विधान्नैर्भोजयामासुः । भुक्तो गुरुर्नरं वीक्ष्याह । किमर्थमागतोऽसीत्यपृच्छत्स गुरुं प्राह दर्शनायागतोऽस्मि । हे गौरीरमण,

इत्युक्त्वा श्रीगुरुं नत्वा पादलग्नमना जगौ ॥
गिरिजारमण स्वामिंस्त्रिमूर्तिस्त्वं हि केवलः ॥ ५२ ॥
न त्वत्स्वरूपज्ञानं मे मायासंसारवेष्टितम् ॥
स्वामिन्भवाब्धिमग्नं मां समुद्धर कृपानिधे ॥ ५३ ॥
त्वं विश्वतारकस्तस्मादवतीर्णोऽसि भूतले ॥
अज्ञानान्धस्य लोकस्य ज्योतीरूपोऽसि केवलम् ॥५४॥
भवेत्त्वद्दर्शनं यस्य स सर्वाभीष्टभाग्भवेत् ॥
ऐहिकामुष्मिकानर्थान् लभेत्स क्षणमात्रतः ॥ ५५ ॥
इति गङ्गानुजोऽस्तौषीत्स्तोत्रैर्नानाविधैर्गुरुम् ॥
आश्वासयामास च तं संतुष्टो गुरुनायकः ॥ ५६ ॥
श्रीगुरुः प्राह ते दैन्यं नष्टं गङ्गानुजाखिलम् ॥
यद्यद्वाञ्छसि चित्तेनाभीष्टं तत्तल्लभेत्तव ॥ ५७ ॥
यद्दृष्टमिह तत्क्वापि न प्रकाशय सर्वथा ॥
याँवत्तिष्ठामीह तावत्सद्गतिस्ते भविष्यति ॥ ५८ ॥

स्वामिंस्त्वं केवलं त्रिमूर्तिः ॥ ४८-५२ ॥ मे त्वत्स्वरूपज्ञानं न । हे दयाब्धे संसारवेष्टितं मामुद्धर । त्वं विश्वतारकोऽत्रावतीर्णोऽसि । अज्ञानान्धलोकस्य ज्योतीरूपोऽसि । यस्य त्वद्दर्शनं भवेत्स ऐहिकामुष्मिकार्थान् शीघ्रं लभते । इति स्तोत्रैः स्तुतो गुरुस्तमाश्वास्य तुष्ट आह ॥ ५३-५६ ॥ ते सर्वं दैन्यं नष्टम् । यद्यद्वाञ्छसि तत्तल्लभेत् । यदिह दृष्टं तत् यावदत्र तिष्ठामि तावन्मा प्रकाशय । ते सद्गतिर्भविष्यति ॥ ५७-५८ ॥ इत्युक्त्वा गुरुरुदुम्बरं प्राप्तः ।

---

१ यावदिह तिष्ठामि तावन्न प्रकाशय अर्थात् ततः परं प्रकाशने न दोषः । मदनुग्रहात्ते सद्गतिर्भविष्यति.

इत्युक्त्वोदुम्बरं प्राप श्रीगुरुः सोऽपि भाविकः ॥
अन्वागत्य नमश्चक्रे भक्त्या गङ्गानुजोऽपि तम् ॥५९॥

ततः श्रीगुरुणाऽऽज्ञप्तो हृष्टो गङ्गानुजो ययौ ॥
क्षेत्रं निधानमलभच्छ्रीगुरोः सम्प्रसादतः ॥ ६० ॥

ज्ञानवान्त्सोऽभवन्नित्यं गुरुसेवापरायणः ॥
महानन्देन युक्तोऽभूत्पुत्रपौत्रश्रियान्वितः ॥ ६१ ॥

भक्त्या प्रत्यहमागत्य ननाम श्रीगुरुं मुदा ॥
एकभक्तिः कलत्रेण साकं भेजे स भाविकः ॥ ६२ ॥

एवं सत्येकदा माघे पूर्णिमायामुपेत्य तम् ॥
प्रणम्य श्रीगुरुं भक्तो विनयाऽवनतोऽब्रवीत् ॥ ६३ ॥

श्रुतं जगद्गुरो स्वामिन्माघस्नानं द्विजोदितम् ॥
महाफलं प्रयागे च क्षेत्रं काशीपुरं महत् ॥ ६४ ॥

कथंभूतः प्रयागोऽसौ काशी वाराणसी च या ॥
न जाने जातिहीनोऽहं भोः स्वामिन्कृपया वद ॥ ६५ ॥

स तु गङ्गानुजो भक्त्या तं नत्वा गुरुणाऽऽज्ञप्तः स्वक्षेत्रमेत्य गुरुप्रसादान्निधिं लब्ध्वा ज्ञानवानभूत्। स ततः पुत्रपौत्रयुक्तो महानन्देन नित्यं गुरुसेवापरायणोऽभूत्। एवं कलत्रयुक्तः स भाविकः प्रत्यहं गुरुं भेजे। एकदा माघे पूर्णिमायां गुरुं प्रणम्य विनत आह। गुरो, माघस्नानं प्रयागे महाफलं श्रुतम्। काशी च महाफला ॥ ५९-६४ ॥ कथम्भूता काशी, वाराणसी, प्रयागश्च जातिहीनोऽहं न जाने। स्वामिन्कृपया वद ॥ ६५ ॥

गुरुर्गङ्गानुजं प्राह कृष्णापञ्चनदीयुतिः ॥
प्रयाग एव काशी च स्मृतमत्र युगालयम् ॥ ६६ ॥
कोल्हापुरं गया चेति दक्षिणे त्रिस्थली मता ॥
मनोहरेयं साक्षात्ते दर्शयामि यदीच्छसि ॥ ६७ ॥
तथेत्युक्तः स वैय्याघ्रचमार्सीनो गुरुर्दृढम् ॥
पादुके धारयित्वाऽऽशु प्रयागं प्रातरागमत् ॥ ६८ ॥
स्नात्वा तेन सहागत्य मध्याह्ने काशिकां द्रुतम् ॥
विश्वनाथं प्रदर्श्याशु मनोगत्या गयामपि ॥ ६९ ॥
नीत्वैवं त्रिस्थलीं पश्चात्सायङ्काले निजाश्रमम् ॥
सह तेनागतः सोऽपि दृष्ट्वैवं चकितोऽभवत् ॥ ७० ॥
कीर्तिं प्रकटितां ज्ञात्वा श्रीगुरुर्विश्वनाटकः ॥
गोप्येनातः परं भाव्यमिति चित्ते व्यचारयत् ॥ ७१ ॥
प्रकाश्य स्थानमहात्म्यं भगवानमरेश्वरम् ॥
अनुनीय[1] ततो गन्तुं परमात्मोपचक्रमे ॥ ७२ ॥

श्रीगुरुराह । कृष्णापञ्चनदीयोगः प्रयागः । काशी च युगालयं । कोल्हापुरं च गयेति त्रिस्थली । यदीच्छसि तां दर्शयामीति व्याघ्राजिनारूढः श्रीगुरुः पादुकां दृढं धारयित्वा प्रातः प्रयागमेत्य स्नात्वा तेन सह काशीं गत्वा विश्वेश्वरं प्रदर्श्य मध्याह्ने मनोगत्या गयामपि गत्वैवं त्रिस्थलीं नीत्वा सायं तेन सह स्वाश्रमं ययौ । गङ्गानुजो दृष्ट्वैवं चकितोऽभवत ॥ ६६-७० ॥ विश्वनाटक एवं स्थित्वाऽपि कीर्तिं प्रकटितां ज्ञात्वा स्थानमाहात्म्यं प्रकाश्यामरेश्वरमनुनीय गन्तुमुपचक्रमे ॥ ७१-७२ ॥ योगिन्यो जिगमिषुं तं

---

१ इतोऽहं यास्यामीत्यनुनीय.

योगिन्योऽपि चतुःषष्टिर्गुरुं जिगमिषुं तदा ॥
विनताः करुणं प्राहुः कुतोऽस्मान्समुपेक्षसे ॥ ७३ ॥
नित्यं त्वद्दर्शनादेव नष्टं तापत्रयं हि नः ॥
निकटे तेऽन्नपूर्णाऽतस्त्यक्तुं त्वामुत्सहेत कः ॥ ७४ ॥
इति दीनवचः श्रुत्वा श्रीगुरुर्योगिनीरितम् ॥
ददौ ताभ्यो वरं हृद्यं[1] सन्तुष्टो भक्तवत्सलः ॥ ७५ ॥
श्रीगुरुः प्राह तिष्ठामि सदोदुम्बर एव मे ॥
स्थानमेतन्निवासोऽत्र ममाप्राकट्यतः[2] सदा ॥ ७६ ॥
भवतीभिरिह स्थेयं कल्पवृक्षे मनोहरे ॥
अन्नपूर्णामहं प्रीत्या स्थापयामि ध्रुवं तथा ॥ ७७ ॥
स्थातव्यं भवतीभिश्च कल्पवृक्षेऽप्युदुम्बरे ॥
स्थानं ममामरपुरपश्चिमेऽत्र सुनिश्चितम् ॥ ७८ ॥
ख्यातं भविष्यति स्थानं पूजयिष्यन्ति वोऽखिलाः ॥
कामसिद्धिर्द्रुतं यूयं सदा भवत कामदाः ॥ ७९ ॥

दृष्ट्वा विनताः सकरुणमाहुः । कुतोऽस्मानुपेक्षसे । नित्यं त्वद्दर्शनात्तापत्रयनाशः । ते निकटेऽन्नपूर्णाऽतस्त्वां त्यक्तुं क उत्सहेत ॥ ७३-७४ ॥ इति श्रुत्वा हृष्टो भक्तवत्सलः ताभ्यो वरं दास्यन्नाह । सदाऽप्रकटरूपेणोदुम्बरे तिष्ठामि । मनोहरेऽत्र कल्पवृक्षे भवतीभिः स्थेयम् । अन्नपूर्णां ध्रुवं स्थापयामि । कल्पवृक्षे भवतीभिश्च स्थातव्यम् । अमरपुरे पश्चिमतो मम स्थानं ख्यातं भविष्यति । ये वः पूजयिष्यन्ति तेभ्यः कामदा भवत ।

---

१ अभीष्टं २ गुप्तरूपेण.

युष्मानुदुम्बरं चैव पादुके मे मनोहरे ॥
येऽर्चन्ति कामनास्तेषां भविष्यन्त्याशु पूरिताः ॥८०॥
तिष्ठेत्सदाऽन्नपूर्णाऽत्र द्विजाराधनमन्वहम् ॥
भविष्यत्याप्तकामाश्च पुरुषार्थविदो जनाः ॥ ८१ ॥
पापनाशे काम्यतीर्थे सिद्धतीर्थे[1] च ये नराः ॥
स्नात्वाऽभिषिञ्चन्ति सप्तवारं सोदुम्बराश्च वः ॥ ८२ ॥
लभेद्वन्ध्यापि षष्टयब्दा पुत्रं दीर्घायुषं दृढम् ॥
ब्रह्महत्यादिपापानि नश्यन्ति स्नानमात्रतः ॥ ८३ ॥
सोमसूर्यग्रहे वाऽर्कसंक्रमे स्नानमत्र ये ॥
कुर्वन्त्यनन्तं तत्पुण्यमश्वमेधाधिकं खलु ॥ ८४ ॥
सोमवत्याममायां वा व्यतीपातेऽन्यपर्वणि ॥
एकं स्नानं यदि भवेत्तस्य पुण्यं ब्रवीमि वः ॥ ८५ ॥
सहस्रं स्वर्णशृङ्गिण्यो धेनवः कपिलाः शुभाः ॥
अलंकृता रौप्यखुरा गङ्गायां ब्राह्मणोत्तमे ॥ ८६ ॥

युष्मानुदुम्बरं पादुके चार्चन्ति तेषां कामसिद्धिः ॥ ७९-८० ॥ अत्रान्नपूर्णा तिष्ठेत्। नित्यं द्विजाराधनं कामसिद्धिः पुरुषार्थश्च ॥ ८१ ॥ पापनाशकाम्यसिद्धतीर्थे स्नात्वा सप्तवारमुदुम्बरं वश्चाभिषिञ्चन्ति वृद्धा वन्ध्याऽपि सा दीर्घायुषं पुत्रं लभेत्। अत्र स्नानाद्ब्रह्महत्यादिनाशः। ग्रहणेऽर्कसंक्रान्तौ स्नानादश्वमेधाधिफलम्। सोमवत्यमाव्यतीपातादिषु एकवारस्नानाद्यद्गङ्गायां स्वर्णशृङ्गिण्यो रौप्यखुराः सालंकृताः कपिलाः सहस्रधेनव उत्तमविप्रेभ्यो

---

१ सिद्धितीर्थे इत्यपि पाठः.

दीयन्ते तत्फलं स्नाने भक्त्यैकद्विजभोजनात् ॥
कोटिब्राह्मणसन्तृप्तिफलं नैवात्र संशयः ॥ ८७ ॥
उदुम्बरतले जप्यफलं कोटिगुणं भवेत् ॥
मनसा निर्मलेनैव होमस्यापि तथा फलम् ॥ ८८ ॥
एकादशिन्या रुद्रस्य पादुकापूजनादपि ॥
अतिरुद्राभिषेकस्य फलं निश्चलचेतसाम् ॥ ८९ ॥
प्रदक्षिणा मन्दगत्या ये कुर्वन्ति पदे पदे ॥
वाजपेयक्रतुफलं तेषां नैवात्र संशयः ॥ ९० ॥
तथैव नमनस्यापि पुण्यं कृत्वा प्रदक्षिणम् ॥
द्विवारं ये नमस्कारं कुर्वते ते निरागसः[1] ॥ ९१ ॥
अङ्गहीनोऽथवा कुष्ठी यदि कुर्यात् प्रदक्षिणाम् ॥
लक्षवारं भवेत्तस्य तनुर्देवतनूपमा ॥ ९२ ॥
ईदृङ्मनोहरं स्थानं यत्र कल्पतरुः स्वयम् ॥
लोकदृष्ट्या विलीय[2]ात्र नित्यं तिष्ठामि योगिनीः ॥९३॥

दीयन्ते ततोऽप्यधिकं फलम्। एकविप्रभोजनात्कोटिब्राह्मणभोजनफलम्। शुद्धमनसैकमन्त्रजपाद्धोमाच्च कोटिजपहोमफलम् ॥ ८२-८८ ॥ रुद्रैकादशिन्यभिषेकादतिरुद्राभिषेकफलम् ॥ ८९ ॥ मन्दगत्या प्रदक्षिणायाः पदे पदे वाजपेयफलम्। तथैव द्विवारं प्रदक्षिणाया नमस्कारस्य च फलम्। अङ्गहीनः कुष्ठी वा लक्षप्रदक्षिणातो देवसमाङ्गः। ईदृशे स्थाने कल्पवृक्षे मूढदृष्ट्या विलीय तिष्ठामीत्याभाष्य तत्र तिष्ठन्नपि गन्धर्वपुरं ययौ। विश्वरूपो जगन्नाथः सर्वगतोऽप्युदम्बरे नित्यं तिष्ठति।

१ आगः पापापराधयोः २ गुप्तो भूत्वा.

इत्याभाष्य तिरोभूत्वा तिष्ठंस्तत्रापि सद्गुरुः ॥
गन्धर्वनगरे भीमामरजासङ्गमं गतः ॥ ९४ ॥
विश्वरूपो जगन्नाथः स हि सर्वगतोऽव्ययः ॥
तथाऽप्युदुम्बरे प्रीत्या निवसत्यनिशं गुरुः ॥ ९५ ॥
गन्धर्वनगरे प्राप्तः प्राकटयेन तथाऽपि सः ॥
तस्थावुदुम्बरे प्रीत्या यत्स्थानं ख्यातिमागतम् ॥९६॥
नामधारक कृष्णायां श्रीगुरोर्महिमा त्वयम् ॥
वृत्तो गन्धर्वपुरजं महिमानं वदामि ते ॥ ९७ ॥

सरस्वती प्रार्थयति स्म गङ्गा-
धरप्रसूतिः[1] सुचरित्रगङ्गा ॥
भक्त्याऽवगाह्या श्रवणार्थिभिः सा
[2]कामक्षुदार्तस्य हि दिव्यभिस्सा ॥ ९८ ॥
गुरुचरित्रमिदं खलु कामधुग्
भजति यः सततं तदनन्यभुक् ॥
निधिरहो न जहाति तदालयं
तत इदं विदिता भजतालयम्[3] ॥ ९९ ॥

लोकदृष्टयाऽन्यत्र गतोऽप्युदुम्बरे तिष्ठतीति कृष्णातीरे सद्गुरोर्महिमा जातः । गन्धर्वपुरमहिमानं वक्ष्ये इति । गङ्गाधरपुत्रः सरस्वतीसंज्ञो भक्त्या कथेयमवगाह्येति प्राह ॥ ९०-९८ ॥ गुरुचरित्रमिदं खलु कामधुग्भजति यः सततं तदनन्यभुक् । निधिरहो न जहाति तदालयं तत इदं विदिता भजतालयम्

---

१ गंगाधरपुत्रः २ काम एव क्षुत्तेनार्तस्य दिव्यभिस्सा दिव्यान्नं सुचरित्ररूपगंगा ३ विदेहकैवल्यपर्यंतं आश्रयभूतं वा.

॥ ९९ ॥ इति श्रीगुरुसंहिताचूर्णिकायां एकोनविंशोऽध्यायः ॥

**( इति ) श्रीसिद्ध० सर० नरसिं० महाराष्ट्र० गुरुचरित्रसमानार्थायां वासु० तायां श्रीगुरुसंहितायां ज्ञान० एकोनविंशः (अध्यायः) ॥ १९ ॥**

**॥ आदितः श्लोकाः ॥ २१८० ॥**

**॥ इति एकोनविंशोऽध्यायः ॥ १९ ॥**

---

## ।। अथ विंशोऽध्यायः ।। २० ।।

श्रीदत्तात्रेयाय नमः ।।

सिद्धयोगिपदे धृत्वा शिष्यराण्नामधारकः ।।
करौ सन्धाय विनतो ववन्दे भक्तिभावितः ।। १ ।।
तत्पदोः शिर आधाय वदञ्जय जयेति च ।।
पृच्छति स्म गुरो सिद्धस्तोममौलेऽवधारय ।। २ ।।
स्वामिन्गन्धर्वनगरं गतोऽपि गुरुरास्थितः ।।
उदुम्बरेऽमरपुरेऽप्यदृश्यत्वेन सद्गुरुः ।। ३ ।।
योगिनीभ्यो वरं दत्त्वा स्थित्वा यातोऽन्यतोऽपि च ।।
अत ऊर्ध्वं कथं वृत्ता कथा तां विस्तराद्वद ।। ४ ।।
गुरुस्थानं ब्रवीषि त्वं कल्पद्रुममुदुम्बरम् ।।
ततोऽग्रतो वरः केन लब्धस्तन्मे वदाखिलम् ।। ५ ।।

अध्यायसारसंग्रहश्लोकोऽयम्—
प्रेतार्तिहृताऽर्भौ दत्तौ मृत एकः ।।
वर्ण्यापि तदम्बा विंशे तनुमध्याम् ।। १ ।।

सिद्धयोगिपदं धृत्वा भक्त्या पदयोः शिरः स्थापयित्वा जयेति वदन्नाह । हे सिद्धमौले स्वामिन्, गन्धर्वपुरं गतोऽपि गुरुरुदुम्बरेऽदृश्यतया स्थितः । योगिनीभ्यो वरं दत्वा यातोऽप्यत्र वरद इति ब्रूषे । तर्हि गुरुस्थाने उदुम्बरे केन वरो लब्धस्तन्मेऽखिलं वद ।। १-५ ।। इति श्रुत्वा सिद्ध आह । हे

इति शिष्यवचः श्रुत्वा तुष्टः सिद्धमुनिस्तदा ॥
कृष्णातटोदुम्बरजमाहात्म्यं विस्तराज्जगौ ॥ ६ ॥

शृणु बाल गुरोर्लीलाः कति वक्ष्याम्यूदुम्बरे ॥
सर्वकालं निवसति प्रीतिपूर्वकमीश्वरः ॥ ७ ॥

कल्पद्रुमो यस्य नाम स[1] किं दातुं न शक्यते ॥
यत्र च श्रीगुरोर्वासस्तत्र स्यात्कल्पितं फलम् ॥ ८ ॥

न मे शक्तिर्हि तत्स्थानमाहात्म्यस्याधिवर्णने ॥
एकं निदर्शनं[2] तेऽद्य वक्ष्ये शृणु समाहितः ॥ ९ ॥

शिरोलसंज्ञके ग्रामे विप्र एको महामतिः ॥
गङ्गाधर इति ख्यातो वेदशास्त्रपरायणः ॥ १० ॥

तस्य शान्ता धर्मरता सुशीला स्त्री पतिव्रता ॥
सुता जाता मृतास्तस्यास्ततः सा दुःखिताऽभवत्॥११॥

जाता पञ्च सुतास्तस्या मृतास्तेऽपि तया सुराः ॥
आराधितास्तथाऽप्यस्या दुःखप्रशमनं न हि ॥ १२ ॥

बाल, कृष्णातीरमाहात्म्यं शृणु। कति लीला वक्ष्यामि। सर्वदा यत्र प्रीत्या गुरोर्वासस्तत्र कल्पितफलावाप्तिर्यस्य कल्पद्रुर्नाम स किं न देयात्। तत्स्थानवर्णने मे सामर्थ्यं न। एकं निदर्शनं वक्ष्ये शृणु। शिरोलग्रामस्थ-गङ्गाधराख्यविप्रभार्या धर्मज्ञा सुशीला मृतपुत्राऽऽस। तस्याः पञ्च सुता

---

१ दातुं शक्नोति किं स न इति पाठः साधुः २ दृष्टांतं.

व्रतोपवासैर्विविधैर्वनिता साऽतिदुःखिता ॥
प्राक्कर्म गहनं तस्यास्ततस्तस्या मृताः सुताः ॥ १३ ॥
सा विप्रगृहिणी कर्मविपाकज्ञमपृच्छत ॥
पुत्रशोकप्रदं दोषं पूर्वकर्मसमुद्भवम् ॥ १४ ॥
विद्वान्विप्रोऽवदत्कश्चित्सन्तानक्षयकारणम् ॥
शृणु प्राग्जन्मदोषोत्थं विस्तराद्वच्मि भीरु ते ॥ १५ ॥
गर्भपातं प्रकुरुते तामसो यो नराधमः ॥
जन्मान्तरे तु तद्दोषान्मृतपुत्रो भवेन्नरः ॥ १६ ॥
अश्वहन्ता च गोहन्ता वन्ध्यत्वं प्रतिपद्यते ॥
परद्रव्यापहर्ताऽपि मृतपुत्रो भवेन्नरः ॥ १७ ॥
पूर्वजन्मभवो दोषो दृश्यतेऽस्माभिरेष ते ॥
तं दोषं कथये तुभ्यं सावधानतया शृणु ॥ १८ ॥
कश्चिच्छौनकगोत्रीयो द्विजस्तस्य धनं त्वया ॥
भवान्तरे त्वपहृतं याचतेऽपि न चार्पितम् ॥ १९ ॥

जाता मृताश्च। देवाराधनव्रतोपवासादिना गहनपूर्वकर्मजं दुःखं न नष्टम् ॥६-१३॥ सा कर्मविपाकज्ञं विप्रं पुत्रशोकदं पूर्वकर्मापृच्छत्। विप्र आह। सन्तानक्षयकारणं प्राग्जन्मदोषं शृणु ॥ १४-१५ ॥ योऽधमो गर्भपातकर्ता स जन्मान्तरे मृतपुत्रो भवति ॥ १६ ॥ परद्रव्यहर्ताऽश्वगोहन्ताऽपि तथा। हे ब्राह्मणि, ते पूर्वजन्मदोषो दृश्यते तं शृणु। त्वया जन्मान्तरे शौनकगोत्रीयब्राह्मणस्य शतद्रव्यमपहृतम्। तेन याचितमपि न दत्तम्। स द्रव्य-

३ विप्रं.

स विप्रो द्रव्यलोभेन त्वामुद्दिश्य चकार ह ॥
आत्महत्यां महादोषां पिशाचत्वं गतः स तु ॥ २० ॥

स ते गर्भान्पातयति भ्रूणांस्ते मारयत्यपि ॥
ईदृक्प्राक्कर्म ते तस्य क्षयो भोगेन नान्यथा ॥ २१ ॥

इति विप्रवचः श्रुत्वा खिन्नाऽभूत्सा द्विजाङ्गना ॥
अनुतापेन सन्तप्ता पतिता द्विजपादयोः ॥ २२ ॥

तदा हस्तौ च सन्धाय[1] विनयावनता सती ॥
तत्पदोः शिर आधाय पप्रच्छ करुणं द्विजम् ॥ २३ ॥

चण्डालाऽहं पापिनी मे[2] भक्षितं विषमुल्बणम् ॥
प्रार्थये त्वां कथय मे तच्छान्तिकरमौषधम् ॥ २४ ॥

स विप्रो ब्राह्मणीं प्राह ब्रह्महत्या त्वयाऽर्जिता ॥
यत्तस्यापहृतं द्रव्यं प्रेत्याभूत्स पिशाचकः ॥ २५ ॥

लोभेन त्वामुद्दिश्य महादोषामात्महत्यां कृत्वा पिशाचोऽभूत्स भ्रूणहा ते गर्भान्पातयतीदृक्ते कर्म तस्य भोगादेव क्षयो नान्यथा ॥ १७-२१ ॥ इति श्रुत्वा खिन्नाऽनुतप्ता सा द्विजपादयोः शिरो निधाय विनयावनता सती सकरुणमाह। अहं चण्डाला पापिनी मयोल्बणं विषं भुक्तं तच्छमायौषधं देहि ॥ २२-२४ ॥ विप्र आह। ब्रह्महत्या ते कृता। स मृतः पिशाचोऽ-

---

१ नमस्कृत्य २ मया.

निर्वंशः स मृतस्तस्य जातं नैवौर्ध्वदेहिकम् ॥
जन्मान्तरे धनं तस्य सर्वं भुक्तं त्वयैव हि ॥ २६ ॥

तस्योद्धारं प्रयत्नेन कुरु षोडशसंस्कृतिम् ॥
कृत्वा देहि शतद्रव्यं तद्गोत्रीयद्विजन्मने ॥ २७ ॥

एतेन ते भवेच्छुद्धिस्त्वं कृतार्था भविष्यसि ॥
कृष्णातटे मासमेकमुपवासं समाचर ॥ २८ ॥

पञ्चगङ्गासङ्गमे तु स्नानं कृत्वा यथाविधि ॥
आराधयोदुम्बराख्यं भक्त्या कल्पतरुं सति ॥ २९ ॥

स्नात्वा पापविनाशे तु सप्तवारमुदुम्बरम् ॥
अभिषिच्य पुनः स्नात्वा काम्यतीर्थे यथाविधि ॥३०॥

श्रीगुरोः पादुके दिव्ये भूयो भक्त्याऽऽभिषेचय ॥
ते[1] पूजयैकभावेन मासमेवं समाचर ॥ ३१ ॥

भूत् । तस्यौर्ध्वदैहिकादिकं न जातम् । त्वया तद्धनं च हृतम् । तस्योद्धारायांत्यसंस्कारं कृत्वा तद्गोत्रीयब्राह्मणाय शतद्रव्यं देहि । तेन ते शुद्धिस्त्वं कृतार्था च भविष्यसि । कृष्णातीरे मासमुपवासं कुरु । कृष्णापञ्चगङ्गासङ्गमे यथाविधि स्नात्वोदुम्बरं कल्पद्रुमं भक्त्याऽर्चय ॥ २५-२९ ॥ पापनाशतीर्थे सप्तवारं स्नात्वोदुम्बरमभिषिच्य पुनः काम्यतीर्थे विधिवत्स्नात्वा गुरुपादुके भक्त्याभिषिच्य भावेन मासमात्रं पूजय। पावने नृसिंह-

---

१ पादुके.

श्रीनृसिंहसरस्वत्याः स्थानं तदतिपावनम् ॥
दोषा नश्यन्ति ते पुत्रः पूर्णायुश्च भविष्यति ॥ ३२ ॥

आचरैवं मासमेकं शतद्रव्यं ततोर्पय ॥
सति शौनकगोत्रीयब्राह्मणाय प्रयत्नतः ॥ ३३ ॥

आचर त्वं सुमनसा प्रेतनाम्नौर्ध्वदेहिकम् ॥
कष्टं ते सफलं भूयात्पातु त्वां गुरुनायकः ॥ ३४ ॥

श्रीगुरोः स्मरणं कृत्वा पादुके तस्य पूजय ॥
भविष्यत्यघनाशस्ते विप्रश्चोद्धृतिमेष्यति ॥ ३५ ॥

इति द्विजवचः श्रुत्वा चिन्ताविष्टाब्रवीद्द्विजम् ॥
शतद्रव्यं गृहे नास्ति लभ्यते न कदापि च ॥ ३६ ॥

कष्टं करिष्ये देहेन पूजये चोपवासतः ॥
एकभावेनैकमासं करिष्ये गुरुसेवनम् ॥ ३७ ॥

एवं ब्राह्मणनारी सा विप्रं निश्चयमब्रवीत् ॥
श्रीगुरुप्रेरितमतिः स विप्रोऽप्यब्रवीदिदम् ॥ ३८ ॥

सरस्वतीस्थाने ते दोषा नश्यन्ति । पूर्णायुः पुत्रश्च भविष्यति । एवं मासं चरित्वा शतद्रव्यं च तद्गोत्रजाय दत्त्वा ॥ ३०-३३ ॥ मासमात्रमेवं प्रेतनाम्ना चरित्वौर्ध्वदेहिकं कुरु । ते कष्टं सफलं भवेत् । श्रीगुरुस्त्वां पायात् ॥ ३४ ॥ तत्स्मरणं कृत्वा पादुके पूजय । तेऽघनाशो भविष्यति प्रेतोद्धारश्च ॥ ३५ ॥ इति श्रुत्वा सा चिन्तान्विताऽऽह । शतद्रव्यं गृहे न कदापि लभ्येत । एकभावेनाहं मासमात्रं गुरुपूजोपवासादि करिष्ये । इति तन्निश्चयं ज्ञात्वा विप्र आह ॥ ३६-३८ ॥ यदि द्रव्यं नास्ति तर्हि निर्मल-

शृणु बाले शतद्रव्यं यदि नास्ति ततस्त्वया ॥
गुरुपादार्चनं कार्यं मनसा निर्मलेन हि ॥ ३९ ॥

श्रीगुरुस्तव पापस्य परिहारं करिष्यति ॥
वासो निरन्तरं तस्य तत्रोदुम्बरसन्निधौ ॥ ४० ॥

स कृपालुर्भक्तदोषपरिहारं करिष्यति ॥
गुर्वाज्ञया यथाशक्ति कुरु द्रव्यव्ययं सति ॥ ४१ ॥

इति विप्रवचः श्रुत्वा सन्तुष्टा सा द्विजाङ्गना ॥
श्रीगुरोर्यत्र तत्स्थानं तत्र गत्वा तथाऽऽचरत् ॥ ४२ ॥

स्नात्वा सा सङ्गमे पापनाशतीर्थे यथाविधि ॥
सप्तवारं स्नापयित्वा कृत्वा वृक्षं प्रदक्षिणम् ॥ ४३ ॥

काम्यतीर्थे पुनः स्नात्वाऽभ्यर्च्य श्रीगुरुपादुके ॥
नत्वा प्रदक्षिणीकृत्य सोपवासेन चाभजत् ॥ ४४ ॥

एवं दिनत्रयेऽतीते तस्याः स्वप्ने समेत्य सः ॥
भीषयित्वा पिशाचस्तां ययाचे द्रव्यमात्मनः ॥ ४५ ॥

मनसा गुरुपादार्चनं कुरु। स पापं हरिष्यति। यस्योदुम्बरे निरन्तरं वासः स कृपालुस्ते दोषं वारयिष्यति। गुर्वाज्ञया यथाशक्ति द्रव्यव्ययं कुरु। इति श्रुत्वा तुष्टा सा गुरुस्थानं गत्वा ॥ ३९-४२ ॥ सङ्गमे पापनाशतीर्थे विधिवत्स्नात्वा सप्तवारं स्नापयित्वोदुम्बरं प्रदक्षिणीकृत्य काम्यतीर्थे पुनः स्नात्वा पादुके अभ्यर्च्य नत्वा प्रदक्षिणीकृत्योपवासपराऽभजत्। ततस्तृतीये दिने स्वप्ने पिशाचस्तां भीषयित्वा प्राह। मे द्रव्यं देहि। न चेत्त्वां हन्मि।

स प्राहाद्यापि मे द्रव्यं चेन्न दास्यसि हन्मि हि ॥
त्वामग्रतोऽपि ते वंशं वर्धयिष्यामि नैव च ॥ ४६ ॥

व्यर्था एते तवायासाः पुत्रो वंशेऽपि नैव ते ॥
भविष्यतीति कोपेन तां घातयितुमागतः ॥ ४७ ॥

चकिता विप्रवनिता भीता सोदुम्बरं ययौ ॥
दृष्ट्वा श्रीगुरुनाथं सा तदा तत्पृष्ठतो गता ॥ ४८ ॥

नार्यै दत्त्वाऽभयं विप्रपिशाचं विनिवार्य च ॥
पप्रच्छ श्रीगुरुः कस्मादेतां हंसि स्त्रियं कुधीः ॥ ४९ ॥

स विप्रः श्रीगुरुं प्राह मम द्रव्यं भवान्तरे ॥
अनयाऽपहृतं तेन प्राणास्त्यक्ता मया खलु ॥ ५० ॥

स्वामिन्कृपालो मच्छत्रुपक्षपातस्तवोचितः ॥
न तापसो यतीशस्त्वं कार्यः पक्षाश्रयो न ते[1] ॥ ५१ ॥

ते वंशं नाशयिष्यामि । व्यर्थोऽयं ते श्रमस्ते वंशे पुत्रोऽपि न भविष्यतीति तां हन्तुमागतः ॥ ४३-४७ ॥ तदा भीतोदुम्बरे श्रीगुरुं दृष्ट्वा तत्पृष्ठतो गता । तस्यै अभयं दत्त्वा पिशाचं निवार्याह । कस्मादेनां हंसीति । पिशाच आह । अनया जन्मान्तरेऽर्थोऽपहृतस्ततो मया प्राणास्त्यक्ताः । स्वामिन्मच्छत्रुपक्षपातस्ते नोचितो यतस्त्वं तापसो यतिः ॥ ४८-५१ ॥

---

१ त्वया.

इति तद्वचनं श्रुत्वा श्रीगुरुः कुपितोऽब्रवीत् ॥
त्वमर्दयसि चेद्भक्तान्करिष्ये शासनं तव ॥ ५२ ॥

हितं ते कथयाम्यद्य सद्गतिस्त्वं शृणोषि चेत् ॥
भविष्यति पिशाचत्वपरिहारोऽपि नान्यथा ॥ ५३ ॥

यत्किंचिद्विप्रवनिता दास्यत्यङ्गीकरोषि चेत् ॥
भविष्यति गतिर्नो चेन्मतं ते तदितो व्रज ॥ ५४ ॥

रक्षामि भक्तं वंशाभिवृद्धिपूर्वकमेव हि ॥
आगमिष्यसि चेद्द्रष्टुं भूयो दण्ड्यो भविष्यसि ॥५५॥

इति श्रुत्वा गुरुवच उच्चैर्नत्वा पिशाचकः ॥
उवाच ते पदे दृष्टे स्वामिंस्त्वं मां समुद्धर ॥ ५६ ॥

क्षमस्व मे यथोद्धारस्तथैव त्वं कुरु प्रभो ॥
यथाऽऽज्ञापयसीश त्वं तथैवाङ्गीकरोम्यहम् ॥ ५७ ॥

तच्छ्रुत्वा कुपितो गुरुराह । भक्तान्पीडयासि[1] चेत्ते शासनं करिष्ये । येन सद्गतिस्तत्ते हितं वच्मि । तच्छृणोपि चेत्पिशाचत्वपरिहारो भविष्यति । नान्यथा । इयं शक्त्या यद्द्रव्यं दास्यति तन्नाङ्गीकरोषि चेन्न ते गतिः । इतो व्रज । ५२-५४ ॥ वंशवृद्धिपूर्वकं भक्तं रक्षामि । पुनर्द्रष्टुमेष्यसि चेद्दंड्यो भविष्यसि । तच्छ्रुत्वा पिशाच आह । ते पदे दृष्टे । स्वामिन्मामुद्धर । क्षमस्व । यथोद्धारो मे भवेत्तथा कुरु । यदाज्ञापयासि तथाऽङ्गीक-

---

१ पीडयसि.

श्रीगुरुः प्राह भावेन कारयिष्यति ते क्रियाम् ॥
इयं दाशाहिकीं सद्यः सद्गतिस्ते भविष्यति ॥ ५८ ॥
इत्युक्त्वा तं ततो विप्रस्त्रियं प्राह जगद्गुरुः ॥
त्वं द्रव्येणानुकूलेन प्रेतनाम्ना चर क्रियाम् ॥ ५९ ॥
ब्रह्महत्यादोषनाशस्त्वरितं ते भविष्यति ॥
पूर्णायुषो भविष्यन्ति पुत्री पुत्राश्च ते खलु ॥ ६० ॥
अष्टतीर्थस्नानपूर्वमेतन्नाम्ना चर क्रियाम् ॥
उदुम्बरद्रुस्नपनं सप्ताहं कुरु भामिनि ॥ ६१ ॥
इति स्वप्ने निरीक्ष्यासौ प्रबुद्धा चकिताऽभवत् ॥
हृदा श्रीगुरुमूर्तिं तां चिन्तयामास सा पुनः ॥ ६२ ॥
यथा श्रीगुरुणाऽऽज्ञप्तं सा कर्माकारयत्तथा ॥
ब्रह्महत्यादोषनाशो जातः सोऽपि गतिं गतः ॥ ६३ ॥
स्वप्ने श्रीगुरुनाथोऽस्यास्ततोऽन्यस्मिन्दिने ददौ ॥
नारिकेलफलद्वंद्वं तस्यै परिहिताञ्चले[१] ॥ ६४ ॥

रोमि। श्रीगुरुराह। भावेनेयं दाशाहिकीं क्रियां भक्त्या करिष्यति। तेन ते सद्गतिर्भविष्यतीति तमुक्त्वा ब्राह्मणीं प्राह। शक्त्याऽनुकूलद्रव्येण प्रेत-नाम्ना क्रियां कुरु। ब्रह्महत्यादोषनाशस्ते शतायुःपुत्राश्च भविष्यन्ति ॥५९-६०॥ अष्टतीर्थस्नानपूर्वकं तन्नाम्ना क्रियां कृत्वा सप्ताहमुदुम्बरस्नपनं कुर्विति स्वप्ने दृष्ट्वोत्थाय चकिता सा पुनःपुनश्चिन्तयामास ॥ ६१-६२ ॥ श्रीगुर्वाज्ञया सोक्तवदाचरत्। ब्रह्महत्या नष्टा। पिशाचो मुक्तः। ततोऽन्य-

१ परिधृतवस्त्रप्रांते.

प्राह व्रतं समाप्य त्वं पारणां कुर्विमे फले ॥
भुंक्ष्व सन्ततिवृद्धिस्ते भविष्यति न संशयः ॥ ६५ ॥

ततो बुद्ध्वा पूर्णमनाः पतिं तत्प्राह दंपती ॥
तथैव चक्रतुर्हृष्टौ श्रीगुरोः सम्प्रसादतः ॥ ६६ ॥

यथा चिन्तामणिस्पर्शाद्याति काञ्चनतामयः ॥
तथा गुरुप्रसादात्सा त्वरितं निर्मलाऽभवत् ॥ ६७ ॥

ततः सा गर्भिणी जाता श्रीगुरोः कृपया सुतौ ॥
द्वौ प्रासूताभवद्धृष्टा विप्रस्त्री नामधारक ॥ ६८ ॥

व्रतबन्धमथो ज्येष्ठपुत्रस्यान्यस्य चौलकम् ॥
कर्तुकामौ समारम्भं चक्रतुः पितरौ मुदा ॥ ६९ ॥

जननी जनकश्चोभौ संस्कारं कर्तुमुद्यतौ ॥
पुत्रस्य तस्य हर्षेण महता जातसंभ्रमौ ॥ ७० ॥

प्रीत्या संस्कार आरब्धः सम्भारा अपि सम्भृताः ॥
पूर्वेऽह्नि व्याधिभिर्ग्रस्तः कुमारः सहसाऽभवत् ॥७१॥

दिने स्वप्ने द्वौ नारिकेलौ दत्त्वा तामाह । व्रतं समाप्य पारणां कृत्वा फले भुंक्ष्व । सन्ततिवृद्धिर्भविष्यति न संशयः । ततः सा बुद्ध्वा पत्ये तन्निवेद्य तथैव चक्रे । स्पर्शस्पर्शाल्लोहं स्वर्णमिव गुरुप्रसादान्निर्मलाऽभूत् । ततो गुरुकृपया सा गर्भिणी भूत्वा पुत्रौ प्रासूत । विप्रो हृष्टः ॥ ६३-६८ ॥ ततो ज्येष्ठस्य व्रतबन्धं कर्तुं पितरौ मुदा सम्भारांश्चक्रुः ॥ ६९ ॥ पूर्वेद्युर्व्याधिग्रस्तः कुमारोऽभूत् । अनेके रोगा अपि तेषु तीव्रो धनुर्वातः सद्यः

व्याधयोष्टोत्तरं श्रेष्ठास्तेऽन्योऽन्यं तूत्तरोत्तरम् ॥
तेषु तीव्रो धनुर्वातो यः प्राणान्हर्तुमुद्यतः ॥ ७२ ॥

वक्रीभूता अवयया दृश्यतेऽर्भो[1] भयानकः ॥
त्रिदिनं सोऽतिकष्टं हि बालकः पीडितोऽभवत् ॥७३॥

ततो रात्रौ ज्येष्ठपुत्रः पंचत्वमगमत्क्षणात् ॥
शोकं चकार जननी दुःखेन महताऽऽवृता ॥ ७४ ॥

विलप्य बहुशो माता भुवि शीर्षमताडयत् ॥
उदरं ताडयामास पाषाणेनैव भामिनी ॥ ७५ ॥

देहं त्यक्त्वा धरित्र्यां सा मृतप्रायाऽभवत्क्षणात् ॥
शश्वत्सुतगुणान्स्मृत्वा दुःखिताऽश्रुपरिप्लुता ॥ ७६ ॥

मृतपुत्रशरीरे सा पतिता भृशदुःखिता ॥
शवमालिंग्य रुदती सा मायाजालवेष्टिता ॥ ७७ ॥

प्राह तात सुतश्रेष्ठ मम त्वं प्राणरक्षकः ॥
त्वं क्व यास्यसि मां त्यक्त्वा कठोरं ते मनः कथम् ७८

प्राणहरोऽभूत्। तेनार्भकस्यावयवा वक्रीभूताः। एवं त्रिदिनं पीडितो बालो रात्रौ मृत्युं गतः। माता बहु विलप्य शीर्षं उदरं च पाषाणेनाताडयत्। शश्वत्पुत्रगुणान्स्मृत्वा दुःखार्दिता भुवि देहं त्यक्त्वा मृतप्रायाऽभूत् ॥ ७०-७६ ॥ शवे पतित्वा तमालिंग्य च मायावेष्टिता रुदती ॥ ७७ ॥ साऽऽह। रे सुत, त्वं मे प्राणरक्षकः क्व यास्यसि। कथं ते मनः कठोरं।

---

१ बालकः.

क्व गतोऽस्यधुना रन्तुं[1] पयो मे स्रवते वृथा ॥
शीघ्रमागच्छ धावंस्त्वं प्राणात्प्रियतमोऽसि मे ॥ ७९ ॥

विस्मर्यन्ते गुणाः किं ते निधानं मे त्वमेह हि ॥
मंजुलं बालवाक्यं ते कथं विस्मर्यते मया ॥ ८० ॥

त्वत्स्वरूपसमं पुत्रं न द्रक्ष्यामि कदाचन ॥
स्वप्ने निधानं लब्धं किमिति भ्रान्तिस्त्वया कृता ॥८१॥

सूताः[2] पञ्च सुतास्तेषु निधिस्त्वं केवलं मम ॥
गर्भाधानात्[3]त्वया मह्यं सन्तोषोऽतीव चार्पितः ॥ ८२ ॥

दोहदा उत्तमा जाता दुश्चित्ता न कदाऽभवम् ॥
सुतो भविष्यतीत्येवमानन्दोऽभूत्तथाऽभवत् ॥ ८३ ॥

वरः श्रीगुरुणा दत्तः सत्पुत्रस्ते भविष्यति ॥
तेन हृष्टाऽस्मि वरदपिण्डोऽयमिति निश्चिता ॥ ८४ ॥

रन्तुं क्व गतोऽसि। पयो मे स्रवते। प्राणप्रिय, शीघ्रमेहि ॥ ७८-७९ ॥ कथं ते गुणा विस्मर्यन्ते। त्वं नो निधिः। मंजुलं ते वाक्यं कथं विस्मर्यते। त्वादृशं पुत्रं नेक्षे। स्वप्ननिधिवत्त्वया भ्रान्तिर्दत्ता। ये पञ्च पुत्रा जातास्तेषु त्वं निधिः। गर्भाधानात्सन्तोषः सुतो भविष्यतीत्यानन्ददा दोहदा अप्यासन्। कदापि दुश्चित्ता नाभवम्। आनन्दोऽभूत्। सत्पुत्रो भविष्यतीति श्रीगुरुणा वरो दत्तः तेन वरदपिण्डोऽयमिति हृष्टाऽस्मि। प्रसवादा-

---

१ क्रीडितुं २ प्रसूताः ३ ल्यब्लोपे पंचमी, गर्भाधानमारभ्याद्य यावत्.

आरभ्य प्रसवात्सौख्यं त्वयातीव समर्पितम् ॥
रक्षणं ते कृतं प्राणप्रियोऽयमिति निश्चयात् ॥ ८५ ॥

तव मेऽतीव विश्वासो वार्धक्ये पालयिष्यसि ॥
नोचितं गमनं तेऽस्मांस्त्यक्त्वा धर्मोऽप्ययं न ते ॥८६॥

बहुदुःखं पुराऽभून्मे विस्मृतं तत्त्वदीक्षणात् ॥
विश्वासो मे कृतो दुर्गात्तारयिष्यसि नस्त्विति ॥ ८७ ॥

एवं नानाप्रकारेण विललापातिदुःखिता ॥
तां बालां सकलो लोको वारयन्नब्रवीदलम् ॥ ८८ ॥

यद्भावि तन्न देवर्षिदैत्यानपि न (वि) मुञ्चति ॥
ललाटे लिखितं धात्रा सत्यं तदचलं खलु ॥ ८९ ॥

अवतारा येऽवतीर्णास्तेऽपि न स्थिरतां गताः ॥
मनुष्यास्तु पुनर्यूयं ध्रुवं किं ते मतं वद ॥ ९० ॥

एवं तां बोधयामास जनः साऽतीव दुःखिता ॥
प्रोचे फलद्वयं मह्यं समाश्वास्य समर्पितम् ॥ ९१ ॥

रभ्य सौख्यं त्वया दत्तम्। प्रियोऽयमिति ते रक्षणं कृतम्। पुरा बहु दुःखं जातं तत्ते दर्शनान्नष्टम्। दुर्गात्तारयिष्यसीति विश्वासः कृतः ॥ ८०-८७ ॥ एवं दुःखितां विलपंतीं तां वारयञ्जन आह ॥ ८८ ॥ यद्भावि तद्देवादीनां न मुञ्चति। धात्रा ललाटे लिखितं निश्चलम्। अवतारा अपि न स्थिराः। यूयं तु मर्त्या इति बोधिताऽपि दुःखिता साऽऽह। येनाश्वास्य फले दत्ते,

भूमण्डले महाख्यातिः श्रीनृसिंहसरस्वती ॥
उदुम्बरे निवसति तेन दत्तः सुतस्त्वयम् ॥ ९२ ॥

कथं स्यात्तद्वचो मिथ्या मह्यं येन वरोऽर्पितः ॥
मद्भत्या तस्य भवतु त्यक्ष्येऽनेनं[1] सहाप्यसून् ॥ ९३ ॥

इति स्मृत्वा गुरुं प्राह कथं मां पीडयस्यहो ॥
त्वद्वाक्येऽहं हि विश्वस्ताऽध्रुवं त्वं सत्यवागिति ॥ ९४ ॥

त्वं सत्यसंकल्प इति विश्वासोऽतीव मेऽभवत् ॥
कुतो विश्वासघातोऽद्य त्वं किं विश्वासघातकः ॥ ९५ ॥

त्वं त्रिमूर्त्यवतारोऽसि श्रीनृसिंहसरस्वती ॥
बिभीषणध्रुवाद्यैस्ते मेयं[2] सत्यं वचः कथम् ॥ ९६ ॥

कुतो विश्वासघातस्ते यद्भवान्मामुपेक्षते ॥
कुतो मे निश्चयः प्राणांस्त्वामुद्दिश्य त्यजाम्यहम् ॥९७॥

भुवि यत्ख्यातिर्यस्योदुम्बरे वसतिस्तेन दत्तोऽयं सुतः मे वरो दत्तश्च तस्य वाचो मिथ्या किं। मद्भत्या तस्यास्तु। पुत्रेण सहासूंस्त्यक्ष्ये इति गुरुं स्मृत्वाऽऽहाहो कथं मां पीडयसि। त्वद्वाक्येऽहं विश्वस्ता। त्वं सत्यवाक्सत्यसङ्कल्प इति। अद्य विश्वासघातः कृतः। त्वं त्रिमूर्त्यवतारो नृसिंहसरस्वती। बिभीषणध्रुवाद्यैः कथं ते वचः सत्यं मन्तव्यम्। कथं मामुपेक्षसे। त्वामुद्दिश्य प्राणांस्त्यजामि ॥ ८९-९७ ॥ अत्र सेवकाः प्रदक्षिणा उदुम्बरार्चनं

१ पुत्रेण २ मातुं योग्यं.

आयान्ति सेवका लोकाः कुर्वन्ति त्वत्प्रदक्षिणाः ॥
कुर्वन्त्युदुम्बरार्चां च पुरश्चरणमच्युत ॥ ९८ ॥

पुरश्चर्या कृतास्माभिः फललब्ध्याऽलमद्य नः ॥
को विश्वासस्तव स्थाने प्राणांस्त्यक्ष्यामि तेऽग्रतः ॥९९॥

कीर्तिस्ते प्रसृता सृष्टौ मम विश्वासघातक ॥
येऽग्रे भक्ता भजिष्यन्ति विश्वसन्ति कथं हि ते १००

अहं ब्रह्मस्वदोषार्ता पदलग्नाऽभवं तव ॥
अंगीकृत्य जहासीह कोऽयं धर्मस्तवानघ ॥ १०१ ॥

व्याघ्रभीत्याऽऽप[1] शरणं यवनं गौस्ततः स तु ॥
प्राणाञ्जहार तद्वन्मे जातमद्य न संशयः ॥ २ ॥

किंवा पीडा[2]लयं कांक्षन्देवालयमुपागतम् ॥
देवालयं पतितवा तं यथा निन्ये यमालयम् ॥ ३ ॥

पुरश्चरणं च कुर्वते। तथा मयाऽपि कृतम्। फललब्ध्याऽलं। ते स्थाने को विश्वासस्तेऽग्रे प्राणांस्त्यक्ष्ये ॥ ९८-९९ ॥ हे विश्वासघातक, ते कीर्तिः प्रसरतु। येऽग्रे भजन्ति तेषां कथं विश्वासः। ब्रह्मग्रहदोषार्ताऽहं पदलग्नाऽभवं। मामङ्गीकृत्य जहास्ययं कस्ते धर्मः। व्याघ्रभीत्या शरणं गतां गां यथा यवनो हन्ति तथा मे जातम्। देवदर्शनार्थं देवालयं गतस्योपरि यथा देवालयः पतति तथा मे जातम्। किं वाच्यं। मम पुत्रप्राणान्कथं न

---

१ प्राप　२ दुःखनाशं.

जातं मम तथैवाद्य किं ब्रवीमि तवाग्रतः ॥
मम पुत्रस्य च प्राणान्न रक्षसि कथं वद ॥ ४ ॥
योषिदेवमहोरात्रं दुःखेन परिपीडिता ॥
अत्रान्तरे प्रातरभूत्ततः सूर्योऽपि चोदितः ॥ ५ ॥
द्विजाः संहत्य चागत्य तत्समीपमदोऽब्रुवन् ॥
व्यर्थं करोषि शोकं त्वं मौर्ख्यमेतत्तवोचितम् ॥ ६ ॥
यद्यद्यदा यदा भावि तत्तद्ब्रह्मापि नान्यथा ॥
कर्तुं शक्यः शवं देहि संस्कर्तुं द्राङ्नदीतटे ॥ ७ ॥
इति श्रुत्वा वचः सा च रुदती प्राह भो द्विजाः ॥
देयो वह्निर्मया सार्धं शवं दास्यामि नान्यथा ॥ ८ ॥
अहमग्निं प्रवेक्ष्यामि साकं पुत्रेण चेति सा ॥
उक्त्वा शवं न प्रददौ तं बबंध निजोरसि ॥ ९ ॥
लोका ऊचुः कर्कशेयं[1] याऽऽत्मानं दग्धुमिच्छति ॥
साकं पुत्रशवेनायमहो धर्मः क चेदृशः ॥ ११० ॥

रक्षसि । हे गुरो, वदेत्यहोरात्रं शोकदुःखपीडिताऽभूत् । तदा सूर्योऽप्युदितः ॥ १००-१०९ ॥ द्विजा आगत्याहुः । व्यर्थं किं रोदिषि । तवेदं मौर्ख्यम । यद्यद्यदा यदा भावि तदन्यथा कर्तुं कः शक्यः । नदीतटे संस्कर्तुं शवं देहि ॥ ६-७ ॥ इति श्रुत्वा रुदती साऽऽह । मया सहाग्निर्देयः । शवं न दास्ये । पुत्रेण साकं अग्निं प्रवेक्ष्यामीति शवं कुक्षौ बबन्ध । लोका ऊचुः । कर्कशेयं पुत्रेण सहात्मदहनं क धर्मः न दृष्टो न श्रुतश्चात्महत्या महा-

१ स्त्री.

न दृष्टं न श्रुतं चापि स्वपुत्रेणाग्निवेशनम् ॥
आत्महत्या महादोषाऽप्येषा वक्त्यन्यथाऽन्यथा ॥११॥

इति नानाप्रकारैस्ते प्रोचुः सा निश्चयेन तान् ॥
प्राह प्राणांस्त्यजामीति तां न पस्पर्श कोऽपि हि ॥१२॥

व्यतीतेऽपि च मध्याह्ने दग्धुं नादाच्छवं स्वयम् ॥
नागाद्गङ्गातटं ग्राम आक्रान्तः समभून्महान् ॥ १३ ॥

अत्रान्तरे ब्रह्मचारी तामुपागत्य सत्वरम् ॥
विस्तरेण यथायोग्यमात्मज्ञानमुपादिशत् ॥ १४ ॥

नामधारक तत्राऽभूद्विचित्रं पुत्रशोकहृत् ॥
सुज्ञानं बोधयामास ब्रह्मचारी स तापसः ॥ १५ ॥

न ब्रह्मचारी स गुरू रूपान्तरधरोऽभ्यगात् ॥
स भक्तवत्सलस्त्रीशः श्रीनृसिंहसरस्वती ॥ १६ ॥

गङ्गाधरसुतो वक्ष्यत्यग्रलीलां सरस्वती ॥
मनोहरां यच्छ्रवणाद्भविष्यन्ति शतायुषः ॥ १७ ॥

दोषेति नानाप्रकारैर्बोधयामासुः । सा निश्चेयनाह । प्राणांस्त्यक्ष्य इति । मध्याह्ने व्यतीतेऽपि शवं दग्धुं नादान्नापि गङ्गां ययौ । ग्रामे महानाक्रान्तोऽभूत्तदा ब्रह्मचारी तामेत्य ज्ञानमुपादिशत् ॥ ८-१४ ॥ चित्रं जातम् । ब्रह्मचारी तापसः सुज्ञानं बोधयामास । स न ब्रह्मचारी किन्तु रूपान्तरेण भक्तवत्सलः त्रीशः श्रीनृसिंहसरस्वत्येव । तल्लीलां सरस्वती अग्रतो वक्ष्यति । यच्छ्रवणाच्छतायुषो भविष्यन्ति ॥ १७ ॥

ये भक्तिपूर्वकमिदं हि गुरोश्चरित्रं
शृण्वन्ति वाऽपि च पठन्ति सदा पवित्रम् ॥
व्याधिः स्पृशत्यपि न कश्चन तच्छरीरं
पूर्णायुरस्य च भवेत्खलु वच्मि सारम् ॥ ११८ ॥

(इति) श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्यगङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञितमहाराष्ट्रभाषान्वितगुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वतीयतिविरचितायां श्रीगुरुसंहितायां ज्ञानकाण्डे विंशः (अध्यायः) ॥
आदितः श्लोकाः ॥ २२९८ ॥

ये भक्तिपूर्वक० ॥ ११८ ॥ इति चूर्णिकायां विंशोध्यायः ॥

॥ इति विंशोऽध्यायः ॥ २० ॥

---

## ॥ अथ एकविंशोऽध्यायः ॥ २१ ॥

श्रीदत्तात्रेयाय नमः ॥ श्रीगुरुभ्यो नमः ॥

सिद्धः प्राह ब्रह्मचारी तां प्राप्तो नामधारक ॥
प्रेतस्य जननीं खिन्नां तत्त्वज्ञानमुपादिशत् ॥ १ ॥
ब्रह्मचारी प्राह नारि दुःखं मा कुरु मौर्ख्यतः ॥
कश्चिरंजीवितः पृथ्व्यां संसारे क्षणभंगुरे ॥ २ ॥
क उत्पन्नो मृतः को वा चेदुत्पन्नः कुतो वद ॥
जलबुद्बुद्वज्जाता अपि ते न स्थिरा नराः ॥ ३ ॥
संयोगे पञ्चभूतानां कर्मणा दृश्यते तनुः ॥
व्यक्ताऽपि भूतपार्थक्ये[१]ऽव्यक्ता कर्मक्षये च सा ॥ ४ ॥

अध्यायसारसंग्रहश्लोकोऽयम्—

विद्युन्मालावत्संबंधं पुत्रादेः स चोन्क्त्वा (?) बोधम् ।
सत्यै चक्रे जीवोपेतं सैकविंशोऽसौ तत्पोतम् ॥ १ ॥

सिद्ध आह । प्राप्तो ब्रह्मचारी खिन्नां मृतपुत्रां तत्त्वमाह ॥ १ ॥ हे नारि, मौर्ख्याद्दुःखं मा कुरु । क्षणभङ्गुरेऽत्र संसारे कश्चिरं जीवी । क उत्पन्नः को मृतः कुत उत्पन्नः । दृश्यमानास्तु जलबुद्बुदा इव न स्थिराः॥ ॥ २-३ ॥ कर्मणा पञ्चभूतसंयोग एव व्यक्ता तनुः । कर्मक्षये नश्यति ।

---

१ पंचभूतानां पृथक्त्वे जाते.

पञ्चभूतात्मकं मायागुणपाशेन वेष्टितः ॥
पुत्रमित्रकलत्रादिदेहं भ्रान्त्यैव मन्यते ॥ ५ ॥

सत्त्वं रजस्तम इति गुणा मायामया हि तैः ॥
मनो विक्रियते तेन ममाहंत्वादिको[1] भ्रमः ॥ ६ ॥

लभेत्सत्त्वेन देवत्वं रजसा च मनुष्यता ॥
तमसाऽधमता चैव निजकर्मानुसारिणः[2] ॥ ७ ॥

यद्यदाचरितं कर्म सुकृतं वाऽपि दुष्कृतम् ॥
तद्वशेन फलप्राप्तिः स्वस्य भोग्या स्वयं क्रिया[3] ॥ ८ ॥

तदधीनानीन्द्रियाणि यथाऽस्य गुणवासना ॥
लिप्यन्ते सुखदुःखैस्ते ये मायापाशवेष्टिताः ॥ ९ ॥

संसारेऽस्मिन्वर्तमाना निजकर्मगुणोद्भवाः ॥
ते स्वार्जितानुसारेण सुखदुःखभुजोऽन्वहम् ॥ १० ॥

मायापाशवेष्टिताः पञ्चभूतात्मकदेहं पुत्रादिकं मन्यन्ते भ्रान्त्यैव। मायामय-सत्त्वरजस्तमोगुणैर्मनो विक्रियते। तेन अहन्तादिभ्रमः। सत्त्वाद्देवत्वं रजसा मर्त्यत्वं तमसाऽधमत्वं यद्यत्कर्म सुकृतं दुष्कृतं वाऽऽचीर्णं तद्वशात्सुखं दुःखं च भोग्यं। यथाऽस्य गुणवासना तदधीनानीन्द्रियादीनि चेष्टन्ते। माया-पाशबद्धास्तद्वशाल्लिप्यन्ते सुखदुःखभाजश्च भवन्ति। संसारेऽत्र स्वकर्म-

---

१ स्त्रीपुत्रादौ ममत्वं देहादौ अहंत्वं २ जीवस्य ३ कर्म.

येषां तु कल्पकोट्यायुर्ऋषयोऽप्यमराश्च ते ॥
न कर्मणा परित्यक्ता मनुष्याणां तु का कथा ॥ ११ ॥

देहाधीना नरा देहाः कालाधीना न संशयः ॥
नानागुणैः कर्मभिश्च देहधारीह चेष्टते ॥ १२ ॥

यो देहधारी तस्यैते षडविकारा[1]: क्रमेण तु ॥
स्थैर्यं स्वदेहस्य न तत्सम्बन्धस्य च सर्वथा ॥ १३ ॥

अत एव ज्ञानवन्तो न तुष्यन्ति हि जन्मनः ॥
यद्वा मृत्युञ्जतस्यापि दुःखं कुर्वन्ति नैव ते ॥ १४ ॥

यदा गर्भगतो जन्तुरव्यक्तोऽपि ततः क्रमात् ॥
व्यक्तो भूत्वा जनित्वाऽपि भूयोऽव्यक्तो भवत्यहो १५

यथाऽप्सु वायुनोद्भूता बुद्बुदाः क्षणमात्रतः ॥
नश्यन्ति तद्वद्देहोऽपि कर्मणा न स्थिरः सति ॥ १६ ॥

गुणोद्भवा जीवाः स्वार्जितानुसारेण सुखदुःखभाजः। कल्पकोट्यायुषो देवा अपि कर्मणा न त्यक्ताः नृणां तु का कथा ॥ ४-११ ॥ जीवा देहाधीनाः। देहः कालाधीनो नानागुणकर्मभिर्देहधारी चेष्टते। यो देहधारी तस्यैते षड्विकाराः। कुतो देहस्य तत्सम्बन्धस्य च स्थैर्यम्। अत एव बुधा जन्ममरणाभ्यां न सुखदुःखभाजः। पूर्वमव्यक्तोऽपि गर्भगतो व्यक्तो भूत्वाऽन्तेऽव्यक्ततामेति। जलबुद्बुदा इव देहा न स्थिराः। गर्भगतोऽप्यस्थिरो

---

१ जायते, अस्ति, वर्धते, विपरिणमते, अपक्षीयते, नश्यति.

यदैव गर्भगो देहोऽध्रुवो ज्ञेयस्तदैव हि ॥
यावत्कर्मानुबन्धोऽसौ फलभुक्तावदेव हि ॥ १७ ॥

केऽपि बाल्ये मरिष्यन्ति तारुण्येऽन्यत्र केचन ॥
यावद्यस्यार्जितं तावत्तद्देहेनैव भुज्यते ॥ १८ ॥

पितृमातृसुतभ्रातृस्वीयबुद्ध्या भ्रमन्ति ये ॥
ते मूढदृष्टयो भ्रष्टास्ते मायापाशवेष्टिताः ॥ १९ ॥

बाह्येऽपि निर्मलो देहो रेतोरक्तोद्भवोऽन्तरे ॥
मांसास्रमज्जास्थिशुक्रश्लेष्ममूत्रमलाश्चितः ॥ २० ॥

विधिः कर्मानुसारेण जातमात्रस्य देहिनः ॥
ललाटे लिखतीहैतद्भोग्यमेव शुभाशुभम् ॥ २१ ॥

न जेष्यन्तीह कालं च न कर्मापि च केचन ॥
अतः कस्यापि देहस्य नित्यत्वं नास्ति सर्वथा ॥२२॥

स्वप्नलब्धनिधानस्य विश्वासः कस्य जागृतौ ॥
इन्द्रजालफलस्येह स्थैर्यं मन्येत को बुधः ॥ २३ ॥

ज्ञेयः । यावत्कर्मानुबन्धस्तावत्सुखदुःखफलभाक् ॥ १७ ॥ स्वार्जितभुक्कश्चिद्बाल्ये काश्चित्तारुण्येऽन्यत्र वा म्रियते ॥ १८ ॥ मायापाशवेष्टिता मूढाः मातापितृसुतादिबुद्ध्या भ्रमन्ति । बाह्ये शुद्धोऽप्यन्तर्मलमूत्रमांसादियुग्रेतोरक्तोद्भवो देहः कथं शुचिः ॥ २० ॥ धात्रा ललाटे लिखितं शुभाशुभकर्म भोग्यं । केऽपि कालं कर्मापि न जेष्यन्ति । अतो देहस्य नित्यत्वं नास्ति स्वप्नलब्धनिधिवत् । जागृतौ इन्द्रजालवत् देहस्य को बुधः स्थैर्यं मन्यते ।२३।

सम्बन्धनित्यता ते चेत्पूर्वजन्म क्व तेऽभवत् ॥
मानुषं वाऽन्यजातीयं कोटिजन्मगतं वद ॥ २४ ॥

यदा नृयोनिरासीस्त्वं जननी कस्य वाऽथवा ॥
कस्यासीर्गृहिणी वाऽग्रे कस्य का वा भविष्यसि ॥२५॥

कस्ते माता पिता वाऽऽसीद्भवान्तरकथां वद ॥
मृतः पुत्र इति भ्रान्त्या वृथा शोकं करोष्यहो ॥ २६ ॥

पञ्चभूतात्मको देहश्चर्ममांसास्थिवेष्टितः ॥
मलिनोऽस्य ममत्वेन शोकोऽयं क्रियते वृथा ॥ २७ ॥

कुतो मृत्युः क्व वा पुत्रस्त्वं व्यर्थं शोचसि भ्रमात् ॥
शवं प्रदेहि संस्कर्तुं शास्त्रलौकिकरीतितः ॥ २८ ॥

इति तस्यै ब्रह्मचारी तत्त्वज्ञानमुपादिशत् ॥
सर्वं श्रुत्वाऽपि सा भूयो विनयावनताऽब्रवीत् ॥ २९ ॥

स्वामिन्करुणया मह्यमुपदिष्टस्त्वयाऽधुना ॥
तारकः परमो धर्मो मनो मे तेन न स्थिरम् ॥ ३० ॥

सम्बन्धस्य नित्यत्वं चेत्पूर्वजन्मनि त्वं कस्य का वाऽऽसीः । पूर्वं ते नृजन्म चेत्कस्य माता भार्या वाऽग्रतो वा कस्य का वा भविष्यासि वद । पञ्चभूतात्मको देहश्चर्मादिवेष्टितस्तस्य ममत्वेनायं वृथा शोकः । कः पुत्रो कुतो मृत्युर्व्यर्थं भ्रमाच्छोचसि । शास्त्रलौकिकरीतितः संस्कर्तुं शवं देहीति ब्रह्मचार्युक्तं श्रुत्वा सा प्रणताऽऽह ॥ २९ ॥ स्वामिन्कृपया परमो धर्म उक्तः । मे मनो न स्थिरम् ॥ ३० ॥

प्रारब्धं चेत्प्रमाणं ते कथ्यते भजनं कुतः[1] ॥
अयोऽपि स्पर्शसंस्पर्शात्स्वर्णतां नैव याति किम् ॥३१॥

प्राग्दैवहीनाऽहमिति ज्ञात्वेशचरणौ धृतौ ॥
दत्त्वाऽभयं स पश्चान्मामधुना किमुपेक्षते ॥ ३२ ॥

ज्वरेण पीडितः कश्चिद्याति धावन्भिषग्[2]गृहम् ॥
वैद्योऽगदप्रदानेन गदनाशं करोत्यहो ॥ ३३ ॥

आपन्नो[3] याति शरणं सम्पन्नं करुणं यदा ॥
तदापत्तिं निहत्याशु सम्पत्तिं प्रददात्यहो ॥ ३४ ॥

तद्वन्मया त्रयीमूर्तिः श्रीनृसिंहसरस्वती ॥
श्रितस्तेन वरो दत्तः स भवत्यन्यथा कथम् ॥ ३५ ॥

आराधितो मया सोऽपि तेन दत्तो वरोऽपि मे ॥
तदीयवचसा नूनं सुस्थिरा निश्चिताऽभवम् ॥ ३६ ॥

प्रारब्धं प्रमाणं चेत्किमर्थं भजनम्। स्पर्शस्पर्शात्स्वर्णत्वं लोहं न याति किम्। दैवहीनया मे ते पदे धृतेऽभयं दत्त्वा मामुपेक्षसे किम्। ज्वरार्ताय गृहङ्गतायागददानेन वैद्यः शं कुरुते। प्रभुः शरणागतमापन्नं सम्पन्नं करोति। मया त्रिमूर्तिर्गुरुराश्रितो वरश्च दत्तः। सोऽन्यथा कथम् ॥ ३१-३५ ॥ आराधनाद्वरो दत्तः तद्वचसा स्थिरा निश्चिन्ताऽभवम्।

---

१ कुतो हेतोरीश्वरस्य भजनं कर्तव्यं २ वैद्यः ३ आपद्ग्रस्तः.

मयि स्थितायां विश्वासे सोऽभूद्विश्वासघातकः ॥
अहो मौर्ख्यं ममेदं हि ततो वक्ति भवानिदम् ॥ ३७ ॥

अत एव तदग्रे मे प्राणांस्त्यक्ष्यामि सर्वथा ॥
देहोऽयं गुरुनाथाय देयस्तत्कीर्तिवृद्धये ॥ ३८ ॥

इति तद्वचनं श्रुत्वा ज्ञात्वा तद्भावनां दृढाम् ॥
उपायं कथयामास ब्रह्मचारी द्विजस्त्रियै ॥ ३९ ॥

श्रीगुरौ तव निष्ठा चेच्छतायुरपि ते सुतः ॥
लब्धोऽपि चेन्मृतो दैवान्नय तं गुरुसन्निधिम् ॥ ४० ॥

यत्र त्वया वरो लब्धस्तत्रार्पय कलेवरम् ॥
कृष्णापञ्चनदीयोगोऽत्र कल्पद्रुरुदुम्बरः ॥ ४१ ॥

इति तद्वचनं श्रुत्वा निश्चित्यापि तथैव सा ॥
बद्ध्वा कुक्षौ शवं प्राप सोदुम्बरसमीपतः ॥ ४२ ॥

तत्र पादुकयोः शीर्षं ताडयामास भामिनी ॥
स्नापिते रुधिरेणैव पादुके क्रुद्धया तया ॥ ४३ ॥

एवं मयि स्थितायां स विश्वासघातकोऽभूत्। अहो मे मौर्ख्यम्। तदग्रे प्राणांस्त्यक्ष्येऽयं देहस्तस्मै देयः तत्कीर्तिवृद्धिरस्तु ॥ ३६-३८ ॥ इति श्रुत्वा तद्भावं ज्ञात्वोपायमाह ॥ ३९ ॥ गुरौ तव निष्ठा। शतायुः पुत्रो लब्धः स दैवान्मृतश्चेद्यत्र कृष्णापञ्चनदीयोगे उदुम्बरे वरो लब्धस्तत्र देहं त्यज ॥ ३९-४१ ॥ इति श्रुत्वा शवं कुक्षौ बद्ध्वोदुम्बरमेत्य क्रुधा पादुकयोः शीर्षं ताडयामास। रक्तेन पादुकाभिषेकं चक्रे। सर्वशोकादधिकः

सर्वेभ्योऽपि च शोकेभ्यः पुत्रशोको विशिष्यते ॥
मातापित्रोर्मृत्युमूलः क्षयरोगः स एव हि ॥ ४४ ॥

सूर्योऽप्यस्तं गतस्तावद्दग्धुं सा न ददौ शवम् ॥
विप्रा ऊचुः शुचाऽलं नो दग्धुं देह्यद्य तं शवम् ॥ ४५ ॥

नारण्येऽस्मिन्नरा नारि कथं स्थेयं निशीह तु ॥
कर्कशेऽतः शवं देहि शीघ्रं न इति तेऽब्रुवन् ॥ ४६ ॥

कथंचनापि न ददौ शवं बद्ध्वोदरे तु सा ॥
उच्चैः सती प्ररुदती पतिता पादुकोपरि ॥ ४७ ॥

अन्योऽन्यमूचुस्तेऽस्माभिर्न स्थेयमिह वै निशि ॥
भवेत्तस्करबाधाऽपि ततो यास्यामहे गृहान् ॥ ४८ ॥

अद्य स्नात्वाऽपि चोपोष्य प्रातःकाल उपागते ॥
पुनरेत्य प्रकर्तव्यो दाहोऽस्माभिः शवस्य तु ॥ ४९ ॥

रात्रौ दुर्गन्ध उद्भूते त्यक्ष्यत्येषा शवं खलु ॥
ततो दग्धुं दास्यतीयं कर्कशा नात्र संशयः ॥ ५० ॥

पुत्रशोकः पित्रोः क्षयरोगः । सूर्योऽस्तं गतः । विप्राः शवं दग्धुमयाचन्त । नारण्ये नराः । निश्यत्र कथं स्थेयं । कर्कशे, शवं देहीत्युक्ताऽपि शवं न ददौ । पादुकयोः पतितोच्चै रुरोद । द्विजा ऊचुरत्र न स्थेयम् । अत्र तस्करबाधाऽतो गृहं यामोऽद्य स्नात्वोपोष्य प्रातरेत्य शवदाहः कार्यः ॥ ४२-४९ ॥ रात्रौ दुर्गन्धे उद्भूते कर्कशा शवं दास्यतीति ते ग्रामं

इत्युक्त्वा ते ययुर्ग्रामं तत्र तौ पितरौ स्थितौ ॥
भृशं शुशोच सा नारी ततो रात्रिरुपागता ॥ ५१ ॥
द्विदिनं वीतनिद्रा सा शुशोच जननी भृशम् ॥
यामत्रये व्यतीते तु रात्र्याः सा निद्रिताऽभवत् ॥५२॥
स्वप्ने ददर्श साऽप्येकं जटाभस्मविभूषितम् ॥
व्याघ्रचर्मपरीधानं भांतं[1] रुद्राक्षमालिनम् ॥ ५३ ॥
योगदण्डं त्रिशूलं च कराभ्यां दधतं स तु ॥
प्राहाक्रोशसि कस्मात्त्वं भामिनी[2]ह ममोपरि ॥ ५४ ॥
किं जातं ते कुमारस्य चिकित्सां प्रकरोम्यहम् ॥
इत्युक्त्वा सोऽभयं दत्त्वा श्रीगुरुर्भक्तवत्सलः ॥ ५५ ॥
भस्म क्षिप्त्वा शवे प्राह मुखमस्य विदारय ॥
वायुस्फूर्त्या मृतमपि जीवयामि पुनः सति ॥ ५६ ॥
प्राणो नामैष वायुः स बहिर्यातो मुहुर्मया ॥
आनीय पूर्ववन्न्यस्तस्त्यजातः शुचमङ्गने ॥ ५७ ॥

ययुः । पितरौ तत्र स्थितौ । रात्रिर्जाता । द्विदिनं विनिद्रा सा शुशोच । निशीथे तस्याः स्वप्ने जटाभस्मभूषितो व्याघ्रचर्मधृग्रुद्राक्षयोगदण्डशूलधारी तां प्राह । कुतो ममोपरि आक्रोशसि । कुमारस्य किं जातम् । चिकित्सां कुर्वे । इत्युक्त्वाऽभयं दत्त्वाऽऽह । शवमुखं विदारय । वाय्वावेशान्मृतमपि जीवयामि ॥ ५०-५६ ॥ श्लो० प्राणो नामैष वायुः स बहिर्यातो मुहुर्मया । आनीय पूर्ववन्न्यस्तस्त्यजातः शुचमङ्गने ॥ ५७ ॥ इति श्रुत्वा प्रबुद्धा

---

१ तेजःपुंजं २ हे कोपवति.

इति दृष्ट्वा प्रबुद्धा सा भयभीताऽपि जाग्रती ॥
प्राह भ्रान्तिः कुतो न्वेषा प्रेते जीवद्दशा कुतः ॥ ५८ ॥

यच्चिन्त्यते जाग्रति तद्दृश्यते स्वप्न एव हि ॥
क्व नृसिंहमुनिः काहं वृथेयं भ्रान्तिरादृता ॥ ५९ ॥

न्यूनं प्रारब्धमस्माकं देवः किं न करिष्यति ॥
मौर्ख्याद‍ज्ञानतो दोषः स्थाप्यते श्रीगुरूपरि ॥ ६० ॥

इति चिन्तान्विता जाता शवं संस्थाप्य दूरतः ॥
जातं सर्वाङ्गमुष्णं च चैतन्यं सर्वसन्धिषु ॥ ६१ ॥

सा प्राहास्य शवस्याङ्गे भूतावेशोऽभवत्किमु ॥
इत्युक्त्वा मनसा भीता सा शवं दूरतोऽत्यजत् ॥ ६२ ॥

सर्वसन्धिषु चैतन्यं व्याप्तं बालः स चोत्थितः ॥
स प्राह क्षुधितोऽस्म्यम्ब शीघ्रमन्नं प्रयच्छ मे ॥ ६३ ॥

भीता प्राह। कुतोऽसौ भ्रान्तिः। प्रेते जीवद्दशा कुतः ॥ ५८ ॥ यच्चिन्त्यते तत्स्वप्ने दृश्यते। क्व नृसिंहः क्वेयं भ्रान्तिः। न्यनं नः प्रारब्धम्। देवः किं (न) करिष्यति। मया मौर्ख्याद्गुरूपरि दोषः स्थाप्यते। इति चिन्तया शवं दूरतः स्थापयामास। सर्वाङ्गमुष्णं जातम्। सर्वसन्धिषु चैतन्यं प्राप्तम् ॥ ५९-६१ ॥ शवाङ्गे भूतावेशोऽभवत्किमित्युक्त्वा भीता शवं दूरतोऽत्यजत् ॥ ६२ ॥ सर्वसन्धिषु चैतन्यं व्याप्तम्। बाल उत्थितः। स

---

१ भूतप्रवेशः.

इति बालो रुदन्नम्बां प्राप तत्स्तनतोऽस्रवत् ॥
क्षीरं द्वात्रिंशद्धारं सा निदधौ तन्मुखे तदा ॥ ६४ ॥

पूर्वं सन्देहयुक्ताऽपि ततो हृष्टा कटौ तु सा ॥
गृहीत्वा बालकं प्राप स्वभर्तृनिकटं सती[1] ॥ ६५ ॥

प्रबोध्य सा पतिं तस्मै प्रीता वृत्तान्तमादितः ॥
शशंस सोऽवदद्दृष्टश्चरित्रं सद्गुरोरिदम् ॥ ६६ ॥

ततः प्रदक्षिणीकृत्य दम्पती तमुदुम्बरम् ॥
भक्त्या प्रणम्य साष्टाङ्गं स्तुवन्तावूचतुः स्तवैः ॥६७॥

जय जय वरमूर्ते त्र्याकृते[2] दिव्यकीर्ते
विधिहरिहरमूर्ते नाशितस्वीयजूर्ते[3] ॥
निजभजकहितेच्छो वत्सल प्रेक्षसे त्वं
निजभजकपथं किं तानशोपेक्षसे त्वम् ॥ ६८ ॥

प्राहाम्ब, क्षुधितोऽस्मि । शीघ्रमन्नं देहीति रुदन्बालोऽम्बां प्राप । तस्याः द्वात्रिंशद्धाराभिः क्षीरमस्रवत् । सा तन्मुखे ददौ । पूर्वं सन्देहयुक्ताऽपि सा हृष्टा कटौ तमादाय भर्तारमेत्य सम्बोध्य तस्मै वृत्तं शशंस गुरोश्चरित्रम् ॥ ६३-६६ ॥ ततो दम्पती उदुम्बरं प्रदक्षिणीकृत्य भक्त्या साष्टाङ्गं नत्वोचतुः ॥ ६७ ॥ भक्त्या समंत्रविधिना शमीपत्रपुष्पादिना (सं) पूज्य

---

१ प्रति इत्यपि पाठः  २ मनुष्याकृते.  ३ ज्वरे.

त्वं विश्वतारक इति प्रथिताऽत्र कीर्ति-
स्त्रावतीर्य भवताऽपहृता स्वजूर्तिः ॥[1]
माहात्म्यमीश तव वर्णयितुं क्षमः कः
स्वामिन्क्षमस्व त इहास्तु कृपावलोकः ॥ ६९ ॥
बालो यथा स्वजननीमपि कोपयुक्तो
ब्रूते कठोरवचनानि तथैव नाथ ॥
त्वन्मायया हतधियो वयमप्यधीश
त्रीश ब्रवाम उचितांविद[2] एव धीशं[3] ॥ ७० ॥
सर्वं[4] क्षमस्व करुणं शरणं प्रपन्ना
इत्यादि नाथमभिभाष्य पुनः क्षमाप्य ॥
श्रीशं प्रणम्य करुणावचनैस्ततस्ते
स्नातुं ययुस्त्रितनु[4]सिंधुजलेऽतिपूते ॥ ७१ ॥
बालेन कालमुखतः पुनरागतेन
स्नात्वाऽम्बुना क्षतजं[5]लिप्तसुपादुके तौ ॥
प्रक्षाल्य कल्पकमुदुम्बरवृक्षमूलं
संस्नाप्य चक्रतुरुभावपि दीपमालाः ॥ ७२ ॥
भक्त्या सम्पूज्य विधिवन्मन्त्रपूर्वकमीश्वरम् ॥
शमीपत्रैः सकुसुमैरानर्चतुरुभौ गुरुम् ॥ ७३ ॥

नीराज्य गीताद्यैस्तुष्ट्वा भावमयं तं भावेनानर्चतुः । तदा सूर्योदयोऽभु-

---

१ स्वभक्ततापः २ यथोचितानभिज्ञाः ३ धीप्रेरक, धियां शेते इति वा ४ ककुद्मती, वेणी, कृष्णारूपा तनुर्यस्याः ५ रक्तं.

नीराज्य गीतवाद्यैश्च तुष्ट्वा भावेन भाविकौ ॥
सुभावं भावनातीतं भावज्ञं भावनामयम् ॥ ७४ ॥

अत्रान्तरे निशाऽतीता जातो दिनकरोदयः ॥
विप्रा अपि ततो ग्रामाच्छवं संस्कर्तुमागताः ॥७५॥

ते जीवन्तं सुतं दृष्ट्वा बभूवुर्विस्मिता भृशम् ॥
महानन्दोऽभवत्तत्र सर्वे भुक्त्वा ययुर्गृहम् ॥ ७६ ॥

श्रीगुरोः स्थानमहिमा शिष्यैतावान्त्सुकामदः ॥
सर्वमाहात्म्यकथने ग्रन्थो विस्तरतामियात् ॥७७॥

इति तत्स्थानमाहात्म्यं नामधारक वर्णितम् ॥
साधारण्येन कात्स्र्न्येन वक्तुं कः क्षमते भुवि ॥ ७८ ॥

तस्मिन्नुदुम्बरतले सर्वकालं स्थितो गुरुः ॥
आराधनात्तु तत्कालं कामपूर्तिर्भवेदलं ॥ ७९ ॥

सुपुत्रं लभते वन्ध्या दरिद्रो लभते श्रियम् ॥
आरोग्यं लभते रोगी नापमृत्युर्भवेदिह ॥ ८० ॥

भावयुक्तेन मनसा भजतां गुरुपादुके ॥
जायते वासनापूर्तिस्त्वरितं नात्र संशयः ॥ ८१ ॥

च्छवं दग्धुं विप्रा आगताः ॥ ६८-७५ ॥ ते तं जीवन्तं दृष्ट्वा विस्मिताः । तत्र सर्वे भुक्त्वा मुदा गृहं ययुः । एवं कामदः श्रीगुरुस्थानमहिमा । सर्वकथने ग्रन्थविस्तर इति संक्षेपतो माहात्म्यमुक्तम् । कृत्स्नं वक्तुं कः क्षमः । तत्र सर्वदा गुरुः स्थितः । तदाराधनात्कामपूर्तिः । वन्ध्या सुपुत्रं, दरिद्रः श्रियं, रोग्यारोग्यं लभेन्नात्रापमृत्युः । भक्त्या भजतां शीघ्रं कामसिद्धिर्न

अङ्गहीनोऽथवा कुष्ठी पादुके यदि योऽर्चति ॥
भवेत्सुवर्णदेहोऽसौ सत्वरं नात्र संशयः ॥ ८२ ॥

हृच्छूलगण्डमालारुगपस्मारादयो गदाः ॥
सर्वे नश्यन्ति तत्कालं श्रीगुरोः पादुकार्चनात् ॥ ८३ ॥

ये मन्दमतयो मूकाः पङ्ग्वन्धबधिरा अपि ॥
उदुम्बरार्चनाच्छुद्धाः शोभनाङ्गा भवन्ति ते ॥ ८४ ॥

सिध्यन्ति निश्चयात्तत्र पुरुषार्थाश्चतुर्विधाः ॥
साक्षाच्छ्रीगुरुनाथोऽत्रोदुम्बरेऽस्ति सनातनः ॥ ८५ ॥

कल्पद्रूमो यस्य नाम स प्रत्यक्ष उदुम्बरः ॥
यं यं चिन्तयते कामं तत्तत्सिद्धिरिहाशु नः ॥ ८६ ॥

ब्रुवे ते कति माहात्म्यं नाहं वक्तुं क्षमोऽखिलम् ॥
प्रख्यातः श्रीगुरुर्लोके स नृसिंहसरस्वती ॥ ८७ ॥

कामधुक्तस्य चरितं स गङ्गाधरनन्दनः ॥
वक्ति यच्छृण्वतः शीघ्रं सकलाभीष्टसिद्धयः ॥ ८८ ॥

संशयः । अङ्गहीनः कुष्ठी वा पादुकार्चनात्सुवर्णदेही भवेत् । हृच्छूलगंड-मालापस्मारादयो नश्यन्ति । मन्दधीमूकबधिरा अपि शुभा भवन्ति । यत्रोदुम्बरे श्रीगुरुस्तत्र सर्वे पुरुषार्थाः सिध्यन्ति ॥ ७६-८५ ॥ यस्य नाम कल्पद्रुमः तत्र सर्वकामसिद्धिः किं ब्रुवे । ख्यातो यो नृसिंहसरस्वती सर्वं तन्माहात्म्यं वक्तुं न क्षमः । शृण्वतां सर्वाभीष्टसिद्धिकृत्कामधुक्चरितम्

अत एव हि गङ्गाधरपुत्रः श्रोतृन्सरस्वतीसंज्ञः ॥
प्रार्थयतेऽत्र परत्र च सिद्धयभिलाषुक इदं शृणोतु ज्ञः ८९

॥ ८६-८८ ॥ अत एव हि० ॥ ८९ ॥ इति चूर्णिकायां एकविंशोऽध्यायः ॥

( इति ) श्रीसि० रूपेण सर० विर० नृसिं० न्वितगु० यां
श्रीगुरु० ज्ञानकाण्डे एकविंशः ( अध्यायः ) ॥
आदितः श्लोकाः ॥ २३८७ ॥

॥ इति एकविंशोऽध्यायः ॥ २१ ॥

---

# ॥ अथ द्वाविंशोऽध्यायः ॥ २२ ॥

श्रीगणेशाय नमः ॥

प्रणम्य सिद्धपादौ स शिष्यराण्नामधारकः ॥
करसम्पुटमाबध्य विनयावनतोऽब्रवीत् ॥ १ ॥
जय सिद्धार्य योगेश शिष्यलोकमनोहर ॥
भवाब्धितारकोऽज्ञानध्वान्तज्योतिस्त्वमेव मे ॥ २ ॥
भवच्चरणसम्पर्कादद्य ज्ञानं ममाभवत् ॥
परमार्थज्ञानलाभस्त्वत्प्रसादादभून्मम ॥ ३ ॥
तन्मे गुरुर्ज्ञानमार्गो दर्शितो ज्ञानदीपकः ॥
त्वं तारकः सिद्धराजो योगी परमपूरुषः ॥ ४ ॥
गुरोश्चरित्रं कथितं कामधुग्विस्तरेण मे ॥
नाथाद्यापि मनस्तृप्तमपेक्षातीव वर्धते ॥ ५ ॥

गन्धर्वं प्राप्य भीमामरदुहितृयुतिं भिक्षार्थमथ गुरु-
र्गत्वादीनद्विजौको गतरदमहिषीं वन्ध्यां भरवहाम् ।
दृष्ट्वा दुग्धं ययाचे तदनु सुवदना स्त्रीः क्षीरमदुहद्-
द्वाविंशेऽदात्पयोऽस्मै तदु वरदगुरुः पीत्वाऽगमदसौ ॥ १ ॥

नामधारकः सिद्धपदं धृत्वा हस्तौ सन्धाय विनयेनाह । भो योगीश सिद्ध, जय । त्वं भवतारकोऽज्ञानध्वान्तज्योतिस्त्वम् । भवत्पदस्पर्शाज्ज्ञानं परमार्थलाभश्चाभूत् । गुरुर्ज्ञानमार्गदर्शकस्तारकः । परमपुरुषस्त्वं सिद्धयोगी ॥१-४॥ त्वया कामधुक् गुरुचरितं विस्तराच्छ्रावितं तेन न तृप्तिः ।

पुरा कथा प्रकथिता गंधर्वं श्रीगुरुर्गतः ॥
कथं कथाऽग्रतो वृत्ता तां मे कथय विस्तरात् ॥ ६ ॥

इति शिष्यवचः श्रुत्वा सिद्धः प्राह सविस्तरम् ॥
सुगुणस्त्वं गुरुकृपाबालको नामधारक ॥ ७ ॥

धन्यं धन्यं मनस्ते च धन्यं धन्यं च जीवितम् ॥
त्वं नूनं पावनः पुण्यः समस्तभुवनेषु हि ॥ ८ ॥

प्रश्नैस्त्वया कृतैरेतैः सन्तुष्टं मम मानसम् ॥
कामधुक्स्वामिचरितकथनाह्लाद एव मे ॥ ९ ॥

जातोऽत्रानन्तमहिमाऽनुपमः परमः शृणु ॥
श्रीगुरुर्गुप्तरूपेण गन्धर्वे[1] सङ्गमे[2] स्थितः ॥ १० ॥

यत्रोदग्वाहिनी भीमायुक्ताऽमरजयाऽत्र तु ॥
महास्थानं वरदभूरश्वत्थोऽप्यत्र कामधुक् ॥ ११ ॥

महातीर्थं ह्यमरजाभीमासङ्गम एष तु ॥
प्रयागेन समं क्षेत्रमष्टतीर्थानि चात्र तु ॥ १२ ॥

गुरौ गन्धर्वे गतेऽग्रतो वृत्तं कथयेति श्रुत्वा सिद्ध आह। त्वं (गुरु-)कृपाबालकोऽसि। ते मनो जीवितं च धन्यम्। त्वं पुण्यः पावनोऽसि। ते प्रश्नैर्मनस्तुष्टं। चरितवर्णने आह्लादो वर्ततेऽत्रानन्तोऽनुपमो महिमा जातः। श्रीगुरुर्गुप्तरूपेणास्थात। यत्रोदग्वाहिनी भीमामरजा कामधुगश्वत्थश्च तन्महास्थानं वरदम् ॥९-११॥ भीमामरजासङ्गमः प्रयागसमो-

---

१ गाणगापुरे २ भीमामरजासंगमे.

अपारं तीर्थमाहात्म्यं तदाख्यानं विशेषतः ॥
अग्रतः कथयिष्यामि प्रसङ्गाच्छिष्यसत्तम ॥ १३ ॥
गुरुमूर्तिरतिप्रीत्यात्राप्रकाशतया[1] स्थितः ॥
स्वभक्तोद्धारकस्तीर्थमहिमाख्यापकः प्रभुः ॥ १४ ॥
समस्तानि च तीर्थानि सन्ति श्रीगुरुपादयोः ॥
इति वक्ति श्रुतिस्तीर्थैस्तस्य किं स प्रकाशकः ॥१५॥
क्षेत्राण्यटत्यसौ भक्ततारणार्थं गुरूत्तमः ॥
अप्रकाशतया तत्र स्थितोऽपि प्रकटोऽभवत् ॥ १६ ॥
कथयिष्यामि तत्रत्यमहिमानमनुक्रमात् ॥
श्रीगुरुः प्रकटो जातः कारणं तस्य मे शृणु ॥ १७ ॥
मनोहरे सङ्गमेऽत्र श्रीगुरुर्निवसन्प्रभुः ॥
यस्त्रिमूर्त्यवतारोऽयमप्रकाशो भवेत्कथम् ॥ १८ ॥
सहस्रकिरणः सूर्यः कथं गुप्तो भविष्यति ॥
स्वयम्प्रकाशकस्तद्वदेषोऽस्य सहजो गुणः ॥ १९ ॥

ऽत्राष्टतीर्थानि । अपारं तीर्थमाहात्म्यं तेऽग्रे कथयिष्ये ॥१२-१३॥ भक्तोद्धारस्तीर्थमहिमाख्यापकोऽत्रोवास । यत्पदे सर्वतीर्थानीति श्रुतिर्वक्ति तस्य तीर्थैः किं । भक्ततारणार्थं तीर्थान्यटति । गुप्तः स्थितोऽप्यत्र प्रकटोऽभूत् । तत्क्रमेण कथयिष्ये । श्रीगुरोः प्राकट्ये कारणं शृणु । रम्ये सङ्गमे वसंस्त्रिमूर्त्यवतारो गुरुः प्रकटोऽभूत् । सहस्रकिरणोऽर्कः कथं गुप्तो भवेत् । तथाऽस्य स्वयम्प्रकाशा गुणाः ॥१४-१९॥ ग्रामे वसन्प्रत्यहं

१ गुप्तत्वेन.

स वसन्सङ्गमेऽरण्ये भिक्षार्थं याति चान्वहम् ॥
गन्धर्वनगरं रम्यं मध्याह्ने काल आगते ॥ २० ॥

तस्मिन्ग्रामे त्वेकशतं सन्ति द्विजगृहाणि तु ॥
विप्रौघो राजदत्ताग्राहारभुग्वेदपाठकः ॥ २१ ॥

तेषां मध्ये द्विजः कश्चिद्दरिद्रः क्षीणवृत्तिकः ॥
पतिव्रताशिरोरत्नं तद्भार्या पतिसेवका ॥ २२ ॥

गृहे तस्य दरिद्रस्य वन्ध्यैका महिषी स्थिता ॥
अतिवृद्धा दन्तहीना शिष्य स्यूतनसा[1]ऽभवत् ॥ २३ ॥

नदीतीरात्क्षारमृदाहरणार्थं तु कर्षकाः[2] ॥
नयन्ति तां धनं दत्त्वा प्रत्यहं ब्राह्मणाय ते ॥ २४ ॥

स तु तेन धनेनापि कालं क्रमति निर्धनः ॥
प्रीत्या श्रीगुरुनाथोऽसौ भिक्षार्थं तद्गृहं ययौ ॥ २५ ॥

गुरोर्निन्दां द्विजाश्चक्रुर्याति दीनगृहे यतिः ॥
नायाति नो गृहे भोक्तुं ब्राह्मणाः श्रोत्रिया वयम् २६

मध्याह्ने भिक्षार्थं गन्धर्वपुरं याति। तद्ग्रामे शतं वेदविद्विप्रगृहाणि ॥२०-२१॥ तत्र कश्चिद्दरिद्रो विप्रः। तद्भार्या पतिव्रता ॥ २२ ॥ तद्गृहे वृद्धा दन्तहीना स्यूतनसा वन्ध्या महिषी। तां क्षारमृदाहरणार्थं कर्षकाः प्रत्यहं धनं दत्त्वा नयन्ति। तेन धनेन स वृत्तिं कल्पयति। श्रीगुरुस्तद्गृहं गतः। नित्यं श्रोत्रियविप्राणां नो गृहे षड्रसान्नं, तद्भित्वाऽयं

---

१ रज्जुप्रोतनासिका २ कृषीवलाः.

नित्यमस्मद्गृहे शाका[१]: षड्रसान्नानि चैष तु ॥
हित्वा नो गच्छति कथं दरिद्रद्विजमन्दिरम् ॥ २७ ॥

गुरुमूर्तिस्त्वप्रपञ्चः परार्थो भक्तवत्सलः ॥
सेवकानां हितार्थाय तीर्थीकरोति तद्गृहम् ॥ २८ ॥

प्रीत्या शार्ङ्गधरो यद्वत्प्रयातो विदुरालयम् ॥
आहूतोऽपि न यातोऽसौ दुर्योधननृपालयम् ॥ २९ ॥

वर्तन्ते सात्त्विकधियो ये तत्र श्रीगुरोः कृपा ॥
इह सौख्यं स्वभक्तेभ्यो गतिं दत्ते परत्र च ॥ ३० ॥

एवं कृपालुः परमो भक्तेषु प्रेम यस्य किम्[२] ॥
श्री[३]मत्तैर्यः क्षणार्धेन राज्यं रङ्काय दास्यति ॥ ३१ ॥

यदा कुप्यति कस्मैचित्स क्षणाद्भस्मसाद्भवेत् ॥
वरं दत्त्वा दरिद्रस्य दास्यति क्षितिमण्डलम् ॥ ३२ ॥

यतिः कथं दरिद्रमन्दिरं यातीति विप्रा निंदां चक्रुः। भक्तवत्सलोऽप्रपञ्चो गुरुर्हिताय तद्गृहं तीर्थीकरोति। यथा दुर्योधनेनाहूतोऽपि कृष्णः प्रीत्या विदुरालयं गतः। तथाऽस्यापि सात्त्विकोपरि कृपा। योऽत्र परत्र च भक्तेभ्यो गतिं दत्ते ॥२३-३०॥ भक्तकृपालोः श्रीमत्तैः किम्। यः क्षणाद्रंकाय राज्यं राति। यस्मै कुप्येत स क्षणाद्भस्मसाद्भवेत्। दरिद्रायापि यः क्षितिमण्डलं दातुं क्षमः। धात्रा लिखितानि दुष्टाक्षराणि

१ पाका इति क्वचित्पुस्तके २ तु इति क्वचित्पुस्तके ३ किं श्रीमत्तैः इति क्वचित्पुस्तके.

दुष्टाक्षराणि यन्मूर्ध्नि विधात्रा लिखितानि चेत् ॥
श्रीगुरोरङ्घ्रिसम्पर्कात्तानि यास्यन्ति भद्रताम् ॥३३॥

श्रीगुरोर्बिरुदालीं ना मन्दोऽहं वर्णये कथम् ॥
सुपुण्यं तस्य विप्रस्य श्रीगुरुर्यद्गृहं ययौ ॥ ३४ ॥

एकस्मिन्दिवसे तस्य ब्राह्मणस्य गृहे स्थिता ॥
महिषी सा न केनापि नीता मृद्वाहिका द्विज ॥ ३५ ॥

तद्विप्रमन्दिरं प्राप भिक्षार्थं श्रीगुरुः स्वयम् ॥
महोष्णे वैशाखमासे मध्याह्नसमये सति ॥ ३६ ॥

स श्रीगुरुः कृपामूर्तिः प्राप द्विजगृहान्प्रति ॥
स्ववृत्त्यर्थं गतो विप्रो वनिताऽस्य गृहे स्थिता ॥३७॥

भिक्षां ददात्विति श्रुत्वा गुरुनाथवचः सती ॥
तत्क्षणं सहसाऽऽगत्य दण्डवत्प्रणनाम सा ॥ ३८ ॥

विनयावनता प्राह प्रणता श्रीगुरुं सती ॥
भो यायावरवृत्त्यर्थं पतिर्यातोऽवधारय ॥ ३९ ॥

गुरुपदस्पर्शाद्भद्राणि भवन्ति। गुरुबिरुदावलिवर्णनेऽहं न क्षमः। गुरुर्यद्गृहं गतस्तस्य सुपुण्यम्। एकदा महिषी केनापि न नीता। गृहे स्थिता। तद्गृहं वैशाखमासे मध्याह्ने भिक्षार्थं श्रीगुरुर्ययौ। विप्रो यायावरवृत्त्यर्थं गतो गृहे स्त्री स्थिता। सा भिक्षां ददात्विति श्रुत्वा सहसाऽऽगत्य विनयावनता प्राह ॥३१-३९॥ वृत्त्यर्थं यातोऽपि पति-

१ धान्ययाच्ञार्थे.

द्रुतमुत्कृष्टधान्यादि गृहीत्वाऽऽयाति मे पतिः ॥
तावत्स्वामिन्नुपविशेत्युक्त्वा सा पीठमार्पयत् ॥ ४० ॥

श्रीगुरुर्हास्यवदन उपविश्यासनेऽब्रवीत् ॥
विप्रस्त्रियं पयो मह्यं भिक्षार्थं किं न दास्यसि ॥ ४१ ॥

पतिरायातीति कुतो मामेवं त्वं प्रभाषसे ॥
द्वारीयं महिषी क्षीरं भिक्षार्थं किं न दास्यसि ॥ ४२ ॥

इति श्रुत्वा गुरोर्वाक्यं नता सा वनिताऽब्रवीत् ॥
वन्ध्येयं महिषी वृद्धा दन्ता अस्या अपि च्युताः॥४३॥

जन्मतोऽस्मद्गृहे वृद्धा लोके वन्ध्येति विश्रुता ॥
नाधाद्गर्भं सकृदपि त्रातेयं महिषोपमा ॥ ४४ ॥

अत एव स्यूतनसा मृद्भारार्थं प्रयोजिता ॥
द्रव्येण तेन चास्माकं योगक्षेमं यतीश्वर ॥ ४५ ॥

श्रीगुरुः प्राह तां मिथ्या मा वादीर्मम सन्निधौ ॥
सत्वरं महिषीं दुग्ध्वा पयो भिक्षां प्रदेहि मे ॥ ४६ ॥

रुत्कृष्टधान्यं गृहीत्वा शीघ्रमायास्यति। तावद्भवन्त उपविशंत्विति पीठं ददौ ॥ ४० ॥ हसन्गुरुरुपविश्य स्त्रियं प्राह। भिक्षार्थं पयो न दास्यसि किम्। पतिरायास्यतीति कुतो भाषसे। ते द्वारीयं महिषी। क्षीरं देहि। इति श्रुत्वा साऽऽह। दन्तहीना वृद्धेयं महिषी वन्ध्या जन्मतोऽपि सकृद्गर्भं नाधात्। महिषवद्रक्षिता। स्यूतनसेयं भारार्थं योजिता। तल्लब्धद्रव्येणास्माकं योगक्षेमम् ॥४१-४५॥ गुरुः प्राह। मिथ्या मा वादीः। शीघ्रं महिषीं दुग्ध्वा पयो मे देहीति श्रुत्वा विश्वासं कृत्वा काष्ठपात्र-

इति श्रुत्वा यतिवचो निश्चित्य मनसा करे ॥
काष्ठपात्रं समादाय सा दोग्धुं तामुपाविशत् ॥ ४७ ॥

कामधुक् श्रीगुरोर्वाक्यं मत्वा दोग्धि स्म तां सती ॥
तदा घटद्वयं दुग्धं वन्ध्याया अप्यवाप सा ॥ ४८ ॥

विस्मिता विप्रवनिता सेशोऽयमिति निश्चिता ॥
अहो यद्वाक्यश्रवणात्किमिदं जातमद्भुतम् ॥ ४९ ॥

इत्युक्त्वा सा गृहं नीत्वा पयोऽधिश्रित्य[1] सत्वरम् ॥
पात्रान्तरे ततः कोष्णीचकार[2] ब्राह्मणी तु सा ॥ ५० ॥

श्रीगुरुः प्राह तां नारि क्षीरभिक्षां प्रदेहि मे ॥
यास्यामि सङ्गमं शीघ्रं मा विलम्बं कुरूत्तमे ॥ ५१ ॥

इति स्वामिवचः श्रुत्वा सा क्षीरं सत्वरं ददौ ॥
श्रीगुरुः प्राश्य तत्क्षीरं सन्तोषं परमं ययौ ॥ ५२ ॥

सन्तुष्टः श्रीगुरुः प्रीत्या ददौ विप्रस्त्रियै वरम् ॥
सर्वदाऽखण्डिता लक्ष्मीस्तव गेहे प्रतिष्ठतु ॥ ५३ ॥

मादाय दोग्धुमुपाविशत् ॥४६-४७॥ गुरुवाक्यं कामधुङ्मत्वा तां दुग्ध्वा घटद्वयमितं दुग्धं लेभे । अहो ईशोऽयं यद्वाक्यात्किमिदं चित्रं जातमिति विस्मिता सा गृहं नीत्वा पयोऽधिश्रित्य कोष्णं चक्रे । सङ्गमं यास्ये, शीघ्रं देहि, विलम्बं मा कुर्विति गुरुणोक्ता सा शीघ्रं तस्मै ददौ । श्रीगुरुः क्षीरं प्राश्य तुष्टो वरं दास्यन्नाह । सदाऽखण्डा लक्ष्मीस्ते गृहे तिष्ठतु

---

१ चुल्ल्यां प्रताप्य २ मंदोष्णीचकार.

निश्चिन्ताः सर्वदा यूयं पुत्रपौत्रश्रियान्विताः ॥
इत्युक्त्वा सङ्गमस्थानं गन्तुं स च विनिर्गतः ॥ ५४ ॥
श्रीगुरौ सङ्गमं याते ब्राह्मणो गेहमाययौ ॥
श्रीगुरोर्महिमानं स ततः शुश्राव विस्तरात् ॥ ५५ ॥
स प्राहैतन्महाश्चर्यमवतीर्णः किमीश्वरः ॥
अस्मद् दृष्ट्या नरोऽप्येष सत्यं परमपूरुषः ॥ ५६ ॥
इत्युक्त्वा स स्त्रियं प्राह दोषा दारिद्र्यमप्यहो ॥
नष्टं नो यद्गुरुर्दृष्टः सर्वाभीष्टार्थसिद्धिदः ॥ ५७ ॥
गच्छ तद्दर्शनायाद्य यास्याम इति स स्त्रिया ॥
सारार्तिको ययौ विप्रः श्रीगुरुर्यत्र संस्थितः ॥ ५८ ॥
भक्त्या श्रीगुरुमापूज्य स्तुतिं चक्रतुरप्युभौ ॥
भूयोऽपि श्रीगुरुस्तुष्टस्तथैव प्रददौ वरम् ॥ ५९ ॥
इति लब्धवरो विप्रः सस्त्रीकः स गृहं ययौ ॥
कन्यापुत्रश्रियो लब्ध्वा पूर्णायुरभवत्सुधीः ॥ ६० ॥

॥४८-५३॥ पुत्रपौत्रश्रीयुक्ता यूयं सदा निश्चिन्ता भवतेत्युक्त्वा सङ्गमं ययौ। ततो गृही विप्र एत्य गुरुमाहात्म्यं श्रुत्वा साश्चर्यं प्राहेश्वरोऽयमवतीर्णोऽस्मद्दृष्ट्या नरोऽप्ययं परमपूरुषः ॥५४-५६॥ इत्युक्त्वा भार्यामाह। सर्वाभीष्टार्थदो गुरुर्दृष्टः। दारिद्र्यं दोषाश्च नष्टाः। तद्दर्शनायाद्यागच्छेति स सस्त्रीकः सारार्तिको गुरुमेत्य भक्त्या (सं)पूज्य शश्वत्तुष्टाव। तुष्टो गुरुः पूर्ववद्वरं ददौ। लब्धवरः सस्त्रीको विप्रो गृहं गतः। स कन्यापुत्रयुक् पूर्णायुः सुधीश्चाभवत्। एवं यस्योपरि गुरोः कृपा तस्य

एवमेव कृपा शिष्य गुरोर्यस्योपरीह तु ॥
तस्य दैन्यं कुतो रङ्कः सोऽप्यष्टैश्वर्यभाग्भवेत् ॥ ६१ ॥

अत एव सरस्वतीद्विजः
स तु गङ्गाधरभूसुरात्मजः ॥
वदति श्रवणं करोत्विदं
रसिको भाविक आशु दैन्यदम्[1] ॥ ६२ ॥

(इति)श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्यगङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञितमहाराष्ट्रभाषान्वितगुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वतीयतिविरचितायां श्रीगुरुसंहितायां ज्ञानकाण्डे द्वाविंशः ( अध्यायः ) ॥

॥ आदितः श्लोकाः ॥ २४४९ ॥

कुतो दैन्यम् । सोऽष्टैश्वर्यभाग्भवेत् ॥५७-६१॥ अत एव सर० ॥६२॥
इति चूर्णिकायां द्वाविंशोऽध्यायः ॥

॥ इति द्वाविंशोऽध्यायः ॥ २२ ॥

---

१ दैन्यहरं.

## ॥ अथ त्रयोविंशोऽध्यायः ॥ २३ ॥

॥ श्रीगणेशाय नमः ॥

प्रणम्य सिद्धमाहेदं स शिष्यो नामधारकः ॥
विस्तरेण वदान्याद्य कथां कथय मेऽग्रतः ॥ १ ॥
सिद्धः प्राह गुरोर्लीलां शृणु बाल विशालधीः ॥
यद्गृहे महिषी वन्ध्या गुणास्तेन प्रकाशिताः ॥ २ ॥
अन्येद्युर्भारवाहार्थं वशामाहर्तुमागताः ॥
तद्ग्रामस्थास्तु कृषिका द्रव्यं दातुं समुत्सुकाः ॥ ३ ॥
विप्र ऊचे न दास्येऽसौ महिषी मम दुग्धदा ॥
पश्यतेदं घटद्वंद्वं पूर्णं लब्धं पयोऽधुना ॥ ४ ॥
ततस्ते विस्मिता दृष्ट्वा क्षीरं प्राहुरहो कथम् ॥
गतेऽह्नि दन्तहीनेयं वन्ध्या स्यूतनसेक्षिता ॥ ५ ॥

अध्यायसारसङ्ग्रहश्लोकोऽयम्—

राद्र त्रयोविंश आकर्ण्य सत्तद्यशः स्त्रग्विणीं स्त्रां पुरीमानयत्तद्वशः ॥
श्रीगुरू रक्षसेऽदाद्गतिं राजवद्राजदत्ते मठे विश्ववासोऽवसत ॥ १ ॥

सिद्धं आह नामधारकोऽग्रतः कथां कथय। सिद्ध आह। हे बाल, गुरुलीलां शृणु। यद्गृहे महिषी दुग्धा तेन गुणाः प्रकाशिताः ॥१-२॥ परेद्युर्द्रव्यं दत्त्वा भारवाहार्थं महिषीं नेतुमागतान्कृषिकान्विप्र आह। दुग्धदां महिषीं न दास्ये। पश्यतेदं घटद्वयं पूर्णं दुग्धमिति। ततस्ते विस्मिता आहुरहो दन्तहीना वन्ध्येयं गर्भिणी न जाता, न सूता, कथं

न जाता गर्भिणी सूता नैव सा दुग्धदा कथम् ॥
इति तेषां तु सा वार्ता राजकर्णमुपागता ॥ ६ ॥
विस्मितोऽपि तदा भूपो विप्रस्य गृहमागतः ॥
द्विजं नत्वा स पप्रच्छ वृत्तान्तं सर्वमादितः ॥ ७ ॥
विप्रस्तमाह संन्यासी गङ्गातटमुपाश्रितः ॥
तस्यायं महिमा भाति सोऽवतीर्णोऽत्र चेश्वरः ॥ ८ ॥
स च मन्मन्दिरं भिक्षां कर्तुमायाति नित्यशः ॥
गतेऽह्नि महिषी गेहे दृष्टा क्षीरं च याचितम् ॥ ९ ॥
पत्न्या वन्ध्येयमित्युक्तः क्रुद्धो दोग्धुमुपादिशत् ॥
तद्वाक्यं कामधुग्जातं दुग्धं दुग्धं[1] घटद्वयम् ॥ १० ॥
इति विप्रवचः श्रुत्वा राजाऽपि त्वरया तदा ॥
चतुरङ्गेन सैन्येन ययौ पुत्रकलत्रयुक् ॥ ११ ॥
लोलदङ्गो नृपो भक्त्या श्रीगुरुं तमुपेत्य सः ॥
प्रभुं दृष्ट्वैकभावेन साष्टाङ्गं प्रणमञ्जगौ ॥ १२ ॥

दुग्धेति। तत्रत्यो राजाऽपि तच्छ्रुत्वा विप्रमेत्य नत्वा सर्वं वृत्तमादितः पप्रच्छ ॥३-७॥ विप्रस्तमाहात्रावतीर्ण ईश्वर एव नदीतीरेऽस्ति तस्यायं महिमा ॥ ८ ॥ स भिक्षार्थं नित्यं गृहमेति। गतेऽह्नि गृहे महिषी दृष्टा। क्षीरं याचितम्। पत्न्या वन्ध्येयमित्युक्तः क्रुद्धो दोग्धुमादिशत्। तद्वाक्याद्घटद्वयं दुग्धं लब्धम्। इति श्रुत्वा राजा सत्वरं चतुरङ्गसैन्यस्त्री-पुत्रयुक् ॥९-११॥ लोलदङ्गो गुरुमेत्य भक्त्या गुरुं दृष्ट्वा साष्टाङ्गं नत्वा

---

१ दोहनं कृतं.

जगद्गुरो जय जय त्वं त्रिमूर्तिस्वरूपधृक् ॥
वर्णितुं महिमानं ते त्वपारं शक्नुयां कथम् ॥ १३ ॥

न जाने मन्दधीस्त्वाऽहं मायामोहान्धवेष्टितः ॥
त्वं तारको जगज्ज्योतिः संसारान्मां समुद्धर ॥ १४ ॥

अविद्याब्धावगाधेऽस्मिन्निमग्नोऽस्मि हि तारय ॥
यतस्त्वं विश्वकर्ताऽसि तस्मात्ते चरणौ धृतौ ॥ १५ ॥

त्वमेव विश्वकर्तेच्छामात्रेणेदं सृजस्यज ॥
मनुष्यरूपधर इत्यन्यदृष्ट्या प्रतीयसे ॥ १६ ॥

महिमानं तव स्तोतुं मदन्धीः शक्नुयां कथम् ॥
व्योमकेशोऽविता[२] नस्त्वं चिन्मयात्मा जगद्गुरुः ॥१७॥

इति स श्रीगुरुं भक्त्या संस्तूय बहुशोऽनमत् ॥
तत आश्वासयामास सन्तुष्टः श्रीगुरुस्तदा ॥ १८ ॥

प्राह श्रीगुरुमूर्तिस्तं सन्तोषेण नृपात्र तु ॥
तापसोऽरण्यवासोऽहं यतिस्तिष्ठामि सर्वदा ॥ १९ ॥

ऽऽह। हे जगद्गुरो जगज्ज्योतिस्त्वं जय। त्रिमूर्तेस्ते महिमवर्णनेऽहं न शक्तः। मन्दधीर्मायावेष्टितोऽहं त्वां न जाने। त्वं तारकोऽसि। संसारान्मामुद्धरागाधेऽविद्याब्धौ मग्नं मां तारय। त्वं विश्वकर्ताऽतस्ते पदे धृते। नृरूप इत्यन्यदृष्ट्या प्रतीतोऽपि त्वमजः इच्छामात्रेणेदं सृजसि। ते महिमस्तुतौ मन्दधीरहं न शक्तः। त्वं व्योमकेशश्चिन्मात्रो गुरुः। इति भक्त्या स्तुत्वाऽनमत्। तुष्टः श्रीगुरुस्तमाश्वास्याहाहं तापसो यतिर्वने

---

१ जगत् २ रक्षिता.

किमर्थमागतोऽसि त्वं सम्भ्रमेण कुतूहलात् ॥
सैन्यैः पुत्रैः कलत्रैश्च किमागमनकारणम् ॥ २० ॥

इति श्रीगुरुणा प्रोक्तो राजा प्राह कृताञ्जलिः ॥
किमु तेऽरण्यवासेन त्वं नूनं जनतारकः ॥ २१ ॥

नारायणोऽवतीर्णोऽसि भक्तानुद्धर्तुमेव हि ॥
यथा भक्तजनाकाङ्क्षा तथा त्वं तोषयस्यपि ॥ २२ ॥

ख्याता वेदपुराणेषु तवैवं बिरुदालयः ॥
भक्तवत्सल ते कीर्तिः प्रख्याताऽतोऽवधारय ॥ २३ ॥

गन्धर्वाख्यं महास्थानं स्वामिंस्तत्कुरु पावनम् ॥
कुरु तत्राप्यनुष्ठानं वासो ग्रामे हि शस्यते ॥ २४ ॥

मठं निर्माय ते दास्ये सर्वानस्मान्त्समुद्धर ॥
इत्युक्त्वा श्रीगुरुपदे दधौ भक्त्या नरेश्वरः ॥ २५ ॥

श्रीगुरुः स्वगतं प्राह प्रकटत्वमुपागतम् ॥
कश्चित्कालं हि वस्तव्यमस्मिन्स्थाने परेच्छया ॥२६॥

तिष्ठामि। त्वं किमर्थं सपरिवारः ससम्भ्रमं कौतुकादागतोऽसि। आगमनकारणं वद ॥१२-२०॥ इत्युक्तो राजा नत्वाऽऽह। किं ते वनवासेन। त्वं जनतारको नारायणो भक्तोद्धारायावतीर्णोऽसि। यथा भक्तेच्छा तथा तांस्तोषयसि। वेदादिषु ते बिरुदालयः ख्याताः। हे भक्तवत्सल, ते कीर्तिः ख्याता ॥२१-२३॥ गाणगापुरस्थानं पावनं कुरु। ग्रामे वासं कृत्वाऽनुष्ठानं कुरु। मठं निर्माय दास्येऽस्मानुद्धरेति भक्त्या पदे दधौ। श्रीगुरुः स्वगतं प्राह। परेच्छया कश्चित्कालं प्राकट्येनात्र स्थेयम्

इतोऽग्रतो भक्तजनांस्त्रातुं राज्ञो मनोरथम् ॥
आपूरयिष्यन्ग्रामेऽस्मिन्वत्स्यामि खलु साम्प्रतम् ॥२७॥

इति निश्चित्य तं भूपं श्रीगुरुः प्राह हृष्टधीः ॥
यथा मनसि ते भक्तिस्तथा कुरु सुनिश्चितम् ॥ २८ ॥

इति श्रीगुरुणोक्तोऽसौ सन्तोषं परमं ययौ ॥
प्रीत्या निन्ये गुरुं भूप उपवेश्य सुखासने ॥ २९ ॥

मुदा मृदङ्गादिनानावाद्यघोषैर्मनोहरैः ॥
मङ्गलैरपि गीतैश्च पुरं निन्ये गुरुं नृपः ॥ ३० ॥

ययुर्गजाश्च तुरगास्तुरगा अग्रतो नृपः ॥
यानस्थं श्रीगुरुं भेजे सस्त्रीकरुछत्रभूषितम् ॥ ३१ ॥

वेदघोषं द्विजवराश्चक्रुर्नानागुणान्वितम् ॥
जगुर्बन्दिजना उच्चैस्त्रिमूर्तेर्बिरुदावलीः ॥ ३२ ॥

एवं गुरुमतिप्रीत्या राजा ग्राममुपानयत् ॥
सारार्तिका नागरिका लोकास्तत्सम्मुखं ययुः ॥३३॥

भक्तान् त्रातुं राज्ञो मनोरथं पूरयितुं चेति निश्चित्याह। यथा ते चित्ते भक्तिस्तथा निश्चितं कुर्विति श्रुत्वा तुष्टो भूपो गुरुं सुखासने उपवेश्य ॥२४-२९॥ मृदङ्गादिरम्यनानावाद्यघोषैर्मङ्गलगीतैश्च पुरं निन्येऽश्वा गजाश्चाग्रे जग्मुः। यानस्थं भूषितं श्रीगुरुं सस्त्रीको राजाऽभजत्। द्विजा वेदघोषं चक्रुः। बन्दिनस्त्रिमूर्तेर्बिरुदावलीः उच्चैर्जगुः। एवं गुरौ ग्रामसमीपं नीते सारार्तिका नागरिकाः सम्मुखं प्रापुः। एवं महोसत्वेन राज्ञानीतो गुरुः

महता सूत्सवेनैवमानयामास तं गुरुम् ॥
ग्रामं नरेश्वरो हृष्टः श्रीगुरुः प्राविशत्तदा ॥ ३४ ॥

ग्रामस्य पश्चिमे देशे वृक्षोऽश्वत्थो महोन्नतः ॥
तत्समीपस्थगेहानि शून्यानि ग्रहभीतितः ॥ ३५ ॥

तस्मिन्वृक्षे वसत्येकः प्राणिमात्रभयानकः ॥
भूतो भयङ्करमुखो ब्रह्मराक्षसनामकः ॥ ३६ ॥

ब्रह्मांशरो महाक्रूरो नराहारो वसत्यतः ॥
तद्भयात्तत्र गेहानि शून्यानि बहुधाऽभवन् ॥ ३७ ॥

श्रीगुरुर्यावदायाति पिप्पलद्रुतलं यतिः ॥
तावदागत्य तत्पादौ जग्राह ब्रह्मराक्षसः ॥ ३८ ॥

श्रीगुरुं प्रार्थयामास करौ सन्धाय भक्तितः ॥
घोरान्धकारमग्नं मां भोः स्वामिन्कृपयोद्धर ॥ ३९ ॥

प्रनष्टा मेऽर्जिता दोषास्तव दर्शनमात्रतः ॥
त्वं कृपालुर्हि सर्वेषां मामुद्धर परात्पर ॥ ४० ॥

पुरं विवेश। ग्रामपश्चिमे महोन्नतोऽश्वत्थस्तत्र प्राणिभयङ्करः करालो ब्रह्मराक्षसोऽभूत्तद्भयात्तत्र गृहाणि शून्यानि। स महाक्रूर आगतं श्रीगुरुं दृष्ट्वाऽश्वत्थादवरुह्य पदौ धृत्वा प्रार्थयन्नाह ॥३०-३८॥ ते दर्शनान्मे दोषा नष्टाः। कृपालो, मामुद्धर ॥३९-४०॥ गुरुस्तन्मूर्ध्नि करं दधौ।

१ ब्रह्मराक्षसः २ राक्षसः.

कृपालुः श्रीगुरुस्तस्य मस्तके स्वकरं दधौ ॥
भूत्वा मनुष्यरूपोऽसौ तत्पदोः पर्यवर्तत ॥ ४१ ॥
श्रीगुरू राक्षसं प्राह गच्छ त्वं सङ्गमं द्रुतम् ॥
तत्र त्वं स्नानमात्रेण मुक्तो याह्यपुनर्भवम्[1] ॥ ४२ ॥
इति श्रीगुरुणा प्रोक्तो राक्षसः सङ्गमं गतः ॥
स्नात्वा कलेवरं त्यक्त्वा ज्ञानी मुक्तः स तत्क्षणम् ४३
विस्मिताः सकला लोका आहुरेष न मानुषः ॥
ब्रह्मविष्णुपिनाक्यात्मा सत्यमेव न संशयः ॥ ४४ ॥
ततस्तत्रैव विहिते मठे श्रीगुरुरास्थितः ॥
भक्तिभावेन चानर्च नराधिपशिरोमणिः ॥ ४५ ॥
नानोपचारैरानर्चान्वहं भक्त्या नराधिपः ॥
नानावादित्रघोषैश्च गीतैरपि सुमङ्गलैः ॥ ४६ ॥
श्रीगुरुः सङ्गमं नित्यमनुष्ठानाय गच्छति ॥
नराधिपोऽपि सैन्येन भक्त्या तमनुगच्छति ॥ ४७ ॥

तदा स नृरूपो भूत्वा गुरुपदयोरपतत् ॥ ४१ ॥ गुरुस्तमाह । शीघ्रं सङ्गमे स्नानं कुरु । मुक्तो भविष्यसीति श्रुत्वा सङ्गमं गत्वा स्नात्वा ज्ञानी भूत्वा देहं त्यक्त्वा मुक्तः । तद्दृष्ट्वा लोका ऊचुः । सत्यमेवायं त्रिमूर्त्यवतार इति । ततस्तत्रैव कृते मठे श्रीगुरुस्तस्थौ । नृपश्रेष्ठो भक्त्याऽन्वहं नानोपचारैस्तमानर्चानेकवाद्यघोषैः गीतैश्च तुष्टाव । सङ्गमेऽन्वहमनुष्ठातुं गुरौ गते नृपः सैन्येन सहानुयाति । मध्याह्ने मठं याते तथैव मुदा

१ मोक्षं.

मठं श्रीगुरुरायाति मध्याह्नेऽपि तदा नृपः ॥
सैन्येन सम्मुखीभूय प्रणनाम मुदाऽन्वहम् ॥ ४८ ॥

श्रीगुरुं चोपवेश्यापि कदाचिद्यान उत्तमे ॥
वनान्तरं स्वसैन्येन समं नयति भक्तितः ॥ ४९ ॥

भक्ताधीनतया तस्थौ श्रीगुरुर्भक्तवत्सलः ॥
यथा यस्य भवेत्तोषस्तथा श्रीगुरुराचरत् ॥ ५० ॥

दर्शनायाययुर्लोकाश्चक्रुर्ब्राह्मणभोजनम् ॥
प्रसिद्धो महिमाऽस्याभूत्ख्यातो ग्रामान्तरेऽपि च ॥५१॥

किञ्चिद्दूरे कुमस्याख्यग्रामोऽभूत्तत्र तापसः ॥
त्रिवेदज्ञो यतिर्नाम्ना स त्रिविक्रमभारती ॥ ५२ ॥

मानसेनार्चनेनासावानर्च नृहरिं स तु ॥
तं गन्धर्वस्थमश्रौषीच्छ्रीनृसिंहसरस्वतीम् ॥ ५३ ॥

चरितं तस्य स ज्ञात्वा प्राहायं दाम्भिको यतिः ॥
चेष्टा तुर्याश्रमार्हेयं[१] किमिति स्म स निन्दति ॥ ५४ ॥

सम्मुखं याति ॥४२-४८॥ कदाचिच्छिबिकायां गुरुमुपवेश्य सैन्येन सहानुयातीति भक्तवत्सलो भक्ताधीनतयाऽस्थात्। एवं ग्रामान्तरेऽपि महिमा ख्यातोऽभूत्। लोका दर्शनार्थमेत्य विप्रभोजनं चक्रुः। कुमसीग्रामे तपस्वी मानसार्चनेन नृसिंहपूजकस्त्रिविक्रमभारती तच्छ्रुत्वाऽऽह। दाम्भिकोऽयं यतिः। ईदृक्चेष्टा तुर्याश्रमे योग्या किमिति। सर्वसाक्षी

१ चतुर्थाश्रमयोग्या.

तद्विद्वान्गुरुनाथोऽपि सर्वात्मा सर्वसाक्षिकः ॥
यतीश्वरेण विहितां स्वनिंदां ज्ञातवानसौ ॥ ५५ ॥

अपूर्वमग्रतो जातं शृणु तन्नामधारक ॥
मानसं निश्चलीकृत्य सावधानतया शृणु ॥ ५६ ॥

सर्वाभीष्टार्थप्रदं चित्तहारि श्रोतश्चित्रं साधुचेतोविहारि ॥
शृण्वेवं मे विप्रगङ्गाधरस्य पुत्रस्येयं प्रार्थनाऽर्थादरस्य ॥ ५७॥

(इति) श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्यगङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञितमहाराष्ट्रभाषान्वितगुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वतीयतिविरचितायां श्रीगुरुसंहितायां ज्ञानकाण्डे त्रयोविंशः ( अध्यायः ) ॥

॥ आदितः श्लोकाः ॥ २५०६ ॥

गुरुस्तत्कृतनिन्दां ज्ञातवान् । हे नामधारकाग्रतोऽपूर्वां कथां सावधानतयाऽवधारय ॥ ९६ ॥ सर्वाभीष्टार्थप्रदं० ॥ ९७ ॥ इति चूर्णिकायां त्रयोविंशोऽध्यायः ॥

॥ इति त्रयोविंशोऽध्यायः ॥ २३ ॥

---

## ॥ अथ चतुर्विंशोऽध्यायः ॥ २४ ॥

॥ श्रीगणेशाय नमः ॥

स नामधारकः प्राह सिद्ध वृत्ता[1] कथा कथम् ॥
अग्रतो विस्तरेणैव मह्यं कथय तां प्रभो ॥ १ ॥

इति सिद्धवचः श्रुत्वा कथयामास सिद्धराट् ॥
शृण्वस्य[2] चरितं वत्साभिनवं[3] नामधारक ॥ २ ॥

पूर्वोक्तः कुमसीग्रामे यतिस्त्रिविक्रमभारती ॥
दाम्भिकोऽयं हि संन्यासीत्येवं निन्दां चकार ह ॥३॥

तं विद्वाञ्छ्रीगुरुः साक्षाद्विश्वसाक्षी विभुः स्वयम् ॥
यतिर्निन्दां करोतीति नरेशाय शशंस[4] सः ॥ ४ ॥

श्रीगुरुः प्राह कुमसीग्रामो गन्तव्य एव मे ॥
यत्रास्ते निन्दको भिक्षुः स त्रिविक्रमभारती ॥ ५ ॥

अध्यायसारसंग्रहश्लोकः—

निन्दां कर्तृयतित्रिविक्रमं प्राप्य श्रीगुरुराश्वदर्शयत् ॥
सैन्यं न्यासिवपुः क्षणं चतुर्विंशे यानग राजवद्विराट् ॥ १ ॥

नामधारक आह। हे सिद्धाग्रतः कथां कथय। सिद्ध आह। हे वत्साभिनवचारितं शृणु। कुमसीग्रामे त्रिविक्रमभारती निन्दतीति विश्वसाक्षी गुरू राज्ञे निवेद्याह। यत्र मन्निन्दकस्त्रिविक्रमस्तत्र कुमसीग्रामे गन्त-

---

१ जाता २ गुरोः ३ नूतनं, अश्रुतं त्वयेति यावत् ४ राज्ञे कथयामास.

इति श्रुत्वा नृपो हृष्टो गमनायोपचक्रमे ॥
अलङ्कृत्य गुरुं पद्[1]ैर्हस्त्यश्वादिभिरन्वितः ॥ ६ ॥

आन्दोलिकायां रम्यायां श्रीगुरुं चोपवेश्य सः ॥
नानावादित्रनिनदैर्गीतैरपि समन्वितम् ॥ ७ ॥

श्रीगुरुं कुमसीग्रामं महता सम्भ्रमेण सः ॥
निन्ये तदाऽर्चनरतः स त्रिविक्रमभारती ॥ ८ ॥

प्रत्यहं नृहरिं देवं मनसाऽपूजयन्मुनिः ॥
तद्दिने मानसार्चायां स्थिरो नाभून्नृकेसरी ॥ ९ ॥

चिन्तयामास स यतिर्नृहरे किमुपेक्षसे ॥
वृथा तपःश्रमो जातः कस्मान्मां समुपेक्षसे ॥ १० ॥

आराधितोऽपि सुचिरं नरसिंह उपेक्षसे ॥
किं करोमि वृथा जातं तप इत्यन्वचिन्तयत् ॥ ११ ॥

अत्रान्तरे नदीतीरे समायान्तं स सद्गुरुम् ॥
ददर्श मानसार्चायां ददर्शा[2]वहितः पुनः ॥ १२ ॥

व्यमिति श्रुत्वा हृष्टो राजा गुरुमलंकृत्यांदोलिकायामुपवेश्य हस्त्यश्वादिभिर्नानावादित्रगीतादिभिश्च महासम्भ्रमेण कुमसीग्रामं निन्ये ॥ १-८ ॥ तदा नित्यवन्नृसिंहमानसपूजारतोऽपि त्रिविक्रमश्चञ्चलचित्तो भूत्वा चिन्तयन्नाह । हे नृहरे मामुपेक्षसे किम् । तपो वृथा जातमिति । अत्रान्तरे मानसपूजायां नदीतीरस्थं नृहरिं दृष्ट्वा ययौ । तत्र दण्डधारि सर्वं सैन्यं

१ पदातिभिः २ पुनः समाहितः.

निरीक्ष्य मानसार्चायां दण्डधार्यखिलं बलम् ॥
प्रययौ विस्मितो भूत्वा स त्रिविक्रमभारती ॥ १३ ॥
गत्वा प्रणम्य साष्टाङ्गं ददर्श स यतिस्तदा ॥
सर्वेऽपि प्राणिनो दण्डधारिणो यतिरूपिणः ॥ १४ ॥
समस्तान्यतिरूपांस्तान्त्स दृष्ट्वा दण्डधारिणः ॥
के ज्येष्ठाः के कनिष्ठा वा न तान्वेद यथार्थतः ॥१५॥
भ्रान्तो जातस्तदा भिक्षुर्भूयो नत्वाऽब्रवीदिदम् ॥
त्रिमूर्ते ब्रह्मविष्ण्वीशरूपोऽसि त्वं जगद्गुरुः ॥ १६ ॥
त्वद्रूपं नैव जानामि मायाजालाभिवेष्टितः ॥
दर्शयाद्य निजं रूपं स्वामिन्मयि कृपां कुरु ॥ १७ ॥
तव स्वरूपविज्ञानमशक्यं गुरुनाथ मे ॥
दयस्व न क्षमश्चर्मचक्षुषा त्वां परीक्षितुम् ॥ १८ ॥
व्यापकः सर्वभूतेषु नृसिंहस्त्वमभूर्यतिः ॥
यतयो दर्शिताः सर्वे ते नृसिंहसरस्वति ॥ १९ ॥

दृष्ट्वा विस्मितोऽभूत् । साष्टाङ्गं प्रणम्य दण्डधारिणः सर्वान्यतिरूपान्दृष्ट्वाऽत्र के ज्येष्ठाः के वा कनिष्ठा इति ज्ञातुमक्षमो भ्रान्तः सन्नत्वाऽऽह । हे त्रिमूर्ते, त्वं जगद्गुरुर्ब्रह्मविष्णुशिवरूपोऽसि । मायाजालवेष्टितोऽहं ते रूपं न जाने । कृपां कृत्वा स्वरूपं मे दर्शय ॥९-१७॥ ते रूपविज्ञानं मे न । हे गुरुनाथ, दयस्व । चर्मदृष्ट्या त्वामीक्षितुं न क्षमः ॥ १८ ॥ त्वं सर्वव्यापको नृसिंहोऽसि । सर्वेऽमी यतयो दर्शिताः ।

---

२ सैन्यं.

कस्याग्रतो दर्शयामि मुखं कं वा नमाम्यहो ॥
त्रिमूर्तिस्त्वमिति ज्ञातं स्वामिन् रूपं प्रदर्शय ॥ २० ॥

तपस्तप्तं बहुदिनं नृहरिर्मनसाऽर्चितः ॥
लब्धं तस्य फलं मेऽद्य साक्षान्मूर्तिर्मयेक्षिता ॥ २१ ॥

त्वं विश्वतारकस्तस्मादवतीर्णोऽसि भूतले ॥
उद्धर्तुं दर्शयसि नः स्वरूपं देव चिन्मयम् ॥ २२ ॥

इति स श्रीगुरुं स्तुत्वा यतिर्भक्त्या ननाम तम् ॥
सन्तुष्टः श्रीगुरुस्तस्थौ निजमूर्त्या तदैव हि ॥ २३ ॥

ददर्श भारती व्यक्तं सन्यमेव चतुर्विधम् ॥
तन्मध्ये भक्तवरदं भालचन्द्रं जगद्गुरुम् ॥ २४ ॥

गुरुस्तं विस्मितं प्राह नित्यं निन्दसि मां यतः ॥
दाम्भिकोऽयमितीहाद्य तदेव प्रष्टुमागतः ॥ २५ ॥

त्वं नृसिंहं पूजयसि मानसैरुपचारकैः ॥
नित्यं भक्त्येदृशो लोके प्रख्यातस्त्वं यतिर्यदि ॥२६॥

कस्याग्रे मुखं दर्शयामि। त्वं त्रिमूर्तिः। स्वामिन्स्वरूपं दर्शय। बहुकालं तपस्तप्तं, नृहरिर्मनसाऽर्चितस्तत्फलं त्विदं। साक्षात्ते मूर्तिर्दृष्टा ॥१९-२१॥ त्वं विश्वतारकोऽस्मानुद्धर्तुमत्रावतीर्णोऽसि। चिन्मयं ते स्वरूपं दर्शयेति स्तुत्वा भक्त्या ननाम। तदा तुष्टो गुरुः स्वरूपेणास्थात्। तदा त्रिविक्रमश्चतुरङ्गसैन्यं तन्मध्ये श्रीगुरुं च व्यक्तं ददर्श। तं विस्मितं गुरुराह। दाम्भिकोऽयमिति यं निन्दसि स एवाहं त्वां प्रष्टुमागतोऽस्मि। त्वं लोके

तर्हि दम्भः कथम्भूतो विस्तरेण वदाधुना ॥
हरिर्वसति ते चित्ते स तेऽदो ज्ञापयिष्यति ॥ २७ ॥

इति श्रीगुरुणा प्रोक्तस्तं प्रणम्य यतीश्वरः ॥
प्राहाविद्यामयो मूढोऽस्मि क्षमस्वाद्य सद्गुरो ॥ २८ ॥

त्वं त्रिमूर्त्यवतारोऽसि भगवान्विश्वतारकः ॥
प्रवर्तयसि मायायां माऽज्ञानपटवेष्टितम् ॥ २९ ॥

अविद्याब्धौ निमग्नोऽस्मि मायामोहावृतेक्षणः ॥
न जाने परमार्थं त्वां स्वामिन्नस्मि दिवान्धवत् ॥३०॥

स्वामिन्नद्योपलब्धोऽसि ज्योतीरूपः प्रकाशकः ॥
क्षमस्व सेवकं स्वीयं देवराज समुद्धर ॥ ३१ ॥

अविद्याब्धा निपतितो भ्रमन्प्राक्तनवीचिभिः ॥[2]
नेक्षेऽगाधे परम्पारं स्वामिन्नालम्बवर्जिते ॥ ३२ ॥

ख्यातोऽसि । तर्हि कथं दम्भः । विस्तरेणाद्य वद । ते चित्ते हरिर्वसति । स ते ज्ञापयिष्यति ॥२२-२७॥ इति श्रुत्वा नत्वा त्रिविक्रम आहाविद्यामयो मूढोऽस्मि । सद्गुरो, क्षमस्व । त्वं त्रिमूर्त्यवतारो विश्वतारको मायां प्रवर्तयसि । अज्ञानपटवेष्टितोऽहं मायाब्धौ मग्नोऽस्मि । हे स्वामिन्मायामोहावृतोऽहं दिवान्धवत्परमार्थं त्वां न जाने । अद्य ज्योतिःस्वरूपस्त्वं लब्धोऽसि । हे देवराज, क्षमस्व । स्वदासमुद्धराविद्याब्धौ पतित्वा प्राक्तनोर्मिभिर्भ्रमन्परपारं नेक्षे । मां ज्ञाननावि समारोप्य हे कृपाब्धे

१ इदम् २ प्राक्तनकर्मलहरीभिः.

ज्ञाननावि समारोप्य कृपावातेरणेन माम् ॥
परपारं निजस्थानं नय स्वामिन्कृपानिधे ॥ ३३ ॥

यस्योपरि दया तेऽस्य दोषा दुःखं च वा कुतः ॥
स जित्वैव कलिं कालं परमार्थैक्यमृच्छति ॥ ३४ ॥

कथा श्रुता पुरावृत्ता भारते विस्तरेण मे ॥
अर्जुनाय विराड्रूपं श्रीकृष्णेन प्रदर्शितम् ॥ ३५ ॥

तथैव भवता मेऽद्य निजरूपं प्रदर्शितम् ॥
भक्तवत्सल तेऽपारो महिमा गुरुनायक ॥ ३६ ॥

जगद्गुरो जय जय त्वं भवाम्बुधितारकः ॥
त्वं त्रिमूर्त्यवतारोऽसि श्रीनृसिंहसरस्वती ॥ ३७ ॥

त्वत्पाददर्शनादद्य कृतार्थोऽहमयत्नतः ॥
अनायासाद्भेदहर्ता[1] लब्धश्चिन्तामणिर्हि मे ॥ ३८ ॥

उद्धार यथा गङ्गा सगरान्भवसागरात् ॥
विदुरस्य गृहं विष्णुर्यथाऽगात्कृपया स्वयम् ॥ ३९ ॥

स्वामिन्परपारं निजस्थानं नय। यस्योपरि ते कृपा तत्र दुःखं दोषाश्च कुतः। स कलिकालजित्परमार्थैक्यं याति ॥२८-३९॥ तथैवाद्य मे निजरूपं दर्शितम्। भक्तवत्सल श्रीगुरो, तेऽपारो महिमा। जगद्गुरो, जय। त्वं भवाब्धितारकस्त्रिमर्त्यवतारोऽसि। त्वत्पददर्शनादनायासात्कृतार्थोऽस्मि। त्वं चिन्तामणिरनायासाद्भेदहर्ता। यथा गङ्गा सगरानुद्धार,

---

१ द्वैतहर्ता.

भक्तवत्सल तद्वत्त्वं प्रतीतोसि सुकीर्तिकृत् ॥
महिमानं वर्णयितुं तेऽनन्तं शक्नुयां कथम् ॥ ४० ॥
इत्यस्तौत्स बहुस्तोत्रैः श्रीगुरुं तं जगद्गुरुम् ॥
गुरुमूर्तिस्तु सन्तोषात्तदाऽदादभ्रमहद्वरम् ॥ ४१ ॥
श्रीगुरुः प्राह तुष्टोऽस्मि त्वद्भक्त्याऽद्य त्रिविक्रम ॥
अत्रैव सद्गतिस्तेऽस्तु पुनरावृत्तिवर्जिता ॥ ४२ ॥
लब्धस्ते परमार्थोऽद्य त्वं परात्मैक्यमृच्छसि ॥
गुरुनाथ इति प्रोक्त्वा स्वस्थानं गन्तुमुद्यतः ॥ ४३ ॥
तत्रैव कुमसीग्रामे स्थापयित्वा त्रिविक्रमम् ॥
क्षणात्ससैन्यभूपेन स गन्धर्वपुरं ययौ ॥ ४४ ॥
श्रीगुरोरेष महिमा निःसीमो नामधारक ॥
स त्रिमूर्त्यवतारोऽपि नृरूपेणेह वर्तते ॥ ४५ ॥
गुरुः परोऽयं पुरुषस्तं नाऽयमिति यो वदेत् ॥
स सप्तजन्मपर्यन्तं पापी यायाद्यमालयम् ॥ ४६ ॥

यथा विदुरगृहं विष्णुः स्वयं ययौ, तथा भक्तवत्सल त्वमागतोऽसि । ते महिमवर्णनेऽहं न क्षमः । इति बहुस्तोत्रैः स्तुतः श्रीगुरुर्भ्रमहद्वरं दास्यन्प्राह । त्वद्भक्त्या तुष्टोऽस्म्यत्रैव पुनरावृत्तिहीना सद्गतिस्तेऽस्तु । ते परार्थो लब्धस्त्वं परमात्म्यैक्यं गच्छसीति श्रीगुरुः प्रोक्त्वा तं तत्रैव स्थापयित्वा क्षणात्ससैन्यभूपेन गन्धर्वपुरं प्राप ॥३६-४४॥ एवं त्रिमूर्त्यवतारो नृरूपेण वर्ततेऽस्यापारमहिमा । अयं न परः पुरुष इति यो वदेत्स

१ ददौ.

गुरुर्ब्रह्मा गुरुर्विष्णुर्गिरिजारमणो गुरुः ॥
वेदशास्त्रपुराणेषु प्रसिद्धमिदमेव हि ॥ ४७ ॥
अतोऽयं श्रीगुरुः साक्षात् त्रिमूर्तिर्हि सतां मतः ॥
लोको मद्वाक्यविश्वासाल्लग्नो भवतु तत्पदे ॥ ४८ ॥
प्रपेयममृतस्यात्र रुचिरा स्थापिता मया ॥
अतीव सुलभा ज्ञोऽत्र पिबत्वेतत्कथामृतम् ॥ ४९ ॥
गङ्गाधरस्य नन्दन एवं चरितं जगौ गुरोर्व्यासात् ॥
भक्त्या शृण्वन्त्येषां पुमर्थलाभो भवेदनायासात् ॥५०॥

(इति)श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्यगङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञितमहाराष्ट्रभाषान्वितगुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वतीयतिविरचितायां श्रीगुरुसंहितायां ज्ञानकाण्डे चतुर्विंशः (अध्यायः) ॥

॥ आदितः श्लोकाः ॥ २५५६ ॥

पापी सप्तजन्मपर्यन्तं यमलोके वसति। गुरुस्त्रिमूर्त्यात्मेति वेदादिषु प्रसिद्धः सतां मतोऽतो मद्वाक्याल्लोकस्तत्पदलग्नो भवतु। सुलभाऽमृतप्रपेयं ज्ञानीह कथामृतं पिबतु ॥४६-४९॥ गङ्गाधरस्य नन्दन एवं चरितं गुरोर्जगौ व्यासात्। भक्त्या शृण्वन्त्येषां पुमर्थलाभो भवेदनायासात् ॥ ५० ॥ इति चूर्णिकायां चतुर्विंशोऽध्यायः ॥

॥ इति चतुर्विंशोऽध्यायः ॥ २४ ॥

ज्ञानकाण्डं समाप्तम्

---

१ पानीयशाला.

# अथ कर्मकाण्डप्रारंभः

---

## ।। अथ पञ्चविंशोऽध्यायः ।। २५ ।।

श्रीगणेशाय नमः ।। श्रीदत्तात्रेयाय नमः ।।

जय सिद्ध महायोगिंस्त्वं सद्गुरुशिरोमणिः ।।
मच्चित्तनिश्चयस्त्वेवं जातोऽसि त्वं सुबोधदः ।। १ ।।
सर्वेश्वरः कृपालुर्यः स्वयमत्रावतीर्य च ।।
भातीतरेषां नरवत्प्रत्यक्षो ज्ञानिनां तु यः ।। २ ।।
त्रिविक्रमाय प्रत्यक्षं स्वरूपं दर्शितं श्रुतम् ।।
ततोऽग्रतः कथं जाता कथा तां प्रतिपादय ।। ३ ।।
सिद्ध ऊचे गुरोर्लीला बालागम्याऽखिला मम ।।
कालान्तरेणाप्यमला संक्षेपेण वदाम्यतः ।। ४ ।।

अध्यायसारसंग्रहश्लोकोऽयम्–

मत्तावार्तौ श्रुतिनयविज्ञौ म्लेच्छाज्ञप्तौ द्विजविजिगीषू ।।
भिक्षुर्निन्ये श्रितशिबिकौ तौ गुर्वग्र्यं पञ्चसहितविंशे ।। १ ।।

हे गुरुश्रेष्ठ सिद्ध महायोगिन् जय । त्वं सुबोधद इति मे निश्चयः ।। १ ।। यः कृपालुः सर्वेशोऽवतीर्य नृवद्भाति स ज्ञानिनां प्रत्यक्षः । तेन त्रिविक्रमाय रूपं दर्शितं श्रुतम् । ततोऽग्रतो जातां कथां वद । सिद्ध आहाखिला गुरुलीलाऽगम्या कालान्तरेणाप्यतः सङ्क्षेपाद्वच्मि ।। २-४ ।। सर्वमहि-

समस्तमहिमाख्याने ग्रन्थोऽयं विस्तृतिं व्रजेत् ॥
अतः किञ्चित्सारभूतं चरितं कथयामि ते ॥ ५ ॥

अपूर्वमग्रतो वृत्तं शृणु तन्नामधारक ॥
कश्चिद्यवनजातीयो वैडूर्यनगरे नृपः ॥ ६ ॥

ब्रह्मद्वेषी महाक्रूरो जीवहिंसापरः सदा ॥
आहूय ब्राह्मणान्स्वाग्रे बलाद्वाचयति श्रुतिम् ॥ ७ ॥

यवनो ब्राह्मणानाह विद्वांसः सन्ति ये तु तैः ॥
पठनीयाः सभायां मे सर्वे वेदा यथार्थतः ॥ ८ ॥

तेभ्यो बहु धनं दास्ये मंता[1] मे ते च सर्वतः ॥
यो वेदार्थं कथयति विशेषात्पूज्यते स मे ॥ ९ ॥

इत्युक्ता ज्ञानिनः प्राहुर्वयं मन्दधियो न हि ॥
वेदज्ञा इति मूढास्तु बभूवुर्द्रव्यकांक्षिणः ॥ १० ॥

माख्याने ग्रन्थविस्तरो भवेदतः किञ्चित्सारं वच्मि । अग्रेऽपूर्वं जातम् । वैडूर्यनगरे कश्चिद्यवनराजो ब्रह्मद्वेषी क्रूरो हिंस्रोऽपि स्वाग्रे बलाद्विप्रानाहूयाह । विद्वद्भिरत्र सभायां सार्थवेदाः पठनीयाः ॥ ६-८ ॥ तेभ्यो धनं दास्ये । यो वेदार्थं वक्ति स मे मतो विशेषतः पूज्यश्चेति श्रुत्वा बुधा ऊचुर्वयं मन्दा न वेदज्ञा इति । मूढास्तु द्रव्यकांक्षया म्लेच्छाग्रे वेदादिकं

---

१ मतो मे स च सर्वत इति क्वचित्पुस्तके.

गत्वा म्लेच्छाग्रतो वेदशास्त्रादि स्म पठन्ति ते ॥
म्लेच्छोऽपि स तु दुर्बुद्धिर्यज्ञकाण्डार्थलालसः ॥ ११ ॥
प्राह ये याज्ञिका विप्राः पशुहत्यापरायणाः ॥
म्लेच्छान्निन्दन्ति कस्मात्ते पशुघ्ना इति वञ्चकाः ॥१२॥
विनिन्द्यैवं द्विजान्द्रव्यं प्रददौ वेदपाठके ॥
तथा वेदार्थशंसिभ्यो[1] योग्यतां च ददौ मुदा ॥ १३ ॥
एवं यवनराजोऽर्थं रातीत्याकर्ण्य भूसुराः ॥
द्रव्यलुब्धास्तमभ्येत्य शशंसुर्वेदमर्थतः ॥ १४ ॥
वेदशास्त्रार्थनिपुणा ब्राह्मणा द्रव्यलोलुपाः ॥
स्वयं यवनमभ्येत्य शशंसुर्[2]वेदमर्थतः ॥ १५ ॥
एवं मूढा दुराचारा मत्ता विप्राः कलिप्रियाः ॥
तद्गृहं यमराष्ट्रे ये शशंसुर्वेदमर्थतः ॥ १६ ॥
एवं सत्येकदिवसे वेदशास्त्रविदौ द्विजौ ॥
अग्रतो म्लेच्छराजस्य मन्दभाग्यौ समागतौ ॥ १७ ॥

जगुः । यज्ञकाण्डार्थं श्रुत्वा दुर्बुद्धी राजाऽऽह । पशुघ्ना याज्ञिकाः कुतोऽस्मान्निन्दन्तीति विनिंद्यार्थशंसिभ्यो धनं मानं च ददौ । तच्छ्रुत्वा द्रव्यलुब्धा यवनमेत्य वेदार्थमूचुः । एवं वेदशास्त्रनिपुणा अपि मूढा दुराचारा मत्ताः कलिप्रिया विप्रा म्लेच्छाग्रे वेदमाहुः । तत्रैकदा मन्दभाग्यौ वेदशास्त्रज्ञौ द्विजावेत्य ॥ ९-१७ ॥ ऊचतुरावां त्रिवेदज्ञौ शास्त्रज्ञौ चेति स्वयं

---

१ वेदार्थकथनशीलेभ्यः २ कथयामासुः.

तमूचतुस्त्रिवेदज्ञावावां शास्त्रविशारदौ ॥
इति म्लेच्छाग्रतः स्वस्य स्वयं कीर्तिं शशंसतुः ॥१८॥

राजन्समा[1] न चावाभ्यां दृष्टाः केपीह भूतले ॥
आवां चत्वारि राष्ट्राणि पर्यटन्ताविहागतौ ॥ १९ ॥

राष्ट्रे ते वेदवादार्हाः सन्ति चेद्दर्शयाद्य वाम् (नौ) ॥
आवाभ्यां सह संवादो भविष्यत्यग्रतस्तव ॥ २० ॥

इति श्रुत्वा तयोर्वाक्यं स राजाऽप्यभिमानवान् ॥
विप्रानुपाह्वयामास समस्तान्स्वपुरस्थितान् ॥ २१ ॥

राजाऽवदत्समाहूतान्ये जेष्यंतीह तार्किकाः ॥
वादेनेमौ द्विजौ तेभ्यो दास्यामि विपुलं धनम् ॥ २२ ॥

एवमुक्तास्तु यवनं त ऊचुर्योग्यतेदृशी ॥
कस्यस्वित्तु न नो राजन्नेतयोः क्व पराभवः ॥ २३ ॥

स्वकीर्तिं शंसन्तावूचतुः। क्वापि भूतलेऽस्मत्तुल्या न दृष्टाः। आवां राष्ट्राण्यटन्ताविहागतौ। ते राष्ट्रे वादार्हा विप्राः सन्ति चेद्दर्शयावाभ्यां सह तेऽग्रे वादो भवत्विति श्रुत्वाऽभिमानी राजा स्वपुरस्थानाहूयाह। ये वादेनैतौ जेष्यन्ति तेभ्यो बहु धनं दास्ये ॥ १८-२२ ॥ ते प्राहुरीदृग्योग्यताऽस्माकं न। क्वाप्यनयोः पराभवो न। अस्माकं मध्ये एतौ श्रेष्ठौ।

---

१ तुल्याः न क्वापि इति काकुः.

अस्माकं मध्य एतौ तु श्रेष्ठौ विप्रावुभावपि ॥
प्रकाश्याभ्यां महाराज त्वं मानं दातुमर्हसि ॥ २४ ॥

इति सर्वैर्द्विजैरुक्तो राजा मानं समर्प्य च ॥
अलञ्चकार सद्वस्त्रभूषणाद्यैरुभावपि ॥ २५ ॥

गजावारोह्य नगरे भ्रामयन्वाद्यघोषतः ॥
तावुभौ घोषयामास राजानौ ब्राह्मणाविमौ ॥ २६ ॥

यवनानामहं राजा राजानौ ब्रह्मणामिमौ ॥
इति तौ तामसौ विप्रौ म्लेच्छाग्रे वेदपाठकौ ॥ २७ ॥

राजानौ मन्यमानौ तौ दूषयामासतुर्द्विजान् ॥
तस्मिन् यवनराष्ट्रे तौ महता तमसाऽऽवृतौ ॥ २८ ॥

एवं मदेन तौ व्याप्तावन्धौ मत्तगजाविव ॥
कदाचिदग्रतो राज्ञः प्रोचतुर्मदविह्वलौ ॥ २९ ॥

आवयोर्योग्यता राजन्भूयसी लोकविश्रुता ॥
वादी दृष्टो न चैकोऽपि विद्याभ्यासो वृथा गतः ॥३०॥

आभ्यां मानं देहीत्युक्तो राजा मानं दत्त्वा तौ वस्त्राभरणैर्भूषयित्वा गजावारोह्य वाद्यघोषेण पुरे भ्रामयन्नाह ॥ २३-२६ ॥ अहं राजा यवनानामिमौ ब्राह्मणानां राजानौ। म्लेच्छाग्रे वेदपाठकौ तौ आवां राजानाविति मन्यमानौ तद्राष्ट्रे महातमसाऽऽवृतौ विप्रान्दूषयामासतुः। एवं मदव्याप्तौ मत्तगजाविवान्धौ तौ कदाचिद्राजानमूचतुः। आवयोर्योग्यता भूयसी

१ इमौ ब्राह्मणानां राजानौ.

आवयोर्महतीच्छेयं वादः कार्यो महान्द्विजैः ॥
यास्याव आज्ञापयसि त्वं चेद्राष्ट्रान्तराणि कौ[1] ॥ ३१ ॥

कदाचिदुपलभ्येत वादी जेष्याव एव तम् ॥
जयपत्रं ग्रहीष्यावः स चेन्न विवदिष्यति ॥ ३२ ॥

राजोवाच तथा कार्यं गत्वा राष्ट्राणि सत्वरम् ॥
कार्यः पराभवस्तेषामिति राजाऽऽदिदेश[2] ह ॥ ३३ ॥

इत्याज्ञप्तौ तु यवनराजेनोभौ तु तामसौ ॥
ग्रामाद्ग्रामं पर्यटन्तौ मार्गयन्तौ विवादिनः ॥ ३४ ॥

गृह्णन्तौ जयपत्राणि ग्रामाद्ग्रामं विचेरतुः ॥
स्थातुं तत्सम्मुखे कोऽपि न शशाक महीतले ॥ ३५ ॥

पुराण्यटन्तौ सर्वाणि प्राप्तौ तौ दक्षिणां दिशम् ॥
श्रुतवन्तौ तत्र वेदशास्त्रज्ञं तं त्रिविक्रमम् ॥ ३६ ॥

ख्यातैकोऽपि वादी न दृष्टोऽतो वृथा विद्याभ्यासः। विद्वद्भिर्वादः कार्य इतीच्छाऽत आज्ञापय। भूतले यत्र क्वापि वादी कश्चिदुपलभ्येत चेज्जेष्यावो न विवदिष्यति चेज्जयपत्रं ग्रहीष्यावः। राजोवाच तथा गत्वा विप्रपराभवः कार्यः। एवमाज्ञप्तौ तौ ग्रामाद्ग्रामान्तरं पर्यटन्तौ जयपत्राणि गृहीत्वा विचेरतुः। तत्समीपे स्थातुं कोऽपि न शशाक ॥ २७-३५ ॥ एवं पर्यटन्तौ तौ दक्षिणादिशमेत्य कुमसीग्रामे वेदशास्त्रज्ञं कीर्तिमन्तं

---

१ भुवि २ आज्ञापितवान्.

त्रिवेदज्ञोऽनेकशास्त्रनिपुणः स महामुनिः ॥
तत्रास्ते कुमसीग्रामे यस्त्रिविक्रमभारती ॥ ३७ ॥

महामुनिः कीर्तिमान्स इति लोकमुखात्तु तौ ॥
श्रुत्वा विप्रौ मदोन्मत्तौ तं मुनिं समुपागतौ ॥ ३८ ॥

तमागत्योचतुर्ब्रह्मन्यद्यसि त्वं त्रिवेदवित् ॥
विवदस्वाथवा देहि जयपत्रं च वां[1] (नौ) यते ॥ ३९ ॥

श्रुत्वा तयोर्वचः प्राह त्रिविक्रममहामुनिः ॥
त्रीन्वेदान्न हि जानामि तथैकं वेदमप्युत ॥ ४० ॥

वेदशास्त्रज्ञता मे चेदरण्यं सेव्यते कथम् ॥
वेदज्ञा भुञ्जते भोगान्राजपूज्या भवादृशाः ॥ ४१ ॥

नाहं विद्वानतोऽरण्यवासी संन्यासिवेषधृक् ॥
अहं तु तापसो भिक्षुर्न भवत्तुल्यता हि मे ॥ ४२ ॥

अभिमानो हि मे नष्टः किं जयेनाजयेन वा ॥
युवामुत्कृष्टविद्वांसौ किं वादेन मया सह ॥ ४३ ॥

त्रिविक्रमं श्रुत्वाऽऽगत्योचतुस्त्वं त्रिवेदज्ञोऽसि चेद्वादं कुरु, जयपत्रं वा देहीति ॥ ३६-३९ ॥ त्रिविक्रम आहैकमपि वेदं न जाने। वेदशास्त्रज्ञता चेत्कुतो मे वनवासः। वेदज्ञा हि राजपूज्या भवादृशा भोगान्भुञ्जते। न तथाविधोऽहमरण्यवासी तापसो भिक्षुः। मेऽभिमानो नष्टः। किं जयेनाजयेन वा। मया सह वादेन को लाभः। युवां तूत्कृष्टौ। विप्रावूचतुः।

---

१ आवाभ्यां.

इति श्रुत्वा मुनिवचः प्रगल्भं प्रोचतुस्तु तौ ॥
कोऽस्माञ्जेष्यति वादेन श्रुतो नेदृग्धरातले ॥ ४४ ॥

सर्वराष्ट्राटनेनापि स्वसमानोऽपि नेक्षितः ॥
असंख्यातानि चेमानि जयपत्राणि पश्य भोः ॥ ४५ ॥

त्वमप्येवं प्रकारेण जयपत्रं प्रदेहि वाम् (नौ) ॥
यदि विद्याभिमानश्चेद्विवादं कुरु सत्वरम् ॥ ४६ ॥

इत्युक्तो बोधयामास प्रकारैर्विविधैः[1] स तौ ॥
अश्रुत्वैवोचतुर्देहि जयपत्रमिति द्विजौ ॥ ४७ ॥

ततो विचारयामास त्रिविक्रममहामुनिः ॥
शिक्षार्थमेव नेतव्यौ गन्धर्वनगरे द्विजौ ॥ ४८ ॥

मत्तावन्धाविमौ विप्रौ विप्रा आभ्यां हि धिक्कृताः ॥
उपायस्त्वयमेवात्र नेतव्यौ गुरुसन्निधिम् ॥ ४९ ॥

एवं विचार्य तौ प्राह गन्धर्वनगरं द्विजौ ॥
आगच्छतं तत्र दास्ये जयपत्रं सविस्तरम् ॥ ५० ॥

कोऽस्माञ्जेष्यति। भूमौ न दृष्टो नापि श्रुतः ॥४०-४४॥ समानोऽपि न दृष्टोऽतोऽसंख्यानीमानि जयपत्राणि वीक्ष्य तथैव त्वयाऽपि देयं, वादो वा कार्य इति श्रुत्वाऽनेकप्रकारैर्बोधितावपि तौ पत्रं देहीत्यूचतुः ॥ ४५-४७ ॥ मत्तावन्धाविमौ विप्रौ शिक्षार्थं गन्धर्वपुरं नेतव्यौ। आभ्यां विप्रा धिक्कृता एवं विचार्याह। हे विप्रौ, गन्धर्वपुरमागच्छतम्। तत्र नो गुरुरास्ते।

१ बहुभिरिति क्वचित्पुस्तके.

यत्रास्ते नो गुरुस्तत्र पत्रं दास्ये तदग्रतः ॥
अथवा भवतां कामस्तत्रोपशममेष्यति ॥ ५१ ॥

इत्युक्त्वा निर्ययौ सोऽपि त्रिविक्रममहामुनिः ॥
जग्मतुस्तेन साकं तौ यानासानौ द्विजाधमौ ॥ ५२ ॥

मूढौ तौ ब्राह्मणावज्ञौ यतीशं पादचारिणम् ॥
अनुयान्तौ यानसंस्थौ जातावल्पायुषौ ततः ॥ ५३ ॥

वरं गन्धर्वनगरं स्थानं यच्छ्रीगुरोः परम् ॥
भीमातीरं यत्र चास्ते श्रीनृसिंहसरस्वती ॥ ५४ ॥

प्रणम्य श्रीगुरुं प्राह नतो भक्त्या त्रिविक्रमः ॥
व्योमकेशादिपुरुष कृपालो भक्तवत्सल ॥ ५५ ॥

जगद्गुरो जय जय संसारार्णवतारक ॥
ईश्वरं त्वां न यो वेत्ति स गमिष्यत्यधोगतिम् ॥ ५६ ॥

तदग्रे पत्रं दास्येऽथवा भवत्कामोपशमो भविष्यतीत्युक्त्वा त्रिविक्रमो निर्ययौ। यानस्थौ मूढौ द्विजाधमौ तौ अनुजग्मतुरतोऽल्पायुषौ जातौ। श्रीगुरोः स्थाने भीमातीरे त्रिविक्रम एत्य ॥ ४८-५४ ॥ भक्त्या श्रीगुरुं नत्वाऽऽह। हे व्योमकेशादिपुरुष कृपालो भक्तवत्सल भवाब्धितारक श्रीगुरो, जय। य ईशं त्वां न वेत्ति सोऽधो गमिष्यति। इति स्तुत्वाऽऽ-

---

१ नरयानोपविष्टौ.

स्तुत्वैवं तत्पदोः शीर्षं दधौ बाष्पाकुलेक्षणः ॥
रोमाञ्चिततनुर्जातो रुद्धकण्ठस्त्रिविक्रमः ॥ ५७ ॥

गुरुनाथस्तमुत्थाप्य प्रणमन्तं मुनीश्वरम् ॥
पप्रच्छालिंग्य दयया वृत्तान्तं सर्वमादितः ॥ ५८ ॥

गुरुः प्राह यतेऽद्यात्र किमागमनकारणम् ॥
किं कार्यं तेऽधुना ब्रूहि मुनीश्वर सविस्तरम् ॥ ५९ ॥

इति श्रीगुरुणा प्रोक्तस्त्रिविक्रम उवाच तम् ॥
मदोन्मत्ताविमौ विप्रावागतौ वादकांक्षिणौ ॥ ६० ॥

वादाभिज्ञौ वेदशास्त्रमीमांसानिपुणौ बुधौ ॥
आवां चतुर्वेदविदाविति मूढौ प्रजल्पतः ॥ ६१ ॥

कश्चिद्वादं न कुर्याच्चेद्गृह्णीतो जयपत्रकम् ॥
नाङ्गीचक्रतुरेतौ मे बोधितावपि सद्वचः ॥ ६२ ॥

अत एतौ समानीतौ स्वामिन्गुरुतमो भवान् ॥
भवद्वाक्यं हि सबलमिति मत्वाऽऽगतोऽस्म्यहम् ॥६३॥

नन्दाश्रुपूर्णो रोमाञ्चितदेहो रुद्धकण्ठस्त्रिविक्रमो गुरुपदे शिरोऽधात्स तमुत्थाप्य दययाऽऽलिंग्याहाद्यागमनकारणं किम्। किं ते कार्यं, सविस्तरं ब्रूहीति गुरुणा पृष्टस्त्रिविक्रम ऊचे। मदोन्मत्तावैतौ विप्रौ वादार्थमागत्योचतुः। आवां चतुर्वेदशास्त्रमीमांसानिपुणौ वादज्ञौ। कश्चिद्वादं न कुर्याच्चेज्जयपत्रं गृह्णीव इति। बोधितावपि मे वाचो नाङ्गीचक्रतुरतोऽत्रानीतौ।

इति श्रुत्वा मुनिवचः प्रहसन्निव सद्गुरुः ॥
द्वौ विप्रौ वीक्ष्य वृत्तान्तं पप्रच्छ श्रीगुरुः स्वयम् ॥६४॥
विप्रौ[1] किमर्थमायातौ किं वादेन फलं हि वाम् ॥
पराभवाच्च विप्राणां को लाभो भवतोर्मतः ॥ ६५ ॥
जयोऽजयो वा तुल्यो नस्तापसा यतिनो वयम् ॥
यतौ जिते तु युवयोः पुरुषार्थो लभेत किम् ॥ ६६ ॥
इति श्रीगुरुणा प्रोक्तौ प्रोचतुस्तौ द्विजौ तदा ॥
भिक्षो महीं पर्यटतोर्न लब्धो नौ विवादकृत् ॥ ६७ ॥
नायाताः सम्मुखं केऽपि समस्ताः पण्डिता जिताः ॥
पत्राणि वादविमुखा अपीमानि ददुर्यते ॥ ६८ ॥
ईदृक्पत्रप्रदाने ते कः प्रयासस्त्रिविक्रमः ॥
कोपेनैवानयामास त्वां प्रत्यावामिहाधुना ॥ ६९ ॥
युवयोरभिमानश्चेत्पाण्डित्यस्य विशेषतः ॥
वेदव्याकृ[2]तिशास्त्रादिविवादः क्रियतां द्रुतम् ॥ ७० ॥

भवान्गुरुतमः इति श्रुत्वा हसन्गुरुर्विप्रौ वीक्ष्योवाच ॥ ६९-६४ ॥ किमर्थमायातौ, वादेन किं, वादेन विप्रपराभवाच्च को लाभः। जयोऽजयो वा नस्तुल्यः। तापसा यतयो वयम्। यतौ जिते वां कः पुरुषार्थलाभ इति श्रुत्वा तावूचतुः। भिक्षो, महीं पर्यटतोर्नौ वादी न लब्धः। केऽपि समीपं नागताः। पण्डिता जिताः। वादविमुखाः पत्राणीमानि ददुरीदृक्पत्रदाने कः प्रयासः। कुपितस्त्रिविक्रमो वामिहानयामास। युवयोः पाण्डित्या-

---

१ हे विप्रौ २ व्याकरणं.

वयं चतुर्वेदविदो नास्मत्तुल्याः कुहापि हि ॥
आवां युवामुभौ व्रतं भिक्षू किं वेदपारगौ ॥ ७१ ॥

श्रीगुरुः प्राह तौ विप्रौ गर्वो वां मास्तु सर्वथा ॥
असुरा आशराश्चापि गर्वेणैव मृतिं गताः ॥ ७२ ॥

बलेर्गर्वेण किं जातं तथा बाणासुरस्य च ॥
लंकानाथोऽपि चोन्मत्तो गर्वेणैव मृतिं गतः ॥ ७३ ॥

को जानीतेऽत्र वेदान्तं ब्रह्माद्या अपि नो विदुः ॥
अनन्ताः सन्ति वेदा वै गर्वोऽयं क्रियते वृथा ॥ ७४ ॥

यदा हितेच्छा युवयोर्गर्वस्त्याज्यो हि सर्वथा ॥
वेदानन्त्येऽपि तु युवां चतुर्वेदविदौ कथम् ॥ ७५ ॥

इति श्रीगुरुणोक्तौ तौ गर्वितौ पुनरूचतुः ॥
वयं वेदविदः ख्याता जानीमः साङ्गसंहिताः ॥ ७६ ॥

भिमानश्चेच्छीघ्रं वेदव्याकरणादिविवादः क्रियताम्। वयं चतुर्वेदविदोऽस्मत्तुल्याः क्वापि न। युवां भिक्षू वेदपारगौ किम्। श्रीगुरुराह। गर्वो वां सर्वथा माऽस्तु। दैत्यराक्षसा गर्वेणैव मृताः। बलेर्गर्वेण किं जातम्। बाणो रावणश्च गर्वेणैव मृतः ॥ ६९-७३ ॥ को वेदान्तं यायाद्ब्रह्माद्या अपि न विदुर्वृथाऽयं गर्वोऽनन्ता वेदाः। हितेच्छा चेत्सर्वथा गर्वस्त्याज्यः। वेदानंत्ये युवां कथं चतुर्वेदज्ञौ। विप्रौ गर्वेणोचतुर्वयं साङ्गवेदज्ञाः। एवं अभिमा-

---

१ राक्षसाः

एवं तावभिमानोक्त्या श्रीगुरुं प्रोचतुर्द्विजौ ॥
तयोर्विचेष्टितं वक्ष्ये शृणु त्वं नामधारक ॥ ७७ ॥
तौ ब्राह्मणौ श्रीगुरुराह शाखा विभागशो वेदचतुष्टयस्य ॥
ताः श्रोतृ[1]वर्गाहमपि प्रवक्ष्ये गङ्गाधरार्भो[2]ऽजमवेक्ष्य लक्ष्ये[3]

नोक्त्या वदतोस्तयोर्गतिं शृणु ॥ तौ ब्राह्मणौ श्रीगुरु० ॥ ७४-७८ ॥ इति चूर्णिकायां पंचविंशोऽध्यायः ॥

( इति ) श्रीसि० रूपेण सर० विर० नृसि० न्वितगु० यां श्रीगुरु० कर्मकाण्डे पंचविंशः ( अध्यायः ) ॥
आदितः श्लोकाः ॥ २६३४ ॥

॥ इति पंचविंशोऽध्यायः ॥ २५ ॥

---

१ संबोधनं २ श्रीदत्तं ३ ऐकाग्र्ये.

## ॥ अथ षड्विंशोऽध्यायः ॥ २६ ॥

श्रीगणे० ॥ श्रीगुरुर्ब्राह्मणौ प्राह युक्त्या मा कुरुतं भ्रमम् ॥
ब्रह्माऽपि वेद वेदान्तं नैवानन्ता हि चागमाः ॥ १ ॥

अवतीर्य क्षितौ व्यासो मुनिर्नारायणः स्वयम् ॥
व्यक्तीकृत्य श्रुतीर्व्यासात्[1]प्रपेदे व्याससंज्ञताम् ॥ २ ॥

तेनापि नोक्ताः सम्पूर्णाः साधारण्येन चोदिताः ॥
शिष्यास्तस्य तु चत्वार आसञ्जगति विश्रुताः ॥ ३ ॥

वक्ष्ये नामानि चैतेषां क्रमेण प्रथमोऽभवत् ॥
पैलसंज्ञो द्वितीयस्तु वैशम्पायनसंज्ञकः ॥ ४ ॥

अध्यायसारसंग्रहश्लोकोऽयम्—

चित्रपदोक्तिभिरीशः षडयुतविंश उवाच ॥
वेदतदङ्गविशाखा यं प्रणमन्ति हि लेखाः ॥ १ ॥

श्रीगुरुर्ब्राह्मणौ प्राह। युक्त्या भ्रमो न कार्यः। ब्रह्मापि वेदान्तं न यातोऽनन्ता हि वेदाः। व्यासो नारायणोऽत्रावतीर्य वेदान्विस्तीर्य व्याससंज्ञां प्राप ॥ १-२ ॥ तेनापि सम्पूर्णा नोक्तास्तस्य पैलो वैशम्पायनो जैमिनिः सुमन्तुरिति चत्वारः शिष्या वेदाभ्यासार्थं स्थिताः। एकैकवेदावसानं कल्पान्तेऽपि न लभ्यते। युवां कथं चतुर्वेदज्ञाः। पूर्वेऽप्यृषयो

---

१ विस्तरात्.

तृतीयो जैमिनिः ख्यातः सुमन्तुश्च चतुर्थकः ॥
वेदाभ्यासार्थमेवैते शिष्या व्यासमुपागताः ॥ ५ ॥
एकैकवेदावसानं कल्पान्तेऽपि न लभ्यते ॥
वेदा ह्यनन्ताश्चत्वारो युवाभ्यां पठिताः कथम् ॥ ६ ॥
आद्यर्षयोऽपि वेदान्तं न ययुः शृणुतं क्षणम् ॥
पुरा भरद्वाजऋषिर्वेदाभ्यासार्थमुद्यतः ॥ ७ ॥
ब्रह्मकल्पेष्वतीतेषु स जीवन्बहुवत्सरम् ॥
गन्तुमैच्छत्किलाशेषवेदान्तं ब्रह्मचर्यतः ॥ ८ ॥
लवलेशं श्रुतीनां स वेदाथाप्यतपत्पुनः ॥
ब्रह्मा प्रसन्नः सम्भूय प्राह पुत्र किमिच्छसि ॥ ९ ॥
भरद्वाजोऽवदत्स्वामिन्प्रसन्नोऽसि यदि प्रभो ॥
ब्रह्मचर्येऽखिलान्वेदान् मह्यमध्यापयादितः ॥ १० ॥
प्रदर्शयाखिलान् वेदान् मह्यमध्यापयापि च ॥
अयमेव वरो देय इति तच्चरणेऽग्रहीत् ॥ ११ ॥
ब्रह्मा प्राह भरद्वाज वेदाः सन्त्यमिताः कथम् ॥
ग्रहीतुमिच्छस्यखिलान्न सर्वे मेऽपि गोचराः ॥ १२ ॥

वेदान्तं नापुः । ब्रह्मकल्पत्रयजीवी भरद्वाजो ब्रह्मचर्येणाशेषवेदान्तं गन्तुमैच्छत् । स तपसा ब्रह्माणं प्रसादयामास । ब्रह्माऽऽह किमिच्छसीति । स आह प्रसन्नोऽसि चेत्सर्वान्वेदान्दर्शयाध्यापय चेति वरो देय इति पदे दधौ ॥ ३-११ ॥ ब्रह्माऽऽहामितान्वेदान्कथं ग्रहीतुमिच्छसि । ते मेऽप्य-

---

१ विषयाः.

सावधानतया पश्य श्रुतिराशीन्प्रदर्शये ॥
शक्तोऽसि चेत्ततो वेदान्भरद्वाज पठस्व तान् ॥ १३ ॥

इत्युक्त्वा तमृषिं ब्रह्मा दर्शयामास चोच्चकैः ॥
गिरिप्रायान्वेदराशीननन्तान्दृष्ट्यगोचरान् ॥ १४ ॥

ज्योतिर्मयान्कोटिसूर्यनिभान्वीक्ष्य स कातरः ॥
पठिष्यामि कथं वेदराशींस्त्रीन्गिरिसन्निभान् ॥ १५ ॥

ब्रह्मचर्याश्रमेऽतीता ब्रह्मकल्पास्त्रयोऽपि मे ॥
वेदोऽल्पः पठितस्त्वेतान्पठिष्यामि कदा कथम् ॥१६॥

इति भीतो विधिपदसंलग्नोऽसौ जगाद तम् ॥
क्षमस्व न क्षमः स्वामिन्पठितुं निखिलाः श्रुतीः ॥१७॥

वेदस्यादिं तथा चान्तं नाहं द्रष्टुमपि क्षमः ॥
स्वामिंस्त्वं हि जगन्नाथो देहि शक्त्या पठाम्यहम् ॥१८॥

अपारवेदपठनवासनात इहागमम् ॥
शरणागतपाता त्वं यथेच्छसि तथा कुरु ॥ १९ ॥

गोचराः ॥ १२ ॥ सावधानतया पश्य। शक्तोऽसि चेत्पठेत्युक्त्वा गिरिप्रायाञ्ज्योतिर्मयान्वेदराशीन्दर्शयामास। तान्सूर्याभांस्त्रीन्राशीन्वीक्ष्य स भीत आह। ब्रह्मचर्याश्रमे त्रयः कल्पा अतीताः। स्वल्पो वेदः पठित एतान्कदा पठिष्यामि। क्षमस्व। वेदान्तं द्रष्टुं न क्षमोऽहम्। यथाशक्ति पठामि। बहुवेदपठनेच्छयेहागमम्। त्वं शरणागतत्राता। यथेच्छसि तथा कुर्विति

---

१ अधीरः.

इति तद्वचनं श्रुत्वा ब्रह्मदेवः प्रसन्नधीः ॥
तस्मै मुष्टित्रयमिता अभ्यासाय ददौ श्रुतीः ॥ २० ॥

त्रिवेदमन्त्रजालानि पृथक्कृत्य यथामति ॥
दीर्घजीवी भरद्वाज आरेभे पठितुं श्रुतीः ॥ २१ ॥

स चाद्यापि न तस्यान्तं भरद्वाजो ययौ वयम् ॥
पठितुं न क्षमा वेदा वाचश्चत्वारि कीर्तिताः ॥ २२ ॥

सर्वैकवेदपठने प्रयासो हि महान्भवेत् ॥
व्यक्तीकृत्य ततः स्वल्पाः पाठयामि श्रुतीः क्रमात् २३

इति व्यासवाचः श्रुत्वा शिष्या ऊचुरधीहि भोः ॥
यथाशक्ति ग्रहीष्याम एकैकं वेदमादितः ॥ २४ ॥

इति शिष्यास्तु चत्वार उपसंगृह्य चाब्रुवन् ॥
नारायण गुरो व्यास शिष्योपरि कृपां कुरु ॥ २५ ॥

इति श्रुत्वा सकरुणं व्यासः सन्तोषमेत्य सः ॥
पैलं शिष्यं समाहूय प्राह ऋग्वेदमादिमम् ॥ २६ ॥

पदलग्नोऽभूत्प्रसन्नो ब्रह्मा तस्मै मुष्टित्रयमितं वेदं ददौ। त्रिवेदमन्त्रजालानि पृथक्कृत्य भरद्वाजः पठितुमारेभेऽद्यापि सोऽन्तं न गतः। वेदाश्चत्वारि वाचः ॥ १३-२२ ॥ पूर्णैकवेदपाठे महाप्रयासोऽत एव विभक्ताः स्वल्पाः शाखाः पठनीया इति श्रुत्वा शिष्या नत्वोचुः। हे नारायण गुरो, कृपां कुर्विति सकरुणं श्रुत्वा तुष्टो व्यासः पैलमाहूयाह। ध्यानपूर्वकं ऋग्वेदं

शृणुष्व पैल शिष्याग्र्य महिमानमृचोऽधुना ॥
नित्यं प्रपठ धर्मेण ऋग्वेदं ध्यानपूर्वकम् ॥ २७ ॥
पैलः प्राह गुरो व्यास विस्तरात्कथयस्व मे ॥
किं लक्षणमृचो ध्यानं कथं भेदाश्च तान्वद ॥ २८ ॥
ततः शक्त्या पठिष्यामि नित्यं धर्मेण भक्तितः ॥
कामधेनुस्त्वमस्माकं गुरुमूर्तिः कृपानिधे ॥ २९ ॥
व्यास ऊचे पैलशिष्यमृग्ध्यानमवधारय ॥
वर्णं तथाऽऽकृतिं रूपं शाखाभेदांश्च वच्मि ते ॥ ३० ॥
आयुर्वेद इति ख्यात ऋग्वेदस्योपवेदकः ॥
आत्रेयगोत्रजो ज्ञेय ऋग्वेदो ब्रह्मदैवतः ॥ ३१ ॥
छन्दो गायत्रिका तस्य रक्तवर्ण उदाहृतः ॥
पद्मपत्रायताक्षश्च सुविभक्तगलस्तथा ॥ ३२ ॥
व्द्यरत्निमात्रदीर्घाङ्गः कुंचितश्मश्रुकेशकः ॥
एवमृग्वेदरूपं स्याद्ध्यानं कुरु समाहितः ॥ ३३ ॥
अथ भेदा इमे चर्चा श्रावकश्चर्चकस्तथा ॥
श्रवणीयपार एव क्रमपारस्तथैव च ॥ ३४ ॥

पठेति । पैल आहास्य लक्षणं ध्यानं भेदांश्च कथय । शक्त्या भक्त्या धर्मेण पठिष्यामि । त्वं नः कृपानिधिः । कामधेनुः । व्यास आह । ऋग्वेदध्यानं वर्णाकृतिरूपशाखाश्च वच्मि । शृणु । ऋग्वेदस्यायुर्वेद उपवेदः, आत्रेयगोत्रं, ब्रह्मा देवता, गायत्री छन्दः, रक्तवर्णः, पद्मपत्रनेत्रं, विभक्तगलः ॥ २३-३२ ॥ द्व्यरत्निमात्राङ्गः, कुञ्चितश्मश्रुकेशोऽस्य भेदास्तु । चर्चा श्रावकश्चर्चकः श्रवणीयपारः क्रमपारः ॥ ३३-३४ ॥ जटा रथक्रमो

जटा रथक्रमो दण्डक्रमश्चापि तथैव च ॥
एतत्पारायणं पुण्यं शाखाः पञ्चापि च स्मृताः ॥३५॥
आश्वलायनिका सांख्यायनी शाकलसंज्ञिता ॥
चतुर्थी बाष्कला ज्ञेया माण्डूकेयी च पञ्चमी ॥ ३६ ॥
श्रीगुरुर्ब्राह्मणौ प्राह पैलमेवंविधामृचम् ॥
गुरुर्व्यासोऽब्रवीदेवं विस्तरेणेह वेद कः ॥ ३७ ॥
अस्मिन्कलौ युगे वेदाश्चत्वारः पठिताः कथम् ॥
युवयोः सर्वाध्ययनयोग्यता कथमागता ॥ ३८ ॥
अष्टाभिर्विकृतिभिः शाखामेकामपि द्विजौ ॥
ब्रूतं सलक्षणं व्यक्तं कोऽपि वेद महीतले ॥ ३९ ॥
एकं नारायणं हित्वा मुनिं व्यासं सविस्तरम् ॥
न को वेद ऋचो भेदान् स पैलायाह विस्तरम् ॥४०॥
एवं व्यासेन कथित ऋग्वेदो विस्तरेण हि ॥
शाखाभेदविचारेण शृणुतं ब्राह्मणावथ ॥ ४१ ॥

दण्डक्रमश्चैतत्पारायणं पुण्यम्। आश्वलायनी, सांख्यायनी, शाकला, बाष्कला, माण्डूकेयाश्चेति पञ्च शाखाः। एवं पैलाय व्यासेनर्ग्वेद उक्तः। अत्र कलौ चत्वारो वेदाः कथं पठिताः। कथं वां सर्वाध्ययनयोग्यता॥ एकं नारायणं व्यासं हित्वाऽष्टविकृतिसहितां साङ्गां एकां शाखां भूतलेऽत्र को वेद। व्यासेन पैलाय विस्तरादृग्वेद उक्तः ॥ ३९-४१ ॥ व्यास

१ ब्रह्मा वेद; अथवा को वेद न कोऽपि.

यजुर्वेदस्य विस्तारमपारं व्यास उक्तवान् ॥
अभ्यस्तवाञ्छिष्यवरो वैशंपायनसंज्ञकः ॥ ४२ ॥

व्यासोऽब्रवीदवहितो वैशम्पायन संशृणु ॥
यजुर्वेदस्योपवेदो धनुर्वेदाभिधो महान् ॥ ४३ ॥

यो भारद्वाजगोत्रीयो ज्ञेयो रुद्राधिदैवतः ॥
त्रिष्टुप्छन्दा इति प्रोक्तो यजुर्वेदो द्वितीयकः ॥ ४४ ॥

कृशदीर्घः करधृतकपालः सुमनोहरः ॥
विज्ञेयोऽम्भोरुहदलायतकाञ्चनलोचनः ॥ ४५ ॥

पञ्चारत्निमिताकारो विज्ञेयस्ताम्रवर्णकः ॥
यजुर्वेदध्यानमेवं वैशम्पायन निश्चितम् ॥ ४६ ॥

षडशीतिर्भिदोऽस्य स्युश्चरकानां दशैव तु ॥
चरका अप्याह्वरकाः कठाः प्राच्यकठास्तथा ॥ ४७ ॥

कपिष्ठलाः पञ्चमकाः शारायणीयसंज्ञकाः ॥
वारायणीया वार्तान्तवेयाः श्वेततरा अपि ॥ ४८ ॥

स्याह। हे वैशम्पायन यजुर्वेदं शृणु। धनुर्वेदोऽस्योपवेदः। भारद्वाजगोत्रं, रुद्रो देवता, त्रिष्टुप्छन्दः, कृशदीर्घः, कपालधृग्रम्यः, पद्मपत्रायतसुवर्णाक्षः पञ्चारत्निमितस्ताम्रवर्णो यजुर्वेदोऽस्य षडशीतिर्भेदास्तत्र चरकाः आह्वरकाः, कठाः, प्राच्यकठाः, कपिष्ठलाः, शारायणीया, वारायणीया, वार्तान्तवेयाः, श्वेततरा, मैत्रायणीया इति दश ॥ ४२-४८ ॥ तत्र मैत्रा-

---

१ कमलं.

मैत्रायणीया इति च दश भेदाः प्रकीर्तिताः ॥
तत्र मैत्रायणीयानां भेदाः सप्त क्रमेण तु ॥ ४९ ॥

मानवा दुन्दुभाश्चैव तथैकेयास्तृतीयकाः ॥
ततः परं हि वाराहास्ततो हारिद्रवेयकाः ॥ ५० ॥

श्यामाः श्यामायणीयाश्च सप्त भेदाः प्रकीर्तिताः ॥
तथा वाजसनेयानां भेदा अष्टादशैव तु ॥ ५१ ॥

श्रीगुरुः प्राह भो विप्रौ शृणुतं व्यासवर्णितम् ॥
अथ वाजसनेयानां भेदानष्टादश ब्रुवे ॥ ५२ ॥

आदौ वाजसनेयाः स्युस्ततो जाबालनामकाः ॥
बौधेयाश्च ततो ज्ञेयास्ततः काण्वाः प्रकीर्तिताः ॥५३॥

माध्यन्दिनास्ततो ज्ञेयाः शापेयाश्च ततः परम् ॥
तापनीयास्ततो ज्ञेयाः कापालाश्च ततः परम् ॥ ५४ ॥

पौण्ड्रवत्सास्ततो ज्ञेयास्तत आवटिकाः स्मृताः ॥
परमावटिकाश्चैव क्रमेणैवमुदाहृताः ॥ ५५ ॥

यणीयानां मानवदुन्दुभैकेयवाराहहारिद्रवेय- ॥ ४९-५० ॥ श्यामश्यामायणीया इति सप्त भेदाः। वाजसनेयानामष्टादश भेदाः। वाजसेनेयबौधेयजाबालकाण्वमाध्यन्दिनशापेयतापनीयकापालपौण्ड्रवत्सावटिकपरमाव-

पाराशर्यास्ततो ज्ञेया वैनेयाश्च ततः परम् ॥
वैधेया इति विख्याता वैशम्पायन संश्रृणु ॥ ५६ ॥

तदनन्तरमाख्याता औधेया इति संज्ञिताः ॥
ततः परं गालवाख्या बैजवाश्च ततः परम् ॥ ५७ ॥

कात्यायनीया इति च भेदाः सम्यगरिकीर्तिताः ॥
एवं वाजसनेयानां भेदा उक्ताः क्रमेण हि ॥ ५८ ॥

तथा च तैत्तिरीयाणां द्वौ भेदौ च प्रकीर्तितौ ॥
औख्याश्च काण्डिकेयाश्च काण्डिकेयास्तु पञ्चधा ॥५९॥

आपस्तम्बोदिता शाखा वितता सुमनोहरा ॥
अत्रापि सर्वयज्ञानां विस्तृतिः परिकीर्तिता ॥ ६० ॥

आपस्तम्बाभिधाऽपूर्वा ततो बौधायनाह्वया ॥
सत्याषाढी वै हिरण्यकेशीति च ततः परम् ॥ ६१ ॥

औखेयसंज्ञिता चेति पञ्चभेदाः प्रकीर्तिताः ॥
एवं क्रमेण जानीहि वैशम्पायन सर्वशः ॥ ६२ ॥

टिकपाराशर्यवैनेयवैधेयौधेयगालवबैजवकात्यायनीया इति । औख्याः काण्डिकेया इति द्वौ तैत्तिरीयभेदौ । तत्र काण्डिकेयाः पञ्चधा ॥ ५१-५९ ॥ यज्ञादिज्ञापिका ॥६०॥ आपस्तम्बशाखा । सत्याषाढी बौधायनी हिरण्यकेश्यौखेयेति । प्रतिपदमनुपदच्छन्दोभाषाधर्ममीमांसान्यायतर्का इत्युपाङ्गानि ।

एतेषामप्युपाङ्गानि सन्ति मे गदतः शृणु ॥
प्रतीपदं चानुपदं छन्दःसंज्ञं ततः परम् ॥ ६३ ॥

भाषा धर्मस्तदनु च मीमांसा न्याय एव च ॥
तर्क इत्यष्टकं ज्ञेयमुपाङ्गानां क्रमेण हि ॥ ६४ ॥

आदिमस्यापि वेदस्य षडङ्गानि वदन्ति हि ॥
ज्योतिषं व्याकृतिः शिक्षा कल्पश्छन्दो निरुक्तकम् ६५

अष्टादश तथोक्तानि परिशिष्टानि तानि च ॥
पठ त्वं विस्तृतानीह वैशम्पायन पुत्रक ॥ ६६ ॥

वेदानां राशयः पूर्वमशक्याः पठितुं नृणाम् ॥
अत एवावतीर्याहं मन्दधीग्रहणक्षमाः ॥ ६७ ॥

शाखाभेदाः प्रमितिशः कृतवानस्मि सम्प्रति ॥
शक्तिर्यथा यथा येषां तैः संग्राह्या यथारुचि ॥ ६८ ॥

एवं व्यासवचः श्रुत्वा प्रणम्य पुनरब्रवीत् ॥
विनयावनतः शिष्यो वैशम्पायनसंज्ञकः ॥ ६९ ॥

यजुर्वेदस्य वितंतिः[1] कृपया परिभाषिता ॥
शाखाभेदक्रमेणैव भवताऽद्य पृथक्पृथक् ॥ ७० ॥

शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति षडङ्गानि । (परि) शिष्टान्यष्टादश । मंदधीनामनुग्रहार्थमेवं वेदराशेः शाखा उक्ताः। यथारुचि ग्राह्याः । वैशम्पायन आह । कृपया शाखाभेदतो यजुर्वेदविस्तारः कृतः ॥६१-७०॥

---

१ विस्तारः.

सन्देहो जायते मेऽद्य मूलशाखा तु का मता ॥
स्वामिन्मयि कृपां कृत्वा विस्तरेणानुवर्णय ॥ ७१ ॥

इति शिष्योदितः प्राह व्यासः साधूदितं त्वया ॥
यजुर्वेदस्य चैतस्य मूलं ते कथयाम्यहम् ॥ ७२ ॥

मूलं वदन्ति मुनयो मन्त्रब्राह्मणसंहिताः ॥
इदमेव तु मूलं स्याद्यजुर्वेदस्य निश्चितम् ॥ ७३ ॥

स्यात्संहिताब्राह्मणाख्यं यजुर्वेदस्य मूलकम् ॥
तथा ब्राह्मणकाण्डान्तर्गतमारण्यकं स्मृतम् ॥ ७४ ॥

यज्ञादिकर्मोपयुक्तं मूलमेतद्धि पुत्रक ॥
अभ्यासं कुरु यत्नेन यजुर्वेदस्य चादितः ॥ ७५ ॥

इति व्यासवचः श्रुत्वा वैशम्पायननामकः ॥
शिष्यो भूय उवाचेदं त्रीन्ग्रंथान्कथयादितः ॥ ७६ ॥

का मूलशाखेति मे सन्देहं निवारय। व्यास आह। शिष्य, साधूक्तं शृणु। मुनयो मन्त्रब्राह्मणसंहिता यजुर्मूलं वदन्ति। अरणं ब्राह्मणकाण्डान्तर्गतं मलं यज्ञादिकर्मोपयुक्तं। यजुर्वेदस्यादितोऽभ्यासं कुरु। इति श्रुत्वा नत्वा वैशम्पायन आह। त्रीन्ग्रन्थान्कथयेति श्रुत्वा व्यासः सविस्तरं ग्रन्थत्रयं स्पष्टं कथयामास ॥ ७१-७६ ॥ श्रीगुरुर्विप्रौ प्राह। व्यासो जैमिनिमाहूय

इति श्रुत्वा शिष्यवचस्तद्ग्रन्थत्रयविस्तरम् ॥
व्यासो यथायथं स्पष्टं कथयामास सर्ववित् ॥ ७७ ॥

श्रीगुरुः प्राह तौ विप्रौ जैमिन्याख्यं तृतीयकम् ॥
शिष्यमाहूय सामाख्यं वेदं तस्मा उपादिशत् ॥ ७८ ॥

तृतीयः सामवेदोऽस्य गन्धर्वाख्योपवेदकः ॥
विष्णुर्देवश्च जगतीछन्दः काश्यपगोत्रजः ॥ ७९ ॥

नित्यं स्रग्वी त्वेष शुद्धवस्त्रप्रावरणः शुचिः ॥
क्षमावानपि दान्तश्च चर्मदण्डधरः स्मृतः ॥ ८० ॥

तथा काञ्चनवर्णाक्षः श्वेतवर्णः प्रकीर्तितः ॥
षडरत्निप्रमाणाङ्गो ध्येयोऽसौ सामसंज्ञितः ॥ ८१ ॥

सामवेदस्य भेदास्तु सहस्रमिह विस्तृताः ॥
समस्तान्सामवेदस्य भेदाञ्ज्ञातुं क ईश्वरः ॥ ८२ ॥

एकं नारायणं हित्वा ज्ञातुं कोऽपीह न क्षमः ॥
व्यासो गुरुरुवाचाथ जैमिनिं तं तृतीयकम् ॥ ८३ ॥

सप्तभेदाञ्छृणुष्वासुरायणीयास्ततः परम् ॥
वार्तांतवेयाश्च वासुरायणीयास्ततः परम् ॥ ८४ ॥

सामवेदमाह । गान्धर्वोऽस्योपवेदः । विष्णुर्देवता । जगतीछन्दः । काश्यपगोत्रम् ॥ ७८-७९ ॥ स्रग्वी शुद्धवस्त्रः शुचिः क्षमावान्दान्तश्चर्मदण्डधरः स्वर्णवर्णाक्षः श्वेतः षडरत्निमात्राङ्गः सामवेदोऽस्य हि सहस्रं शाखा एकं नारायणं हित्वा सर्वा ज्ञातुं कोऽपि न शक्तोऽथापि सप्तभेदाञ्छृणु । आसुराय-

प्राञ्जलिश्च ततो ज्ञेय ऋग्विधाख्यस्ततः परः ॥
ततः प्राचीनयोग्यश्च भेदः परमपावनः ॥ ८५ ॥

ज्ञानयोग्यस्ततो ज्ञेयः शृण्वन्यदपि कथ्यते ॥
राणायनीयभेदास्तु नवसंख्याः प्रकीर्तिताः ॥ ८६ ॥

राणायनीयाः शाट्यायनीयाः शाट्याश्च मुद्गलाः ॥
अनुक्रमेण विज्ञेयाः खल्वलाश्च ततः परम् ॥ ८७ ॥

महाखल्वलसंज्ञाश्च लाङ्गलाश्च ततः परम् ॥
कौथुमाश्च ततो ज्ञेया गौतमाश्च ततः परम् ॥ ८८ ॥

जैमिनीयास्ततो ज्ञेया एवं भेदाः सुविस्तृताः ॥
श्रीगुरुर्ब्राह्मणौ प्राह व्यासेनैवं प्रभाषिताः ॥ ८९ ॥

आदितः सामवेदं हि को जानीते द्विजो भुवि ॥
अथापीह युवाभ्यां हि त्रिवेदज्ञत्वमीदृशम् ॥ ९० ॥

सम्पादितं कथं ब्रूतं कथमुन्मत्तता हि वाम् ॥
अथाथर्वश्रुतिं प्राह व्यासः शिष्यं सुमन्तुकम् ॥ ९१ ॥

सुमन्तो शस्त्रास्त्ररूप उपवेदो ह्यथर्वणः ॥
बैजानगोत्रसम्भूत ऋषिभिः समुदाहृतः ॥ ९२ ॥

णीयवार्तान्तवेयवासुरायणीयप्राञ्जलिऋग्विधानप्राचीनयोग्यज्ञानयोग्या इति । राणायनीयशाट्यायनीयशाट्यमुद्गलखल्वलमहाखल्वललाङ्गलकौथुमगौतमजैमिनीया इति राणायनीयभेदाः ॥ ८०-८९ ॥ श्रीगुरुराहादितः सामवेदं भुवि को जानीयात् । कथं युवां त्रिवेदज्ञौ ब्रूतम् । व्यासः सुमन्तवेऽथर्ववेदमाहोपवेदोऽस्यास्त्ररूपो बैजानगोत्रमिन्द्रो देवता त्रिष्टुप्छन्दः । चण्ड-

अधिदैवतमिन्द्रोऽस्य त्रिष्टुप्छन्दस्तथाऽस्य च ॥
चण्डस्तीक्ष्णोऽप्यथर्वाऽयं कृष्णवर्ण उदाहृतः ॥ ९३ ॥

कामरूपी क्षुद्रकर्मा स्वदारातुष्टमानसः ॥
सप्तारत्निप्रमाणाङ्गोऽथर्ववेदः प्रकीर्तितः ॥ ९४ ॥

भेदा अथर्ववेदस्य नवसंख्यामिता मताः ॥
सुमन्तुनामशिष्याय व्यासेन परिकीर्तिताः ॥ ९५ ॥

पैप्पलाः प्रथमाः प्रोक्ता दान्ता अपि ततो मताः ॥
ततः प्रदान्ता आख्याताः स्तौता अपि ततः स्मृताः ॥९६

तत औता इति ख्यातास्ततः स्युर्ब्रह्मदावलाः ॥
शौनकीयास्ततः प्रोक्ताः क्रमेणैवावधारय ॥ ९७ ॥

ततो देवर्षिसंज्ञाः स्युस्ततश्चरणविद्यकाः ॥
पञ्च कल्पा अस्य सन्ति सुमन्तो तान्निशामय ॥९८॥

विधानकल्पो नक्षत्रकल्प इत्युच्यते ततः ॥
संहिताकल्पस्ततः स्याच्छान्तिकल्पस्ततः परः ॥ ९९ ॥

स्तीक्ष्णः कृष्णवर्णः कामरूपी क्षुद्रकर्मा स्वभार्यातुष्टः सप्तारत्निप्रमाणोऽथर्वाऽस्य नव भेदाः । पैप्पलदान्तस्तौतौतब्रह्मदावलशौनकीयदेवर्षिचरणविद्या इति । विधानकल्पनक्षत्रकल्पसंहिताकल्पशान्तिकल्प– ॥९०-९९॥

कल्पो विधिविधानाख्य इति व्यासेन भाषितः ॥
व्यासेन भारते खण्डे इमाः शाखाः प्रकाशिताः १००

पुरा भरतखण्डेऽस्मिन्बहवः पुण्यचारिणः ॥
वर्णाश्रमाचाररतास्ततो वेदाः प्रतिष्ठिताः ॥ १ ॥

अस्मिन्कलियुगे त्यक्तकर्माणो ब्राह्मणा अमी ॥
आसंस्ततो द्विजौ वेदा लुप्ता जाता महीतले ॥ २ ॥

कर्मभ्रष्टा द्विजा नष्टा म्लेच्छाग्रे वेदपाठकाः ॥
तेषां तु मतिमन्दानां मन्त्रसत्त्वं विनिर्गतम् ॥ ३ ॥

प्राग्ब्राह्मणानां महत्त्वं देवत्वं च ततो भुवि ॥
महीसुरा द्विजवराः सर्वमान्या इति श्रुताः ॥ ४ ॥

पुरा सर्वेऽपि राजानो ब्राह्मणानां प्रपूजकाः ॥
सर्वस्वमपि तैर्दत्तं नाङ्गीचक्रुस्तु तेऽस्पृहाः ॥ ५ ॥

वेदमन्त्रबलात्तेषामधीनाः स्युस्त्रिमूर्तयः ॥
इन्द्रादिदेवता भीता ब्राह्मणेभ्यस्ततो नताः ॥ ६ ॥

विधिविधानकल्पा इति अस्य पञ्च कल्पाः । एवं व्यासेन भाषितम् । पुराऽस्मिन्भारतखण्डे बहवो वर्णाश्रमाचाररतास्ततो वेदाः प्रतिष्ठिताः । कलियुगेऽस्मिंस्त्यक्तस्वकर्माणो ब्राह्मणाः स्युरतो वेदा लुप्ताः । कर्मभ्रष्टानां म्लेच्छाग्रे वेदपाठकानां मन्दधीनां मंत्रसत्त्वं निर्गतम् ॥ १००-१०३ ॥ पूर्वं विप्राणां देवत्वं महत्त्वं च । ततो भूसुरा इति सर्वमान्या राजानोऽपि तत्पदसेवकाः । सर्वस्वं दत्तमपि तेऽस्पृहा नाङ्गीचक्रुः । वेदमंत्रबलात्त्रिमूर्ति-

विप्राणां वचनं कामधेनुकल्पद्रुमोपमम् ॥
तृणीकृतोऽद्रिस्तपसा तृणं चाद्रीकृतं द्विजैः ॥ ७ ॥

विष्णुः स्वयं समानर्च ब्राह्मणान्वेदभूषितान् ॥
वेदप्रभावतो विप्रान्मन्यते स्म स्वदैवतम् ॥ ८ ॥

देवाधीनं जगत्सर्वं मन्त्राधीनं च दैवतम् ॥
ते मन्त्रा ब्राह्मणाधीना ब्राह्मणो मम देवता ॥ ९ ॥

इति विष्णुः स्वयं प्राह महान्तोऽतो द्विजाः पुरा ॥
अधुना श्रुतिमार्गं ते परित्यज्य कुमार्गगाः ॥ [1]१० ॥

सत्त्वहीना अतो जाता हीनजातिप्रसेवकाः ॥
अध्यापयन्ति द्रव्यार्थं वेदविक्रयजीविनः ॥ ११ ॥

हीनानां पुरतो वेदान्ये पठन्ति द्विजाधमाः ॥
तन्मुखं नावलोक्यं ते भवन्ति ब्रह्मराक्षसाः ॥ १२ ॥

यस्तदधीना इन्द्रादयो भीत्या नतास्तिष्ठन्ति । तेषां वाक्कल्पद्रुमकामधेनुवत् । तैरद्रिस्तृणीकृतस्तृणमप्यद्रिवत्कृतम् ॥ ४-७ ॥ विष्णुर्देवप्रभावाद्विप्रान्स्वदैवतं मत्वाऽऽनर्च । देवाधीनं जगत्स० देवता इति ॥ ८-९ ॥ अतः पूर्वं द्विजा महान्तोऽधुना स्वमार्गं त्यक्त्वा कुमार्गरता हीनसेवकाः सत्त्वहीनास्ते वेदविक्रयजीविनः । हीनानां पुरतो वेदपाठकानां मुखमपि नावलो-

---

१ कुकर्मगा इति क्वचित्पुस्तके.

चतुर्णामपि वेदानामेवं शाखाः सुविस्तृताः ॥
को जानीते क्षितेः पृष्ठे प्रायशो गोप्यतां गताः ॥१३॥
चतुर्वेदज्ञता लोके युवाभ्यां दर्शिता कथम् ॥
बहुभेदा हि वेदानां युवां सर्वविदौ कथम् ॥ १४ ॥
द्विजक्षोभेन को लाभो युवयोर्दुष्टबुद्धितः ॥
दुर्बोधोऽयं कृतः केन गच्छतं त्वरितं त्वितः ॥ १५ ॥
स्वस्तुतिं च स्वयं कृत्वा जयपत्रं प्रदर्श्य च ॥
त्रिविक्रमयतेः पत्रं युवाभ्यां याचितं कुतः ॥ १६ ॥
मम वाक्यं समाकर्ण्य परित्याज्यो दुराग्रहः ॥
व्यर्थं भ्रमेण स्वप्राणान्युवां दातुं न चार्हथः ॥ १७ ॥
इति श्रीगुरुणा प्रोक्तं हितमेव दयालुना ॥
अश्रुत्वैवोचतुर्देहि पत्रमेवेति तामसौ ॥ १८ ॥
यद्यत्र न विवादश्चेज्जयपत्रं लभेत नो ॥
कथयिष्यन्ति राज्ञेऽदस्तिष्ठेच्छ्रैष्ठ्यं कथं नु नौ ॥ १९ ॥

क्यम् । ते ब्रह्मराक्षसा भवन्ति । एवं चतुर्वेदविस्तारः । भूपृष्ठे तं को वेद । प्रायो वेदा लुप्ताः । युवां तु कथं सर्ववेदज्ञौ । दुर्बुद्ध्या द्विजक्षोभात्को लाभः । केनायं दुर्बोधः कृतः । इतः शीघ्रं गच्छतम् । स्वयं स्वस्तुतिं कृत्वा जयपत्राणि प्रदर्श्य कुतस्त्रिविक्रमात्पत्रं याचितम् ॥ १०-१६ ॥ मद्वाक्यं श्रुत्वा दुराग्रहं त्यक्त्वा व्यर्थं प्राणान्न त्यजतमिति दयालुगुरुवाक्यं श्रुत्वाऽपि तावूचतुः । पत्रं देहि । यदि वादो न, पत्रमपि न लब्धश्चेद्राजाग्रे कथं नौ मानः । सिद्ध आहैवं मदोन्मत्तयोः स्वहितमजानतोस्तयोर्मृत्युरु-

---

१ वां इति क्वचित्पुस्तके.

सिद्धः प्राहेति तौ विप्रौ मदोन्मत्तौ समूचतुः ॥
अज्ञात्वा स्वहितं तस्मात्तयोर्मृत्युरुपस्थितः ॥ २० ॥

गङ्गाधरद्विजवरस्य सरस्वतीति
ख्यातः सुतः सकलसम्मत ईशभक्तः ॥
श्रोतॄन्समाहिततया श्रवणाय नूनं
लीलामृतस्य हि समर्थयते स्म भूयः ॥ १२१ ॥

( इति ) श्रीसि० रूपेण सर० विर० नृसिं० न्वितगु० यां
श्रीगु० कर्म० षड्विंशः ( अध्यायः )

आदितः श्लोकाः ॥ २७५५ ॥

पागतः ॥ १७-२० ॥ गङ्गाधरद्विजव० ॥ १२१ ॥ इति चूर्णिकायां षड्विंशोऽध्यायः ॥

॥ इति षड्विंशोऽध्यायः ॥ २६ ॥

---

## ॥ अथ सप्तविंशोऽध्यायः ॥ २७ ॥

॥ श्रीगणेशाय नमः ॥

सिद्धपादाब्जसंलग्नः शिष्यराण्नामधारकः ॥
करद्वयं समानीय विनयावनतोऽब्रवीत् ॥ १ ॥
सिद्धयोगिञ्जय जय त्वं नो जगति तारकः ॥
ज्ञानप्रकाशाय दत्तमात्मनः पददर्शनम् ॥ २ ॥
विस्तरेण चतुर्वेदा द्विजाभ्यां गुरुणोदिताः ॥
ततः किमग्रतो जातं विस्तरेण वद प्रभो ॥ ३ ॥
इति शिष्यवचः श्रुत्वा तुष्टः सिद्धमुनिर्जगौ ॥
गुरोः शृणुष्वानुपमं माहात्म्यं नामधारक ॥ ४ ॥
प्रकारैर्बहुभिर्विप्रौ बोधितौ गुरुणाऽपि तौ ॥
ऊचतुर्जयपत्रं वा विवादं वा प्रदेहि नौ ॥ ५ ॥

अध्यायसारसंग्रहश्लोकोऽयम्–

अपि क इह यदीक्षणादपराजिताः (?)
स बुरुडवदनाच्छ्रुतीः समवाचयत् ॥
अनयदुभमिते द्विजौ च पिशाचतां (?)
सुगतिमथ गतौ च तौ द्विषडब्दतः ॥ २७ ॥

सिद्धपदलग्नो नामधारको विनयेनाह। हे सिद्धयोगिंस्त्वं तारको ज्ञानप्रकाशाय स्वपदं दर्शितवानसि। गुरुणा वेदा विस्तरेणोक्तास्ततः किं जातं तद्वद ॥ १-३ ॥ सिद्ध आहानुपमं माहात्म्यं शृणु। बहुप्रकारैर्बोधितावपि तौ जयपत्रं वादं वा दीयतामित्यूचतुः ॥ ४-५ ॥ इति श्रुत्वा गुरुः

इति विप्रवचः श्रुत्वा कुपितः श्रीगुरुर्मुनिः ॥
यथाऽन्तःकरणे वां यत्तस्य सिद्धिर्भविष्यति ॥ ६॥

दष्टुं सर्पोदरं यद्वन्मूषकोऽप्यभिकांक्षति ॥
यथा वाऽपि ज्वलद्दीपं पतङ्गोऽत्तुं प्रधावति ॥ ७ ॥

तथा विप्रौ मदोन्मत्तावज्ञात्वा श्रीगुरुं प्रभुम् ॥
बलान्मर्तुं समुद्युक्तावन्धवत्स्वात्मघातकौ ॥ ८ ॥

अत्रान्तरे नरं दूरादायान्तं श्रीगुरुर्विभुः ॥
दृष्ट्वा शिष्यमुवाचामुमागच्छन्तमुपाह्वय ॥ ९ ॥

इति श्रीगुरुणोक्तोऽसौ शिष्यो गत्वा त्वरान्वितः ॥
आहूयोपानयच्छीघ्रं श्रीगुरोः सन्निधिं तु तम् ॥ १० ॥

पप्रच्छ श्रीगुरुः कस्त्वं का जातिर्जन्म कुत्र च ॥
सर्वं कथय वृत्तान्तं कुतो गच्छसि वा वद ॥ ११ ॥

इति श्रीगुरुणोक्तोऽसौ प्राहाहं हीनजातिजः ॥
मातङ्गनामको नीचः स्थानं ग्रामाद्बहिर्मम ॥ १२ ॥

कुपित आह । यथेच्छसि तथा भविष्यतीति ॥ ६ ॥ सर्पोदरं दष्टुं यथा मूषक इच्छति, ज्वलद्दीपं वाऽत्तुं यथा पतङ्गो धावति, तथा तौ मदोन्मत्तौ गुरुं प्रभुमज्ञात्वा बलान्मर्तुमुद्युक्तौ । अत्रान्तरे दूरं यान्तं नरं दृष्ट्वा श्रीगुरुः शिष्यमाह तमुपाह्वयेति । शिष्यः शीघ्रं गत्वा तं श्रीगुरुसमीपमानयत् । श्रीगुरुस्तमाह कस्त्वं, का ते जातिः, क्व वा जन्म, कुतो गच्छसि वदेति । स आह । हीनो मातङ्गनामको नीचोऽहं ग्रामाद्बहिर्मे स्थानम् ॥ ७-१२॥

कृपालुः सर्वभूतेषु त्वं ततः परिपृच्छसि ॥
ममोद्धारोऽभवदिति प्रणनाम स दण्डवत् ॥ १३ ॥

प्रददर्श दयालुस्तं सुधादृक्[1]परपूरुषः ॥
स्पर्शस्पर्शाद्यथा लोहं स्वर्णभावं प्रयाति हि ॥ १४ ॥

तथा गुरुः कृपादृष्ट्या तं चकार सुपावनम् ॥
दण्डं शिष्यकरे दत्त्वा सप्त रेखा अकारयत् ॥ १५ ॥

आक्रमस्वैकैकरेखामिति श्रीगुरुणोदितः ॥
हीनः स चानुपूर्व्येण[2] तामेकैकां विचक्रमे ॥ १६ ॥

आद्यां गतं गुरुः प्राह क्व ते जन्म वदेति सः ॥
ऊचे मैन्दस्ततोऽरण्यरक्षः किरातवंशजः ॥ १७ ॥

ततस्तृतीयरेखास्थो लब्धप्राक्स्मृतिरब्रवीत् ॥
अहं नदीतीरवासी गङ्गापुत्र इति स्मृतः ॥ १८ ॥

सर्वभूतकृपालोस्ते प्रश्नान्ममोद्धारोऽभूदिति दण्डवन्ननाम । परपुरुषो गुरुर्दयादृष्ट्या तं ददर्श । स्पर्शस्पर्शाल्लोहं स्वर्णमिव गुरुदृष्ट्या स पूतोऽभूत् । ततः शिष्यकरे दण्डं दत्वा सप्तरेखा लेखयामास । एकैकरेखामाक्रमस्वेति गुरुणोक्तो हीनस्तथाऽकरोत् ॥ १३-१६ ॥ आद्यां गतं तं गुरुराह । क्व ते जन्मेति । स आह मैन्दोऽहमिति । द्वितीयां गत्वाहारण्यरक्षकः किरातजोऽहमिति । तृतीयां गतो लब्धस्मृतिराहाहं नदीतीरस्थो गङ्गापुत्र इति ।

---

१ अमृतदृष्टिः २ अनुक्रमेण.

तुर्यरेखागतः शूद्रजातीयोऽहं स्ववृत्तिगः ॥
स्वामिंस्त्वया समाहूत इहेति पतितोऽब्रवीत् ॥ १९ ॥
ततः पञ्चमरेखास्थो ज्ञानी सन्प्राह जन्म मे ॥
वैश्यवंशेऽभवत्सोमदत्तो नाम मम प्रभो ॥ २० ॥
षष्ठीं रेखां ततो गत्वा प्राहाहं क्षत्रवंशजः ॥
मम नाम प्रभो विद्धि गोदावरीति विश्रुतम् ॥ २१ ॥
सप्तमीस्थस्ततो वेदशास्त्रव्याकरणादिवित् ॥
अहं नाम्नाऽध्यापकोऽग्रजातीय इति सोऽवदत् ॥२२॥
श्रीगुरुः प्राह तं वेदशास्त्रज्ञोऽसि यदा तदा ॥
वादार्थमागतावेतौ विवादेन पराजहि ॥ २३ ॥
इत्युक्त्वा मन्त्रितं भस्म तदङ्गेष्वाक्षिपत्[1]प्रभुः ॥
ज्ञानज्योतिःप्रकाशोऽभूत्तत्क्षणं तस्य चान्तरे ॥ २४ ॥
वायसोऽपि यथा हंसः प्रगतो मानसं सरः ॥
तथा श्रीगुरुदृष्टयैव हीनोऽपि ज्ञानवानभूत् ॥ २५ ॥

तुर्यां गत्वाऽऽह। शूद्रजातीयोऽहं स्ववृत्तिगः स्वामिंस्त्वयाऽऽहूत आगतोऽस्मीति। पञ्चमीं गत्वाऽऽह सोमदत्ताख्यो वैश्योऽहमिति। षष्ठीं गत्वाऽऽह गोदावरीसंज्ञः क्षत्रियोऽहमिति ॥ १७-२१ ॥ सप्तमीं गत्वाऽऽह। वेदशास्त्रज्ञोऽध्यापकोऽग्रजातीयोऽहमिति। गुरुराह वेदशास्त्रज्ञोऽसि चेद्वादार्थमागतावेतौ वादेन पराजहीति। तद्देहेऽभिमन्त्रितं भस्म चिक्षेप। तदा तस्य ज्ञानप्रकाशोऽभूत्। मानससरो गतः काको हंस इव गुरुदृष्ट्या हीनोऽपि

---

१ प्राक्षिपत्.

त्रिमूर्तिरवतीर्णोऽयं यो नृसिंहसरस्वती ॥
तं पश्यति नृदृष्ट्या यः स नरो यात्यधोगतिम् ॥२६॥

एवं स वेदशास्त्रज्ञो भूत्वाऽपि पतितस्तदा ॥
शृण्वतां विदुषामेष पपाठ ज्ञानवान्बहु ॥ २७ ॥

यावागतौ विवादार्थं तौ भीतौ चकितौतराम् ॥
हृच्छूलौ बधिरौ जातावबाचौ छिन्नजिह्ववत् ॥ २८ ॥

भृशं प्रकम्पितौ तौ तु पतितौ गुरुपादयोः ॥
ऊचतुर्वां (नौ) गतिः काऽतो वद स्वामिन्प्रकाशक ॥२९॥

अहो कृतो गुरुद्रोहो धिक्कृता ब्राह्मणा अपि ॥
त्वं गौरीरमणः स्वामिन्नवतीर्णः क्षमस्व भोः ॥ ३० ॥

आवां हि तामसौ मायापाशसंवेष्टितौतराम् ॥
न ज्ञातमत आवाभ्यां स्वरूपमपि ते स्फुटम् ॥ ३१ ॥

त्वं लीलया करोष्येव तृणमप्यद्रिमीश्वर ॥
क्रोधदृष्ट्या पश्यसि चेदप्यद्रिर्भस्मसाद्भवेत् ॥ ३२ ॥

ज्ञानवानभूत्। नृसिंहसरस्वती त्रिमूर्त्यवतारः। तं नृदृष्ट्या यः पश्यति सोऽधो यायात्। स हीनोऽपि वेदशास्त्रज्ञो भूत्वा विदुषां शृण्वतां सर्वं पपाठ। वादार्थमागतौ तौ भीतौ हृच्छूलार्दितौ बधिरौ मूकवज्जातौ कम्पितौ तौ गुरुपादयोः पतित्वोचतुर्वां (नौ) का गतिः। गुरुद्रोहः कृतः। विप्रा धिक्कृताः। त्वं शिवोऽवतीर्णोऽसि। क्षमस्व ॥ २२-३० ॥ आवां तामसौ मायावेष्टितौ कुतो वां (नौ) ते स्वरूपज्ञानम्। त्वं लीलया तृणमप्यद्रीकरोषि। ते क्रुधाऽद्रिरपि भस्मसाद्भवेत्। त्वं त्रिमूर्तिर्जगद्गुरुः। सत्त्वरजस्त-

रजसा सृजसीश त्वं विश्वं सत्त्वेन पासि च ॥
तमसा हंसि तस्माद्धि त्वं त्रिमूर्तिर्जगद्गुरुः ॥ ३३ ॥
आवयोर्न मतिः शक्ता तव माहात्म्यवर्णने ॥
अतस्त्वं वां (नौ) कुरूद्धारं शरणागतवरप्रद ॥ ३४ ॥
इति ताभ्यां द्विजातिभ्यां स्तुतः श्रीगुरुरब्रवीत् ॥
युवाभ्यां क्षोभितो भिक्षुः स त्रिविक्रमभारती ॥ ३५ ॥
अन्येऽपि बह्वो दोषा अर्जिता निन्दिता द्विजाः ॥
राक्षसं जन्म वां तेन भवेद्भोग्यं स्वकर्म हि ॥ ३६ ॥
स्वस्यार्जितं स्वयं भोग्यं पापं पुण्यमथापि वा ॥
न निष्कृतिर्विना भोगाद्यावत्कर्म न सद्गतिः ॥ ३७ ॥
इति श्रीगुरुणा प्रोक्तौ पदलग्नौ तमूचतुः ॥
कदा दुःखार्णवादस्मात्पारं यास्यावहे कथम् ॥ ३८ ॥
प्राह श्रीगुरुनाथस्तौ कृपाब्धिः श्रृणुतं द्विजौ ॥
राक्षसत्वं द्वादशाब्दं युवयोर्हि भविष्यति ॥ ३९ ॥

मोगुणैः स्थितिसृष्टिसंहारान्करोषि। त्वन्माहात्म्यवर्णने वां(नौ) न शक्तिः। हे शरणागतवरदात्रामुद्धरेति स्तुतो गुरुराह। युवाभ्यां त्रिविक्रमः क्षोभितोऽन्येऽपि दोषाः कृताः। द्विजा जिताश्चातो राक्षसौ भवतम्। स्वार्जितं पुण्यं पापं च स्वयं भोग्यम्। नान्यथा निष्कृतिः सद्गतिश्च। विप्रौ गुरुपदलग्नावूचतुः। कदाऽस्माद्दुःखार्णवादुद्धारः। श्रीगुरुः कृपयाऽऽह। द्वादशाब्दपर्यन्तं वो राक्षसत्वं भविष्यति ॥ ३१-३९ ॥ वां पश्चात्तापोऽ-

---

१ रक्षसि.

अनुतापो हि वां जातः शान्तरूपं ततो भवेत् ॥
नारायणान्तर्गतं वाक्यं हि प्रथमं पठन् ॥ ४० ॥
युवयोः पापसंशुद्धौ पर्यटन्द्विज एष्यति ॥
अग्रवाक्योच्चारणतः सद्गतिर्वां भविष्यति ॥ ४१ ॥
अधुना गच्छतं गङ्गामुपवेशार्हमेव तत् ॥
स्थानं वामिति तौ प्रोक्तौ गुरुणा तौ तु जग्मतुः ॥४२॥
ग्रामाद्बहिस्तु निर्गत्य जातौ हृच्छूलपीडितौ ॥
क्षणान्नदीतटं यातौ द्विजौ तौ पञ्चतां गतौ ॥ ४३ ॥
कर्मणः स्वकृतस्यान्यः फलं कोऽनुभविष्यति ॥
अतस्तौ तामसौ जातौ विप्रावप्यात्मघातकौ ॥ ४४ ॥
श्रीगुरोर्वचनं सत्यं भविष्यत्यन्यथा कथम् ॥
राक्षसौ द्वादशाब्दांस्तौ भूत्वा सद्गतिमापतुः ॥ ४५ ॥
नामधारक शिष्यैवं नद्यै प्रस्थापितौ द्विजौ ॥
पश्चाज्जातां कथां रम्यां पावनीमवधारय ॥ ४६ ॥

भूत्ततः शान्तता भवेत्। भवत्पापशुद्धौ नारायणानुवाकं पठन्द्विज एष्यति। अग्रवाक्योच्चारणाद्वां सद्गतिर्भविष्यति ॥ ४०-४२ ॥ गङ्गास्थानं वामुचितम्। तत्र गच्छतम्। इत्युक्तौ तौ जग्मतुः। ग्रामाद्बहिर्गत्वा हृच्छूलार्दितौ तौ नदीं गत्वा मृतौ। कृतकर्मणः फलं कोऽन्योऽनुभविष्यति। गुरुवचः सत्यम्। आत्मघातकौ तामसौ तौ द्वादशाब्दान्राक्षसौ भूत्वा सद्गतिं गतौ। हे नामधारक ततो वृत्तां पावनीं कथां शृणु। हीनोऽपि विद्वान्भूत्वाऽतीतं

१ पश्चात्तापः.

हीनोऽपि ब्रह्मविद्भूत्वा जन्मातीतं च सप्तमम् ॥
स्मृत्वा विप्रोऽस्मीति ततो निर्धारं व्यकरोत्स तु ॥४७॥

प्रणम्य श्रीगुरुं भक्त्या विनयावनतोऽब्रवीत् ॥
मायामयाज्ञानतमोज्योतीरूपोऽसि सद्गुरो ॥ ४८ ॥

विप्र आसं पुरा क्षिप्रं जातिहीनोऽभवं कथम् ॥
विस्तरात्कथय स्वामिंस्त्रिकालज्ञ महामुने ॥ ४९ ॥

जन्मान्तरे हि को दोषो मया दुष्टधिया कृतः ॥
पिनाकिन्कथय स्वामिञ्छ्रीनृसिंहसरस्वति ॥ ५० ॥

इति तद्वचनं श्रुत्वा प्रकाशमवदत्तदा ॥
श्रीगुरुर्भगवांस्तत्ते प्रवक्ष्ये नामधारक ॥ ५१ ॥

तच्चाग्रतो वक्ष्यति वै सरस्वती
गाङ्गाधरिर्येन वृतः सरस्वती ॥
यस्यामृतप्रायचरित्रसेवना-
ज्ज्ञानी भवेच्चेत्पतितः स पावनः ॥ ५२ ॥

सप्तमं जन्म स्मृत्वा विप्रोऽस्मीति निश्चित्य भक्त्या गुरुं प्रणम्य नम्र आह । हे सद्गुरो, त्वं मायान्धकारज्योतिः ॥ ४३-४८ ॥ पुरा विप्रोऽप्यहं कथं जातिहीनोऽभवम् । महामुने, त्रिकालज्ञ, स्वामिन्विस्तराद्वद । दुर्धिया मया जन्मान्तरे को दोषः कृतः । हे स्वामिन्पिनाकिन्कथयेति श्रुत्वा भगवान्स्फुटं प्राह । हे नामधारक, तत्ते वक्ष्ये । तद्गङ्गाधरसुतो वक्ष्यति । एतच्चरितामृतसेवी ज्ञानी पतितश्च पूतो भवेत् ॥ पुण्यां सुपावन० यमेनस

पुण्यां सुपावनकथां कथयिष्यतीमां
या राति संश्रवणमात्रत एव कामान् ॥
धर्मार्थिकामकचतुर्विधमुक्तिदात्री
त्रात्रीयमेनस उताखिलभव्यधात्री ॥ ५३ ॥

उताखिलभव्यधात्री ॥ ४९-५३ ॥ इति चूर्णिकायां सप्तविंशो० ॥

( इति ) श्रीसि० रूपेण सर० विर० नृसिं० न्वितगु० यां
श्रीगुरु० कर्म० सप्तविंशः ( अध्यायः ) ॥

आदितः श्लोकाः ॥ २८०८ ॥

॥ इति सप्तविंशोऽध्यायः ॥ २७ ॥

---

## ॥ अथ अष्टाविंशोऽध्यायः ॥ २८ ॥

॥ श्रीदत्तात्रेयाय नमः ॥

नामधारक आहेदं कथां कथय मेऽग्रतः ॥
महोत्सवो मे मनसो यतः स्वाद्वी गुरोः कथा ॥ १ ॥
सिद्ध ऊचे शृणुष्वार्य सत्कथां नामधारक ॥
सर्वे दोषाः प्रणश्यन्ति ज्ञानज्योतिरुदेष्यति ॥ २ ॥
श्रीगुरुः प्राह पतितं प्राक्कर्म परिपृच्छसि ॥
शृणु विस्तरतो वक्ष्ये यतश्चण्डालताऽऽगता[1] ॥ ३ ॥
गतिर्हि पुण्यपापाभ्यां स्वार्जिताभ्यामुपर्यधः[2] ॥
शृणु कर्मविपाकोक्तां नीचजन्मप्रदां गतिम् ॥ ४ ॥

अध्यायसारसंग्रहश्लोकोऽयम्—

अकथयदसावष्टाविंशे स्वकर्मविपाकतो
विविधकुगतिं हीनत्वाप्तिं साचिह्नपुनर्भवम् ।
तदघहतये प्रायश्चित्तं च कृच्छ्रजपादिकं
पतितमकरोद्भूयोऽज्ञं सा मनोहरिणी कथा ॥ १ ॥

नामधारक आहाग्रतः कथां कथय। गुरुकथा स्वाद्वी अतो मे महोत्सवः। सिद्ध आह। शृणु। सर्वे दोषा नश्यन्ति ज्ञानमुदेष्यति ॥ १-२ ॥ श्रीगुरुः पतितं प्राह। चण्डालयोनिप्रापकं कर्म शृणु। पुण्यपापाभ्यामूर्ध्वाधो गतिः

---

१ प्राप्ता २ स्वर्गे नरके च.

ब्रह्मक्षत्रविशः शूद्रा दुराचाररता यदि ॥
प्रेत्य चण्डालयोनिं ते गमिष्यन्ति न संशयः ॥ ५ ॥

ब्राह्मण्या व्यभिचारिण्याः शूद्रसङ्गाद्भवेत्सुतः ॥
चण्डालसंज्ञः स पिण्ड एषा जातिस्तु षोडशी ॥ ६ ॥

मूलजातिरियं ख्याता ये तत्प्रापकदोषिणः ॥
ब्राह्मणाद्याश्चतुर्वर्णाः प्रेत्य चण्डालयोनिगाः ॥ ७ ॥

विस्तरेण तु ते दोषा वक्ष्यन्ते हीनजन्मदाः ॥
ब्राह्मणश्चेदनाचारः स तु चण्डालयोनिगः ॥ ८ ॥

मातरं पितरं हित्वा गुरुं चान्यत्र तिष्ठति ॥
द्विजश्चण्डालतामेति कुलस्त्रीहापकोऽपि च ॥ ९ ॥

विहाय कुलदेवं यः पूजयत्यन्यदेवताम् ॥
द्विजश्चण्डालतामेति योऽनृतं वक्ति सोऽपि च ॥ १० ॥

जीवहिंसारतो यश्च कन्याविक्रयकृत्तथा ॥
द्विजश्चण्डालतामेति योऽपि चानृतदिव्यकृत् ॥ ११ ॥

कर्मविपाके उक्ता । ब्रह्मक्षत्रविशः शूद्राश्च दुराचाररताश्चेच्चण्डालतां यान्ति । शूद्रसङ्गाद्ब्राह्मण्यां जातश्चाण्डालः । एषा षोडशी जातिरियं मूलजाति-र्ब्राह्मणादीनां तज्जातिप्रापकदोषाञ्छृणु । अनाचारो ब्राह्मणो हीनजातिगः । मातृपितृगुरुकुलस्त्रीत्यागी, कुलदेवं विहायान्यदेवपूजकोऽसत्यवक्ता, जीव-

१ त्रयाणां द्विजत्वादेकपद्यं.

शूद्रहस्तेन योऽश्नाति ब्राह्मणोऽश्वक्रयी च यः ॥
द्विजश्चण्डालतामेति शूद्रसम्पर्ककृत्सदा ॥ १२ ॥

शूद्रस्त्रीसङ्गकृन्नित्यं दासीसङ्गरतस्तथा ॥
क्रुधा[1] निहन्ति भाण्डानि दैवे पित्र्ये च कर्मणि ॥१३॥

द्विजश्चण्डालतामेति स यश्चारण्यदाहकः ॥
गोवत्सयोर्यो विरहं स्वयमेव करोति च ॥ १४ ॥

विभक्तस्तिष्ठति त्यक्त्वा मातरं पितरं सुतान् ॥
द्विजश्चण्डालतामेति सत्यमेव न संशयः ॥ १५ ॥

वृषं समारोहयति यः शूद्रान्नं भुनक्ति यः ॥
द्विजश्चण्डालतामेति पतिता[2]वहितः शृणु ॥ १६ ॥

श्राद्धादिकं न कुरुते तीर्थं गत्वाऽपि तत्र यः ॥
द्विजश्चण्डालतामेति तथा तीर्थप्रतिग्रही ॥ १७ ॥

स्वधर्मरहितो यस्तु कपिलागोपयस्तु यः ॥
असमर्प्यैव देवाय स्वयं पिबति दुर्मतिः ॥ १८ ॥

हिंसारतः, कन्याक्रयी, मृषा दिव्यकृच्छूद्रहस्तेन भोक्ताऽश्वक्रयी ॥३-१२॥ शूद्रीरतो, दासीरतो, दैवपित्र्यकर्मणि क्रोधेन भाण्डादिभंक्ताऽरण्यदाहको, गोवत्सवियोगकृद्यश्च मातृपितृसुतांस्त्यक्त्वा विभक्तस्तिष्ठति, यो द्विजो वृषमारुह्य गच्छति, शूद्रान्नभोक्ता, तीर्थादौ गत्वा श्राद्धाद्यकर्ता, तीर्थ-प्रतिग्रही, स्वधर्मरहितः, ईश्वरायासमर्प्य कपिलगोदुग्धपाता, शालग्रामा-

१ क्रोधेन २ हे पतित.

द्विजश्चण्डालतामेति छित्त्वैव तुलसीं तु यः ॥
देवमर्चति शूद्रश्च यः शालग्राममर्चति ॥ १९ ॥
मातापित्रोस्तु सेवां यो न करोति न पाति तौ ॥
द्विजश्चण्डालतामेति सप्तजन्माथवा कृमिः ॥ २० ॥
योऽधिवेदनशास्त्रज्ञो विवाह्यान्यां हि योषितम् ॥
पूर्वां परित्यजत्येष चण्डालो भवति ध्रुवम् ॥ २१ ॥
योऽतिथिं श्रान्तमायान्तं ज्ञात्वाऽप्यभ्यस्य च श्रुतिम् ॥
सुचिराद्भोजयत्येष चण्डालो भवति ध्रुवम् ॥ २२ ॥
निन्दति ब्राह्मणं योग्यमयोग्यं पूजयत्यपि ॥
परवृत्तिं हरत्येष चण्डालो भवति ध्रुवम् ॥ २३ ॥
वापीकूपतडागघ्नो लिङ्गपूजनभञ्जकः ॥
ब्राह्मणालयभेत्तैष चण्डालो भवति ध्रुवम् ॥ २४ ॥
विश्वासकृत्स्वामिगुरुद्विषत्स्त्रीव्यभिचारकृत् ॥
मित्रस्त्रीसङ्गकृच्चैष चण्डालो भवति ध्रुवम् ॥ २५ ॥
पत्न्योरेकतरां भेददृष्ट्या पश्यति यः क्षणे ॥
नान्नं दत्तेऽतिथिभ्यः स चण्डालो भवति ध्रुवम् ॥२६॥

र्थमपि तुलसीछेत्ता, सेवामकृत्वापि मातापित्रोररक्षिता, यश्चान्यां भार्यामुद्वाह्य पूर्वां परित्यजति, आयान्तमतिथिं ज्ञात्वाऽपि वेदमभ्यस्य चिरेणान्नदाता ॥१३-२२॥ योग्यब्राह्मणनिन्दकोऽयोग्यपूजकः, परवृत्तिहर्ता, वापीकूपतडागदेवलिङ्गपूजाविप्रगृहभङ्गकृद्विश्वासघातकृत्स्वामिगुरुद्विषन्मित्रस्त्रीसङ्गकृद्द्वयोर्भार्ययोः सत्योरेकतरस्या वैषम्यकृदतिथये विलम्बेना-

सन्ध्याकाले च योऽश्नाति प्रतिश्रुत्य वचोऽन्यथा ॥
स्वकीयं कुरुतेऽप्येष चण्डालो भवति ध्रुवम् ॥ २७ ॥

सन्ध्याकाले स्वपति यो दत्त्वा विप्राय गां[1] पुनः ॥
भूपालोऽपहरत्येष चण्डालो भवति ध्रुवम् ॥ २८ ॥

दुष्टोत्तरं वैश्वदेवकाले योऽतिथये वदेत् ॥
दुरुक्त्या राति वाऽप्येष चण्डालो भवति ध्रुवम् ॥२९॥

गङ्गातीर्थं निन्दति य एकादश्यां भुनक्ति च ॥
जहाति स्वामिनं युद्धे चण्डालो भवति ध्रुवम् ॥ ३० ॥

व्रताहे पर्वसु दिवा स्त्रीसङ्गनिरतस्तु यः ॥
वेदाञ्छूद्राय रात्येष[2] चण्डालो भवति ध्रुवम् ॥ ३१ ॥

न श्राद्धं कुरुते काले पुण्यं कथयति स्वकम् ॥
पान्थभेदकरश्चैष चण्डालो भवति ध्रुवम् ॥ ३२ ॥

ग्रीष्मेऽरण्ये स्थापयति प्रपां यस्तस्य यत्नतः ॥
विघ्नकर्ता भवेदेष चण्डालो भवति ध्रुवम् ॥ ३३ ॥

न्नदाता, संध्याकाले भोक्ता, प्रतिश्रुतवचनस्यान्यथा कर्ता, संध्याकाले शयिता, भूपो दत्तभूम्यपहर्ता, वैश्वदेवकालेऽभ्यागताय दुष्टोत्तरदाता, दुरुक्त्याऽन्नदाता, गङ्गादितीर्थनिन्दकः, एकादश्यां भोक्ता, रणे स्वामिहापकः, व्रताहे पर्वसु दिवा च स्त्रीसङ्गकर्ता, शूद्राय वेदवक्ता ॥२३-३१॥ काले श्राद्धाकर्ता, स्वपुण्यख्यापकः, पान्थभेदकर्ता, प्रपाविघ्न-

---

१ धेनुं भूमिं वा २ ददाति.

नाडीज्ञानाद्यविज्ञाय वैद्यकं यः करोति च ॥
अचिकित्स्यौषधं दत्ते चण्डालो भवति ध्रुवम् ॥ ३४ ॥

वेदमार्गं त्यजति यो जारणं मारणं तथा ॥
मोहनादि करोत्येष चण्डालो भवति ध्रुवम् ॥ ३५ ॥

गुरुं नरं वक्ति हरहरी निन्दति चार्चति ॥
देवतान्तरमप्येष चण्डालो भवति ध्रुवम् ॥ ३६ ॥

विप्रः क्षत्रश्च विट् शूद्रो निजकर्म विहाय यः ॥
परकर्माश्रयत्येष चण्डालो भवति ध्रुवम् ॥ ३७ ॥

शूद्रान्मन्त्रं श्वचर्मस्थगङ्गाक्षीरोपमं तु यः ॥
प्रगृह्णाति द्विजः सैष चण्डालो भवति ध्रुवम् ॥ ३८ ॥

श्राद्धे पिण्डान्न दत्तेऽज्ञो विधवास्त्रीरतोऽतिथिम् ॥
गालीर्दत्वा भोजयति स चण्डालो भवेद्ध्रुवम् ॥३९॥

मातृद्वेषी च यो दुष्टः पितृद्वेषी तथैव च ॥
गुरुद्वेषी च योऽप्येष चण्डालो भवति ध्रुवम् ॥ ४० ॥

कर्ता, नाडीज्ञानचिकित्साज्ञाने विनौषधदाता, वेदमार्गहापको, जारणमारणमोहनादिकृत्, गुरुं नरबुद्ध्या द्रष्टा, देवतान्तरमभ्यर्च्यापि हरिहरनिन्दकः, निजकर्मत्याजकः, परकर्मरतः, शूद्राच्छ्वचर्मस्थगङ्गोदकवन्मन्त्रग्रहीता, श्राद्धे पिण्डाद्यदाता, विधवारतोऽतिथये गालिदाता, मातृपितृगुरुद्वेषी, यो गुरुनिन्दां श्रुत्वा हृष्यति, विप्रद्वेष्टा, ब्रह्मराक्षस-

यो हृष्यति गुरोर्निन्दां श्रुत्वा वा द्वेष्टि भूसुरान् ॥
वेदचर्चाकरो विप्रो जायते ब्रह्मराक्षसः ॥ ४१ ॥

गुरुदैवतभक्तोऽपि यो निन्दत्यन्यदैवतम् ॥
सोऽपस्मारार्दितो नूनं भवेद्दारिद्र्यपीडितः ॥ ४२ ॥

पितरौ च गुरुं त्यक्त्वा सुखार्थी यः पृथग्भवेत् ॥
बुरुडोदरजो भूत्वा महारोगेण युज्यते ॥ ४३ ॥

विप्रावमाननिरतो यो विप्रो वेददूषकः ॥
कर्मभ्रष्टो भवेदेव मूत्रकृच्छ्ररुजार्दितः ॥ ४४ ॥

यो वक्ति लोकमर्मस्पृगुच्चारयति दुष्कृतम् ॥
हृद्रुग्[1]भवान्तरे भूत्वा महाकष्टं भुनक्ति सः ॥ ४५ ॥

स्त्रियो गर्भान्पातयति वन्ध्यात्वं तस्य निश्चितम् ॥
तस्य पुत्रा मरिष्यन्ति न कार्यं गर्भपातनम् ॥ ४६ ॥

योनिभाग्वेदचर्चाकृत् एते सर्वे चण्डालयोनिगाः ॥३२-४१॥ गुरुदेवभक्तोऽप्यन्यदेवनिन्दकोऽपस्मारदारिद्र्यभाक्। सुखार्थं पितरौ गुरुं च त्यक्त्वा यः पृथक्तिष्ठति स बुरुडयोनिं गत्वा महारोगार्दितो भविष्यति। विप्रावमानकृद्वेददूषकः कर्मभ्रष्टश्च मूत्रकृच्छ्ररुजार्दितो भविष्यति। लोकमर्मस्पृग्वक्ता दुष्कृतवक्ता च भवान्तरे हृद्रोगी महाकष्टभाक्च। गर्भपातकर्त्री वंध्या मृतवंध्या वा भविष्यति। श्रावितमपि धर्मशास्त्रादि न

---

१ हृदयरोगी.

धर्मशास्त्रपुराणादि न शृणोति कुदृष्टितः ॥
बह्वन्नादं वीक्षते यो बधिरोऽन्धश्च जायते ॥ ४७ ॥
तथा पतितमैत्रीकृद्वार्दर्भीं योनिमृच्छति ॥
हीनादौषधसेवी च मृगयोनिं स गच्छति ॥ ४८ ॥
करोति ब्रह्महत्यां यः क्षयरोगी स जायते ॥
सुरां पिबति यो मूढः श्यावदन्तः स जायते ॥ ४९ ॥
तथा सुवर्णहर्ताऽपि कुनखी च भवान्तरे ॥
कुष्ठी भवत्येष गुरुतल्पगामी तथैव च ॥ ५० ॥
अश्वहन्ता च गोहन्ता भवेद्वन्ध्यस्तथैव च ॥
योऽनुतप्तो भवेदेष दोषहीनो भवेत्खलु ॥ ५१ ॥
पूर्वं भुक्त्वा स नरकांस्ततो रोगी भवान्तरे ॥
विश्वासघात्यन्नवैरी वमनार्तो भविष्यति ॥ ५२ ॥
योऽङ्गीकरोति निष्काश्य यत्नतः परसेवकम् ॥
भुनक्ति यातनां घोरां स नरो बन्धनालये ॥ ५३ ॥

शृणोति बह्वन्नादं निन्दति च स बधिरोऽन्धश्च। पतितमैत्रीकृद्वार्दर्भीं योनिमेष्यति। हीनादौषधसेवी च मृगयोनिम्। ब्रह्महा क्षयरोगी, मद्यपः श्यावदन्तः, सुवर्णहर्ता कुनखी, गुरुतल्पगः कुष्ठी ॥४२-५०॥ अश्वगोहन्ताऽपुत्रः। यस्यानुतापो जातः स दोषहीनो भवेत्। पूर्वं पापभोगः पश्चाद्भवान्तरे रोगाः। विश्वासघातकृदन्नवैरी वान्तियुक्तश्च। परसेवकं निष्काश्याङ्गीकरोति स बन्धनालयेघोरयातनाभाक् ॥५१-५३॥ परस्त्री-

१ बह्वन्नभक्षणं.

नरः स्त्रीचौर्यकर्ता यो नरकं याति दारुणम् ॥
मतिहीनस्ततो भूत्वा क्लेशाननुभविष्यति ॥ ५४ ॥

सर्पं निहन्ति यो दुष्टः सर्पयोनिं स गच्छति ॥
एवं बहुविधा दोषा अथ चौर्यं ब्रवच्मि ते ॥ ५५ ॥

स्वर्णहर्ता भवेद्यस्तु प्रमेहव्याधियुग्भवेत् ॥
यः पुस्तकापहर्ता स जन्मान्धोऽपि भविष्यति ॥५६॥

वस्त्रापहर्ता पतितः श्वित्ररोगार्दितो भवेत् ॥
गणद्रव्यापहर्ता च गण्डमालार्दितो भवेत् ॥ ५७ ॥

श्वासोच्छ्वासार्दितस्यार्थं पामरोऽपहरत्यसौ ॥
कारायां बध्यत इति ब्रह्माण्डादिषु चोदितम् ॥ ५८ ॥

परद्रव्यापहारी च परन्यासापहारकः ॥
परद्वेष्टाऽप्यपुत्रत्वं गमिष्यति भवान्तरे ॥ ५९ ॥

अन्नहर्त्ता नरो गुल्मव्याधिना पीडितो भवेत् ॥
यो धान्यहारकः सोऽपि रक्तगात्रो भविष्यति ॥६०॥

हर्ता दारुणनरकभाक्। ततो मतिहीनः सन् क्लेशाननुभविष्यति। सर्पहन्ता सर्पयोनिग इत्याद्या अनेकदोषाः। अथ चौर्यं श्रृणु। सुवर्णहर्ता प्रमेहव्याधियुक्। पुस्तकहर्ता जन्मान्धः। वस्त्रहर्ता पतितः श्वित्री च। गणद्रव्यहर्ता गण्डमालार्तः। श्वासाद्यातुरद्रव्यहर्ता कारायां बध्यत इति ब्रह्माण्डपुराणादिषूक्तम्। परद्रव्यहर्ता, परन्यासहर्ता, परद्वेष्टा च, जन्मान्तरेऽपुत्रः ॥५४-५९॥ अन्नहर्ता गुल्मी, धान्यहर्ता रक्तगात्रः,

भविष्यति सुदुर्गन्धशरीरी तैलचौर्यकृत् ॥
ब्रह्मस्वान्यवधूहर्ता स भवेद्ब्रह्मराक्षसः ॥ ६१ ॥

रत्नमौक्तिकमाणिक्यमुखान्यपहरिष्यति ॥
नराधमः स पतति हीनजातिं गमिष्यति ॥ ६२ ॥

पत्रशाखाफलहरः खर्जूरोगार्दितो भवेत् ॥
रक्तपश्चापि गोदेहरक्तपो[1] जन्तुरुद्भवेत् ॥ ६३ ॥

कांस्यकार्पासलोहादितस्करो नरकं व्रजेत् ॥
ततो भवेच्छ्वेतकुष्ठी सर्वत्रैवं विचारयेत् ॥ ६४ ॥

देवद्रव्यापहारी च देवकार्यविनाशकः ॥
अभक्ष्यभक्षकश्चैव पाण्डुरोगार्दितो भवेत् ॥ ६५ ॥

परनिक्षेपहर्ता च सर्वदा शोकभाग्भवेत् ॥
जन्मान्तरं शृणु धनतस्करस्तूष्ट्रयोनिगः ॥ ६६ ॥

फलहर्ता वनचरो जलहर्ता च चातकः ॥
गृहोपकरणादाता[2] काकजन्म स गच्छति ॥ ६७ ॥

तैलहृद्दुर्गन्धी, ब्रह्मस्वपरस्त्रीहर्ता ब्रह्मराक्षसः, मौक्तिकमाणिक्यादिहर्ता हीनजातिगः, पत्रफलादिहृत्खर्ज्वार्तः, रक्ताशी गोदेहरक्तपजन्तुः, कांस्यकार्पासलोहादिहृन्नरकगामी ततः श्वेतकुष्ठी च ॥६०-६४॥ देवद्रव्यहर्ता, देवकार्यघाती, अभक्ष्यभक्षकश्च, पाण्डुरोगी। परनिक्षेपहर्ता शोकभाक्। जन्मान्तरं शृणु। धनहृत् उष्ट्रः। फलहृद्वनचरः। जलहर्ता

---

१ गोचीड इति प्रसिद्धः २ चोरः.

सरघाजन्मभागी स्यान्मधुहर्ता न संशयः ॥
तथा गोरसहर्ता च कुष्ठरोगार्दितो भवेत् ॥ ६८ ॥

जन्मान्तरप्रदा दोषाः पतितैवं सहस्रशः ॥
व्यभिचारप्रकरणं शान्तिपर्वस्थमुच्यते ॥ ६९ ॥

परस्त्र्यालिङ्गको जन्मशतं श्वा जायते ध्रुवम् ॥
सर्पजन्म ततो गत्वा दुःखभागी भविष्यति ॥ ७० ॥

अन्धो भवति मूढोऽसौ परस्त्रीयोनिवीक्षकः ॥
बन्धुस्त्रीसङ्गकर्ता यो गार्दभं जन्म गच्छति ॥ ७१ ॥

ततो विहाय तज्जन्म सर्पयोनिं गमिष्यति ॥
एवं पुनश्च नरकभागी स्याज्जारकर्मकृत् ॥ ७२ ॥

मित्रसीमन्तिनीभोक्ता शुनो योनिं स गच्छति ॥
मातुलस्त्रीसङ्गकर्ता स चापीह श्वयोनिभाक् ॥ ७३ ॥

यो निरीक्षति दुर्बुद्ध्या परसीमन्तिनीमुखम् ॥
चक्षूरोगी स भवति नात्र कार्या विचारणा ॥ ७४ ॥

चातकः । गृहोपकरणहर्ता काकः । मधुहृन्माक्षिका । गोरसहृत्कुष्ठी ॥६९-६८॥ एवं सहस्रशो जन्मान्तरदा दोषाः । शान्तिपर्वोक्तं व्यभिचारफलं शृणु । परस्त्र्यालिङ्गनाज्जन्मशतं श्वयोनिः, ततोऽतिदुःखदं सर्पजन्म । कुदृष्ट्या परस्त्रीयोनिवीक्षकोऽन्धः । बन्धुस्त्रीगो गर्दभस्ततः सर्पश्च । जारकर्मकृन्नरकभागी । मित्रस्त्रीभुक् श्वा । मातुलस्त्रीभुगश्वः । दुर्बुद्ध्या परस्त्री-

१ मधुमक्षिका २ स्त्री.

योऽपि गच्छति विप्रस्य स्त्रियं शूद्रोऽपि सन्त्स्त्रयम् ॥
तावुभौ हि महापापौ कृमित्वं च गमिष्यतः ॥ ७५ ॥

यस्यास्तु शूद्रसम्पर्कः सर्वदा दुर्भगा तु सा ॥
भविष्यति महादोषाच्छुनीह व्यभिचारिणी ॥ ७६ ॥

एवं श्रीगुरुणा प्रोक्तं पतिताय यथायथम्[1] ॥
श्रुत्वा तदैव पप्रच्छ तं त्रिविक्रमभारती ॥ ७७ ॥

स्वामिन्प्रकथिता धर्माः सकलास्ते च मे श्रुताः ॥
कदाचित्पापमुद्भूतं कथं नाशं गमिष्यति ॥ ७८ ॥

गुरुस्त्रिविक्रमं प्राह प्रायश्चित्तविधिं शृणु ॥
पश्चात्तापो भवेद्यस्य तस्य पापं प्रणश्यति ॥ ७९ ॥

महापापं यदि कृतं तदन्तःकरणे स्थितम् ॥
तस्य कर्मविपाकोक्तं प्रायश्चित्तमिदं शृणु ॥ ८० ॥

मुखद्रष्टा नेत्ररोगी । शूद्ररता विप्रस्त्री स शूद्रश्चोभौ कृमियोनिं गमिष्यतः ॥६९-७५॥ सदा शूद्रसंसर्गकृद्दुर्भगा । व्यभिचारिणी तु शुनी । एवं गुरुवाक्यं श्रुत्वा त्रिविक्रमोऽपृच्छत् ॥ ७६-७७ ॥ स्वामिन्धर्माः प्रकाशिताः । कदाचित्पापं जातं चेत्कथं तच्छान्तिः । गुरुराह । प्रायश्चित्तविधिं शृणु । पश्चात्तापश्चेत्पापं नश्यति । कृतं महापापं हृदि लग्नं चेत्कर्मविपाकोक्तं प्रायश्चित्तं शृणु । मुनिप्रोक्तानि तद्वि-

---

१ यथागम्यं.

प्रायश्चित्तविधानानि मुनिप्रोक्तानि भूरिशः ॥
बहुप्रकाराणि सन्ति तन्मध्ये मे मतं शृणु ॥ ८१ ॥
ब्रह्मदण्डः पापखण्डः पुरा देयः सदस्यथ ॥
गोवृषात्मा तदर्घो[१] वा शक्त्याऽब्दादि चरेत्ततः ॥८२॥
धेनोरभावे निष्कोऽर्घ्यस्तदर्धं पाद एव वा ॥
शक्त्या कृच्छ्रा अनुष्ठेयाः स्थूलसूक्ष्माघयोगतः ॥८३॥
अज्ञानकृतपापं तु पश्चात्तापेन नश्यति ॥
गुरुसेवापरस्याघं निवारयति सद्गुरुः ॥ ८४ ॥
गुञ्जामात्रस्वर्णदानं तीर्थयात्रा द्वियोजना ॥
सौम्यपातकनाशाय योजनीया द्विजातिभिः ॥ ८५ ॥
पापं स्त्रीपुंसयोर्मध्ये कृतमेकतरेण चेत् ॥
लिप्येते द्वावपि ततः प्रायश्चित्तं द्वयोर्मतम् ॥ ८६ ॥
सामान्यपापनाशार्थं प्रकारोऽन्यो मुनीरितः ॥
गायत्र्ययुतजाप्येन गायत्रीकृच्छ्र उच्यते ॥ ८७ ॥

धानानि बहूनि तत्र मे मतं शृणु। पूर्वं सदसि गोवृषनिष्क्रयरूपो ब्रह्मदण्डः स्थाप्यः। तत्र परिषदुक्तं शक्त्याऽब्दादि चरेत्, धेनवो वा देयास्तदभावे निष्कं तदर्धं पादो वा। स्थूलसूक्ष्मपापानुसारेण कृच्छ्रा अनुष्ठेयाः। अज्ञानकृतपापे पश्चात्तापो गुरुसेवा वा कार्या। सौम्यपापे गुञ्जामात्रस्वर्णदानम्। योजनपर्यन्तं तीर्थयात्रा। स्त्रीपुंसयोरेकतराघेऽपि द्वयोः प्रायश्चित्तम् ॥७८-८६॥ सामान्यपापनाशार्थं अयुतगायत्रीजपः,

---

१ सभायां गोवृषदानं २ मूल्यं.

सहस्रवारमाज्येन गायत्र्याऽपि हुनेत्तथा ॥
स्वशाखावेदपाठाद्वा कृच्छ्रसिद्धिस्त्रिविक्रम ॥ ८८ ॥
कृच्छ्रसंख्या यत्र तत्र प्राजापत्यो हि गृह्यते ॥
एकभक्तेन नक्तेनायाचितेनोपवासतः ॥ ८९ ॥
त्र्यहं त्र्यहं क्रमेणैव प्राजापत्यो द्विषट्दिनैः ॥
श्रीगुरुस्मरणाच्चापि सामान्यदुरितक्षयः ॥ ९० ॥
कृच्छ्रातिकृच्छ्रानुष्ठानात्पापक्षय उदाहृतः ॥
अज्ञानोत्थाघनाशोऽपि भो मुनेऽवहितः शृणु ॥ ९१ ॥
अद्यात्पञ्चदशग्रासान् दिवा द्वादश निश्यपि ॥
अथवाऽयाचितान्नस्याष्टाष्टग्रासाशनाच्छुचिः ॥ ९२ ॥
माससमात्रं चरेदेवं सौम्यपातकनाशनम् ॥
प्रत्यहं चाञ्जलिमितमन्नं भोज्यं ततः शुचिः ॥ ९३ ॥
उपवासस्त्र्यहं कार्यो घृतं वा त्रिदिनं पिबेत् ॥
एतेनाप्यघनाशः स्यात्प्रकारोऽन्योऽपि चोच्यते ॥९४॥

गायत्र्या सहस्रमाज्याहुतयो वा स्वशाखावेदपाठो वा कृच्छ्रसिद्धिदः। कृच्छ्रसंख्यायां प्राजापत्यो ग्राह्यः। क्रमात्त्र्यहमेकभक्तनक्तायाचिताभुक्त्या द्वादशादिनैः प्राजापत्यः। श्रीगुरुस्मरणात्सामान्यपापक्षयः। कृच्छ्रातिकृच्छ्रानुष्ठानादज्ञातपापक्षयः। माससमात्रं दिवा पञ्चदश रात्रौ द्वादश ग्रासा भोज्याः। अयाचितान्नस्याष्टौ अष्टौ वाऽतः सौम्यपापनाशोऽञ्जलिमितं वाऽन्नं भोज्यम्। त्र्यहमुपवासस्त्र्यहं घृताशनं पापहन्तृ। त्र्यहं

---

१ द्वादशादिनैः भक्षेत्.

त्र्यहं घृतं त्र्यहं क्षीरं त्र्यहं वायुं च भक्षयेत् ॥
त्रिसप्ताहं[1] पिबेत्क्षीरं पापनाशो भविष्यति ॥ ९५ ॥
अशक्तो यदि वा पापी तस्य व्रतमिदं स्मृतम् ॥
तिलाशनाच्चोपवासो यद्वा धानाशनादपि[2] ॥ ९६ ॥
पर्णकृच्छ्रं चरेच्छक्तः पिबेत्प्रतिदिनं मुदा ॥
शुद्धपर्णोदबिन्दूंश्च पश्चात्तापाच्छुचिर्भवेत् ॥ ९७ ॥
अश्वत्थबिल्वकमलकुशदूर्वोदकाशनात् ॥
सप्ताहं पर्णकृच्छ्रोऽयं पातकान्तक उच्यते ॥ ९८ ॥
अथवाऽन्यः प्रकारोऽयं कुर्याच्चान्द्रायणव्रतम् ॥
कुक्कुटाण्डमितान् ग्रासान्वर्धमानान्सिते चरेत्[3] ॥ ९९ ॥
ह्रासयेत्कृष्णपक्षे च पौर्णिमास्यां क्रमेण तु ॥
ग्रासाः पञ्चदशामायामुपवासो विधानतः ॥ १०० ॥
सभायां सत्यमेवोक्त्वा पश्चात्तापेन यो नरः ॥
प्रायश्चित्तं चरेद्भक्त्या तस्य पापलयो भवेत् ॥ १ ॥

घृतं, त्र्यहं दुग्धं, त्र्यहं वायुं च भक्षयेद्वा ॥८७-९५॥ त्र्यहं क्षीराशनाद्वाऽघनाशोऽशक्तस्य तिलाशनात्पापनाशः । शक्तश्चेत्पश्चात्तापेन पर्णकृच्छ्रं चरेत्सप्ताहम् । बिल्वाश्वत्थाब्जकुशदूर्वोदकाशनं पर्णकृच्छ्रः । चान्द्रायणं वा कार्यम् । शुक्ले कुक्कुटाण्डमितान्ग्रासान्वर्धयेत् ॥९६-९९॥ कृष्णे ह्रासयेदेवं पूर्णिमायां ग्रासाः पञ्चदशामायामुपोषणमिति ॥१००॥ सभायां सत्यमेवोक्त्वा तदुक्तं प्रायश्चित्तं भक्त्याऽऽचरणाच्छुद्धिः । तीर्थयात्रां

---

१ एकविंशतिदिनपर्यंतं २ भ्रष्टयवभक्षणं ३ भक्षेत्.

तीर्थयात्रा पवित्राऽथ वक्ष्यते पापहारिणी ॥
वाराणसीस्नानमात्रात्सर्वपापक्षयो भवेत् ॥ २ ॥

अन्यतीर्थे नरो गत्वा गायत्रीजपमाचरेत् ॥
सहस्रकृत्वः पापस्य लयोऽगस्त्यस्य वाक्यतः ॥ ३ ॥

सेतुबन्धसमीपे तु समुद्रस्नानतो नृणाम् ॥
भ्रूणहत्याविनाशश्च कृतघ्नाद्यघनाशनम् ॥ ४ ॥

विधिपूर्वं शुचिस्तत्र कोटिगायत्रिकाजपात् ॥
ब्रह्महत्यादिपापानां विनाशः स्यात् त्रिविक्रम ॥ ५ ॥

लक्षगायत्रिकाजाप्यात्सुरापानाघनाशनम् ॥
स्वर्णहर्ता सप्तलक्षगायत्रीजपतः शुचिः ॥ ६ ॥

तथा गायत्र्यष्टलक्षजपतो गुरुतल्पगः ॥
शुद्धोऽथ वेदपाठाच्च शुद्धिं वक्ष्ये त्रिविक्रम ॥ ७ ॥

पावमानीजपश्चापि ब्रह्महत्यादिपापहृत् ॥
मासमात्रं तथैवेन्द्रं मित्रं मन्त्रजपादपि ॥ ८ ॥

शृणु । मासमात्रं वाराणसीस्नानात्सर्वपापक्षयः । तथाऽन्यतीर्थेऽगस्त्य-वचनात्सहस्रगायत्रीजपाच्छुद्धिः । सेतुबन्धे समुद्रस्नानाद्भ्रूणहत्याकृतघ्ना-दिपापनाशः ॥ १-४ ॥ तत्र विधिवत्कोटिगायत्रीजपाद्ब्रह्महत्यादिनाशः । लक्षगायत्रीजपात्सुरापशुद्धिः । सप्तलक्षगायत्रीजपात्सुवर्णहर्तृशुद्धिः । अष्ट-लक्षगायत्रीजपाद्गुरुतल्पगशुद्धिः । मन्त्रजपाच्छुद्धिं शृणु । पावमानीजपाद्-ब्रह्महत्यानाशः । मासमात्रमिद्रंमित्रमिति जपादपि तथा । शान्तिसूक्तात्

सुरापानादिपापानां लयः स्याच्छान्तिसूक्ततः ॥
शुचिः शौनःशेपसूक्तजपेनापि सुवर्णहृत् ॥ ९ ॥
मासमात्रं हविष्याशी शान्तिसूक्तं सदा पठेत् ॥
गुरुतल्पादिपापानि नश्यन्त्येव न संशयः ॥ ११० ॥
षण्मासं पञ्चमासं वा मिताहारो हि पूरुषः ॥
शुद्धः पञ्चमहापापात्पुंसूक्तं[1]जपतो भवेत् ॥ ११ ॥
तथैव भक्तिपूर्वं च त्रिसुपर्णजपादपि ॥
समस्तपापविलयो भवत्येव त्रिविक्रम ॥ १२ ॥
नारायणोपनिषदं भक्तिपूर्वं जपेत्तु यः ॥
तस्य प्रणश्यन्ति पञ्चमहापापानि निश्चितम् ॥ १३ ॥
त्रिपद्या अपि गायत्र्या जपतोऽघं प्रणश्यति ॥
सप्तजन्मोद्भवं चापि चाघमर्षणसूक्ततः ॥ १४ ॥
भक्तिपूर्वं विष्णुसूक्तं जपतां च त्रिविक्रम ॥
सप्तजन्मार्जितं पापं प्रणश्यत्येव निश्चितम् ॥ १५ ॥

सुरापानाद्यघलयः। शुनःशेपसूक्तजपात्स्वर्णहर्तृशुद्धिः। मासमात्रं हविष्याशी शान्तिकं पठेत्। ततो गुरुतल्पगादिशुद्धिः। पञ्चमहापापी पञ्चमासान्षण्मासान्वा मिताहारः पुंसूक्तं जपेत्ततः शुद्धिः। तथा भक्त्या त्रिसुपर्णजपात्सर्वपापनाशः। भक्त्या नारायणोपनिषत्पाठात्पञ्चमहापापनाशः ॥ ९-१३ ॥ गायत्रीजपात्सर्वपापनाशोऽघमर्षणसूक्तजपाच्च सप्तजन्मपापनाशः। भक्त्या विष्णुसूक्तजपादपि तथा। अज्ञातदोषनाशार्थं

---

१ पुरुषसूक्तं.

अज्ञानकृतदोषादिनाशार्थं चान्यदुच्यते ॥
पञ्चगव्याशनं कुर्यादनुतप्तः शुचिर्भवेत् ॥ १६ ॥

गोमूत्रं गोमयं क्षीरं दध्याज्यं सकुशोदकम् ॥
एकीकृत्य पिबेत्पूर्वं दिने चोपोषणं चरेत् ॥ १७ ॥

गोमूत्रं नीलवर्णायाः कृष्णाया गोमयं तथा ॥
क्षीरञ्च ताम्रवर्णायाः श्वेताया दधि चैव हि ॥ १८ ॥

कपिलाया घृतं ग्राह्यं पञ्चगव्यं यथोक्तवत्[1] ॥
सम्पाद्य मन्त्रपूर्वं तदेकीकुर्यात्प्रमाणतः ॥ १९ ॥

प्रस्थमात्रं तु गोमूत्रमङ्गुष्ठार्धं तु गोमयम् ॥
सप्तप्रस्थमितं क्षीरं प्रस्थत्रयमितं दधि ॥ १२० ॥

प्रस्थमात्रं घृतं ग्राह्यं तावद्दर्भोदकं तथा ॥
प्रत्येकं तु यथामन्त्रमेकीकुर्यात्सुभाजने[2] ॥ २१ ॥

सकुशोदकमेतत्प्राग्जुहुयाच्च यथाविधि ॥
इरावतीति मन्त्रेण तथेदं विष्णुरित्यृचा ॥ २२ ॥

पञ्चगव्यं पिबेदनुतापाच्छुद्धिः। पूर्वदिने उपोष्य नीलधेनोः प्रस्थमात्रं मूत्रं, कृष्णाया अङ्गुष्टार्धं गोमयं, ताम्रायाः सप्तप्रस्थमितं क्षीरं, श्वेतायाः प्रस्थत्रयमितं दधि, कपिलायाः प्रस्थमितं घृतं, तावद्दर्भोदकं च पात्रे एकीकृत्येरावतीदंविष्णुर्मानस्तोके प्रजापत एभिर्मन्त्रैः

---

१ शास्त्रोक्तमानतः २ कांस्यादिपात्रे.

ततो मानस्तोक इति प्रजापत इतीति च ॥
गायत्र्या चोङ्कारपूर्वं हुनेद्व्याहृतिभिस्तथा ॥ २३ ॥
एवं हुत्वा पञ्चगव्यमनुतप्तस्ततः पिबेत् ॥
यत्त्वगस्थिगतं पापमिति मंत्रेण शुध्यति ॥ २४ ॥
एता गावो न लभ्यन्ते चेन्मुख्या कपिला मता ॥
यद्दर्शनाद्दोषलयः कपिला तत उत्तमा ॥ २५ ॥
सर्वेभ्योऽपि च पापेभ्यो महापापानि पञ्च तु ॥
चत्वारः पापकर्तारस्तत्संसर्गी च पञ्चमः ॥ २६ ॥
ब्रह्महा च सुरापेयी गुरुतल्परतस्तथा ॥
स्वर्णहर्ता तुरीयश्च तत्संसर्गी च पञ्चमः ॥ २७ ॥
अन्यानि चोपपापानि लघुपापानि चापि च ॥
एभ्यो दुष्परिहाराणि महापापानि पञ्च तु ॥ २८ ॥
अघान्येतानि जातानि प्रायश्चित्तेन शोधयेत् ॥
अनुग्रहात्पुनीतः स्यान्महा[1]घोऽपि जगद्गुरोः ॥ २९ ॥

गायत्र्या सप्रणवव्याहृतिभिश्च हुत्वा ॥१४-२३॥ अनुतप्तो 'यत्त्वगस्थि' इत्यनेन पिबेच्छुद्धो भवेत्। उक्तवर्णगोऽलाभे दर्शनाद्दोषहर्त्र्या उत्तमायाः कपिलायाः पञ्चगव्यं ग्राह्यं ॥२४-२५॥ ब्रह्महा, सुरापो, गुरुतल्पगः, स्वर्णस्तेयी चेति सर्वपापिभ्योऽपि महापातकिनस्तत्संसर्गी च तत्समाः। उपपापलघुपापेभ्य एतानि पञ्चमहापापानि दुष्परिहाराणि। पापं प्रायश्चित्तेन शोधयेत्। सद्गुर्वनुग्रहान्माहापापलयः। स्वधर्मनिरतवेदज्ञविप्रानुग्रहादपि

1 महापापोऽपि.

यो विप्रो वेदशास्त्रज्ञः स्वधर्मनिरतः शुचिः ॥
तस्यानुग्रहतः पापी पुनीतो भवति द्रुतम् ॥ १३० ॥

इति त्रिविक्रमायोक्तः प्रायश्चित्तविधिस्त्वयम् ॥
गुरुणा ब्राह्मणास्तुष्टा ऊचुर्ज्ञानं प्रकाशितम् ॥ ३१ ॥

श्रीगुरुः पतितं प्राह विप्रोऽभूः पूर्वजन्मनि ॥
गुरुमातापितृद्वेषादियं चण्डालताऽऽगता ॥ ३२ ॥

अथ वक्ष्यामि ते शुद्धिं सङ्गमे मासमात्रतः ॥
स्नानाद्दोषान्विहाय त्वं भूयो विप्रो भविष्यसि ॥ ३३ ॥

पतितः प्राह भोः स्वामिन्दर्शनं मेऽभवत्तव ॥
तेन शुद्धोऽस्मि काकोऽपि हंसः स्यान्मानसे यथा ३४

तथैव त्वद्दृष्टिमात्रात्पवित्रोऽस्मि न संशयः ॥
अतो मां तारय स्वामिञ्शरणागतरक्षक ॥ ३५ ॥

स्पर्शस्पर्शाद्यथा लोहं स्वर्णं भवति तत्क्षणम् ॥
तत्पुनर्लोहतां यायात्कथं स्वामिञ्जगद्गुरो ॥ ३६ ॥

शुद्धिः। इति श्रीगुरूक्तं श्रुत्वा विप्रास्तुष्टा ऊचुर्ज्ञानं प्रकाशितमिति। श्रीगुरुः पतितं प्राह। पूर्वं मातापितृद्वेषाच्चाण्डालोऽभूः ॥२९-३२॥ अथ शुद्धिं श्रृणु। मासमात्रं सङ्गमस्नानाद्दोषान्हित्वा पुनर्विप्रो भविष्यसि। स आह। स्वामिंस्ते दर्शनाच्छुद्धोऽस्मि। यथा मानससरोगतः काको हंसो भवति तथा ते दृष्ट्या पूतोऽस्मि न संशयः। स्वामिन् शरणागततारकातो मां पाहि। स्पर्शस्पर्शाल्लोहं स्वर्णं भूत्वा पुनर्लोहं भवति किम्?।

त्वद्दृष्ट्यमृतसंस्पर्शाज्ज्ञानी जातोऽस्मि सर्ववित्[1] ॥
अभिमन्त्र्यैव विप्राणां मध्ये मां योजय प्रभो ॥ ३७ ॥

इति तस्य वचः श्रुत्वा श्रीगुरुः प्रहसञ्जगौ ॥
देहस्ते जातिहीनोऽयं कस्त्वां विप्रं वदिष्यति ॥ ३८ ॥

हीनरेतोरक्तयोगाज्जातोऽयं तत्र[2] वर्धितः ॥
देहः कथं स विप्रः स्यात्तव निन्दास्पदं वचः ॥३९॥

पुरा क्षत्रो गाधिपुत्रो विश्वामित्रोऽखिलश्रुतः ॥
पवित्रोऽपि स चात्मानं विप्रं कर्तुं समुद्यतः ॥ १४० ॥

अनेकशतवर्षाणि क्लेशेन स तपोऽतपत् ॥
तपोबलाच्चि[3]चिकीर्षुः स स्वस्य ब्रह्मर्षितां सुधीः ॥ ४१ ॥

स इन्द्रादिसुरांस्तत्र प्रार्थयामास भूरिशः ॥
ब्रह्मर्षित्वं हि मे दातुं समर्था यूयमित्यपि ॥ ४२ ॥

देवा ऊचुर्हि तेऽस्माकं वसिष्ठो गुरुरुत्तमः ॥
अङ्गीकरिष्यति स वा[4] एतच्चेत्सम्मतं हि नः ॥ ४३ ॥

स्वामिन् जगद्गुरो, त्वद्दृष्ट्या पूतोऽस्मि । सर्वज्ञ प्रभो, ज्ञानिनं मामभिमंत्र्य विप्रैर्योजयेति श्रुत्वा गुरुर्हसन्नाह । हीनं त्वां विप्र इति को वदेत् । हीनरक्तरेतोयोगाज्जातस्तत्र वृद्धश्च कथं विप्रः स्यादिदं ते वाक्यं निन्दास्पदम् । पुरा गाधिराजपुत्रो विश्वामित्र आत्मानं ब्रह्मर्षिं कर्तुमुद्यतः ॥३३-४०॥ अनेकवर्षक्लेशात् तपोबलाच्च स्वस्य ब्रह्मर्षित्वं चिकीर्षुः समर्था यूयं मे ब्रह्मर्षित्वं दातुमर्हथेतीन्द्रादिदेवान्प्रार्थयामास । तैरुक्तं नो मताद्वसिष्ठगुरो-

---

१ हे सर्ववित् २ हीनगेहे ३ कर्तुमिच्छुः ४ निश्चयेन.

विश्वामित्रस्तथेत्युक्त्वा वसिष्ठं प्राप्य चाब्रवीत् ॥
बहुकालं तपस्तप्तं ब्रह्मर्षिं कुरु मां प्रभो ॥ ४४ ॥

वसिष्ठः प्राह तं क्षत्र विश्वामित्रापवित्रजम् ॥
देहं त्यक्त्वाऽऽर्षवंशे त्वं लभस्व जनिमुत्तमाम् ॥४५॥

ततस्ते व्रतबन्धान्ते गायत्रीबोधतो भवेत् ॥
ब्रह्मर्षित्वं सर्वमान्यं प्रलयेनापि नाधुना ॥ ४६ ॥

वसिष्ठेनेति प्रत्युक्तो विश्वामित्रोऽतिकोपनः ॥
तदा तस्य वसिष्ठस्य शतं पुत्राञ्जघान सः ॥ ४७ ॥

ब्रह्मज्ञानी वसिष्ठः स तथाऽपि न तमोऽभजत् ॥
नापि ब्रह्मर्षितां तस्मै विश्वामित्राय सोऽर्पयत् ॥ ४८ ॥

एकस्मिन्दिवसेऽथापि विश्वामित्रोऽतिकोपनः ॥
हस्ते पर्वतमादाय वसिष्ठं हन्तुमागतः ॥ ४९ ॥

तावद्विवेकी भूत्वा स स्वगतं प्राह घातये ॥
वसिष्ठं चेन्न मां कोऽपि ब्रह्मर्षिमिति वै वदेत् ॥१५०॥

स्तत्स्वीकुर्विति। तथेति स वसिष्ठमेत्याह। बहुकालं तपस्तप्तं मां ब्रह्मर्षिं कुरु। वसिष्ठ आह। हे क्षत्रियापवित्र विश्वामित्रेदं देहं त्यक्त्वा विप्रकुले भूत्वा व्रतबन्धाद्गायत्रीं लब्ध्वा मान्यो ब्रह्मर्षिर्भविष्यसि। यत्नादपि नाधुनेति श्रुत्वा स कुपितो वसिष्ठस्य पुत्रशतं जघान। तथाऽपि वसिष्ठो न तमोऽभजन्नापि ब्रह्मर्षित्वं ददौ। ततः कोपाद्वसिष्ठं हन्तुं पर्वतं गृहीत्वा यावत्प्रवृत्तः ॥४१-४९॥ तावद्विवेकी भूत्वाऽऽह। वसिष्ठे हते न मां

१ ऋषिवंश उत्तमजन्म २ प्रत्याख्यातः.

वसिष्ठवाक्यानुसारी देवर्षीणां गणः खलु ॥
अतो वसिष्ठहननात्कोऽपि नाङ्गीकरिष्यति ॥ ५१ ॥

वसिष्ठोऽयं मुनिवरो महादोषो वधोऽस्य हि ॥
इत्युक्त्वा स्वकरस्थं स गिरिं तत्याज दूरतः ॥ ५२ ॥

अनुतप्तः स मनसा वसिष्ठं शरणं ययौ ॥
सम्बोधयामास मुनिस्तदा राजर्ष इत्यमुम् ॥ ५३ ॥

विश्वामित्रः प्राह तुष्टः सत्यं ते वचनं मुने ॥
ब्रह्मर्षित्वं हि मे देहि स्वीकुर्वन्नं च मेऽधुना ॥ ५४ ॥

वसिष्ठः प्राह सन्तुष्टस्त्वं सूर्यकिरणैरमुम् ॥
देहं दग्ध्वा नूतनवत्पुनर्दर्शय तापस ॥ ५५ ॥

अङ्गीकृत्य तथेत्येष विश्वामित्रस्तपोऽतपत् ॥
तपसा सूर्यगोभिश्च[1] तद्देहो भस्मसादभूत् ॥ ५६ ॥

अनुष्ठानसमर्थोऽसौ विश्वामित्रोऽपि नूत्नवत् ॥
तपोलब्धं दिव्यदेहं दधार सुरपूजितः ॥ ५७ ॥

कोऽपि ब्रह्मर्षिं वदेदेतदनुसारिणो देवर्षयोऽतोऽस्य हनने महादोष इति गिरिं त्यक्त्वाऽनुतप्तो वसिष्ठं शरणं ययौ। स राजर्षे इति प्राह। तुष्टो विश्वामित्र आह। ते वचः सत्यम्। ब्रह्मर्षित्वं मे देहि। वसिष्ठ आह। सूर्यकिरणैस्तपसाऽमुं देहं दग्ध्वा नूतनवदन्यं दर्शय। स तथेत्यङ्गीकृत्य तपसा सूर्यकिरणैः देहं दग्ध्वाऽनुष्ठानसामर्थ्यान्नूत्नं दिव्यदेहं दधौ। ततः

---

१ सूर्यकिरणैः.

ततस्तं ज्ञानिनं विश्वामित्रं ब्रह्मर्षिमेव हि ॥
मन्यन्ते स्म त्रिभुवने प्रख्यातोऽभूत्स यत्नतः ॥ ५८ ॥
का कथा तव तस्मात्त्वं विसृज्येदं कलेवरम् ॥
जन्मांतरेऽनुतप्तत्वाद्विप्र एव भविष्यसि ॥ ५९ ॥
इति श्रीगुरुणा प्रोक्तः पतितः स चरेति च ॥
भूयोऽप्युक्तो लब्धसुखो भूयो नैच्छत्स हीनताम् १६०
लब्धं निधानं दरिद्रः परित्यक्तुं किमिच्छति ॥
लब्धमप्यमृतं मर्त्यः परित्यक्तुं किमिच्छति ॥ ६१ ॥
किंवाऽतिक्षुधिता गौस्तु सुघासं[2] प्राप्य दैवतः ॥
मनसाऽपि ततो गन्तुं नाभिकांक्षति सर्वथा ॥ ६२ ॥
एवं स पतितो लब्ध्वा ज्ञानराशिं ततोऽन्यतः ॥
नैच्छत्स्वमन्दिरं गन्तुमात्मानं मेन उद्द्विजम् ॥ ६३ ॥
अत्रान्तरे तस्य भार्या ससुता च समागता ॥
तं प्रेक्ष्य तादृशं प्रोच उन्मत्तोऽयमभूत्किमु ॥ ६४ ॥

पूजितं ज्ञं विश्वामित्रं ब्रह्मर्षिं लोको भुवने मेने । तव का कथाऽनुतप्तत्वात्त्वं वर्ष्मेदं त्यक्त्वा जन्मान्तरे विप्रो भविष्यसि ॥५८-५९॥ इतो गच्छेति पुनः पुनरुक्तोऽपि लब्धसुखः स नीचत्वं नैच्छत् । लब्धं धनं रङ्कस्त्यक्तुमिच्छति किं ? मर्त्योऽमृतं त्यक्तुमिच्छेत्किं ? क्षुधिता गौर्दैवाल्लब्धं सुघासं त्यक्त्वा मनसाऽपि गन्तुमिच्छेत्किं ? तथा स लब्धज्ञानः स्वगृहं गन्तुं नैच्छत् । आत्मानं विप्रं मेने । तदा ससुता भार्याऽऽगत्योवाचो-

१ गृहं गच्छेति च २ बालतृणं.

निवार्योपागतां तां स प्राह मा स्प्रष्टुमर्हसि ॥
इति क्रुद्धः स पतितस्तां ताडयितुमुद्यतः ॥ ६५ ॥

दुःखिता तस्य वनिता श्रीगुरुं शरणं गता ॥
प्राहेच्छति पतिस्त्यक्तुं मां स्वामिन्बोधयाशु तम् ॥६६॥

कन्याः पुत्राश्च बहवो मम तान्कोऽनु पालयेत् ॥
कुतो गच्छति सन्त्यज्य मां स्वामिन्बोधयाशु तम् ६७

नोपदेक्ष्यसि चेत्स्वामिन्प्राणांस्त्यक्ष्ये सुतान्विता ॥
पालयेत्कोऽन्यथाऽनाथां मां स्वामिन्बोधयाशु तम् ६८

इति तस्या वचः श्रुत्वा प्रहसन्श्रीगुरुस्तु तम् ॥
उपाहूय प्रकथयन्धर्मतत्त्वं तमब्रवीत् ॥ ६९ ॥

श्रीगुरोर्मे वचः श्रुत्वा पतित स्वगृहं चर ॥
कलत्रपुत्रक्षोभात्ते भविष्यति गतिः कथम् ॥ १७० ॥

आगत्यास्मिन्हि संसारे कार्यमिंद्रियतोषणम् ॥
ततो धर्ममयो भूत्वा तरत्येव भवार्णवम् ॥ ७१ ॥

न्मत्तोऽयमभवत्किं ?। मा स्पृशेति तां निवार्य क्रुधा ताडयितुं प्रवृत्तः। दुःखिता सा गुरुं नत्वाऽऽह। मां त्यक्तुमिच्छतीमं बोधय। कन्याः पुत्राश्च मे बहवस्तान्को रक्षेन्मां त्यक्त्वा क्वायं याति। नोपदेक्ष्यसि चेत्प्राणांस्त्यक्ष्ये ॥६०-६८॥ इति श्रुत्वा गुरुर्हसंस्तमाहूय धर्मतत्त्वमाह। मे वचः श्रुत्वा गृहं गच्छ। स्त्रीपुत्रक्षोभात्कथं ते सद्गतिः। अत्रेन्द्रियतोषं कृत्वा।

यद्वा प्रागेव गृहिणी न कार्योद्वाह्य [1]रागतः ॥
ततस्त्यक्तुं य इच्छेत्स महादोषेण लिप्यते ॥ ७२ ॥
सति साक्षिणि सूर्यादौ त्वयैषाऽङ्गीकृता वधूः ॥
अतोऽस्यास्त्यागतो दोषो गतिश्चापि न ते भवेत् ७३
इति श्रीगुरुणोक्तः स प्राञ्जलिर्विनतोऽब्रवीत् ॥
ज्ञानी भूत्वा ततो भूयः कथं यास्यामि हीनताम् ७४
इत्युक्तः श्रीगुरुः प्राह स्वगतं [2]भूतिरस्य च ॥
अङ्गेऽस्ति क्षालनात्तस्या अस्य ज्ञानं विनश्यति ॥७५॥
एवं विचार्याह शिष्यमेकं लुब्धमुपाह्वय ॥
त्वरितं त्विति तच्छुत्वाऽन्वेषयामास तादृशम् ॥ ७६ ॥
तस्मिन्ग्रामे द्रव्यलुब्ध एको वाणिज्यकृद्द्विजः ॥
तमाभाष्यानयामास स शिष्यो गुरुसन्निधिम् ॥ ७७ ॥
श्रीगुरुः प्राह तं लुब्धं पतितं स्नापयाम्बुना ॥
ततः संसारसक्तोऽसौ गतज्ञानो भविष्यति ॥ ७८ ॥

धर्ममयो भूत्वा भवाब्धेस्तरसि। प्रागेव स्त्रीर्न विवाह्या। विवाह्य त्यागे महादोषः। सूर्यादिसाक्षितस्त्वयैषाऽङ्गीकृताऽस्यास्त्यागे ते दोषो गतिश्च नेत्युक्तो नत्वा पतित आह। ज्ञानी भूत्वा कथं हीनत्वं यास्ये। श्रीगुरुः स्वगतमाहास्य देहस्थभस्मक्षालनाज्ज्ञानं नश्येदिति विचार्याह। शीघ्रं धनलुब्धमन्वेष्यानयेत्युक्तः शिष्यो वाणिज्यरतं द्विजमानयत् ॥६९-७७॥ गुरुस्तमाह। पतितं स्नापय। ततोऽसौ नष्टज्ञानः संसारासक्तो भविष्यती-

---

१ विषयाभिलाषतः २ भस्म.

इति श्रीगुरुणोक्तोऽसौ जलपूर्णघटाम्बुना ॥
पतितं स्नापयामास विभूतिश्च ततो गता ॥ ७९ ॥

विभूतिक्षालनाच्चापि सर्वं विस्मृत्य स द्रुतम् ॥
स्त्रीपुत्रमुखमालोक्य भ्रान्तस्तत्सन्निधौ गतः ॥ १८० ॥

आलिंग्य भार्यां पुत्रं च प्राह भ्रान्तोऽभवं क्षणम् ॥
किमर्थमागता यूयं किं कार्यं ब्रूत वोऽत्र तु ॥ ८१ ॥

एवं स विस्मितः साकं तैर्जगाम स्वमन्दिरम् ॥
विदित्वा सर्ववृत्तान्तं पतितः शङ्कितोऽभवत् ॥ ८२ ॥

अत्रान्तरे नागरिका लोका आसन्त्सकौतुकाः ॥
ऊचुस्ते विस्मिताश्चित्रमत्राभिनवमीक्षितम् ॥ ८३ ॥

त्रिविक्रमोऽपि चकितः स्थितो यो गुरुसन्निधौ ॥
विनयावनतोऽपृच्छत्सावधानमनाः शृणु ॥ ८४ ॥

त्रिविक्रमः प्राह गुरो संशयोऽयं महान्मम ॥
कृपां कुरुष्व यत्पृच्छे स्वामिंस्तदवधारय[1] ॥ ८५ ॥

त्युक्तः स घटाम्बुना तं स्नापयामास। ततो विभूतिक्षालनात्सर्वं विस्मृत्य भ्रान्तः स्त्रीपुत्रमुखं विलोक्य तानालिंग्याह। क्षणं भ्रान्तोऽभवम्। किमर्थं यूयगमागताः। किं कार्यं ब्रूत। एवं विस्मितः स तैः सह गृहं गत्वा वृत्तं श्रुत्वा चकितोऽभूत् ॥७८-८२॥ विस्मिताः सकौतुका लोका ऊचुश्चित्रमिदमिति। त्रिविक्रम आह। गुरो, मे महासंशयः। कृपां कृत्वा

---

१ शृणु.

जातिहीनेऽपि पतिते स्वामिन्ज्ञानं त्वयाऽऽहितम्[1] ॥
अङ्गक्षालनमात्रेण कथं नष्टं तु तत्क्षणात् ॥ ८६ ॥

विस्तरात्कथयस्वेदं कृपां कृत्वा ममोपरि ॥
इत्थं स भक्तिभावेन श्रीगुरोश्चरणेऽग्रहीत् ॥ ८७ ॥

इति त्रिविक्रमेणोक्तः श्रीगुरुः प्राह तं शृणु ॥
क्षिप्तं भस्मार्पितं ज्ञानं विनष्टं क्षालनेन तत् ॥ ८८ ॥

एवं विभूतेर्महिमा न सीमा तस्यात ईशोऽपि च तां बिभर्ति ॥
महात्मनो हस्तसरोजयोगात्करोति सा ब्रह्ममयं प्रपञ्चम् ॥८९॥

इत्थं स च श्रीगुरुवक्त्रपद्माद्विनिःसृतां वाक्यसुधां निषेव्य ॥
त्रिविक्रमः प्राह वदस्व देवगुर्वीश माहात्म्यमहो विभूतेः १९०

सोऽपि त्रिविक्रमयतिं प्रति भूतिधृत्याः[2]
प्रीत्याऽब्रवीत्सुमहिमानमनुत्तमाग्र्यम् ॥
श्रीसद्गुरुस्तमखिलेष्टदमाह बुद्धः
सिद्धः स्वशिष्यमपि विस्तरतो विशुद्धः ॥ ९१ ॥

शृणु । जातिहीनायापि दत्तं ज्ञानं क्षणात्कथं नष्टम् ॥८३-८६॥ तन्मे शंसेति पदे दधौ । गुरुः प्राह । भस्म क्षिप्त्वा ज्ञानं दत्तं तत्क्षालनान्नष्टम् । एवं तन्महिमा । शिवोऽपि यद्धत्ते । महात्मकरस्पर्शात्तत्प्रपञ्चं ब्रह्म कुर्यात् । तच्छ्रुत्वा त्रिविक्रम आह । भस्ममाहात्म्यं वद । श्रीगुरुस्तन्मा-

---

१ दत्तम् २ धारणस्य.

कथाऽग्रतः पावनपावनी सा सिद्धेन चोक्ताऽपि सरस्वती ताम् ।
स्वभाषया वक्ति तया प्रसीदेद्द्[1]द्रं[2]व्यक्रियाकार[3]कचेत[4]नात्मा[5] १९२

(इति)श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्यगङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञितमहाराष्ट्रभाषान्वितगुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वतीयतिविरचितायां श्रीगुरुसंहितायां कर्मकाण्डेऽष्टाविंशः (अध्यायः) ॥

॥ आदितः श्लोकाः ॥ ३००० ॥

हात्म्यमाहेति सिद्धो विस्तरान्नामधारकमाह ॥८७-९१॥ कथाऽग्रतःपावन० ॥१९२॥ इति चूर्णिकायां अष्टाविंशोऽध्यायः ॥

॥ इति अष्टाविंशोऽध्यायः ॥ २८ ॥

---

१ पृथिव्यादीनि २ इंद्रियाणि ३ देवाः ४ बुद्ध्यहंकारौ ५ तदात्मकस्तत्प्रेरको वा.

## ।। अथ एकोनत्रिंशोऽध्यायः ।। २९ ।।

श्रीगणेशा० ।। नामधारक ऊचे भोः सिद्ध पूर्वं प्रभाषितम्
त्रिविक्रमाय माहात्म्यं भूतेः श्रीगुरुणाऽमितम् ।। १ ।।

ततः कथं कथा वृत्ता कथयस्व कृपानिधे ।।
चरित्रं सद्गुरोः सिद्धमुने श्रोतुं समुत्सहे ।। २ ।।

एवं शिष्यवचः श्रुत्वा प्रीतः सिद्धमुनिस्तदा ।।
गुरूक्तं भस्ममाहात्म्यं विस्तराद्वक्तुमारभत् ।। ३ ।।

श्रीगुरुः प्राह ते भस्ममहिमानं त्रिविक्रम ।।
कथयिष्यामि सत्पृष्टं सावधानतया शृणु ।। ४ ।।

।। अथ अध्यायसारसंग्रहः ।।

नवद्वययुतेन तेन मुनिना स पृष्टोऽवद-
द्विभूतिमहिमानमानतपदास्त्रपायावदत् ।।
कुमारहरवादमप्यथ स वामदेवो ददौ
गतिं भसितधारणेन विधिवच्च पृथ्वीवरः ।। १ ।।

नामधारक आह। हे सिद्ध, गुरुणा पुरा त्रिविक्रमायोक्तं श्रुतम्। हे कृपाब्धे, ततो वृत्तां कथां कथय। गुरुचरितं श्रोतुमुत्सहे। इति श्रुत्वा सिद्धो गुरूक्तं भस्ममाहात्म्यं वक्तुमारेभे। गुरुस्त्रिविक्रममाह। सत्पृष्टम्।

पुरा कृतयुगे योगी वामदेवाभिधो महान् ॥
प्रसिद्धो जगति स्वैरं[1] मुक्तसङ्गश्चचार गाम् ॥ ५ ॥

शुद्धो बुद्धो ब्रह्मवेत्ता गृहदारविवर्जितः ॥
कामक्रोधादिरहितो मुक्तसङ्गश्चचार गाम् ॥ ६ ॥

सन्तुष्टो निःस्पृहो मौनी जटाधारी जितेन्द्रियः ॥
भस्मभूषितसर्वाङ्गो वल्कै[2]र्व्याघ्राजिनाम्बरः ॥ ७ ॥

ईदृङ्मुनिर्महीपृष्ठे नानाक्षेत्राणि पर्यटन् ॥
क्रौञ्चारण्यं ययौ यत्र न सञ्चारो नृणां खलु ॥ ८ ॥

तस्मिन्स्थानेऽवसद्ब्रह्मराक्षसोऽतिभयानकः ॥
अतिक्रूरः स [3]पुंपश्वाद्यनेकप्राणिभक्षकः ॥ ९ ॥

तस्मिन्घोरवने शान्तं वामदेवं महामुनिम् ॥
दृष्ट्वा तमत्तुमसुरः क्षुधितः प्राप सत्वरः ॥ १० ॥

सावधानेन शृणु । पुरा कृतयुगे वामदेवयोगी मुक्तसङ्गः स्वैरं चचार । शुद्धो बुद्धो ज्ञोऽसङ्गः कामादिहीनो मुक्तस्तुष्टोऽस्पृहो मौनी जटी भस्मलिप्तो वल्कलाजिनधृक्स भ्रमन्यत्र न नृसंचारस्तत्क्रौञ्चवनं प्राप ॥ १-८ ॥ तत्र घोरः क्रूरो नृपश्वादिभक्षको ब्रह्मराक्षसोऽभूत्स तत्रागतं महामुनिं दृष्ट्वा क्षुधितः शीघ्रं तमत्तुं दन्तान्खादयित्वा मुखं प्रसार्यात्तुं प्राप । निःशङ्को

---

१ स्वच्छंदं २ वल्कलं ३ पुरुषः.

[1]व्यादाय वदनं ग्रासो रणद्दन्तश्च कोपनः ॥
स ब्रह्मराक्षसो वेगात्क्षुधाक्रान्त उपागतः ॥ ११ ॥

वामदेवो महाज्ञानी तिष्ठन्निःशंक आगतम् ॥
ब्रह्मराक्षसमत्युग्रं वीक्ष्यापि न चचाल सः ॥ १२ ॥

लब्धो ग्रासः समीचीन इति सन्तुष्टमानसः ॥
ब्रह्मराक्षस आवेशाद[2]भ्युत्पत्य चकर्ष तम् ॥ १३ ॥

तदा तदङ्गभसितस्पर्शमात्रेण राक्षसः ॥
ज्ञानी भूत्वा स सस्मार पूर्वजातीरनेकशः ॥ १४ ॥

पापं तस्याखिलं दग्धं लब्धं प्राग्जन्मवे[3]दनम् ॥
यथा चिन्तामणिस्पर्शाल्लोहं याति सुवर्णताम् ॥ १५ ॥

वायसोऽपि भवेद्धंसो यथाऽऽगत्य च मानसम् ॥
मर्त्योऽप्यमृतमापीय यथाऽमर्[4]त्यत्वमेति च ॥ १६ ॥

जम्बूनदीं गता याति मृज्जाम्बूनद[5]तां यथा ॥
तथा पापोऽपि पूतोऽभून्मुन्यङ्गस्पर्शमात्रतः ॥ १७ ॥

ज्ञानी वामदेवः प्राप्तमुग्रं दृष्ट्वाऽपि न चचाल। समीचीनो ग्रासो लब्ध इत्यभ्युत्पत्य तं चकर्ष। मुन्यङ्गभस्मस्पर्शाज्ज्ञानी भूत्वा पूर्वजातिस्मरोऽभूत्। स्पर्शस्पर्शाल्लोहं स्वर्णमिव, काको मानससरोगतो हंस इव, जम्बूनदीं गता मृत्स्वर्णमिव पापोऽपि स मुनिस्पर्शाद्विपापोऽभूत् ॥९-१७॥

---

१ प्रसार्य २ उड्डीय बलाज्जग्राह ३ ज्ञानं ४ देवत्वं ५ सुवर्णतां.

सुलभाः सकलाः कामा न सत्पुरुषदर्शनम् ॥
दुर्लभं तत्तु यत्सद्यः प्रकरोति सुपावनम् ॥ १८ ॥

स ब्रह्मराक्षसो घोरः क्षुधा यस्य न वर्ण्यते ॥
तुरङ्गकुञ्जरनरान्खादित्वाऽपि न शाम्यति ॥ १९ ॥

एतादृशी क्षुधा यस्य नैव शाम्यति कर्हिचित् ॥
उदध्युदकपानाच्च तृषा यस्य न शाम्यति ॥ २० ॥

पापिष्ठो राक्षसोऽप्येवं मुन्यङ्गस्पर्शमात्रतः ॥
क्षुधा तृषा च रोषादिः शशामास्य क्षणार्धतः ॥ २१ ॥

ज्ञानी सन् राक्षसः प्राह संलग्नो मुनिपादयोः ॥
त्राहि त्राहि गुरुश्रेष्ठ त्वं साक्षादीश्वरः खलु ॥ २२ ॥

मुनीश घोरसंसारमग्नं तारय तारय ॥
त्वं दाता जगदीशोऽसि कृपाब्धे मां समुद्धर ॥ २३ ॥

तव दर्शनमात्रेण नष्टा मे पापराशयः ॥
जगद्गुरो कृपालो मे पावितोऽद्य दुराशयः[1] ॥ २४ ॥

अन्यत्सर्वं सुलभं सद्दर्शनं दुर्लभं यत्सद्यः पुनाति। नृगजादिभक्षणाद्यस्य क्षुन्न शान्ताऽब्धिपानात्तृट् च, स पापिष्ठः क्षणं मुनिस्पर्शात्क्षुत्तृट्क्रोधादिभिः शान्तो ज्ञानी सन्मुनिपदे धृत्वाऽऽह। त्राहि त्राहि। गुरो, त्वं साक्षादीशः। घोरसंसारमग्नं मां तारय। दातः कृपाब्धे, मामुद्धर। ते दृष्ट्या मे दोषा नष्टाः। कृपालो, मे दुराशयः पावितः। एवं भक्त्या स्तुतः

---

१ दुष्टचित्तं.

एवं मुनीश्वरं भक्त्या तुष्टाव ब्रह्मराक्षसः ॥
स कृपारससम्पूर्णो वामदेवो महामुनिः ॥ २५ ॥

तदा तं राक्षसं प्राह कस्त्वं जन्म क्व ते वद ॥
मनुष्यमात्ररहिते घोरेऽरण्ये कुतः स्थितिः ॥ २६ ॥

एवं मुनिवचः श्रुत्वा नत्वा तं ब्रह्मराक्षसः ॥
करौ सन्धाय विनतो मुनिं प्राह त्रिविक्रम ॥ २७ ॥

महामुने ते कृपया ज्ञानं जातं ममादितः ॥
स्मृता अनन्ताः प्राचीना जातयो[1] मेऽद्य सर्वशः ॥२८॥

तन्मध्ये जन्म तूत्कृष्टं स्मर्यते पञ्चविंशकम् ॥
शृणु स्वामिन्वामदेव तत्प्रकाशोऽद्य दृश्यते ॥ २९ ॥

राजा यवनदेशीयः पञ्चविंशे भवेऽभवम् ॥
दुराचाररतो नित्यं तदाऽहं दुर्जयाभिधः ॥ ३० ॥

बहवो हिंसिता लोकाः प्रजा अपि च पीडिताः ॥
वृताः स्त्रियोऽप्यनेकाश्च मदोन्मत्तेन मे तदा ॥ ३१ ॥

कृपालुर्वामदेवमुनिस्तं प्राह । क्व ते जन्म । नृहीने घोरेऽरण्ये कुतस्तिष्ठसि ॥ १८-२६ ॥ इति श्रुत्वा नत्वा विनतो राक्षस आह । ते कृपयाऽनेक-जन्मज्ञानं जातम् । तत्र पूर्वं पञ्चविंशं जन्मोत्कृष्टं स्मर्यते । यवनदेशीयो दुर्जयाख्यो राजाऽहं दुराचारोऽभवम् । बहुलोका हिंसिताः । प्रजाः

---

१ जन्मानि.

वृताभ्यो व्यतिरिक्ताश्च प्रसह्यानीय चामिताः ॥
एकैकां प्रत्यहं भुक्त्वा त्यक्त्वा सा नेक्षिता पुनः ३२
एकस्मिन्दिवसे त्वेका भुक्ता साऽन्तः पुरे वरे ॥
रुद्धा पुनर्मुखं तस्या न कदापि निरीक्षितम् ॥ ३३ ॥
एवं स्त्रियो मयाऽनन्ता रुद्धा अन्तःपुरे दृढम् ॥
अतिक्रुद्धाश्च ता मह्यं ददुः शापं सदैव हि ॥ ३४ ॥
समस्ता अपि राजानो जिता आनीय तत्स्त्रियः ॥
ताश्चापि मे सकृद्भुक्ता रुद्धा अन्तर्गृहे बलात् ॥ ३५ ॥
रूपवत्यः स्त्रियो या यास्ता आनीताः प्रसह्य हि ॥
द्रव्यदानादिनाऽऽनीता या नायाताश्च ता अपि ॥३६॥
मद्देशीयास्तु ये विप्रास्तेऽपि देशान्तरं गताः ॥
तत्स्त्रियस्तत आनीता भुक्ता उन्मत्ततो बलात् ॥३७॥
पतिव्रताः सुवासिन्यो विधवा अपि चाहृताः ॥
उन्मदेन तु ता भुक्ता भुक्ता अपि रजस्वलाः ॥ ३८ ॥

पीडिताः । मदोन्मत्तत्वेनानेकस्त्रियो वृताः । बलादन्याश्चानीताः । प्रत्यहमेकैका भुक्ता त्यक्ता सा पुनर्न दृष्टा । एकस्मिन्नेव दिवसे भुक्त्वाऽन्तर्गृहे रुद्धास्ताः क्रुद्धा मह्यं शापं ददुः ॥ २७-३४ ॥ सर्वभूपाञ्जित्वा बलात्तत्स्त्रिय आनीय सकृद्भुक्त्वा रुद्धाः ॥ ३५ ॥ रूपवतीः स्त्रियो बलाद्द्रव्यदानेन वाऽऽनीताः । मद्देशीयविप्रा देशान्तरं गतास्ततोऽपि बलात्तत्स्त्रिय आनीय भुक्ताः । साध्वीसुवासिनीरजस्वला अविवाहितकन्याश्चाहृताः ।

---

१ बलात्कारेण.

अविवाहितकन्याश्च बलात्कारेण चाहृताः ॥
एवं समस्तदेशीया दुर्मदेन ह्युपद्रुताः ॥ ३९ ॥

त्रिशतं ब्राह्मणस्त्रीणां क्षत्रस्त्रीणां चतुःशतम् ॥
षट्शतं वैश्यनारीणां सहस्रं शूद्रयोषिताम् ॥ ४० ॥

चण्डालीनामेकशतं पुलिन्दीनां सहस्रकम् ॥
मैन्दस्त्रीणां पञ्चशती रजकीणां चतुःशती ॥ ४१ ॥

अमिता वारवनिता भुक्ता मे मत्तचेतसा ॥
तथापि तृप्तता जाता नैव स्वामिन्कुबुद्धितः ॥ ४२ ॥

एतावतीभिः स्त्रीभिर्मे न जाता कामशान्तता ॥
मद्यपो विषयासक्त उन्मतः सर्वदाऽभवम् ॥ ४३ ॥

एवं मे वर्तमानस्य क्षयरोग उपागतः ॥
स्वामिञ्जहुः परे भूपा मदीयं राष्ट्रमृद्धिमत्[1] ॥ ४४ ॥

एवं मदात्सर्वदेशा उपद्रुताः । विप्राणां त्रिशतानि, नृपाणां चतुःशतानि, विशां षट्शतानि, शूद्राणां सहस्रं, चण्डालानां शतं, पुलिन्दानां सहस्रं, मैन्दानां पञ्चशतानि, रजकाणां चतुःशतानि स्त्रियोऽमिता वाराङ्गनाश्च मत्तेन मया भुक्ताः अथापि कुबुद्धेर्मे न तृप्तिः । आभिर्मद्यपस्य विषयासक्तस्य मे कामशान्तिर्नाभूत् । एवं वर्तमानस्य मे क्षयोऽभूत् ॥ ३६-४४ ॥

---

१ सर्वसमृद्धियुक्तं.

ततोऽकस्मान्मृतिः प्राप्ता यमदूतास्तदाऽऽगताः ॥
ते मां यमपुरं निन्युः सुघोरे नरकेऽक्षिपन् ॥ ४५ ॥

दिव्यवर्षसहस्राणि दशवारं सुदारुणा ॥
मयाऽपि पितृभिः साकं भुक्ता नरकयातना ॥ ४६ ॥

ततोऽग्रतोऽभवज्जन्म विरूपं प्रेतसंज्ञितम् ॥
सहस्रशिश्नयुक्ताङ्गं तत्र कष्टं सुदारुणम् ॥ ४७ ॥

शतानि दिव्यवर्षाणि क्षुत्क्षामः पीडितोऽभवम् ॥
पुनर्यमपथं गत्वा मया भुक्ता सुदुर्गतिः ॥ ४८ ॥

द्वितीयं मम जन्माभूद्व्याघ्राख्यं जीवहिंसकम् ॥
तृतीयं चाजगरकं तुर्यं सालावृकं मुने ॥ ४९ ॥

पञ्चमं मम जन्माभूद्ग्रामसूकरसंज्ञितम् ॥
षष्ठं जन्म ततो जातं शरठाख्यं शठस्य मे ॥ ५० ॥

श्वजन्म सप्तमं जातं जम्बूकाख्यं ततोऽष्टमम् ॥
नवमं हारिणं जन्म दशमं शशजन्म च ॥ ५१ ॥

परैर्ऋद्धं राष्ट्रं हृतम्। ततो मृतं मां यमदूता यमपुरं नीत्वा घोरे नरकेऽक्षिपन्। दशवारं दिव्यवर्षसहस्राणि पितृभिः सह दारुणा नरकयातना भुक्ता। ततो दिव्यवर्षशतं विरूपं सहस्रशिश्नाङ्गं क्षुत्क्षामं प्रेतजन्माभूत्पुनर्यमपथं गत्वा दुर्गतिर्भुक्ता। द्वितीयं जीवहिंसकं व्याघ्रजन्माभूत्। तृतीयमाजगरम्। चतुर्थं सालावृकम्। पञ्चमं ग्रामवाराहम्। षष्ठं शरठजन्म। सप्तमं श्वजन्म। अष्टमं जम्बूकजन्म। नवमं हारिणम्। दशमं शशकम्।

एकादशं वानराख्यं द्वादशं चिल्लं[1]जन्म च ॥
मण्डूकाख्यं ततो जन्म वायसं च चतुर्दशम् ॥ ५२ ॥

मम पञ्चदशं जन्म मुने ऋक्षाच्छ[2]संज्ञितम् ॥
आरण्यकुक्कुटाख्यं च षोडशं जन्म मेऽभवत् ॥ ५३ ॥

तथा सप्तदशं जन्म गार्दभं नेत्रवर्जितम् ॥
अष्टादशं समभवज्जन्म मार्जारसंज्ञितम् ॥ ५४ ॥

पुनर्मण्डूकजन्माभून्मम चैकोनविंशकम् ॥
विंशं वायसकं चैकविंशं मे मत्स्यसंज्ञितम् ॥ ५५ ॥

द्वाविंशकं मूषकं मे जन्माभूद्धान्यतस्करम् ॥
दिवान्धं घूकजन्मापि त्रयोविंशकमाभवत् ॥ ५६ ॥

चतुर्विंशकजन्मापि कौञ्जरं[3] तामसं मम ॥
पञ्चविंशे भवे त्वस्मिन्नभवं ब्रह्मराक्षसः ॥ ५७ ॥

नक्तंदिवं क्षुधाक्रान्तः कष्टेन महताऽऽवृतः ॥
निराहारोऽरण्यवासी स्वामिन्वर्तामि दुःखितः ॥ ५८ ॥

एकादशं वानरं । द्वादशं चिल्लजन्म । त्रयोदशं माण्डूकम् । चतुर्दशं वायसम् । पञ्चदशं ऋक्षजन्म । षोडशमारण्यकुक्कुटम् ॥ ४४-९३ ॥ सप्तदशं गार्दभमन्धम् । अष्टादशं मार्जारम् । ततो मण्डूकजन्म । विंशं वायसम् । एकविंशं मात्स्यम् । द्वाविंशं मूषकम् । त्रयोविंशं दिवान्धजन्म । चतुर्विंशं कौञ्जरम् । पञ्चविंशेऽस्मिन्ब्रह्मराक्षसोऽभवम् । अहोरात्रं कष्टा-

---

१ घार २ भल्लूकः ३ हस्तिजन्म.

अवलोक्यैव दुर्बुद्धिस्त्वामत्तुमिह चागतम् ॥
त्वां हन्तुं पापरूपोहमधावमतिवेगतः ॥ ५९ ॥

तवाङ्गस्पर्शनादेव जातिस्मरणमागतम् ॥
स्वामिन्त्सहस्रजन्मोत्थं दुष्कृतं मेऽद्य दृश्यते ॥ ६० ॥

अतःपरं जन्म माऽस्तु त्वदनुग्रहतस्तरे ॥
मां घोरध्वान्तसंसारयातनातः समुद्धर ॥ ६१ ॥

त्वं विश्वतारको दैवात्सङ्गतो[१]ऽसीह मे मुने ॥
माहात्म्यं ते पदस्येदं यत्स्पर्शाज्ज्ञानमुद्गतम् ॥ ६२ ॥

भूमौ बहुनराः सन्ति भगवांस्त्वं न तादृशः ॥
तवाङ्गस्य च माहात्म्यं दयया कथय प्रभो ॥ ६३ ॥

महापापो दुराचारस्तिष्ठामीह वनान्तरे ॥
त्वदङ्गसङ्गमात्रान्मे ज्ञानमीदृक्कुतोऽभवत् ॥ ६४ ॥

र्दितः निराहारोऽरण्यवासी दुःखितस्त्वां दृष्ट्वाऽत्तुं वेगादेत्य ते स्पर्शाज्जातिस्मरोऽभवम्। स्वामिन्सहस्रजन्मपापं नष्टम्। इतःपरं जन्म माऽस्तु घोरसंसारात्समुद्धर। मुने, त्वं तारको दैवात्सङ्गतोऽसि। यत्स्पर्शाज्ज्ञानं जातमीदृक्ते पदमाहात्म्यम् ॥ ५४-६२ ॥ भगवंस्त्वं सामान्यनृवन्न तेऽङ्गमाहात्म्यं दयया कथय। पापो दुराचारोऽपि तेऽङ्गस्पर्शाज्ज्ञानी

१ प्राप्तोऽसि.

कोऽयं तवाङ्गमहिमा त्वं वेह जगतीश्वरः ॥
स्वामिन्नस्मान्त्समुद्धर्तुमागतोऽसीति भाति मे ॥ ६५ ॥

इत्युक्तो राक्षसेनाह वामदेवोऽतितोषतः ॥
महिमाऽनुत्तमो रक्षो मदङ्गस्थस्य भस्मनः ॥ ६६ ॥

सर्वाङ्गं भस्मलिप्तं मे तत्किञ्चिद्वपुषीह ते ॥
लग्नं तेनाभवज्ज्ञानं ज्ञापकं बहुजन्मनाम् ॥ ६७ ॥

अपारो भस्ममहिमा ब्रह्मादीनामगोचरः ॥
यत्तु कर्पूरगौरेण कृतं सर्वाङ्गभूषणम् ॥ ६८ ॥

नृणामशक्यं तद्वक्तुमीशेनाङ्गीकृतं तु यत् ॥
स एव व्योमकेशस्तन्माहात्म्यं वेद शङ्करः ॥ ६९ ॥

यदि पृच्छसि मां त्वं ते दृष्टान्तं कथयाम्यहम् ॥
भस्मनोऽपारमाहात्म्यं मया दृष्ट्याऽपि वीक्षितम् ॥७०॥

कश्चन द्राविडो विप्रः सदाचारविवर्जितः ॥
सदा शूद्रीरतो भूत्वा कर्मभ्रष्टो ह्यवर्तत ॥ ७१ ॥

अभवम्। कोऽयं महिमा। स्वामिंस्त्वमीशोऽस्मानुद्धर्तुं प्राप्तोऽसीति भाति। तुष्टो वामदेव आह। मेऽङ्गस्थभस्ममहिमाऽयम्। सर्वाङ्गं भस्मलिप्तम्। किञ्चित्ते देहे लग्नं तेनानेकजन्मज्ञापकं ज्ञानं जातम्। भस्ममहिमा ब्रह्मादीनामगोचरः। यच्छिवेनाङ्गभूषणं कृतं तन्माहात्म्यं नृणां वक्तुमशक्यम्। शिव एव तद्वेत्ति। अपारं भस्ममाहात्म्यमत्रैकं निदर्शनं शृणु। कश्चित्कर्म-

समस्तैर्ब्राह्मणैर्विप्रो भ्रष्टः स च बहिष्कृतः ॥
तन्मातापितृदायादबन्धुवर्गैश्च हापितः ॥ ७२ ॥

ब्राह्मणब्रुव एवं स ख्यात आचारवर्जितः ॥
शूद्रीं वृत्वा तया साकं रमन्कालमनीनयत् ॥ ७३ ॥

एवं पापो दुराचारश्चौर्येणैवोदरंभरिः[1] ॥
सोऽरीरमत्परस्त्रीभिश्चान्याभिर्व्यभिचारतः ॥ ७४ ॥

एवं सत्येकदिवसे व्यभिचारार्थमुद्यतम् ॥
तं चौर्यनिपुणं विप्रं शूद्रोऽहन्निशि कश्चन ॥ ७५ ॥

म्रियमाणं तु तं विप्रं निष्कास्य गृहतो बहिः ॥
तत्याज पतितो ग्रामाद्बहिर्घोरस्थले स च ॥ ७६ ॥

अवलोक्य मृतप्रायं तमत्तुं श्वा तदैव हि ॥
भस्मराशिस्थितः प्राप क्षुधितस्तत्तनूपरि ॥ ७७ ॥

कुक्षिलग्नं शुनो भस्म ललाटे तस्य वक्षसि ॥
बाह्वोर्द्वयोश्च संलग्नं म्रियमाणस्य दैवतः ॥ ७८ ॥

भ्रष्टो दुराचारो द्राविडविप्रः शूद्रीरतोऽभूत् ॥ ६३-७२ ॥ स विप्रैर्बहिष्कृतः बान्धवैः पितृभ्यां च हापितोऽपि शूद्रीं वृत्वा तयाऽरीरमत्स पापो दुराचारश्चौर्येणोदरंभरिरेकदा निशि व्यभिचारार्थमुद्युक्तोऽभूत्स शूद्रेण हत्वा ग्रामाद्बहिर्घोरस्थाने निष्कासितः । तं मृतप्रायं दृष्ट्वा भस्मराशिस्थो क्षुधितः श्वा विलोक्यात्तुं प्राप ॥ ७३-७७ ॥ श्वकुक्षिलग्नं भस्म म्रियमाणस्य मूर्धवक्षोबाहुषु

---

१ पोषकः.

प्राणप्रयाणसमये तस्याप्ता यमकिङ्कराः ॥
बद्ध्वा सन्ताड्य तं नेतुं यमलोकं समुद्यताः ॥ ७९ ॥

कैलासाच्छिवदूताश्च वीक्ष्य तं भस्मभूषितम् ॥
कैलासवासयोग्यं च प्रोचुः कोऽमुं नयेत्कुह ॥ ८० ॥

योग्यं शिवपुरं त्वस्य दुर्गतिर्यमकिङ्कराः ॥
कुतोन्वस्येति कुपिताः शैवास्तान्हन्तुमागताः ॥ ८१ ॥

शिवदूतान्त्समायातान्दृष्ट्वा त्यक्त्वा द्विजं हि ते ॥
यमदूतास्ततो भीता द्रुता यमपुरं गताः ॥ ८२ ॥

गत्वा यमस्य पुरतः प्रोचुर्भुवि न नो गतिः ॥
सुघोरं पापमानेतुं गता अद्य भुवं यम ॥ ८३ ॥

दृष्ट्वा नः शिवदतास्ते धावन्तो हन्तुमाययुः ॥
बलाद्गृहीत्वा तं पापं बद्धमस्मान्त्समुद्यताः ॥ ८४ ॥

इतः परं गतिः का नो मर्त्यलोके कथं गतिः ॥
निघ्नन्ति शिवदूता नो वयं ते यम किंकराः ॥ ८५ ॥

लग्नम् ॥७८॥ मृत्युसमये यमदूता एत्य तं बद्ध्वा सन्ताड्य यमलोकं नेतुमुद्युक्तास्तावच्छिवदूता दृष्ट्वैत्य भस्मलिप्तं कैलासार्हं के क नयन्तीति कुपिताः शिवपुरमस्य योग्यं न दुर्गतिरिति तान्हन्तुं प्रवृत्ताः ॥ ७९-८१ ॥ तदा ते तं त्यक्त्वा भीता यममेत्योचुर्भुवि नो न गतिः । घोरपापमानेतुं गतान्नो दृष्ट्वा शिवदूता एत्य बलात्तं गृहीत्वा नो बद्धुमुद्यता इतः परं नृलोके कथं

इति दूतवचः श्रुत्वा कुपितो निर्गतो यमः ॥
स संत्वरो दण्डधरो हरदूतानुपागतः ॥ ८६ ॥

शिवदूतान्यमः प्राह कुतो मे किंकरा हताः ॥
कुतः प्रेतः परिहृतः कैलासार्हः किमेष तु ॥ ८७ ॥

अस्य तु प्रबलं पापं यावन्त्यो गाङ्गवालुकाः ॥
ततोऽप्यस्याधिकं पापं घोररूपोऽयमीदृशम् ॥ ८८ ॥

नायं शिवपुरार्होऽमुं विमानमुपवेश्य च ॥
कैलासं नेतुमुद्युक्ता मौढ्यादिति रुषाऽवदत् ॥ ८९ ॥

इति श्रुत्वा यमवचः शिवदूताः सविस्तरम् ॥
प्राहुरस्य ललाटेऽस्ति भस्मलाञ्छनमुत्कटम् ॥ ९० ॥

वक्षःस्थले बाहूमूले तथैव मणिबन्धयोः ॥
भस्म लग्नं विलोक्यापि कथं नेतुं समुद्यताः ॥ ९१ ॥

अस्माकमीश्वराज्ञाऽस्ति भस्माङ्कितनुर्नरः ॥
आनेतव्यः प्रयत्नेन कैलासस्तस्य शाश्वतः ॥ ९२ ॥

गतिः। शिवदूता हन्तीति श्रुत्वा कुपितो यमः शीघ्रं तानेत्याह। कुतः किङ्करा हताः प्रेतश्च हृतोऽयं कैलासार्हः किम्। नदीवालुकाधिकमस्य पापं। घोरोऽयं शिवपुरार्हः किम्। कथं विमाने उपवेश्य मौढ्यान्नयतेति श्रुत्वा त ऊचुरस्य शीर्षादिषु भस्म लग्नमेवं विलोक्यापि ते दूताः कथं नेतुं प्रवृत्ताः ॥ ८२-९१ ॥ ईशाज्ञा तु भस्माङ्कितः कैलासमानेतव्यः

---

१ त्वरया सहितः.

ललाटे यस्य भस्मामी तं नेतुं कथमागताः ॥
वध्या अपि तदैवेमेऽस्माभिर्धर्मेण मोचिताः ॥ ९३ ॥

इत ऊर्ध्वं निजान्दूतांस्त्वं सद्बुद्धिमुपादिश ॥
भस्मदिग्धा[1] नरा ये ते न दण्ड्या अपि पापिनः ॥ ९४ ॥

भस्माङ्कितनरान्दोषा न स्पृशन्ति कदाचन ॥
स्वर्गार्हा इति ते शैवा दूता ऊचुर्यमं प्रति ॥ ९५ ॥

शिवदूतवचो धर्म्यं श्रुत्वा धर्मः परीत्य च ॥
समाहूय निजान्दूतान्यमो वचनमब्रवीत् ॥ ९६ ॥

दूताः शृणुत मे वाक्यं ये तु भस्माङ्किता भुवि ॥
भवद्भिर्दूरतस्त्याज्याः शैवास्ते मानवा भवाः ॥ ९७ ॥

अनेकदोषैरपि ये सुतरां दूषिताश्च ते ॥
त्याज्या यमपुरानर्हा ये त्रिपुण्ड्रविभूषिताः ॥ ९८ ॥

गले रुद्राक्षमालाऽस्य भाले भस्मत्रिपुण्ड्रकाः ॥
वर्जनीया हि ते दूराच्छिवस्याज्ञेयमादृता[2] ॥ ९९ ॥

शाश्वतोऽयं तस्य लोक इति। भस्माङ्कितमानेतुं ते दूताः कथमागताः। वध्या अपि ते धर्मेण मोचिताः। अतो दूतान्सन्मतिमुपादिश। पापा अपि भस्मलिप्ता न दण्ड्याः। कदापि तान्दोषा न स्पृशन्ति। ते स्वर्गार्हा इति यमो धर्म्यं वचः श्रुत्वा स्वदूतानाह। भस्माङ्किताः शैवा दूरतस्त्याज्याः। तेऽनेकदोषदूषिता अपि न मत्पुरार्हाः। रुद्राक्षत्रिपुण्ड्रधारिणो

---

१ लिप्ताः २ आदरेण गृहीता.

वामदेवोऽवदद्रक्षो विभूतेर्महिमा त्वयम् ॥
मया भक्त्या धृता देहे देवानामपि दुर्लभा ॥ १०० ॥
पश्येश्वरप्रियां भूतिं भक्तियुक्तः सदाशिवः ॥
बिभर्तीशाऽऽदृतायाः को माहात्म्यं वक्तुमीश्वरः[1] ॥ १ ॥
इत्युक्तो वामदेवेन तं नत्वा राक्षसोऽवदत् ॥
मामुद्धर जगज्जीव वामदेव त्वमीश्वरः ॥ २ ॥
सहस्रजन्मस्मृतिदौ तव पादौ मयेक्षितौ ॥
किञ्चित्कृतं मया पुण्यं जाता ते तेन सङ्गतिः ॥ ३ ॥
राज्ये प्रतिष्ठितेन प्राङ्मया पुण्यं कृतं स्मृतम् ॥
वाप्यो बद्धा वने दत्ता ब्राह्मणेभ्यश्च वृत्तयः ॥ ४ ॥
एतत्पुण्यं मया चीर्णं पञ्चविंशे तु जन्मनि ॥
अन्ये दोषा अगणिताः कृता राज्यभरेण मे ॥ ५ ॥
नीत्वा मां प्रेतं[2]मामन्त्र्य चित्रगुप्तेन धर्मराट् ॥
यमोऽपृच्छच्चित्रगुप्तस्तदेतत्पुण्यमब्रवीत् ॥ ६ ॥

रुद्राज्ञया दूरतस्त्याज्या इति। हे राक्षसायं भस्ममहिमा। भक्त्या मे तद्धृतम्। देवानां दुर्लभम् ॥ ९२-१०० ॥ यत्सदा प्रीत्या शिवो धत्ते तन्माहात्म्यं वक्तुं कः शक्तः ॥१॥ राक्षस आह। हे जगज्जीवन वामदेव, मामुद्धर। त्वमीशोऽसि। अनेकजन्मस्मृतिदौ ते पादौ दृष्टौ। प्राक्पुण्येन ते सङ्गतिः। पुरा राज्ये कृतं पुण्यं स्मृतम्। वने वाप्यो बद्धाः। विप्रेभ्यो वृत्तयो दत्ताः। अन्येऽगणिता दोषाः कृताः। मृतं मां नीत्वा चित्रगुप्तेना-

---

१ समर्थः २ मृतं.

३१

तदा यमोऽपि मां प्राह पुण्यमेतत्तवास्ति तत् ॥
फलिष्यत्यागामिपञ्चविंशे जन्मनि वा इति ॥ ७ ॥

तत्पुण्यफलमेतद्धि त्वत्पादकमलेक्षणम् ॥
कुरु स्वामिन्ममोद्धारं वामदेव जगद्गुरो ॥ ८ ॥

भस्मनो महिमा कीदृग्विधानं धारणस्य किम् ॥
विस्तरेण स्फुटीकृत्य कथयस्व महामुने ॥ ९ ॥

वामदेवोऽवदद्ब्रह्मराक्षसं शृणु सादरम् ॥
विभूतिधारणविधिं विस्तरेण वदामि ते ॥ ११० ॥

एकदा मन्दरधरे क्रीडार्थं गिरिजापतिः ॥
गतः कोटिगणैर्युक्त उपविष्टोऽग[1]मूर्धनि ॥ ११ ॥

त्रयस्त्रिंशत्कोटिदेवसहितो देवरा[2]डगात् ॥
युक्तो यमाग्निवरुणसमीरणधनाधिपैः ॥ १२ ॥

मंत्र्य यम एतत्पुण्यमाहैष्ये पञ्चविंशे जन्मनि फलिष्यतीति । तत्पुण्यफलात्ते पादौ दृष्टौ । स्वामिन्मामुद्धर । जगद्गुरो, कीदृक्भस्मधारणविधानं स्पष्टं विस्तरात्कथय । वामदेव आह । भस्मधारणविधिं वच्मि शृणु ॥२-११०॥ एकदा मन्दराद्रौ क्रीडार्थं कोटिगणयुक्शिव आगतः । त्रयस्त्रिंशत्कोटिदेवयुक्तेंद्रो दिक्पालाश्चागताः । चित्रसेनादिगन्धर्वा यक्षखेचरपन्नगविद्याधरकि-

---

१ पर्वतशिखरे २ इन्द्रः.

चित्रसेनादिगन्धर्वैर्यक्षैः खेचरपन्नगैः ॥
विद्याधरैः किंपुरुषैः सिद्धैः साध्यैश्च गुह्यकैः ॥ १३ ॥

वसिष्ठो नारदश्चागाद्देवाचार्यो बृहस्पतिः ॥
अर्यमा पितृभिः साकं ययावीश्वरसन्निधिम् ॥ १४ ॥

विमलं चाप्यृषिकुलं दक्षाद्या अपि मानसाः ॥
उर्वश्याद्यप्सरोवर्गो ययावीश्वरसन्निधिम् ॥ १५ ॥

आदित्या द्वादशाष्टौ च वसवः सप्तमातृभिः ॥
सहिता चण्डिका देवी ययावीश्वरसन्निधिम् ॥ १६ ॥

उभावप्यश्विनौ देवौ विश्वेदेवास्त्रयोदश ॥
तथा मरुद्गणश्चापि ययावीश्वरसन्निधिम् ॥ १७ ॥

महाकालो महानीलो भूतपो नन्दिकेश्वरः ॥
यष्टिभृत्पार्षदयुगं ययावीश्वरसन्निधिम् ॥ १८ ॥

मणिभद्रो वीरभद्रो देवमान्यो वृकोदरः ॥
षट्कर्णः शङ्खकर्णश्च ययावीश्वरसन्निधिम् ॥ १९ ॥

म्पुरुषसिद्धसाध्यगुह्यकाः बृहस्पतिर्नारदो वसिष्ठोऽर्यमा पितृभिः सह ऋषयो मानसा दक्षाद्या उर्वश्याद्यप्सरस आदित्यविश्ववसवो मातृभिः सह चण्डिकाश्विनौ मरुद्गणो महाकालो महानीलो भूतेशो नन्दिकेशो यष्टिधरौ च। मणिभद्रो वीरभद्रो वृकोदरः षट्कर्णः शंखकर्णः ॥ ११-१९ ॥ कुम्भो-

कुम्भोदरो मन्दतुन्दो[1] विकटः कर्णधारकः ॥
धारकेतुर्महावीरो ययावीश्वरसन्निधिम् ॥ १२० ॥

भृङ्गीरटो भूतनाथो नानावर्णाङ्गरूपधृक् ॥
प्रमथाख्यो रुद्रगणो ययावीश्वरसन्निधिम् ॥ २१ ॥

शृणु विस्तरतो वक्ष्ये गणरूपाण्यनेकधा ॥
गणाः केचित्कृष्णवर्णाः पीतश्वेतास्त्र[2]धूम्रभाः ॥ २२ ॥

केचिद्धरितवर्णाश्च केचिच्चित्रविचित्रभाः ॥
मण्डूकवर्णाश्च गणा रुद्रस्य च समागताः ॥ २३ ॥

नानायुधाश्च नानास्त्रा नानावाहनभूषणाः ॥
केचन व्याघ्रवदनाः सूकरास्या गजाननाः ॥ २४ ॥

केचिच्च नक्रवदनाः केचन श्वमृगाननाः ॥
ऊर्ध्वाननाः केचनापि केचिच्च शरभाननाः ॥ २५ ॥

सिंहाननाः केचनापि केचिच्चिल्लबकाननाः ॥
वदनेनापि हीनाश्च गणाश्च ह्यानना ययुः ॥ २६ ॥

दरो मन्दोदरो विकटः कर्णधारो धारकेतुर्भृङ्गीरटो भूतनाथो नानावर्णाङ्गरूपाः प्रमथाः ॥ २०-२१ ॥ तान् शृणु। केचित्कृष्णाः पीताः श्वेता रक्ता हरिता धूम्रा विचित्रा मण्डूकाभाः नानास्त्रवाहनभूषणाः केचित व्याघ्रमुखाः वराहगजनक्रश्वमृगमुखाः ऊर्ध्वमुखाः केचिच्छरभसिंहचिल्लबकमुखा अमुखाश्च ॥ २२-२६ ॥ एकद्वित्रिचतुर्मुखा अनेकमुखाः।

---

१ मंदोदर २ रक्त.

केचनाप्येकवदनाः केचिच्च चतुराननाः ॥
केचनानेकवदनाश्चतुर्हस्ताश्च केचन ॥ २७ ॥

एकहस्ता द्विहस्ताश्च पञ्चहस्ताश्च षट्कराः ॥
पादहीनाः केचनापि बहुपादाश्च केचन ॥ २८ ॥

कर्णहीनाः केचनापि बहुकर्णाश्च केचन ॥
एककर्णा अपि गणा गणशस्तत्र चागताः ॥ २९ ॥

केचनाप्येकनयना अनेकनयना अपि ॥
केचित्स्थूलाश्च कुब्जाश्च गणशस्तत्र चागताः ॥ १३० ॥

एवं गणैश्च सहितः परमात्मैव मूर्तिमान् ॥
सिंहासने तूपविष्टो यत्र सप्तप्रभालयः ॥ ३१ ॥

आद्या प्रभावली रक्ताऽनुपमा रत्नरञ्जिता ॥
रत्नमध्या तया भाति सिंहासनमुमापतेः ॥ ३२ ॥

प्रभावलिर्द्वितीया तु सुपीता स्वर्णनिर्मिता ॥
रत्नमध्या तया भाति सिंहासनमुमापतेः ॥ ३३ ॥

प्रभावलिस्तृतीया तु नीलवर्णोज्ज्वलाऽमला ॥
रत्नमध्या तया भाति सिंहासनमुमापतेः ॥ ३४ ॥

एकद्वित्रिचतुःपञ्चषट्कराः । अपदाः बहुपदाः अकर्णा अनेककर्णा एककर्णाः ॥ २७-२९ ॥ केचिदेकनयना अनेकनयनाश्च । स्थूलाः कुब्जाः । एवमेभिर्गणैर्युक्तो मूर्तिमद्ब्रह्मैव शिवः सप्तप्रभावलियुक्तसिंहासने स्थितः । आद्या रक्ता रत्नानुरञ्जिता प्रभावलिः । द्वितीया स्वर्णनिर्मिता पीता । तृतीया नीलोज्ज्वला । चतुर्थी शुभ्राऽब्जमण्डिता । पञ्चमी वैडूर्याभा मुक्ता-

प्रभावलिश्चतुर्थी तु शुभ्रवर्णाब्जमण्डिता ॥
रत्नमय्या तया भाति सिंहासनमुमापतेः ॥ ३५ ॥

प्रभावलिः पञ्चमी तु वैडूर्याभा समौक्तिका ॥
रत्नमय्या तया भाति सिंहासनमुमापतेः ॥ ३६ ॥

षष्ठी च सप्तमी चापि सुरत्नैस्त्वष्टृनिर्मिता[1] ॥
रत्नमय्या तया भाति सिंहासनमुमापतेः ॥ ३७ ॥

सिंहासने त्वीदृशे स त्रिपुरारिरुपाविशत् ॥
देदीप्यमानः कोटयर्कतेजसा भ्राजतेतराम् ॥ ३८ ॥

महाप्रलयकाले तु यथा सप्तापि चार्णवाः ॥
एकीभूता हि गर्जन्ति तथा गर्जति यो हि तम् ॥३९॥

ज्वालामाली वह्निरस्य भालेक्षि स जटाधरः ॥
कपाली षोडशकलचन्द्रभूषः सदाशिवः ॥ १४० ॥

वासुकिर्दक्षिणे कर्णे तक्षकोऽन्यत्र कुण्डलम् ॥
उभयोर्लोचने रत्नदीप्तिर्भातितरां तयोः ॥ ४१ ॥

ञ्चिता। षष्ठी सप्तमी च रत्नजडिता विश्वकर्मघटिता। आभिः सिंहासनं भातम्। ईदृक्सिंहासने कोट्यर्कभो देदीप्यमानस्त्रिपुरारी रेजे। प्रलयैकीभूतसप्ताब्धिगर्जनः ॥ ३०-३९ ॥ ज्वालामाली वह्निभालाक्षो जटाधृक्पूर्णचन्द्रभूषणः। यन्नेत्रेषु रत्नदीप्तिस्तौ वासुकितक्षकौ यद्दक्षिणवामकर्ण-

1 विश्वकर्मा.

नीलकण्ठो नागहाराभरणः सर्पकङ्कणः ॥
अङ्गुलीष्वपि सर्वासु सर्पमय्यश्च मुद्रिकाः ॥ ४२ ॥

यन्मेखला सर्पमयी वैय्याघ्रं चर्म चाम्बरम् ॥
कर्पूरगौर आभाति स्वकान्त्या दर्पणोपमः ॥ ४३ ॥

कर्कोटकमहापद्मौ नूपुरे यस्य पादयोः ॥
निष्कलङ्कपूर्णचन्द्रसमानवदनो बभौ ॥ ४४ ॥

कर्पूरगौरमिति यं नित्यं ध्यायन्ति योगिनः ॥
उपविष्टः पशुपतिः स साक्षाद्भक्तवत्सलः ॥ ४५ ॥

मूर्ध्नि सद्रत्नजडितमुकुटः कुण्डलाञ्चितः ॥
नागेन्द्रहार उरसि प्रबभौ स महेश्वरः ॥ ४६ ॥

सर्पवेष्टित आभाति नीलकण्ठो मनोहरः ॥
यस्य सर्वाङ्गभूषाश्च सर्पमय्यः स ईश्वरः ॥ ४७ ॥

अर्चितः शुभ्रकमलैश्चन्दनेनानुलेपितः ॥
कर्पूररञ्जित इवाभाति सत्पतिरीश्वरः ॥ ४८ ॥

कुण्डले । नीलकण्ठो नागाभरणः सर्पकङ्कणोऽङ्गुलिगतसर्पमुद्रः सर्पमेखलो व्याघ्रचर्मधृग्दर्पणाभः कर्पूरगौरः कर्कोटकमहापद्मनूपुरो निष्कलङ्कचन्द्रमुखो योगिध्येयः । पशुपतिर्भक्तवत्सलो रत्नजडितकुण्डलान्वितमुकुटधृङ्नागहारः सर्पवेष्टितो नीलकण्ठः । सर्पमयसर्वाङ्गभूषणः शुभ्रकमलार्चितश्चन्दनालिप्तः कर्पूररञ्जितः ॥ ४०-४८ ॥ सायुधभुजङ्गसारदशबाहुयुक्तः

भुजङ्गसारैर्दशभिर्भुजैरायुधमण्डितैः ॥
उपविष्टः सभामध्ये भाति सत्पतिरीश्वरः ॥ ४९ ॥

त्रिशूलायुधमेकस्मिन्द्वितीये डमरुः करे ॥
तृतीये तीक्ष्णखड्गः स भाति सत्पतिरीश्वरः ॥१५०॥

चतुर्थे पानपात्रं च चापबाणौ तथाऽन्ययोः ॥
खट्वाङ्गपरशू चान्यहस्तयोरङ्कुशोऽन्यके ॥ ५१ ॥

अन्यस्मिन्नपि हस्ते च मृग एवं पिनाकधृक् ॥
उपविष्टो बभौ तत्र दशभिः सायुधैर्भुजैः ॥ ५२ ॥

सर्वेश्वरस्य पञ्चापि विरेजुर्वदनानि तु ॥
सालङ्कृतानि भास्वन्ति समाधानोऽवधारय ॥ ५३ ॥

शशाङ्को विकलङ्को[1] वा क्षीरफेनचयोऽथवा ॥
तथा भस्मोद्धूलिताङ्गो भाति मन्मथदाहकः ॥ ५५ ॥

एकं सुशुभ्रतिलकं तस्य पश्चिमदिङ्मुखम् ॥
सुशुभ्रवर्णमाभाति सुहासं चन्द्रमौलिकम् ॥ ५६ ॥

॥ ४९ ॥ त्रिशूलडमरुखड्गपानपात्रखट्वाङ्गबाणपरश्वङ्कुशमृगपिनाकधारी रेजे। अस्य सालंकृतभास्वत्पञ्चमुखानि शृणु। निष्कलङ्कचन्द्रदुग्धफेनभो भस्मोद्धूलिताङ्गो मन्मथदाहको नागोपवीती चन्द्रसूर्याग्निलोचनः सर्वेशो विरूपाभो भाति। एकं चन्द्रमौलि सुहास्यं पश्चिमदिङ्मुखं शुभ्रतिलकम्।

१ कलंकरहितः.

उत्तरस्यां दिशि तथा द्वितीयं भाति चाननम् ॥
मनोहरं सुविस्तीर्णं भाति यत्ताम्रवर्णकम् ॥

दाडिमीपुष्पवर्णाभं द्वितीयं तन्मुखाम्बुजम् ॥
प्रातःकालीनतपनमण्डलोपममीशितुः ॥ ५८ ॥

तृतीयं दिशि पूर्वस्यां गङ्गाचन्द्रार्धभूषितम् ॥
जटाजूटधरं भाति वदनं नागवेष्टितम् ॥ ५९ ॥

दंष्ट्राकरालं वदनं दक्षिणस्यां चतुर्थकम् ॥
नीलवर्णं सुविस्तीर्णं शङ्करस्य विभाति तत् ॥ १६० ॥

निर्गच्छन्ति मुखात्तस्माज्ज्वाला ज्वालापतेरिव[1] ॥
तीव्रमूर्तिर्भाति येन भक्ताभयकरस्य तु ॥ ६१ ॥

पञ्चमं वदनं मध्ये व्यक्ताव्यक्तस्वरूपकम् ॥
साकारं च निराकारं सगुणं चापि निर्गुणम् ॥ ६२ ॥

अलक्ष्यमपि यल्लक्ष्यं वदनं यस्य भाति सः ॥
पञ्चवक्त्रः परब्रह्मरूपः सर्वेश्वरोऽपरः ॥ ६३ ॥

द्वितीयं ताम्रं रम्यं दाडिमपुष्पाभमुद्‌गतं प्रातःकालीनार्कमण्डलवद्भाति । तृतीयं पूर्वदिग्गतं चन्द्रार्धभूषितं जटाधरं नागवेष्टितम् ॥ ५०-५९ ॥ चतुर्थं दंष्ट्राकरालं नीलं विस्तीर्णं भाति । यतोऽग्निवज्ज्वाला निर्गता एवं भक्ताभयकरस्य मुखम् । मध्ये पञ्चमं व्यक्ताव्यक्तस्वरूपं साकारं निराकारं सगुणं निर्गुणं लक्ष्यालक्ष्यरूपम् । एवं परब्रह्मरूपः सर्वेश्वरो यत्कण्ठमालाः

---

१ अग्नेः.

कालव्यालादयः सर्पा विरेजुः कण्ठमालिकाः ॥
रक्तारविन्दसदृशे यस्य पादतले उभे ॥ ६४ ॥

यस्य चन्द्रार्धसदृशा आभान्ति नखरा[1] वराः ॥
सर्पालङ्कृतसर्वाङ्ग आभाति परमेश्वरः ॥ ६५ ॥

वैय्याघ्रचर्मवसनाच्छादिताखिलदेहकः ॥
नागबद्धो महादेव आभाति परमेश्वरः ॥ ६६ ॥

गम्भीरावर्तत्रिवलीनाभिर्यस्य समुत्थितम् ॥
तनूरुहं हृत्कपाटे सोऽयं भक्तमनोहरः ॥ ६७ ॥

एवं सिंहासनारूढो रुद्रोऽसौ भक्तवत्सलः ॥
परार्थदो भूषितया पार्वत्या सममीश्वरः ॥ ६८ ॥

सर्वेश्वर्यास्तु पार्वत्याः सौन्दर्यं वागगोचरम् ॥
नानालङ्कारसंयुक्तं रञ्जितं निजतेजसा ॥ ६९ ॥

कालव्यालादयः। यत्पादतले रक्ताब्जसदृशे। चन्द्रार्धसमा नखाः। यः सर्पालङ्कृतो व्याघ्रचर्माच्छन्नो नागबद्धो गम्भीरावर्तत्रिवलिनाभिर्भक्तमनोहरो रोमाञ्चिततनुर्भक्तवत्सलः परमार्थदः पार्वत्या भूषितः ॥६०-६८॥ पार्वत्याः सौन्दर्यं वागगोचरम्। स्वतेजोरञ्जिताऽपि नानालङ्कारयुक्ता।

---

१ नखाः

सुवर्णचम्पकनिभा गौरवर्णविराजिता ॥
मुक्ताहारगला रत्नमुकुटा नागभूषिता ॥ १७० ॥

मुकुटोपरि यस्यास्तु नानापुष्पाणि तत्र च ॥
गायका इव चाभान्ति मत्ता मधुलिहो[1]ऽमिताः ॥७१ ॥

मुकुटे रत्नजडिते मुक्ताजालानि सर्वतः ॥
भास्वत्तारोपमानीव पार्वत्या भान्ति सर्वदा ॥ ७२ ॥

पूर्णचन्द्रोपमं वक्त्रं मन्दहाससमन्वितम् ॥
एवंभूता जगन्माता विश्ववन्द्या परेश्वरी ॥ ७३ ॥

सरला नासिका यस्या यत्र मुक्ताफलं किल ॥
विभाति सोज्ज्वलं नानानूत्नरत्नं मनोहरम् ॥ ७४ ॥

प्रवालवल्लीतुलितोऽधरपल्लव उज्ज्वलन् ॥
रत्नालिवद्रदा यस्या महामायेदृशी च सा ॥ ७५ ॥

रत्नयुक्ते जगन्मातुः कर्णयोर्मणिकार्णिके ॥
महामाया रत्नमयालङ्कारशतभूषिता ॥ ७६ ॥

चन्द्राभमन्दहास्यमुखी, स्वर्णचम्पकगौरी, मुक्ताहारकण्ठी, रत्नमुकुटा, नागभूषिता, यन्मुकुटोपरिस्थपुष्पमधुलिहो गायका इव भान्ति। रत्न-जडितमुकुटे मुक्तालयो भास्वत्तारा इवाभान्ति ॥ ६९-७३ ॥ एवं जग-न्माता विश्ववंद्या परमेश्वरी। यस्याः सरला नासिका। तत्र सोज्ज्वलं नानारत्नयुक्तमौक्तिकं भाति। प्रवालसमाधरा रत्नपंक्तिसमदन्ती ॥७४-७६॥

---

१ भ्रमराः.

कुचाद्रितटयोः पीतवर्णा चोली विराजते ॥
यस्याः कण्ठे रत्नयुक्तनिष्कहारादयोऽपि च ॥ ७७ ॥
कुचयोर्गलति क्षीरं यस्यास्तद्दैवयोगतः ॥
सर्पाः पिबन्ति सततमेवं सा भक्तवत्सला ॥ ७८ ॥
परिधानीयवस्त्रं तु यस्या दाडिमपुष्पभम् ॥
आभाति गिरिजा माताऽभितः कुङ्कुमचर्चिता ॥७९॥
बाहुदण्डौ सुसरलौ यस्याश्च मणिबन्धयोः ॥
कङ्कणानि स्फुरद्रत्नजडितान्यमितानि च ॥ १८० ॥
यस्या रत्नाश्चितरणन्नूपुरे पादपद्मयोः ॥
कृपादृष्ट्याऽनुगृह्णन्ती गणानां ध्यायतां सताम् ॥८१॥
अष्टमीचन्द्रवद्यस्या ललाटे तिलकोऽमलः ॥
यदि वा रुचिराविद्धमुक्तं[1]सारास्त्रितो बभौ ॥ ८२ ॥
नानाविधैरलङ्कारैर्भूषिता हिमवत्सुता ।
जगन्माता शम्भुकान्ता तत्सौन्दर्यं तु को वदेत् ॥८३॥

जगन्मातू रत्नमयकर्णभूषणे। कुचयोः पीतवर्णचोली। कण्ठे रत्नमया निष्कहाराः। एवं माहामाया भूषिता ॥ ७७ ॥ स्तनस्रवद्दुग्धं दैवात्सर्पाः पिबंति। दाडिमाभवस्त्रपरिहिता कुंकुमचर्चिता भक्तवत्सला गिरिजा। यद्वाहू सरलौ मणिबन्धयो रत्नजडितकंकणानि। पदयो रत्नाश्चितनूपुरे। एवं ध्यायतां गणानां कृपादृष्ट्याऽनुगृह्णंती। अष्टमीचन्द्रवल्ललाटे रत्नाश्चिततिलकः। सा नानालङ्कारभूषिता, शम्भुकान्ता जगन्माता। तत्सौन्दर्यं

१ उत्तममौक्तिकं.

ईदृश्या सह सर्वेश्या चित्येवात्मा सुमूर्तिमान् ॥
तत्रोपविष्टस्तं द्रष्टुमिन्द्रः सगण आययौ ॥ ८४ ॥

समस्ता देवताः प्राप्ताः सर्वे देवर्षयोऽमिताः ॥
तदैव शङ्करं द्रष्टुं कुमारा अपि चागताः ॥ ८५ ॥

तदा सनत्कुमारस्तत्पादपद्मे प्रगृह्य च ॥
शिवं प्रणम्य साष्टाङ्गं विनयावनतोऽब्रवीत् ॥ ८६ ॥

भोः शम्भो त्वं जय जय जयोमाकान्त विश्वकृत् ॥
त्रैलोक्ये धर्मकामार्थमोक्षदाता त्वमेव हि ॥ ८७ ॥

समस्ताः कथिता धर्माः स्वामिन्मे कृपया पुरा ॥
भवार्णवोत्तारणाय सर्वपापक्षयाय च ॥ ८८ ॥

अद्यैकं साधनं याचे स्वल्पायासं महाफलम् ॥
अनायासेन तु यतश्चतुर्वर्गः फलिष्यति ॥ ८९ ॥

समस्तानि तु पुण्यानि बह्वायासानि भूरिद ॥
अतो हितार्थं मर्त्यानां स्वामिन्यत्सुकरं वद ॥ १९० ॥

को वदेत्। ईदृश्या पार्वत्या सहोपविष्टं शिवं द्रष्टुं सगण इन्द्रः सर्वे देवा ऋषयः कुमारा अप्यागताः। तत्र सनत्कुमारः शिवपादौ धृत्वा नत्वा विनयेनाह ॥ ७८-८६ ॥ भो उमाकान्त विश्वकृच्छम्भो, जय। त्रैलोक्ये धर्मार्थकाममोक्षदाता त्वं। भवोत्तारणाय पापक्षयाय च त्वया सर्वधर्मा उक्ताः। अद्य स्वल्पायासं महाफलमेकसाधनं याचे यतश्चतुर्वर्गः फलिष्यति। हे भूरिद, सर्वपुण्यानि बह्वायासानि तस्मात्स्वामिन्हितार्थं मर्त्यानां

इत्थं सनत्कुमारोक्तः स तु सन्तुष्ट ईश्वरः ॥
प्राह कर्पूरगौरस्तं सर्वेषां शृण्वतां मुनिम् ॥ ९१ ॥

ईश्वरः प्राह ऋषयः शृण्वन्तु द्रुतपुण्यदम् ॥
धर्मार्थकाममोक्षाणां साधनं परमं त्विदम् ॥ ९२ ॥

सम्मतं वेदशास्त्राणां स्वर्ग्यं धर्म्यमदुष्करम् ॥
अनन्तपुण्यदं भस्मत्रिपुण्ड्रवरधारणम् ॥ ९३ ॥

सनत्कुमार इत्युक्तः प्राह कोऽस्य विधिर्वद ॥
तत्किंद्रव्यं क्व वा धार्यं का शक्तिः का च देवता ९४

कः कर्ता किं प्रमाणं च केन मन्त्रेण धार्यते ॥
विस्तरेण वद स्वामिन्निति तच्चरणेऽग्रहीत् ॥ ९५ ॥

एवं सनत्कुमारोक्तः शङ्करः प्राह विस्तरात् ॥
भस्मनो गोमयं द्रव्यं देवताऽग्निरुदाहृतः ॥ ९६ ॥

तज्जाबालोक्तवत्कार्यं यद्वा प्राग्यज्ञसम्भवम् ॥
तच्चापि धारणान्नृणां बहुपुण्यं प्रयच्छति ॥ ९७ ॥

सुकरं वदेति पृष्टस्तुष्ट ईशः सर्वेषां शृण्वतां कुमारमाह ॥ ८७-९२ ॥ द्रुतपुण्यदं परं चतुर्वर्गसाधनं वेदादिमतं धर्म्यं स्वर्ग्यं सुकरमनन्तपुण्यं सर्वे शृण्वन्तु भस्मत्रिपुण्ड्रधारणं। सनत्कुमार आह। कोऽस्य विधिर्द्रव्यं च। क्व धार्यं। का शक्तिः, का देवता, कः कर्ता। किं प्रमाणं, केन मंत्रेण धार्यं चेति पदे दधौ ॥ ९३-९५ ॥ शिव आह। गोमयद्रव्यं देवताग्निस्ततो जाबालोक्तवत्कार्यं पूर्वयज्ञसम्भूतं वा भस्म बहुपुण्यं। सद्योजातमिति

भस्म सद्योजातमिति मन्त्रेण ग्राह्यमुत्तमम् ॥
अग्निरित्यादिजाबालप्रोक्तमन्त्रैश्च मन्त्रयेत् ॥ ९८ ॥

मानस्तोक इति स्वच्छमङ्गुष्ठेनैव मर्दयेत् ॥
शिरसि त्र्यम्बकमिति धारयेद्भक्तिभावितः ॥ ९९ ॥

त्र्यायुषं जमदग्नेरित्यादिमन्त्रैर्यथाक्रमम् ॥
यथास्थानं मन्त्रपूर्वं त्रिपुण्ड्रान्धारयेद्बुधः ॥ २०० ॥

प्रतिस्थानं मन्त्रपूर्वं भ्रूकुटीसदृशं वरम् ॥
रेखात्रयं लिखेद्रम्यं नाधिकं शस्यते ततः ॥ १ ॥

मध्यमानामिकाङ्गुष्ठैर्ललाटे प्रथमं लिखेत् ॥
पुराऽङ्गुलिभ्यां द्वे रेखे ततोऽङ्गुष्ठेन मध्यमाम् ॥२॥

एवं त्रिपुण्ड्रा विलेख्या देवताध्यानपूर्वकम् ॥
विस्तरेणैकैकरेखा देवतादि च कथ्यते ॥ ३ ॥

देवताद्या नव ख्याता अकारो वर्ण आदितः ॥
गार्हपत्योऽग्निर्भूस्तत्त्वं रजोगुण उदाहृतः ॥ ४ ॥

गृहीत्वा, अग्निरित्यादिनाऽभिमंत्र्य, मानस्तोक इत्यंगुष्ठेन मर्दयित्वा, त्र्यम्बकमिति शिरसि धृत्वा, त्र्यायुषमिति मंत्रैर्यथास्थानं त्रिपुण्ड्रान्धारयेत् ॥ ९६-२०१ ॥ प्रतिस्थानं भ्रूसमानरेषात्रयं नाधिकं। प्रथमं मध्यानामिकांगुष्ठैर्ललाटे ततोऽन्यत्र। देवताध्यानपूर्वकं धारणमेकैकं देवाद्या नव। अकारोर्णो गार्हपत्योऽग्निर्भूस्तत्त्वं, रजोगुणः ॥ २-४ ॥ ऋग्वेदः, क्रिया-

ऋग्वेदश्च क्रियाशक्तिः प्रातःसवनमुच्यते ।।
देवता च ब्रह्मदेव आद्या रेखा प्रकीर्तिता ।। ५ ।।

अथ द्वितीयरेखाया विस्तरेण वदामि ते ।।
उकारार्णो दक्षिणाग्निर्नभस्तत्त्वमुदीरितम् ।। ६ ।।

यजुर्वेदस्य सवनं स्मृतं मध्यन्दिनाभिधम् ।।
इच्छाशक्तिश्चान्तरात्मा देवता विष्णुरीरितः ।। ७ ।।

अथो तृतीयरेखाया मकारार्णोऽग्निरप्यसौ ।।
स्मृत आहवनीयः स्वस्तत्त्वं ज्ञानाख्यशक्तिका ।। ८ ।।

तृतीयसवनं देवः शिव एव भवापहः ।।
इत्थं विलेख्यास्त्रिरेखा वर्णादिस्मृतिपूर्वकम् ।। ९ ।।

एवं भस्मत्रिपुण्ड्राख्यं महेशव्रतमुत्तमम् ।।
स्वीकार्यं यत्नतो नित्यं वेदशास्त्रादिसम्मतम् ।। १० ।।

धृतं चेन्मुक्तिकामेन नास्यावृत्तिः पुनस्त्विह ।।
सर्वे कामाश्च सिध्यन्ति पुरुषार्थास्तथाऽखिलाः ।। ११ ।।

शक्तिः, प्रातःसवनं, ब्रह्मदेवः पूर्वत्र। द्वितीयरेखायां तु उकारोऽर्णो, दक्षिणाग्निः, खं तत्त्वं, यजुर्वेदो, माध्यन्दिनं सवनमिच्छाशक्तिरन्तरात्मा, विष्णुर्देवः। तृतीयरेखायां मकारोऽर्णः, आहवनीयोऽग्निः, स्वस्तत्त्वं, ज्ञानशक्तिस्तृतीयसवनं, शिवो देव इत्थं तिस्रो लेखा लेख्याः। भस्मत्रिपुण्ड्रमीशव्रतं वेदमतं धृतं चेन्मुक्तिकामस्य न पुनरावृत्तिः। सर्वे कामाः पुरुषार्थाश्च सिध्यन्ति। प्रत्यहं श्रौते स्मार्तेऽपि कर्माणि वर्णाश्रमैर्धार्यम्।

ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा ॥
प्रत्यहं भस्मत्रिपुण्ड्राञ्श्रौते स्मार्तेऽपि धारयेत् ॥ १२ ॥

उपपापानि नश्यन्ति महापापानि सर्वशः ॥
भस्मधारणतः शीघ्रं पुण्यात्मा जायते नरः ॥ १३ ॥

स्त्रीहन्ता क्षत्रहन्ता च वीरहन्ताऽऽत्महाऽपि च ॥
भस्मधारणतः पूतः शुद्धात्मा जायते क्षणात् ॥ १४ ॥

मन्त्रेण विधिपूर्वं यः श्रद्धाभक्त्या च धारयेत् ॥
अपारो महिमा तस्य देवलोके स वन्द्यते ॥ १५ ॥

न ज्ञातश्चेद्विधिर्येन श्रद्धाभक्त्यापि सोऽन्वहम् ॥
बिभृयात्सोऽपि मुच्येत नात्र कार्या विचारणा ॥ १६ ॥

परद्रव्यापहर्ता यः परस्त्रीसङ्गलोलुपः ॥
परनिन्दारतः पापी सोऽप्यनेन पुनाति हि ॥ १७ ॥

परक्षेत्रापहर्ता यो यो नरः परपीडकः ॥
सस्यारामादिभङ्क्ता यः सोऽप्यनेन पुनाति हि ॥ १८ ॥

महापापोपपापानि नश्यन्ति। धर्ता पुण्यात्मा भवेत् ॥ ९-१३ ॥ स्त्रीक्षत्रवीरात्महन्ता धारणाच्छुद्धात्मा भवेत्। यथाविधि भक्त्या धारयन्तो वेदवन्द्याः। विध्यज्ञाने भक्त्याऽपि धारणान्मुक्तिर्नात्र कार्या विचारणा ॥ १४-१७ ॥ परद्रव्यहृत्परस्त्रीसङ्गः, परनिन्दकः, क्षेत्रहर्ता,

असत्यवादी पैशून्यवादी च गृहदाहकः ॥
वेदविक्रयकृत्पापी सोऽप्यनेन पुनाति हि ॥ १९ ॥

कूटसाक्ष्यप्रदो दुर्वाक्तथा कौटिल्यकृन्नरः ॥
स्वकुक्षिभृतये पापी सोऽप्यनेन पुनाति हि ॥ २२० ॥

गोभूहिरण्यमहिषीवस्त्रान्नतिलकम्बलम् ॥
प्रतिगृह्णाति यः क्वापि सोऽप्यनेन पुनाति हि ॥ २१ ॥

तथा द्विदलधान्यादि प्रतिगृह्णाति कर्हिचित् ॥
नीचादपि महापापी सोऽप्यनेन पुनाति हि ॥ २२ ॥

दासी वेश्या भुजङ्गी च वृषली च रजस्वला ॥
आसां सङ्गो भवेद्यस्य सोऽप्यनेन पुनाति हि ॥ २३ ॥

कन्यकाविधवासङ्गी सोऽनुतप्तो वहेद्यदि ॥
त्रिपुण्ड्रविधिना भस्म सोऽप्यनेन पुनाति हि ॥ २४ ॥

मांसगोरससामुद्रद्रव्याणां क्रयकृत्तु यः ॥
पश्चात्तापेन संयुक्तः सोऽप्यनेन पुनाति हि ॥ २५ ॥

परपीडकः, सस्यारामभंक्ता, मिथ्यापैशून्यवक्ता, वेदक्रयी, कूटसाक्ष्यदो, दुर्वक्ता, वृत्त्यर्थं कौटिल्यकृद्गोभूमहिष्यादिप्रतिग्रहीता, नीचाच्च धान्यादिग्रहीता, दासीवेश्यारजस्वलावृषल्यादिगः ॥ १८-२३ ॥ कन्याविधवादिगः, मांसगोरसादिक्रयकृज्ज्ञाताज्ञातामितपापकृदनुतप्तो भस्मत्रि-

पुनीतोऽपि च पुण्यात्मा जायते भस्मधारणात् ॥
ज्ञाताज्ञातामितांहोयुक्तोऽप्यनेन पुनाति हि ॥ २६ ॥

एतत्समस्तपापघ्नं भस्ममाहात्म्यमुत्तमम् ॥
शिवनिन्दकपापिष्ठं न पुनाति कथञ्चन ॥ २७ ॥

शिवद्रव्यापहर्ता यः शिवतद्भक्तनिन्दकः ॥
न तस्य निष्कृतिः क्वापि न स पापैर्वियुज्यते ॥ २८ ॥

गले रुद्राक्षमाला च त्रिपुण्ड्रो यस्य मस्तके ॥
महापापोऽपि स ततस्त्रिलोक्यामपि पूज्यते ॥ २९ ॥

भूमौ यावन्ति तीर्थानि नानाक्षेत्रोद्भवानि च ॥
स्नातानि तानि सर्वाणि येनेदृग्भसितं धृतम् ॥ २३० ॥

अनन्ताः कोटिशो मन्त्रा निगमागमवर्णिताः ॥
तेन सर्वेऽपि ते जप्ता येनेदृग्भसितं धृतम् ॥ ३१ ॥

प्राक्सहस्रभवोत्पन्नं क्षालितं तेन पातकम् ॥
उद्धृताः पितरः सर्वे येनेदृग्भसितं धृतम् ॥ ३२ ॥

पुण्ड्रधारणाच्छुद्धात्मा जायते ॥ २४-२६ ॥ भस्ममाहात्म्यं सर्वपापघ्नं शिवनिन्दकं न पुनाति । शिवद्रव्यहर्तृशैवनिन्दकपापिनिष्कृतिर्न क्वापि । यस्य कण्ठे रुद्राक्षमाला, भाले त्रिपुण्ड्रः, स त्रिलोकपूज्यः । भूमौ यानि तीर्थानि तानि भस्मधारणात्स्नातानि सर्वे मन्त्रा जप्ताश्च । सहस्रजन्माघं क्षालितं पितरोऽप्युदधृताश्च । भस्मधारणादिहाखिलं सुखं दीर्घायुर्व्याधिनाशः

१ अपरिमितपातकं.

इह लोकेऽखिलं सौख्यं तस्यायुष्यं शतं समाः ॥
सर्वव्याधिविनाशश्च येनेदृग्भसितं धृतम् ॥ ३३ ॥

दिव्यैश्वर्यं लभेत्तस्य ज्ञानं दिव्यं शरीरकम् ॥
देहान्ते सद्गतिस्तस्य येनेदृग्भसितं धृतम् ॥ ३४ ॥

देहान्ते तं विमानाग्र्य उपवेश्याप्सरोगणैः ॥
सेवितं स्वर्नयन्त्येव येनेदृग्भसितं धृतम् ॥ ३५ ॥

स वन्द्यः सिद्धगन्धर्वविद्याधरमुखामरैः ॥
इन्द्रादिलोकपालैश्च येनेदृग्भसितं धृतम् ॥ ३६ ॥

एवं स्वर्गे चिरं हृष्ट उषित्वा स यथासुखम् ॥
ब्रह्मलोकं ततो याति येनेदृग्भसितं धृतम् ॥ ३७ ॥

शाश्वते ब्रह्मलोके स स्थित्वा कल्पशतं ततः ॥
वैकुण्ठं विष्णुधामैति येनेदृग्भसितं धृतम् ॥ ३८ ॥

ब्रह्मकल्पत्रयं स्थित्वा वैकुण्ठेऽथ स गच्छति ॥
कैलासमक्षयं लोकं येनेदृग्भसितं धृतम् ॥ ३९ ॥

स तत्र शिवसायुज्यं प्राप्नोत्येव न संशयः ॥
तस्मात्सनत्कुमार त्वं भस्मपुण्ड्रान्हि धारय ॥ २४० ॥

॥ २७-३३ ॥ दिव्यमैश्वर्यं ज्ञानं चान्ते दिव्यविमाने समुपवेश्याप्सरःसेवितं स्वर्लोकं नयन्ति। स सिद्धादिदेववंद्यः स्वर्गे चिरं सुखं भुक्त्वा ततः कल्पशतं ब्रह्मलोके तिष्ठति। ततो ब्रह्मकल्पत्रयं वैकुण्ठे स्थित्वाऽथ शिवसायुज्यं प्राप्नोति न संशयः। हे सनत्कुमार, तस्मात्त्वं त्रिपुण्ड्रान्धारयेदं

आगमोपनिषच्छास्त्रसारमेतद्धि मे मतम् ॥
चतुर्विधपुमर्थानां साधनं भस्मधारणम् ॥ ४१ ॥

इति त्रिपुण्ड्रमाहात्म्यमीश्वरेण मयेरितम् ॥
सनत्कुमार ऋषयो धारयन्तु परेऽपि च ॥ ४२ ॥

एवमुक्त्वा कुमारं स ययौ कैलासमीश्वरः ॥
हृष्टः सनत्कुमारोऽपि ब्रह्मलोकं ततो गतः ॥ ४३ ॥

एवं महामुनिः प्राह वामदेवो दयान्वितः ॥
प्रणनामाथ सन्तुष्टस्तत्पदे ब्रह्मराक्षसः ॥ ४४ ॥

वामदेवोऽवदद्रक्षो भस्ममाहात्म्यमीदृशम् ॥
मदङ्गभस्मसंस्पर्शाद्यत्ते ज्ञानं प्रकाशितम् ॥ ४५ ॥

इत्युक्त्वा स च सन्तुष्टो वामदेवोऽभिमन्त्र्य च ॥
राक्षसाय तु तद्भस्म मुनिदेवो ददौ तदा ॥ ४६ ॥

वेदोपनिषन्मतं चतुर्विधपुरुषार्थसाधनम्। एतन्मयोक्तं श्रुत्वा सर्वे धारयन्तु। इत्युक्त्वा शिवः कैलासं ययौ। हृष्टः सनत्कुमारो ब्रह्मलोकं गतः ॥ ३४-४३ ॥ इति श्रुत्वा तुष्टो राक्षसो दयालुवामदेवस्य पदे दधौ। वामदेव आहेदृग्भस्ममाहात्म्यम्। मदङ्गभस्मस्पर्शात्ते ज्ञानं जातमित्युक्त्वाऽभिमन्त्र्य भस्म राक्षसायादात्। स च त्रिपुण्ड्रान्धृत्वा सद्यस्तेजोमयो

तदा दधौ त्रिपुण्ड्रान्त्स शिरसि ब्रह्मराक्षसः ॥
तेजोमूर्तिरिवाभूत्स दिव्यदेहो हि तत्क्षणम् ॥ ४७ ॥

रराज दिव्यदेहेन प्रकाशेन स सूर्यवत् ॥
ब्रह्मानन्दमयो जातस्तदा स ब्रह्मराक्षसः ॥ ४८ ॥

ततः प्रदक्षिणीकृत्य योगिनं तं ननाम सः ॥
तावच्च सूर्यसङ्काशं विमानं स्वर्खातरत्[1] ॥ ४९ ॥

दिव्यं विमानमारुह्य ययौ स्वर्गं स तत्क्षणम् ॥
परलोकमदात्तस्मै वामदेवो महामुनिः ॥ २५० ॥

वामदेवो महादेवः प्रत्यक्षः स शिवो भवः ॥
यो भाति मानव इव पर्यटत्यत्र तारकः ॥ ५१ ॥

त्रयीमूर्त्यवतारोऽयं वामदेवो जगद्गुरुः ॥
पर्यटत्येष पृथिवीं जगदुद्धारकारकः ॥ ५२ ॥

वरिष्ठं भस्ममाहात्म्यं विशेषाद्गुरुहस्ततः ॥
परपारं गतो यस्मात्तत्क्षणं ब्रह्मराक्षसः ॥ ५३ ॥

ब्रह्मानन्दमयः सूर्यवद्दिव्यदेहो रेजे। ततो वामदेवं प्रदक्षिणीकृत्य ननाम। तावत्स्वर्गात्सूर्याभं विमानमागतम्। स दिव्यविमानमारुह्य स्वर्लोकं ययौ। एवं वामदेवमुनिस्तस्मै परलोकं ददौ। स महादेवः प्रत्यक्षः शिवः। त्रिमूर्त्यवतारोऽयं जगद्गुरुर्वामदेवो नर इव जगदुद्धाराय पर्यटति ॥ ४४-५२ ॥ वरिष्ठं भस्ममाहात्म्यं गुरुहस्ताद्विशेषतः। यतो ब्रह्मराक्षसः

१ स्वर्गात्.

सन्ति मन्त्रा अनेके ते न साध्याः सद्गुरुं विना ॥
वेदशास्त्रमतो ब्रूते नास्ति तत्त्वं गुरोः परम् ॥ ५४ ॥

ऋषिभ्योऽप्यवदत्सूतो भस्ममाहात्म्यमीदृशम् ॥
विशेषतो गुरोर्हस्ताद्गुरुस्तन्मुख्यकारणम् ॥ ५५ ॥

इति त्रिविक्रमायैतत्कथयामास सद्गुरुः ॥
गुरोश्चरणयोर्हर्षाद्दधौ शीर्षं त्रिविक्रमः ॥ ५६ ॥

आदिष्टः श्रीगुरुं नत्वा स्वस्थानमगमन्मुनिः ॥
श्रीगुरोरुपदेशेन समस्ता ज्ञानिनोऽभवन् ॥ ५७ ॥

इति सिद्धविदा[१] परमादरतः
कथिताऽत्र कथा परमादरतः ॥
अवतीह तु भाविकलोकमसा-
विति शिष्यमुवाच मता मम सा ॥ ५८ ॥

परं पारङ्गतः । अनेके मन्त्रादयः सन्ति ते गुरुं विना न सांध्याः । अतो वेदादिर्वक्ति 'नास्ति तत्त्वं गुरोः परम्' इति । ऋषिभ्योऽपि सूतो ब्रूते विशेषतो गुरुहस्तात्सिद्धिस्तस्माद्गुरुर्मुख्यं कारणम् । इति श्रीगुरुस्त्रिविक्रममाह । स तत्पदयोः शीर्षं दधौ । स गुरुं नत्वाऽऽदिष्टः स्वस्थानं गतः । श्रीगुरूपदेशेन सर्वे ज्ञानिनोऽभवन् ॥ ५३-५७ ॥ इति सिद्धविदा० ॥

१ सिद्धज्ञानिना.

नृसिंहसंज्ञः स्वकुलेट्सरस्वती
यतीशभक्तः प्रथितः सरस्वती ।।
गुरोश्चरित्रं पठतोऽपि शृण्वत-
श्चतुःपुमर्थप्रदमाह चादृतः ।। २५९ ।।

नृसिंहसंज्ञः स्व० ।। ९८-२९९ ।। इति चूर्णिकायां एकोनत्रिंशोऽध्यायः

( इति ) श्रीसि० रूपेण सर० न्वितगु० यां
श्रीगु० कर्म० एकोनत्रिंशः ( अध्यायः ) ।।
आदितः श्लोकाः ।। ३२५९ ।।

।। इति एकोनत्रिंशोऽध्यायः ।। २९ ।।

---

## ।। अथ त्रिंशोऽध्यायः ।। ३० ।।

।। श्रीदत्तात्रेयाय नमः ।।

नामधारकशिष्याग्र्यः संलग्नः सिद्धपादयोः ।।
करौ सन्धाय विनतो भक्तियुक्तोऽब्रवीदिदम् ।। १ ।।

जय सिद्ध महायोगिंस्त्वं भवार्णवतारकः ।।
अज्ञानतिमिरान्ताय ज्योतीरूपोऽसि केवलम् ।। २ ।।

अविद्यासागरेऽपारे निमग्नोऽहमपि क्षणात् ।।
ततोऽपि कृपया स्वामिन्त्समुत्तीर्णोऽस्मि ते[1] खलु ।।३।।

त्वया मे दर्शितः पन्थाः परमार्थोऽथ सङ्गतः ।।
त्वं विश्वपालकः स्वामी गुरुनाथोऽसि निश्चितम् ।।४।।

अध्यायसारसंग्रहश्लोकः—

गोपीनाथोऽत्रिसुतभजनात्पुत्रमापोद्वहोर्ध्वं
तत्स्त्री रुग्णं तमनयदथो पत्तनं गाणगाख्यम् ।।
मन्दाक्रान्ताध्वनि स तु पुरस्योपकण्ठं ममार
त्रिंशे तत्स्त्रीनिकटमथ गतो भूतिरुद्राक्षधृक्सन् ।। १ ।।

नामधारकः सिद्धपदे धृत्वा प्रणत आह। सिद्धयोगिञ्जय। त्वं भवतारकोऽज्ञानध्वान्तज्योतिश्च। स्वामिंस्ते कृपयाऽविद्याब्धिमग्नोऽपि तत उत्तीर्णोऽस्मि। त्वया पन्था दर्शितः। परमार्थो लब्धश्च। त्वं विश्वत्राता

---

१ त्वया.

सच्छ्रीगुरुचरित्राख्यः प्राशितो मे सुधारसः ॥
मनो नाद्यापि मे तृप्तं तत्तृष्णाऽतीव वर्धते ॥ ५ ॥

यत्त्वयोपकृतं तत्प्रत्युपकुर्वीत किं कुलैः ॥
दर्शितं निजरूपं मे यत्स्वामिन्करुणानिधे ॥ ६ ॥

पुरा कथा प्रकथिता सृष्टावभिनवा नवा ॥
पतितस्य मुखेनैव चतुर्वेदा हि वाचिताः ॥ ७ ॥

त्रिविक्रमाय मुनये प्रोक्तं ज्ञानं प्रकाशकम् ॥
कथां ततोऽग्रतो जातां विस्तरेण वद प्रभो ॥ ८ ॥

इति शिष्यवचः श्रुत्वा सिद्धः सन्तोषसंयुतः ॥
प्रेमपूर्वं तमालिङ्ग्य समाश्वास्य मुदाऽब्रवीत् ॥ ९ ॥

धन्यो धन्योऽसि शिष्याग्र्य सर्वाभीष्टं त्वयाऽर्जितम् ॥
तवोपरि महत्येषा सञ्जाता श्रीगुरोः कृपा ॥ १० ॥

संसारार्णवतीर्णोऽसि त्वमेव सकलार्थभाक् ॥
धन्या धन्या च ते वाणी लग्नं ते हृद्गुरोः पदे ॥ ११ ॥

गुरुनाथोऽसि। गुरुचरित्रामृतरसः प्राशितोऽपि मे मनो न तृप्तम्। तत्तृष्णा वर्धते। त्वत्प्रत्युपकारो वंशपरम्परयाऽपि न क्रियते। दयाब्धे, ते निजरूपं दर्शितम्। पूर्वं नवा कथा श्राविता पतितमुखेन वेदा वाचिताः। त्रिविक्रमाय ज्ञानमुक्तं ततोऽग्रतो जातां कथां वद ॥ ८ ॥ सिद्धस्तुष्टस्तमालिंग्याश्वास्याह। धन्योऽसि सर्वेष्टं त्वयाऽर्जितम्। तवोपरि श्रीगुरोः कृपाऽस्ति। सर्वार्थभाक्त्वम्। भवाब्धिं तीर्णोऽसि। धन्या ते वाणी।

पृष्टोऽग्रतोऽपि वृत्तान्तः सन्तोषोऽतीव तेन मे ॥
सद्गुरोर्महिमा ख्यातोऽगम्यो वक्तुं न शक्यते ॥ १२ ॥
एकैकमहिमाख्याने कथा यास्यति विस्तृतिम् ॥
अतः संक्षेपतस्तेऽद्य कथयिष्यामि सत्कथाम् ॥ १३ ॥
श्रीगुरौ सति[1] तत्रैव गन्धर्वभुवनेऽभवत् ॥
प्रख्यातो महिमा लोके नित्यनूतनवत्सदा ॥ १४ ॥
त्र्यवतारो नृवद्भाति स नृसिंहसरस्वती ॥
अपारो महिमा तस्य योऽगम्यो विदुषामपि ॥ १५ ॥
वक्तुं त्रिमूर्तेर्माहात्म्यं मन्दोऽहं शक्नुयां कथम् ॥
स्वीकृत्यात्र नृदेहं यश्चरित्रं पावनं व्यधात् ॥ १६ ॥
तस्य गन्धर्वनगरे ख्यातिर्जाता विशेषतः ॥
सर्वत्राभूत्प्रकाशोऽतो द्रष्टुमायान्ति दूरतः ॥ १७ ॥
भक्ता भावेन चागत्य सेवां कुर्वन्ति सद्गुरोः ॥
गुरुदर्शनमात्रात्ते पूर्णकामा भवन्ति हि ॥ १८ ॥

ते मनो गुरुपदे लग्नम्। ते प्रश्नादतीव सन्तोषः। एकैकमहिमाख्याने ग्रन्थो विस्तरेत्। ततः सङ्क्षेपात्कथां वच्मि। तत्र गान्धर्वे नित्यनूतन इव महिमा जातः। नृवद्दृष्टोऽपि त्रिमूर्त्यवतारोऽयम्। तन्महिमा विदुषामप्यगम्योऽहं मन्दधीस्तद्वर्णने न क्षमः। नृदेहं स्वीकृत्य यः पावनं चरित्रं चक्रे तस्य गन्धर्वे विशेषतः ख्यातिर्जाता ॥ ९-१७ ॥ ततः सर्वत्र प्रकाशोऽभूत। गुरुदर्शनाय भक्ता दूरादेत्य पूर्णकामाः स्युः।

१ विद्यमाने.

दैन्यार्तोऽभूच्छ्रिया युक्तो वन्ध्या पुत्रवती तथा ॥
पीडितः कुष्ठरोगेण सुवर्णाङ्गोऽपि सोऽभवत् ॥ १९ ॥

चक्षुर्हीनोऽपि चक्षुश्च श्रवणं बधिरोऽलभत् ॥
अपस्मारादयो रोगाः प्रनष्टा गुरुदर्शनात् ॥ २० ॥

किं चित्रं स्पर्शसंस्पर्शात्सुवर्णत्वेऽयसस्तथा ॥
कृपया सद्गुरोः सर्वाभीष्टाप्तौ चित्रमत्र नो ॥ २१ ॥

शृणु चित्रं प्रवक्ष्यामि माहुरीपुरि कश्चन ॥
गोपीनाथाभिधो ह्येको धनिको ब्राह्मणोऽभवत् ॥२२॥

भूत्वा मृताः सुतास्तस्य मृतापत्यत्वदुःखितः ॥
आराधयामास ततो दत्तात्रेयं सह स्त्रिया ॥ २३ ॥

ततो दैवात्सुतो जातो दत्ताख्यश्चिरजीवितः ॥
धनिनौ तस्य पितरावतिप्रीत्या पुपोषतुः ॥ २४ ॥

एकस्तयोर्गृहे पुत्रस्तस्मिन्प्रीतिरतीव हि ॥
पञ्चमे वत्सरे तस्य व्रतबन्धमचीकरत् ॥ २५ ॥

दैन्यार्तः श्रीयुक्तः, वन्ध्या सुपुत्रा, कुष्टी सुवर्णाङ्गः, अन्धश्चक्षुष्मान्, बधिरश्च सुश्रवा अभूत्। अपस्मारादिरोगाश्च नष्टाः। स्पर्शस्पर्शादयसः सुवर्णत्वे न चित्रम्। तथा गुरुकृपया सर्वाभीष्टाप्तिर्न चित्रा। चित्रं शृणु। माहुरे धनी गोपीनाथविप्रोऽभूत्तत्पुत्रा मृतास्तेन पत्न्या सह श्रीदत्त आराधितः ॥१८-२३॥ ततो दत्ताख्यः पुत्रश्चिरं जीवितः। तौ एकं तं पुत्रं प्रेम्णा पुपुषतुः। पञ्चमेऽब्दे तस्य व्रतबन्धः कृतः। द्वादशे विवाहः कृतः। सुन्दरी सती स्नुषा लब्धा ॥२४-२६॥ कामस्य रतिरिव

द्वादशे वत्सरे तस्य विवाहो दैवतोऽभवत् ॥
वरप्रीतिमती लब्धा सुन्दरी सुदती सती ॥ २६ ॥

मदनस्य रतिर्यद्वत्तद्वद्रूपवती सती ॥
पालयामासतुः प्रीत्या पितरौ हर्षितौ तु तौ ॥ २७ ॥

परस्परमतिप्रेमभराक्रान्तौ तु दम्पती ॥
तौ समानवयस्कौ च जातौ षोडशवत्सरौ ॥ २८ ॥

सुन्दरौ तौ सुलक्ष्माणौ चान्योऽन्यं प्राणवल्लभौ ॥
क्षणं न विरहं सोढुं शक्तौ तौ तु परस्परम् ॥ २९ ॥

अथ दैववशात्तत्र व्याधिग्रस्तोऽभवद्द्विजः ॥
अनेकैरौषधैर्यत्नैस्तस्यारोग्यं न चाभवत् ॥ ३० ॥

न चात्त्यन्नमरुच्या स उपवासी सदाऽभवत् ॥
तस्य प्रीतिमती भार्या न सिषेवेऽन्नमप्यहो ॥ ३१ ॥

उपोषिता सदाऽभूत्सा दृष्ट्वा पतिमुपोषितम् ॥
पत्युर्भुक्तौषधोच्छिष्टं बुभुजेऽपि स्वयं सती ॥ ३२ ॥

हृष्टौ पितरौ तौ पालयामासतुः। परस्परप्रेमयुतौ समवयस्कौ सुचिह्नौ षोडशाब्दौ जातौ। क्षणं परस्परविरहं सोढुमशक्तौ। अथ दैवाद्विप्रपुत्रो रोगग्रस्तोऽप्यौषधादिनाऽऽरोग्यं नाप। अरुच्याऽन्नं जहौ। तत्स्त्री सावित्री अप्यन्नं जहौ। पत्युर्भुक्तोच्छिष्टौषधं भेजे। एवं त्र्यब्दान्भर्त्रा सह

एवं वर्षत्रयाद्यक्ष्मा बद्धमूलोऽस्य चाभवत् ॥
स्वधवेन समं क्लिष्टा बभावुप[1] पतिं सती ॥ ३३ ॥
पतिदेहोऽभवत्क्षीणः सतीदेहोऽपि तादृशः ॥
पतिपादोदकं तीर्थं पीत्वा कालमनीनयत् ॥ ३४ ॥
दुर्गन्धस्तस्य देहोऽभूत्तं न वैद्योऽप्युपागमत् ॥
पतिव्रतायास्तु मनो न क्षणं पतिमत्यजत् ॥ ३५ ॥
यावदन्नं धवोऽश्नाति तावदश्नाति साऽपि च ॥
यदौषधं पतिर्भुङ्क्ते सती चापि तदेव सा ॥ ३६ ॥
पितृभिर्ज्ञातिदायादैस्समस्तैर्वारिताऽपि सा ॥
पतिव्रता न तत्याज स्वपतिं बोधिताऽपि च ॥ ३७ ॥
दिव्याभरणवस्त्राणि समस्तानि विहाय सा ॥
पतिं प्राणादपि परं मेने वीक्षेत किं सुखम् ॥ ३८ ॥
उभयोः पितरौ तत्र श्रीमन्तौ च महाधनौ ॥
तौ तादृशौ विलोक्यैव सुतरां दुःखमापतुः ॥ ३९ ॥

क्लिष्टा । यक्ष्मणा पतिदेहो यथा क्षीणस्तथैव साध्व्याः । सा पतिपादोदकं पीत्वा कालं निन्ये ॥२७-३५॥ भर्ता यावदन्नमश्नाति तावदेव पतिदेवता सा । तथैवौषधं । पित्रादिभिर्वारिता बोधिताऽपि सा पतिं न जहौ । दिव्याभरणादीनि हित्वा पतिं प्राणादपि परं मेने न सुखं । उभयोः पितरौ धनिकौ तौ वीक्ष्यातिदुःखितौ । तैर्मन्त्रजपहोमादौ बहु द्रव्यं व्ययीकृतं ।

---

१ पत्युः समीपे यद्वा पत्युः किंचिन्मात्रं न्यूना तत्समाना सती बभौ । 'उपोऽधिके च' इति कर्मप्रवचनीयस्तद्योगे द्वितीया.

मन्त्रविद्याजाप्यहोमाः सद्विप्रैश्च स्वनुष्ठिताः ॥
भोजिता ब्राह्मणा द्रव्यममितं तैर्व्ययीकृतम् ॥ ४० ॥

रसायनौषधान्येनमनेके भिषजो ददुः ॥
तथाऽपि न शशामास्य दृढमूलो[1] महागदः[2] ॥ ४१ ॥

पप्रच्छतुर्ज्योतिषिकं पितरौ कुलदैवतम् ॥
आनर्चतुरथाप्यस्य नैवारोग्यमभूद्विधेः ॥ ४२ ॥

वैद्या ऊचुर्न चारोग्यमित ऊर्ध्वं हि पाति चेत् ॥
चन्द्रमौलिरमुं पायान्मनुष्यो नेश्वरोऽत्र तु ॥ ४३ ॥

इति वैद्यवचः श्रुत्वा दुःखितौ पितरौ तदा ॥
जय स्वामिञ्जगन्नाथ दत्तात्रेय गुरूत्तम ॥ ४४ ॥

आराध्य त्वां सुतो लब्धोऽथापि पापातिरेकतः ॥
कथं स्थास्यति दीनस्य प्राप्तोऽपि च निधिर्यथा ४५

एक एव सुतो वंशे तद्रक्षा चेन्न ते कृता ॥
दत्तात्रेय प्रदास्यावः स्वामिन्प्राणांस्तवाग्रतः ॥ ४६ ॥

रसायनौषधादि दत्तं । दृढमूलो रोगो न शांतः । ज्योतिषिकं पृष्ट्वा कुलदेवं सम्पूज्यापि नारोग्यमभूत् ॥३९-४२॥ वैद्या ऊचुः । इतः परं शिवस्त्राता, नात्र नृयत्न इति श्रुत्वा दुःखितौ पितरौ ऊचतुः । हा जगन्नाथ दत्तात्रेय, ॥४३-४४॥ त्वामाराध्याप्तोऽप्येकः पुत्रो रंकस्य निधिरिव पापिनोर्नौ एवं जातः । तं न रक्षसि चेत्तेऽग्रे प्राणान्दास्याव इति दुःखितौ पितरावा-

---

१ असाध्यः २ राजयक्ष्मा.

इति नानाप्रकारैस्तात्पितरौ दुःखपीडितौ ॥
ऊचतुस्तौ समालिङ्ग्य समाश्वास्यावदत्सुतः ॥ ४७ ॥

ऋणं यावद्गृहीतं वां मया जन्मान्तरे तु तत् ॥
भुक्तं कुतोऽधिकं देयं सम्बन्धस्त्वृणतोऽत्र हि ॥ ४८ ॥

इति पुत्रवचः श्रुत्वा मूर्च्छितौ पितरौ तराम् ॥
पुत्रोपरि पतित्वा तौ महादुःखेन पीडितौ ॥ ४९ ॥

ऊचतुस्तात पुत्रावां निराशौ मा कुरूत्तम ॥
पुत्रस्त्राता त्वमित्येवमावाभ्यां निश्चयः कृतः ॥ ५० ॥

आवां प्रक्षिप्य दुःखाब्धौ गमनं तव नोचितम् ॥
वार्धक्ये रक्षिता को वां(नौ) धर्मोऽयं ते कथं वद ॥५१॥

इति पितृवचः श्रुत्वा सोऽप्याक्रन्दन्नतोऽवदत् ॥
सर्वमेवेश्वराधीनं मर्त्ययत्नः कियानिह ॥ ५२ ॥

कथं मातुर्ऋणोद्धारो भवेदिह सुतेन तु ॥
एकनाडीस्तन्यपानोपकारोऽपि न वार्यते ॥ ५३ ॥

लिंग्याश्वास्य पुत्र आह। पूर्वं वां यदृणं गृहीतं ततोऽधिकं कुतो देयं। ऋणानुसार्यत्र सम्बन्ध इति श्रुत्वा तदुपरि पतितौ दुःखितौ पितरौ प्रोचतुस्त्वं नौ त्रातेति निश्चयः। निराशौ मा कुरु। दुःखाब्धौ नौ त्यक्त्वा ते गमनं नोचितं। कोऽयं धर्मः। वार्धक्ये को नस्त्रातेति श्रुत्वाऽऽक्रन्दन्सुत आह। सर्वमीश्वराधीनं मर्त्ययत्नः कियान्॥५२॥एकघटीस्तन्यदानोपकारोऽपि न वार्यते। कथं मातुर्ऋणोद्धारः ॥ ५३ ॥ त्वत्कुक्षौ भूत्वा

अहं जातो युवां कुक्षौ प्रदत्तं कष्टमादितः ॥
न कापीषत्सुखं दत्तं दत्तं कष्टं पदे पदे ॥ ५४ ॥

एवं स बोधयामास जननीं जनकं सुतः ॥
तथैव बोधयामास स चार्धाङ्गीकृतां स्त्रियम् ॥ ५५ ॥

शृणु प्राणेश्वरि त्वं मे जाताः पूर्णा दिना अयि ॥
मन्निमित्तं कृतं कष्टं वृथैव तव तद्गतम् ॥ ५६ ॥

पूर्वजन्मन्यहं वैरी तवातः कष्टमीदृशम् ॥
मया दत्तं तु तद्विद्धि त्वं जन्मान्तरवैरजम् ॥ ५७ ॥

यदि तिष्ठसि गेहेऽस्मिंस्त्वां पायात्सुतवत्प्रिये ॥
अथापि मनुषे कष्टं तर्हि तातगृहं व्रज ॥ ५८ ॥

सौन्दर्यं ते किमीदृङ्मे न दैवहतकस्य तत् ॥
सौभाग्यं नाशितं ते मे दुरङ्गस्पर्शमात्रतः ॥ ५९ ॥

इति श्रुत्वा पतिवचो मूर्च्छिता निपपात सा ॥
तत्पदोः शिर आधाय सा तन्वी दुःखिताऽब्रवीत् ६०

पदे पदे दुःखं दत्तम्। न सुखम्। एवं पितरावुक्त्वा पत्नीमाह। हे प्रिये, मे दिवसाः पूर्णाः। मदर्थं वृथा कष्टं ते कृतं। अहं ते पूर्वजन्मवैरी। यद्यत्र तिष्ठसि चेत्त्वां मत्पिता पुत्रवद्रक्षेत्। कष्टं मनुषे चेत्पितुर्गृहं गच्छ। ते सौन्दर्यं दैवहीनस्य मेऽनुपयुक्तम्। मे दुरङ्गस्पर्शात्ते सौभाग्यं नष्टम्। इति श्रुत्वा मूर्च्छिता तत्पदयोः पतिता दुःखिताऽऽह। स्वामिन्मां मा

अहहा प्राणप स्वामिंस्त्यागार्हा किमियं तव ॥
भवादृङ्नैव मे दाता गतिर्नान्या हि योषिताम् ॥६१॥

यत्र तिष्ठेद्भवद्देहो देहोऽयं तत्र तिष्ठतु ॥
सन्देहो नात्र कर्तव्यो दैवादनुगताऽस्म्यहम् ॥ ६२ ॥

इति द्वयोर्वचः श्रुत्वा पितरौ मोहमापतुः ॥
देहं धरिण्यामुज्झित्य दुःखं चक्रतुरप्युभौ ॥ ६३ ॥

श्वश्रूमुत्थाप्य श्वशुरं स्नुषा साऽऽश्वास्य चाब्रवीत् ॥
न चिन्ता भवताऽनन्ता कार्या जीवेत्पतिर्मम ॥ ६४ ॥

प्रार्थये विनता त्वां नश्चन्द्रमौलिर्हि रक्षिता ॥
पत्या सह प्रेषयैकं क्षेत्रं जीवेत्पतिर्मम ॥ ६५ ॥

लोका वदन्ति वसति श्रीनृसिंहसरस्वती ॥
यतिर्गन्धर्वनगरे कर्तव्यं तस्य दर्शनम् ॥ ६६ ॥

तस्य दर्शनमात्रेण पतिरारोग्यमेष्यति ॥
तस्मात्प्रेषय मां शीघ्रमिति तच्चरणेऽग्रहीत् ॥ ६७ ॥

त्यज । भवतोऽन्या गतिर्मे न । यत्र ते देहस्तत्रायं देहो नात्र सन्देह इति श्रुत्वा तयोः पितरौ देहं भुवि त्यक्त्वा दुःखितौ ॥५४-६३॥ तदा सावित्री श्वशुरावुत्थाप्याश्वास्याह । चिन्ता न कार्या । मे पतिर्जीविष्यति । त्वां प्रार्थये । शिवस्त्राता । पत्या सह मां प्रेषय । लोको मां वदति । गन्धर्वपुरे श्रीनृसिंहसरस्वती तद्दर्शनात्पत्युरारोग्यं भविष्यतीति तत्पदलग्नाऽभूत् ।

तत्तु श्वश्र्वा मतं तस्याः श्वशुरस्यापि तन्मतम् ॥
प्रस्थापयामासतुस्तौ श्वशुरौ पुत्रवत्सलौ ॥ ६८ ॥
आन्दोलिकायां छन्नायामुपवेश्य च रोगिणम् ॥
पतिं सती तु सुमतिः श्वशुरावब्रवीन्मुदा ॥ ६९ ॥
स्थिरीकृत्य मनः स्थेयं भवद्भ्यां सुखमालये ॥
प्राणात्प्रियो मम पतिः कुलदेवोऽस्य रक्षिता ॥ ७० ॥
इति श्वशुरपादाब्जे पतिता तौ तु तां स्नुषाम् ॥
सम्राज्ञीति समाश्वास्याशिषं दत्त्वेदमूचतुः ॥ ७१ ॥
सौभाग्यवति ते दैवाच्चिरं जीवतु वां(नौ) सुतः ॥
इत्याशिषाऽभिनन्द्याशु त्वमेहीत्यादिदेशतुः ॥ ७२ ॥
इति प्रस्थापिता पत्या सहिता सा पतिव्रता ॥
शनैराक्रम्य पन्थानं भीमातीरमुपागमत् ॥ ७३ ॥
सुदूरमार्गक्रमणात्त्रिदोषाः कुपितास्तदा ॥
रोगी ग्रामसमीपे तु कष्टादुत्तारितस्तया ॥ ७४ ॥

पुत्रवत्सलौ श्वशुरौ तदङ्गीकृत्यान्दोलिकायां रोगिणमुपवेश्य प्रेषयामासतुः। तौ स्नुषा प्राह। मनः स्थिरीकृत्य गृहे सुखं स्थेयम्। मत्प्राणात्प्रियस्य पत्युः कुलदेवस्त्रातेति पदलग्नाभूत्तां 'सम्राज्ञी' त्याश्वास्य श्वशुरावूचतुर्हे सौभाग्यवति, ते दैवादयं चिरं जीवत्वित्याशीर्भिरभिनन्द्य प्रस्थापयामासतुः ॥६४-७२॥ सा शनैर्मार्गमाक्रम्य भीमातीरं गता। दूरमार्गाक्रमणाद्दोषाः कुपिताः। स रोगी ग्रामसमीपे कष्टादुत्तारितः ॥७३-

१ आज्ञापयामासतुः.

श्रीगुरुः क्वेति पप्रच्छ सती लोकं स तां जगौ ॥
स्नातुं गत इति श्रुत्वा सा गन्तुमुपचक्रमे ॥ ७५ ॥

पतिव्रता साऽन्तकाले धवस्योपागता तदा ॥
अकस्मान्निर्गताः प्राणाः पश्यन्त्या अपि योषितः ७६

अहहेति च साऽऽक्रान्तं कृत्वा मर्तुं समुद्यता ॥
छुरिकां कर आदाय तावल्लोकैर्निवारिता ॥ ७७ ॥

सा शुशोचाहहा दैव केयं प्राप्ता गतिर्मम ॥
देव त्वदाशयाऽऽप्ताऽहं त्वं मम प्राणरक्षकः ॥ ७८ ॥

यथा देवालयं यान्तं पूजार्थं तदुपर्यहो ॥
देवालयः पपातेति नाश्रावि क्वेह चेक्षितम् ॥ ७९ ॥

यथा नरश्चोष्णतप्तो वृक्षच्छायामुपागतः ॥
तदुपर्यपतद्वृक्षो जातं तादृङ्ममाधुना ॥ ८० ॥

तृषार्दितो नरः पातुं जलं यातो जलाशयम् ॥
चखाद तत्र तं नक्रो जातं तादृङ्ममाधुना ॥ ८१ ॥

७४॥ सा श्रीगुरुः क्वेत्यपृच्छल्लोक आह। स्नातुं गत इति श्रुत्वा सा गन्तुमैच्छत्। पत्युरन्तकाले सोपागता तावत्तत्प्राणा निर्गताः। अहहेति साऽऽक्रान्तं कृत्वा शिरश्छेत्तुं यावत्खड्गं दधौ तावल्लोकैर्वारिता। सा शुचाऽऽह। केयं गतिः। हा देव, मम प्राणरक्षकस्त्वमित्याशयाऽहं प्राप्ता ॥७५-७८॥ देवदर्शनं गतस्योपरि देवालयः पतित इति नाश्रावि। छायार्थं गतस्योपरि यथा वृक्षः पतति, यथा वाऽम्बुपानार्थं गतं नक्रो

व्याघ्रभीता यथा धेनुर्यवनं शरणं गता ॥
स तां तत्र जघानेति जातं तादृङ्ममाधुना ॥ ८२ ॥

इत्यहं दैवहतका पापिनी पतिघातिनी ॥
हित्वा श्वशुरपित्रादीन्विदेशं व्यर्थमागमम् ॥ ८३ ॥

एवं तां दुःखितां दृष्ट्वा समस्ता एत्य नागराः ॥
ऊचुर्व्यर्थं हि मा शोचीरिति नानाविधोक्तिभिः ॥८४॥

सुवासिन्योऽपि तामूचुः कुतो रोदिषि मा शुचः ॥
विचारय धिया भावि कोऽन्यथा कर्तुमीश्वरः ॥ ८५ ॥

एवं नार्यो नराश्चापि बोधयामासुरुच्चकैः ॥
सा भृशं दुःखिता स्मृत्वा स्मृत्वा जन्मक्रियां जगौ ८६

अहो मातरहो भ्रातरहो भगिनि किं ब्रुवे ॥
कथं जीवाम्याशयाऽस्यागताऽस्मि गुरुसन्निधिम्॥८७॥

इतः कं शरणं यामि कः पाता जीवितं मम ॥
प्राणेश्वरं परित्यज्य कथं जीवितुमुत्सहे ॥ ८८ ॥

घातयति ॥८९-८१॥ व्याघ्रभीत्या वा शरणागतां धेनुं यवनो हन्ति, तथाऽद्य मे जातम्। पतिघातिनी पापा दैवहतकाऽहम्। श्वशुरांस्त्यक्त्वा व्यर्थं विदेशमागमम्। एवंतरां विलपन्तीं तां नागरा ऊचुः। व्यर्थं मा रोदीस्त्वं विचारय। भाव्यन्यथा कर्तुं क ईश्वरः। एवं बोधिता दुःखिता सा पूर्वं सुखं स्मृत्वाऽऽह ॥८२-८६॥ अहो भ्रातर्भगिन्यम्ब, किं वच्मि। पत्युरारोग्याशयेहागता। कथं स्थेयम्। कं शरणं यामि। कः पाता।

बाल्य एव मया गौरी पूजिता शङ्करोऽपि च ॥
गौरीहरौ मया प्रीत्या विवाहसमयेऽर्चितौ ॥ ८९ ॥
भवानी चार्चिता भक्त्या मया सौभाग्यकामया ॥
सुवासिन्योऽपि मां प्रोचुर्व्रतान्याचरितानि मे ॥ ९० ॥
यथोक्तं व्रतमाचीर्णं सौभाग्यदमखण्डितम् ॥
व्यर्थं जातं समस्तं तद्रुष्टा गौरी ममोपरि ॥ ९१ ॥
चोरो मेऽद्य हरिद्रायाः कण्ठसूत्रस्य चागतः ॥
वराय मेऽखिलं दत्तं कञ्चुकीकेशकङ्कणम् ॥ ९२ ॥
पुण्यं मम कुतो यातं गौरीशः पूजितो वृथा ॥
कथं कृता विनष्टिर्मे[1] किं वक्ष्येऽम्ब भगिन्यहो ॥ ९३ ॥
इत ऊर्ध्वं कथं स्थास्ये पतिः प्राणः स मे गतः ॥
नेतरेण समोऽसौ मे प्राणेशोऽम्ब भगिन्यहो ॥ ९४ ॥
इति नानाप्रकारेण दुःखं चक्रे पतिव्रता ॥
पत्युर्मुखं निरीक्ष्यापि दुःखं चक्रे ततोऽधिकम् ॥९५॥

प्राणेशं त्यक्त्वा कथं जीवितुमुत्सहे। बाल्ये विवाहकालेऽपि गौरीशौ पूजितौ। सौभाग्यार्थं भक्त्या भवान्यर्चिता। सुवासिन्युक्तमखण्डं सौभाग्यव्रतं चीर्णम् ॥८७-९०॥ सर्वं व्यर्थं जातं। गौरी रुष्टा। मे कंठसूत्रहरिद्रयोश्चोर आगतः। कङ्कणादि सर्वं वराय दत्तं। मे पुण्यं क गतं। गौरीशौ वृथाऽर्चितौ। कथं मे घातः कृतोऽतः कथं स्थास्ये। प्राणवत्पतिस्तत्समोऽन्यो न दृष्ट इत्युक्त्वा सा पतिमुखं दृष्ट्वाऽतीव दुःखिताऽ-

१ विनाशः.

गतासुमपि चालिंग्य पतिं सा सुदती सती ॥
रुदती पूर्वदिवसान्स्मृत्वा स्नेहं तथेशितुः ॥ ९६ ॥

प्राह प्राणेश्वर स्वामिन्कुतो मां हातुमिच्छसि ॥
व्यलंघयं वचः किं ते ततो मां समुपेक्षसे ॥ ९७ ॥

कुतोऽहं दैवहतका जाता हंताहहा हरे ॥
नाथ त्वं मे निधिर्लब्धो नष्टं ते जीवितं कथम् ॥९८॥

मया हृतो विनाशेऽत्र भवान्हित्वा तव स्वकान् ॥
यथाऽवधीद्दशरथः श्रावणं त्वाऽप्यहं तथा ॥ ९९ ॥

जनकं जननीं तेऽद्य त्यक्त्वा त्वां हतवत्यहम् ॥
श्रुत्वा ममापि वार्तां तावुभौ प्राणांस्त्यजिष्यतः १००

एतद्धत्यात्रयं मेऽभूत्पापिनी वैरिणी च ते ॥
अहमेषा कथं लोके न भवेत्पतिघातिनी ॥ १ ॥

चण्डालीदृक्पापिनी मां निन्दन्ति सकलाः खलु ॥
बलान्मया हृतः प्राणः प्राणेश्वर वदान्य ते ॥ २ ॥

भूत्। शवमालिंग्य पूर्वकालं स्नेहं च स्मृत्वा रुदत्याह। हा नाथ, मां हातुं कथमिच्छसि। ते वचो व्यलंघयं किं हन्ताहहा। हा दैवहीनाऽस्मि। ते जीवितं कथं नष्टं। त्वन्नाशार्थं मयाऽत्रानीतोऽसि। दशरथः श्रावणमिवाहं त्वां ते पितरौ त्यक्त्वाऽघातयम् ॥९१-९९॥ इमां वार्तां श्रुत्वा ते पितरौ मरिष्यतः। हत्यात्रयं मेऽर्जितं। अहं पतिघ्नी, ते वैरिणी, चण्डाली पापाऽहं निन्दास्पदाऽसित्वत्ते वपुर्विदूष्या प्राणहर्त्री अभवं।

न स्त्रीयं किं तु ते द्वेष्ट्री सुतीक्ष्णा छूरिका यथा ॥
त्वच्छरीरे भृशं विद्धा भवत्प्राणानपाहरत् ॥ ३ ॥

मातापितावन्धवस्ते यद्यन्ते सन्निधौ तदा ॥
बहुदुःखं न तेषां तु तत्र विघ्नो मया कृतः ॥ ४ ॥

श्वश्रूश्च श्वशुरो वृद्धो नाशा पूर्णाऽभवत्तयोः ॥
परित्यज्यातिवृद्धौ तौ कथं यास्यसि धर्मवित् ॥ ५ ॥

एक एव तयोः पुत्रो भवान्नान्योऽस्ति पालकः ॥
मां चापि कृपणां दीनां कथं प्राणप[1] हास्यसि ॥ ६ ॥

अतः क्वाहं गमिष्यामि दुर्भगायाश्च कोऽविता ॥
नाभाष्यैकं चापि मन्त्रं निर्गतोऽसीश्वर द्रुतम् ॥ ७ ॥

प्राणेश्वरो मम त्वं भो महत्त्वं ते कथं मया ॥
विस्मर्यते नान्यतुल्यस्त्वं मां रक्षितवानसि ॥ ८ ॥

न कदापि पृथक्शय्या वामहस्तोपधानिका ॥
तत्स्मृत्वा खिद्यते मे हृत्कथं जीवाम्यतः पते ॥ ९ ॥

त्वत्सामीप्याभावात्पित्रादेरतिदुःखं भवेत्तेषामहमेव विघ्नमकरवं। वृद्धश्वशुरयोर्नाशा पूर्णा। तत्त्यागस्तेऽधर्म एवैक एव भवांस्तत्पुत्रो नान्यस्त्राता। मां दीनां च त्यक्त्वा कथं गतोऽसि। क्वाहं यास्ये। दुर्भगाया मे कस्त्राता। नैकमपि मन्त्रमुक्त्वाऽऽशु गतोऽसि। हे प्राणेश, ते महत्त्वं कथं विस्मर्यते ॥१००-१०८॥ न कदापि पृथक्शयनादि कृतम्।

१ प्राणेश्वर.

न पतिस्त्वं मम प्राणः स्मरिष्ये कति ते गुणान् ॥
निर्विण्णो मां परित्यज्य धर्मपत्नीं क गच्छसि ॥११०॥

अतः कं शरणं यामि को वा मां प्रतिपालयेत् ॥
जनापवादोऽसौ बालविधवेति मयि स्थितः ॥ ११ ॥

नोक्त्वा धीवादमप्येकं प्राणनाथ गतोऽस्यहो ॥
अहहा केशवपनं कृत्वा यास्याम्यहं क च ॥ १२ ॥

यावत्पूर्णं तव प्रेम तावत्तातौ च विस्मृतौ ॥
आहूताऽपि न याताऽहं तद्गृहं त्वधुना कथम् ॥ १३ ॥

न याता त्वत्सुखोपेक्षाभीतितोऽहं पितुर्गृहम् ॥
वदान्य दैन्यमुज्झित्य चित्तवृत्तिर्धृता तव ॥ १४ ॥

मित्रं यावन्मयि छत्रं त्वं तावदहमाधिहन् ॥
मान्या पवित्रा सर्वत्र सदा निन्दास्पदाऽधुना ॥ १५ ॥

अहं श्वशुरसामीप्यं यास्ये चेन्मन्मुखेक्षणात् ॥
मरिष्यतस्तौ चारण्यं जातं पुण्यगृहं तव ॥ १६ ॥

तत्स्मृत्वा मनः खिद्यते । कथं जीवे ॥ ९ ॥ त्वं मे प्राणः । न पतिः । कति गुणास्ते स्मरणीयाः । धर्मपत्नीं मां त्यक्त्वा क गच्छासि । को मां पालयेत् । बालविधवेति जनापवादो मयि स्थितः । एकमपि धीवादं नोक्त्वा यातोऽसि । केशवपनं कृत्वा क गन्तव्यम् । यावत्ते प्रेम पूर्णं तावदाहूताऽप्यहं पितृगृहं न याताऽधुना कथं व्रजेयम् । त्वत्सुखोपेक्षा-भीत्या पित्रादींस्त्यक्त्वा ते चित्तवृत्तिर्धृता । यावत्त्वं छत्रं तावदहं सर्वत्र पवित्राऽधुना निन्दास्पदाऽभवम् । श्वशुरौ मन्मुखेक्षणान्मरिष्यतः । गृह-

त्वामारोग्यार्थमानीय विहायेह कथं पुनः ॥
यास्ये गृहं राक्षसीयं पापिनी वा विरूपिणी ॥ १७ ॥
इति नानाप्रकारैः सा कान्ता जाताऽतिदुःखिता ॥
अत्रान्तरे तु सहसा सिद्ध एक उपागतः ॥ १८ ॥
भस्मलिप्तो जटाधारी योगी रुद्राक्षभूषितः ॥
त्रिशूलहस्त आगत्य तापसस्तत्र संस्थितः ॥ १९ ॥
तामाश्वास्याब्रवीद्भीरु कुतो रोदिषि मूर्खवत् ॥
ललाटे लिखितं यत्तत्परिहार्यं न सर्वथा ॥ १२० ॥
पूर्वकर्मफलं यद्यदर्जितं तद्ध्रुवं खलु ॥
लग्नं स्वपृष्ठतो नूनं व्यर्थं रोदिषि निष्फलम् ॥ २१ ॥
शोचस्यष्टदिनं चेत्त्वमायास्यन्त्यसवोऽस्य किम् ॥
धात्रा यल्लिखितं भाले तत्तथैव भविष्यति ॥ २२ ॥
दुःखं करोषि मौढ्येन कश्चिरं जीवितो भुवि ॥
मृत्युः केषां न विषयो[1] वद विस्तरतोऽयि माम् ॥ २३ ॥

मरण्यं जातम् ॥१०-१६॥ राक्षसी पापा विरूपाऽहं आरोग्यार्थं त्वामिहानीय त्यक्त्वा कथं गृहं यास्ये। इत्यनेकप्रकारैः सा दुःखिता। तदैको भस्मालिप्तो जटिलो रुद्राक्षधृक् शूली तापसः सिद्ध एत्य तामाह। मूर्खवत्कुतो रोदिषि। ललाटलिपिः कथं परिहार्या। स्वपृष्ठलग्नं पूर्वार्जितं अलंघ्यम्। निष्फलेयं शुक्। अष्टदिनशोकतो गताः प्राणा आयास्यन्ति किम्। यद्धात्रा लिखितं तत्तथैव दुःखं भोग्यम्। कश्चिरं जीवी। मृत्युः

१ गोचरः.

ब्रूषेऽयं मत्पतिरिति क्व गतः कुत आगतः ॥
कस्ते पतिस्त्वं च का वा कौ वा वां पितरौ वद ॥२४॥
सङ्गच्छन्ति यथाऽनेककाष्ठानि सलिलौघतः ॥
क्षणं स्थित्वा पुनस्तानि वियुक्तानि भवन्ति च ॥ २५॥
रात्रौ वृक्षे यथैकस्मिन्मिलन्ति बहुपक्षिणः ॥
निशातिक्रमणादूर्ध्वं वियुक्ता यान्ति चाभितः ॥ २६ ॥
संसारेऽस्मिंस्तथा नारि को जातः को मृतो वद ॥
मायामोहादयं पुत्रपतिदारात्मको भ्रमः ॥ २७ ॥
गङ्गाप्सु वायुवेगेन सञ्जाता बुद्बुदा अपि ॥
नश्वरास्ते तथा देहः कर्मणाऽतो वृथैव शुक् ॥ २८ ॥
आत्मानमविचार्याजं ब्रूषे देहं पतिं जडम् ॥
देहः पञ्चात्मको गौणो जातः कर्मानुसारतः ॥ २९ ॥
गुणानुबन्धि कर्मापि तदेव सुखदुःखदम् ॥
तन्मायामयसम्बन्धाद्धातमप्यनृतं खलु ॥ १३० ॥

केषां न विषयो वदायं क्व गतः। कुत आगतस्त्वं का वा। कौ ते पितरौ। नद्यां क्षणं काष्ठयोगवद्रात्रौ वृक्षे पक्षियोगवदयं सम्बन्धः ॥१७-२६॥ वायुवेगाज्जले बुद्बुदा इव कर्मतो नश्वरा देहाः। अत्र को जातः। को मृतः। मायामयोऽयं पुत्रादिको भ्रमः। आत्मानमविचार्य जडं देहं पतिं पश्यसि। देहः कर्मानुसारी। कर्म गुणानुबन्धि सुखदुःखदम्।

---

१ जन्मादिविकाररहितं.

सत्त्वं रजस्तम इति गुणास्ते प्राकृता मताः ॥
नात्मनो गुणसम्बन्धो माया तु त्रिगुणात्मिका ॥३१॥

संसारेऽस्मिन्वर्तमानाः कर्माधीना हि जन्तवः ॥
गुणानुसारतस्ते तु सौख्यदुःखविभागिनः ॥ ३२ ॥

कल्पकोट्यायुषो देवास्तेऽपि कर्मानुवर्तिनः ॥
स्युः कालगोचरास्तेऽपि पुनर्मर्त्यस्य का कथा ॥३३॥

सहैव काल आयातः कालाधीनमिदं वपुः ॥
कः स्थिरं कल्पयेद्देहं पञ्चभूतगुणोद्भवम् ॥ ३४ ॥

कालकर्मगुणाधीनो देहोऽयं पाञ्चभौतिकः ॥
उत्पन्नेऽस्मिन्न सन्तोषः कार्यो नष्टे न चापि शुक्॥३५॥

यदा गर्भेऽयमुद्भूतस्तदा ज्ञेयो हि नश्वरः ॥
यस्य स्याद्यावदारब्धं तावद्देहोऽस्य तिष्ठति ॥ ३६ ॥

बाल्येऽपि कस्यचिन्मृत्युर्वार्धक्ये कस्यचिन्मृतिः ॥
यादृग्यस्यार्जितं तादृक्तस्येह च भविष्यति ॥ ३७ ॥

गुणास्तु मायिकाः । नात्मनः सत्त्वरजस्तमोगुणसम्बन्धः । संसारे वर्तमानाः कर्माधीना जीवाः सुखदुःखभागिनः । कल्पायुषो देवा अपि कर्माधीनाः कालगोचरा मर्त्यस्य तु का कथा । सहैव काल आयातः । तदधीनो देहः कथं स्थिरः । कालकर्मगुणाधीने पाञ्चभौतिके देहे जाते मृते च हर्षः शोकश्च न कार्यः ॥२७-३५॥ गर्भगोऽपि नश्वरो देहो यावदारब्धं तिष्ठति । बाल्ये वार्धक्ये वा स्वार्जितानुसारी मृत्युः ॥३६-

पूर्वजन्मार्जितसमं भोग्यं दुःखं सुखं च वा ॥
पापपुण्यानुसारेण तथैव स्त्र्यादिसङ्गमः ॥ ३८ ॥

सुखदुःखाप्तिहान्यायुर्मृतयः पापपुण्यतः ॥
धात्रा ललाटे लिखितं तद्भाव्यन्यत्कथं भवेत् ॥ ३९ ॥

कदाचित्पुण्यवशतो दुष्कर्म परिहार्यते ॥
देवदानवमर्त्यैश्च कालो नैव निवार्यते ॥ १४० ॥

शतजन्मस्वतीतेषु त्वं कस्य स्त्री तथाऽग्रतः ॥
व्यर्थं दुःखं करोषीदं मौर्ख्यं तेऽदो विचारतः ॥ ४१ ॥

त्वग्रक्तमांसमज्जास्थिश्लेष्ममूत्रविडात्मकः ॥
जुगुप्सितो बहिश्चान्तर्देहोऽयं पाञ्चभौतिकः ॥ ४२ ॥

ईदृशे सति घोरेऽस्मिन्देहे कः स्वार्थ ईक्षितः ॥
मलमूत्रात्मकं हेयममुं शोचसि वा परम् ॥ ४३ ॥

संसारसागरोत्तारो यथा येन भविष्यति ॥
तथा विचारः कर्तव्य इति तां तापसोऽब्रवीत् ॥ ४४ ॥

३७॥ पूर्वजन्मार्जितं पापपुण्यानुसारि सुखं दुःखं च भोग्यम्। तथैव स्त्र्यादिसङ्गमः। यत्सुखादि धात्रा ललाटे लिखितं तदन्यथा भवेत्किम्। कदाचित्पुण्यवशाद्दुष्कर्म वार्यते। कालस्तु देवादिभिर्न वार्यते। सम्बन्धः सत्यश्चेत्त्वं पुरा कस्य का वाऽऽसीरग्रे का वा भविष्यसि। व्यर्थं दुःखं करोषि। विचारय। त्वग्रक्तमांसास्थिश्लेष्मविण्मूत्रात्मकोऽन्तर्बहिश्च जुगुप्सितोऽयं पाञ्चभौतिको देहोऽत्र कः स्वार्थः। यं शोचसि सोऽयं मलमूत्रात्मकोऽतः संसारतरणोपायः कार्यः ॥३८-४४॥ इति तेन बोधिता

एवं सा बोधिता कान्ता दुःखिताऽपि पतिव्रता ॥
विज्ञाय तद्बोधहार्दं शोकं तत्याज मायिकम् ॥ ४५ ॥

तदा करौ संमानीय[1] धृत्वा तत्पादयोः शिरः ॥
विनता प्राह करुणं स्वामिन्नुद्धर मामितः ॥ ४६ ॥

येन मार्गेण मां स्वामिन्गन्तुं समुपदेक्ष्यसि ॥
यास्ये त्वमेव पितरौ त्राहि त्राहि दयानिधे ॥ ४७ ॥

भवोत्तारो यथा मे स्याद्यदाज्ञापयसि प्रभो ॥
तथैव चाचरिष्यामीत्युक्त्वा तच्चरणेऽग्रहीत् ॥ ४८ ॥

इति तद्वचनं श्रुत्वा प्रसन्नवदनाम्बुजः ॥
तां प्राहाचरणं स्त्रीणां धर्म्यं चोभयतारकम् ॥ ४९ ॥

गाङ्गाधरिस्त्वत्र सरस्वतीद्विजो वदिष्यति श्रीगुरुसच्चरित्रम् ॥
नृणां तु यस्य श्रवणादघान्तः सर्वार्थलाभाश्च यतो महान्तः १५०

दुःखिता सा तद्बार्दं ज्ञात्वा मायिकं शोकं त्यक्त्वा करौ बद्ध्वा तत्पदोः शिर आधाय करुणमाह । स्वामिन्मामुद्धर । यथोपदेशं चरिष्ये । त्राहि त्राहि दयानिधे, भवोत्तारो यथा स्यात्तथाऽऽज्ञापयेति श्रुत्वा सुप्रसन्नः स्त्रीणां धर्म्यमाचारं प्राह ॥४५-४९॥ गाङ्गाधरिस्त्वत्र स० ॥ १५० ॥ इति गुरुसंहिताचूर्णिकायां त्रिंशोऽध्यायः ॥

---

[1] संधाय.

(इति)श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्यगङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञितमहाराष्ट्रभाषान्वित-गुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वतीयतिविरचितायां श्रीगुरुसंहितायां कर्मकाण्डे त्रिंशः (अध्यायः) ॥

॥ आदितः श्लोकाः ॥ ३४०९ ॥

॥ इति त्रिंशोऽध्यायः ॥ ३० ॥

---

## ॥ अथ एकत्रिंशोऽध्यायः ॥ ३१ ॥

॥ श्रीगणेशाय नमः ॥

सिद्धः प्राह शृणुष्वेदमपूर्वं नामधारक ॥
योगीश्वरः कारुणिकः स्त्रियो धर्मानिमाञ्जगौ ॥ १ ॥

योगीश्वर उवाच स्त्रीं स्त्रीणामाचार उच्यते ॥
विस्तराच्छृणु तं साध्वि भवसागरतारकम् ॥ २ ॥

सति पत्यौ[1] च यो धर्मो यश्च तस्मिन्मृतेऽपि च ॥
उभयं विस्तराद्वच्मि सावधानमनाः शृणु ॥ ३ ॥

कथा स्कन्दपुराणस्था काशीखण्डेऽतिविस्तृता ॥
स्त्रीणां धर्मा बहुविधास्तानेकाग्रमनाः शृणु ॥ ४ ॥

महामुनिरगस्त्यर्षिर्यः काशीभुवने स्थितः ॥
लोपामुद्रा सुभद्राऽस्य पत्नी प्राज्ञी महामतिः ॥ ५ ॥

अथ सारसंग्रहश्लोकोऽयम्—

स्त्रीधर्ममुवाच कुरूमितेऽध्याये विषयोक्त (?) मुपस्थिताम् ॥
विंध्याद्रिचरित्रसमन्विताागस्त्यर्षिसतीचरितं च सन् ॥ १ ॥

सिद्ध आह। योगीशः स्त्रीधर्मानुवाच ॥ १ ॥ हे साध्वि, भवतारकं स्त्रीधर्मं शृणु। पत्यौ सति मृते चोभयधर्मान् शृणु। स्कान्दे काशीखण्डे ते विस्तृताः। काशीस्थो महर्षिरगस्त्यः। तत्पत्नी प्राज्ञी लोपामुद्रा

---

१ भर्तरि विद्यमाने,

पतिव्रताशिरोरत्नं तृतीयाऽन्या न तत्समा ॥
धर्मेणैवासतुरुभौ तौ काशीपुरभूषणौ ॥ ६ ॥

अगस्त्यस्याभवच्छिष्यो विन्ध्यनामा महाचलः ॥
भुवि पर्वतरूपेण सोऽवर्तत गुरुप्रियः ॥ ७ ॥

स नानावनशोभाढ्यः स नानावृक्षमण्डितः ॥
नानालतासमाश्लिष्टो नानादुहितृ[1]मण्डितः ॥ ८ ॥

ब्रह्मर्षिर्नारदमुनिः पर्यटन्नेकदाऽभ्यगात् ॥
तं निरीक्ष्य स सन्तुष्टस्तुष्टाव स धराधिपम्[2] ॥ ९ ॥

नारदः प्राह विन्ध्याद्रे त्वादृङ्नान्यो निरीक्षितः ॥
रत्नमय्यो महाभूम्यो रम्यास्त्वय्यमिता नगाः ॥१०॥

न्यूनमेवेदमत्रैकं नोन्नतस्त्वं तु मेरुवत् ॥
न ते महोन्नतत्वं तत्ततो नीचत्वमीक्ष्यते ॥ ११ ॥

इत्युक्तो नारदेनासौ कुपितो विन्ध्यपर्वतः ॥
अवर्धत क्षणान्मेरुं तुच्छीकर्तुं समुद्यतः ॥ १२ ॥

पतिव्रतोभौ काशीभूषणभूतौ। तच्छिष्यो विन्ध्याचलो गुरुप्रियः नानालतावृक्षवननदीमण्डितः। कदाचित्पर्यटन्नारदस्तं दृष्ट्वाऽऽह। त्वादृङ्नान्योऽद्रिर्दृष्टः। त्वयि रत्नमय्योऽनेकभूमयोऽद्रयश्च। त्वय्येकं न्यूनं मेरुवन्न महोन्नतत्वं ॥२-१०॥ इत्युक्तः स कुपितो मेरुं तुच्छीकर्तुं वर्ध-

१ नदी २ पर्वतम्.

वर्धमानो ययौ विन्ध्यः सूर्यमण्डलसम्मुखम् ॥
अतीत्य स्वर्गभुवनं ववृधे स त्वनुक्रमात् ॥ १३ ॥

विन्ध्यदक्षिणभागेऽभूदन्धकारः सदैव हि ॥
नाविशन्सूर्यकिरणा लुप्तं यज्ञादिकर्म च ॥ १४ ॥

संहत्य[1] सर्वऋषय इन्द्रस्य भुवनं ययुः ॥
इन्द्राय कथयामासुर्विन्ध्यकर्म तदद्भुतम् ॥ १५ ॥

इन्द्रोऽपि कुपितो यातो ब्रह्मलोकमकल्मषम् ॥
शशंस ब्रह्मणे नत्वा विन्ध्यवृत्तान्तमादितः ॥ १६ ॥

ब्रह्माऽप्युवाच देवेन्द्र तद्गुरुर्ब्रह्मविद्वरः ॥
अस्ति काशीपुरेऽगस्त्यो दक्षिणायै तमीरय[2] ॥ १७ ॥

आधारस्तत्र स भवेन्निराधारा हि दक्षिणा ॥
अत एवेरयागस्त्यं दक्षिणायै दिशे हरे[3] ॥ १८ ॥

अगस्त्यं गुरुमायान्तमवलोक्यैव सम्मुखम् ॥
भक्त्या स शरणं गत्वा विन्ध्यः प्रणिपतिष्यति ॥१९॥

मानो विन्ध्यः सूर्यमण्डलमतीत्यानुक्रमाद्ववृधे। ततो दक्षिणभागे सदाऽन्धकारोऽभूद्यज्ञादिकर्मलोपश्चेन्द्राय ऋषयस्तत्कथयामासुः। कुपित इन्द्रो ब्रह्माणमेत्य तत्सर्वं प्राह। ब्रह्मोवाच। हे शक्र, ब्रह्मवित्तद्गुरुरगस्त्यः काश्यामस्ति तं दक्षिणदिशि प्रेरय। स दक्षिणदिगाधारो भविष्यति। तं गुरुमायान्तं दृष्ट्वा विन्ध्यः प्राणिपतिष्याति। शिरोभिः प्राणिपतन्तं भूस-

१ एकत्र मिलित्वा २ प्रेरय ३ इन्द्र.

न वर्धयेति तं शिष्यमगस्त्य उपदेक्ष्यति ॥
प्रणतं तं शिरोभिः स भूमितुल्यं करिष्यति ॥ २० ॥

अत एव सुरैः साकं काशीं याहीन्द्र मा चिरम् ॥
विनयावनतो भूत्वा प्रार्थयित्वा मुनीश्वरम् ॥ २१ ॥

अगस्त्यं दक्षिणदिशं प्रयत्नेन समीरय ॥
इत्यादिष्टो देवनाथो निर्ययौ तं प्रणम्य च ॥ २२ ॥

इन्द्रो देवैश्च सहितः सबृहस्पतिरागतः ॥
अविमुक्तपुरीं काशीमृषिभिश्चापि संयुतः ॥ २३ ॥

अगस्त्यस्याश्रमं प्राप ऋषिभिः सहितः स्वराट् ॥
कृत्वाऽग्रतो देवगुरुं परानन्दं बृहस्पतिम् ॥ २४ ॥

अगस्त्यो मुनिरालोक्य सर्वानभ्यागतान्सुरान् ॥
अर्घ्यपाद्यादिभिर्भक्त्या पूजयामास भाविकः ॥ २५ ॥

बृहस्पतिः सदेवः स तुष्टावागस्त्यमुत्तमम् ॥
तथैव पुण्यकीर्तिं तां लोपामुद्रां पतिव्रताम् ॥ २६ ॥

बृहस्पतिः प्राह देवाः शृणुताख्यानमुत्तमम् ॥
पतिव्रताया नैवान्या लोपामुद्रासमा सती ॥ २७ ॥

मानं करिष्यति ॥११-२०॥ अतौ देवैः सह काशीं गत्वा विनयेन तं प्रार्थ्यानयेति ब्रह्मणोक्त इन्द्रो देवैर्ऋषिभिर्बृहस्पतिना च सह काशीं गत्वा गुरुमग्रतः कृत्वाऽगस्त्याश्रमं प्राप। अगस्त्यस्तानर्घ्यादिभिरानर्च। सदेवो गुरुस्तं लोपामुद्रां च स्तुवन्नाह। देवाः, शृणुतेयं पतिव्रताऽनुत्तमा-

अनसूया च सावित्री पवित्रा चाप्यरुन्धती ॥
शाण्डिल्यपत्नी विख्याता सम्मताऽत्र पतिव्रता ॥२८॥

स्वायम्भुवसती ख्याता शतरूपा च पार्वती ॥
श्रीलक्ष्मीर्मेनका चापि हिमवत्प्राणवल्लभा ॥ २९ ॥

ध्रुवमाता सुनीतिश्च संज्ञाकान्ता स्वभावतः ॥
स्वाहादेवीति विख्याताऽग्निकान्ता पतिदेवता ॥ ३० ॥

आभ्योऽधिकाऽत्र विख्याता लोपामुद्रा पतिव्रता ॥
मत्तः पतिव्रताधर्मान्देवाः शृणुत विस्तरात् ॥ ३१ ॥

पतिव्रतानामाचारो बहुशास्त्राभिसम्मतः ॥
मुख्यभोजनमेवास्याः पत्युरुच्छिष्टमिष्टदम् ॥ ३२ ॥

कार्या नक्तंदिवं सेवा पत्युश्चातिथिपूजनम् ॥
दानधर्मादि नो कार्यं पत्युराज्ञां विना धिया ॥ ३३ ॥

सेव्योऽखण्डं सदा भर्ता स्थिते तस्मिन्स्थिता भवेत् ॥
नासीताज्ञां विना नारी पतिं नैवावमानयेत् ॥३४॥

ऽनसूयासावित्र्यरुन्धतीशतरूपापार्वतीश्रीमेनकासुनीतिसंज्ञास्वाहा एताः पतिदेवताः ॥२१-३०॥ आभ्योऽधिका पतिव्रतेयम्। पतिव्रताचारो बहुशास्त्रसम्मतः। अस्याः पत्युरुच्छिष्टं मुख्यभोजनम्। पतिसेवाऽहोरात्रं कार्याऽतिथिसत्कारश्च कार्यः। दानादिकं पत्युराज्ञां विना न कार्यम्। पत्यौ स्थिते स्थिताऽऽसीने चाज्ञयाऽऽसीत। तं नैवावमानयेत्। सेवा-

सेवाकाले पतिं चापि भावयेन्मनसा हरिम् ॥
रात्रौ शयनकालेऽपि भक्त्या सेव्यः पतिर्मुदा ॥३५॥

गाढनिद्रायुते पत्यौ स्त्री शयीताप्रमादतः ॥
चोलिकाकर्णभूषाणां स्पर्शं भर्तुर्न चाचरेत् ॥ ३६ ॥

चोलीस्पर्शाद्भर्तुरायुर्हानिर्वध्वास्तथैव च ॥
पतिनामोच्चारणाच्च तथैवायुःक्षयः स्मृतः ॥ ३७ ॥

विनिद्रो नोत्थितो यावत्पतिस्तावत्पतिव्रता ॥
पूर्वमुत्थाय कुर्वीत गृहसम्मार्जनादिकम् ॥ ३८ ॥

पतिपूजाऽन्वहं कार्या पाद्यार्घ्यादिभिरादरात् ॥
भावयित्वा शङ्करोऽयमित्यंघ्र्योर्विन्यसेच्छिरः ॥ ३९ ॥

पत्यौ गृहे विद्यमाने भूषा धार्यास्तनूपरि ॥
ग्रामान्तरे [1]प्रोषिते च पत्यौ भूषां न धारयेत् ॥ ४० ॥

काले तं मनसा हरिं भावयेत्। स्वापकाले भक्त्या पतिः सेव्यः। तस्मिन्गाढं निद्रितेऽप्रमत्ता शयीत। कंचुकस्य पत्युरङ्गस्पर्शं न कुर्यात्। कृते चायुर्हानिस्तथैव च नामोच्चारणात्। यावच्छयनात्पतिर्नोत्थितस्तावच्छयनात्पूर्वमुत्थाय गृहसम्मार्जनादि कृत्वा स्नात्वाऽन्वहं शङ्करभावनया पाद्यादिभिः पतिः पूज्यः। तत्पदयोः शिरो निधेयम् ॥३१-३९॥ पत्यौ गृहे सति भूषा धार्याः। प्रोषिते च न धार्याः। भर्ता निष्ठुरं वक्ति चेत्क्ष-

---

[1] देशांतरगते.

निष्ठुरं वक्ति चेद्भर्ता क्षमस्वेति तमर्थयेत् ॥[2]
क्षमापयित्वाऽपि तस्य क्रोधादीन्न वहेद्धृदि ॥ ४१ ॥

पतिं बहिरुपायान्तं गच्छेत्सम्मुखमादरात् ॥
त्यक्त्वा सहस्रकार्याणि पृच्छेत्काऽऽज्ञेति सा सती ४२

पृष्ट्वाऽनामयमव्यग्रा यद्यदाज्ञापयत्यसौ ॥
तत्तथैव प्रकर्तव्यं न स्वातंत्र्यं समाचरेत् ॥ ४३ ॥

इदं पतिव्रतालक्ष्म न गन्तव्यः परालयः ॥
दोषा भवन्त्यनेकेऽस्याः परगेहगमात्खलु ॥ ४४ ॥

कार्यार्थं यदि गन्तव्यं नेक्ष्याः पुंसः स्त्रियोऽपि च ॥
आगन्तव्यं द्रुतं भूयः स्थेयं स्वगृह एव तु ॥ ४५ ॥

चेत्स्वातन्त्र्याद्बहिर्यायात्सोल्लूकीं योनिमृच्छति ॥
एवंधर्मान्विता साध्वी लोपामुद्रा पतिव्रता ॥ ४६ ॥

मस्वेति प्रार्थयेत्। तेन क्रोधादिना दुरुक्तं हृदि न धारयेत्। ग्रामादागतं पतिं सहस्रकार्याणि त्यक्त्वाऽभिमुखं गच्छेत्। अनामयं पृष्ट्वा यदुक्तं तत्तथैव कार्यं। स्वातन्त्र्येण न कार्यं। परगृहं च न गन्तव्यम् ॥४०-४३॥ गमने चानेकदोषाः। कार्यार्थे गन्तव्यं चेत्स्त्रियः पुंमांसश्च न वीक्ष्याः। द्रुतमागन्तव्यं। तत्र न स्थेयं। स्वगृह एव स्थेयं ॥४४-४५॥ स्वातन्त्र्येण बहिर्गमने उलूकयोनिगतिः। एवंधर्मान्विता लोपामुद्रा न बहिर्गच्छति।

---

२ प्रार्थयेत्.

लोपामुद्रा सती नैव बहिर्द्वाराद्धि गच्छति ॥
प्रातःकाले पुरोत्थाय कृत्वा सम्मार्जनादिकम् ॥ ४७ ॥

देवोपकरणादीनि नीरजस्कानि चैव हि ॥
कृत्वा गन्धाक्षतसुमाद्याहरेत्पतितुष्टिकृत् ॥ ४८ ॥

अनुष्ठानं समाप्येत यावत्तावच्च कारयेत् ॥
पाकादिकं चित्तवृत्तिं पत्युर्धृत्वा चरेत्सदा ॥ ४९ ॥

भुक्त्वाऽपि भर्तुरुच्छिष्टं मनोवाक्कायकर्मभिः ॥
पत्यौ तु प्रोषिते धेनोरुच्छिष्टग्रहणं मतम् ॥ ५० ॥

दत्त्वाऽन्नमतिथिभ्यश्च ग्रासं वा धेनवे ततः ॥
सात्त्विकं भोजनं कुर्यात्पवित्रं च पतिव्रता ॥ ५१ ॥

नीरजस्कं गृहं कार्यं कार्यो धर्मः पृथङ्न च ॥
तथा व्रतोपवासादि सती नाज्ञां विना चरेत् ॥ ५२ ॥

तथोत्सवो नागरिको नैव प्रेक्ष्यः कदाचन ॥
तथैव तीर्थयात्रादौ न गन्तव्यं तया सदा ॥ ५३ ॥

प्रातरुत्थाय सम्मार्जनादि कृत्वा स्नात्वा विमलीकृतदेवपूजोपकरणानि गन्धादि च पत्यै देयम् ॥४६-४८॥ भर्तुश्चित्तवृत्तिं धृत्वाऽनुष्ठानसमाप्तेः पूर्वं पाकादि कृत्वा पत्युरुच्छिष्टं भुक्त्वा मनोवाक्कायैः पतिस्तोषणीयः। प्रोषिते च पत्यौ धेनवेऽतिथये चान्नं दत्त्वा सात्त्विकाहारः कार्यः। गृहं नीरजस्कं कार्यं। पृथग्धर्मो न कार्यो व्रतोपवासादि पत्युराज्ञयैव कार्यं। नगरोत्सवादिर्न वीक्ष्यः। तीर्थयात्रादि न कार्यं। भर्तरि तुष्टे दुश्चित्ता

स्वभर्तरि तु सन्तुष्टे नैव दुश्चित्तया तया ॥
भाव्यं पत्यौ च दुश्चित्ते न भाव्यं हृष्टचित्तया ॥ ५४ ॥

रजस्वला यदि भवेन्मौनं धार्यं प्रयत्नतः ॥
दर्शितव्यं तया नास्यं श्रोतव्यो न श्रुतिध्वनिः ॥५५॥

एवं त्रिदिनपर्यन्तं व्रतं धार्यं तया ततः ॥
सुस्नाता तुर्यदिवसे भर्तृवक्त्रं विलोकयेत् ॥ ५६ ॥

गृहे न चेत्पतिस्तस्य ध्यायेत्सा मनसा मुखम् ॥
अर्कमण्डलमीक्षेद्वा ततो गेहं विशेत्सती ॥ ५७ ॥

पत्युरायुर्वर्धनार्थं हरिद्राकुंकुमे सती ॥
सिंदूरं कज्जलं सूत्रं वहेद्वेणीं विराजिता ॥ ५८ ॥

वेणीबन्धश्च ताम्बूलं सुवासिन्याः प्रशस्यते ॥
पत्युः समीपे करयोर्नित्यं कङ्कणधारणम् ॥ ५९ ॥

तस्मिन्दुश्चित्ते च सती हृष्टा न भवेत्। रजसि प्राप्ते मौनं धार्यं। मुखं न दर्शनीयं। वेदध्वनिर्न श्राव्य एवं दिनत्रये व्यतीते सुस्नाता पतिमुखं वीक्षेत् ॥४९-५६॥ असम्भवे सूर्यं वीक्ष्य गृहं विशेत्। भर्तुरायुर्वर्धनार्थं हरिद्राकुंकुमसिन्दूरकज्जलमङ्गलसूत्रादि धार्यं। पत्युः समीपे वेणीबन्धस्ता-

१ मुखं २ वेदवाणी.

समीपस्थस्त्रिया इष्टं रजक्या अपि नाचरेत् ॥
जिनस्त्रिया दरिद्रायाः कुट्टिन्याश्च विशेषतः ॥ ६० ॥

पतिनिन्दारतायाश्च भाषणादपि दूषणम् ॥
आसां च भाषणाच्चापि दूषिता स्यात्पतिव्रता ॥ ६१ ॥

श्वश्रूं च श्वशुरं त्यक्त्वा ननान्दां देवरानपि ॥
विभक्ता भवितुं येच्छेच्छुनी सैव भविष्यति ॥ ६२ ॥

स्नायान्न नग्ना मुसल उलूखल उतापि वा ॥
दृषदासनयोर्नैवोपविशेत्सा पतिव्रता ॥ ६३ ॥

घरट्टोदुम्बरादौ च नोपवेशः प्रशस्यते ॥
इत्येतैर्लक्षणैर्युक्ता विज्ञेया सा पतिव्रता ॥ ६४ ॥

पत्युः सह विवादं या कुरुते साऽतिदुःखभाक् ॥
पत्युर्मतं यत्तदन्यन्नाचरेत्पतिदेवता ॥ ६५ ॥

यद्यभाग्यः पतिः स्वीयो दुष्टो वाऽपि नपुंसकः ॥
कुष्ठी वा व्याधितः कुब्जो मान्यो देवसमः स च ६६

म्बूलं करकङ्कणं च सुवासिन्याः शस्तं । रजकीनीचस्त्रीदरिद्राकुट्टिनीपतिनिन्दारतानां सङ्गतिर्न कार्या। आभिः सह सम्भाषणेऽपि दोषाः। श्वशुरौ ननान्दां देवरं च त्यक्त्वा या विभक्ता तिष्ठति सा शुनी भविष्यति। नग्नस्नानमुलूखलमुसलदृषदुपलाद्युपवेशनं न कार्यं। तथैव घरट्टोदुम्बरादावपि। पत्या सह विवादकर्त्री दुःखभागिनी ॥५७-६४॥ तस्मात्पत्युर्मतादन्यथा नाचरेत् ॥ ६५ ॥ दुष्टोऽभाग्यो नपुंसकः कुष्ठी रुग्णः

यथाकथञ्चन पतिर्भावयेत्तं हरिं सती ॥
परेशप्रीतिपात्रं सा या तद्वाक्यानुसारिणी ॥ ६७ ॥
भर्तुर्मतानि वस्त्राणि भूषणानि च धारयेत् ॥
दुश्चित्तश्चेत्पतिर्भूषा धारयेन्न पतिव्रता ॥ ६८ ॥
यदि सोपस्करापेक्षा स्वमुखेन वदेन्न तान् ॥
कन्यापुत्रादिमुखतो वाचनीयं प्रयत्नतः ॥ ६९ ॥
न सन्निधौ यदा कोऽपि तदाऽपि न वदेत्स्वयम् ॥
इदमेवाद्य देहीति स्पष्टं नैव वदेत्पतिम् ॥ ७० ॥
पत्युर्दैवाल्लभेद्यत्तेन तोषं वहेत्सती ॥
समर्थान्वीक्ष्य धनिनो न निन्द्यः स्वपतिस्तया ॥७१॥
यात्रिकान्वीक्ष्य यात्रार्थं गन्तुं नेच्छेद्गृदाऽपि सा ॥
पतिसेवैव यात्रा स्यात्तीर्थं तच्चरणाम्बु च ॥ ७२ ॥
पतिपादोदकं पेयं भागीरथ्युदकाधिकम् ॥
सत्याः पूज्यः पतिस्तेन सन्तुष्टाः स्युस्त्रिमूर्तयः ॥७३॥

कुब्जोऽपि देववत्पूज्यः। तथाविधस्यापि हरिभावनया वचनानुसारिणीश्वरप्रीतिपात्रभूता भवति। भर्तुर्मतानि वस्त्रभूषणानि धारयेत्। पत्यौ दुश्चित्ते भूषादि न धार्यम्। सोपस्करापेक्षा चेत्सती स्वयं न वदेत्। कन्यादिमुखतो वाचयेत्। सन्निधौ कोऽपि न चेत्संज्ञया ज्ञापयेन्न साक्षात्। पत्युर्दैवाल्लब्धेन तोषयेत्। श्रीमन्तं परं दृष्ट्वा पतिं न निन्देत्। पतिपादोदकं गङ्गोदकं मत्वा पिबेत्। पतिपूजनात्त्रिमूर्तितोषः। यात्रिकान्दृष्ट्वा तीर्थं गन्तुं नेच्छेत्। पत्युः सेवैव यात्रा। तत्पादोदकमेव तीर्थम् ॥६६-७३॥

नैमित्तिकव्रतेच्छा चेत्कुर्यात्पत्याज्ञया सती ॥
करोति चेत्स्वबुद्ध्या सा भर्तुरायुर्विनाशकृत् ॥ ७४ ॥

ततोऽपि नरकं यायादादाय स्वपतिं तु सा ॥
इति श्रुतिपुराणादिवचनं मम सम्मतम् ॥ ७५ ॥

क्रुद्धा प्रत्युत्तरं दद्याच्छुनी भूत्वा ततः पुनः ॥
जम्बुकी चोच्चकैर्ग्रामसमीपे सा भविष्यति ॥ ७६ ॥

नियमेनान्वहं पत्युः प्रक्षाल्याङ्घ्री पिबेज्जलम् ॥
भुञ्जीत तत उच्छिष्टं दैवलब्धेन हर्षिता ॥ ७७ ॥

प्रत्यक्षं शङ्करस्तस्याः सुप्रसन्नो भविष्यति ॥
दास्यत्यभीष्टकामांश्च सा पत्या स्वर्महीयते[1] ॥ ७८ ॥

वनभुक्त्यै[2] न गन्तव्यं तथा परगृहेऽपि च ॥
तथैवेष्टाप्तगेहेषु नैव गन्तव्यमन्वहम् ॥ ७९ ॥

नैमित्तिकव्रतेच्छा चेत्पत्युराज्ञया कार्यम्। स्वबुद्ध्या करणे भर्तुरायुर्नाशः, पत्या सह नरकवासश्चेति श्रुत्यादिमतम्। क्रुधा प्रत्युत्तरदाने शुनी ततो जम्बुकी च भूत्वा ग्रामसमीपे भविष्यति। प्रत्यहं पतिपादौ प्रक्षाल्य तीर्थं पेयम्। उच्छिष्टान्नं भुञ्जीत। दैवलब्धेन हृष्टायै शिवस्तुष्टोऽभीष्टदो भवति। सा स्वर्गे पत्या सह महीयते। वनभोजनाय परगृहे भोजनाय च न गन्तव्यम्। इष्टाप्तगृहेऽपि प्रत्यहं भुक्त्यर्थं न गन्तव्यम्। धनिनां

---

१ स्वर्गे पूज्या भवति २ भोजनाय.

वार्ता सार्थस्य[1] न श्राव्या स्वपतिर्दुर्बलोऽपि चेत् ॥
अनाचारोऽपि चेद्भर्ता स न निन्द्यः कदाऽपि हि ८०

कथञ्चिद्दुःस्वभावोऽपि तन्निन्दां नैव कारयेत् ॥
लक्ष्मीपतिसमं तं च भावयेदेकभावतः ॥ ८१ ॥

श्वश्रूश्वशुरयोरग्रे नोच्चैः कुर्वीत भाषणम् ॥
नैव कुर्वीत हास्यं च पत्युरग्रे विशेषतः ॥ ८२ ॥

कोपाद्धन्येत चेद्भर्ता तं मरेति वदिष्यति ॥
व्याघ्री भूत्वा महारण्ये कष्टं साऽनुभविष्यति ॥ ८३ ॥

परपुंवीक्षणाच्चापि जन्मान्धा सा भविष्यति ॥
हित्वा पतिं च याऽश्नाति सूकरी सा भविष्यति ॥८४॥

ततस्तेनैव पापेन भूत्वा सा वल्गुली द्रुमे ॥
स्थित्वोर्ध्वचरणाऽश्नाति विष्ठां स्वस्य स्वयं सदा ८५

वार्ता न श्राव्या। दुर्बलोऽनाचारोऽपि भर्ता न निन्द्यः। दुःशीलोऽपि श्रीपतिवन्मान्यः। श्वशुरयोरग्रे नोच्चैर्वदेत्। हास्यं च तथा वर्ज्यम् ॥७४-८२॥ भर्त्रा ताडिता या तं मरेति वक्तीह सा कष्टं व्याघ्रजन्माप्नुयात्। परपुंवीक्षणाज्जन्मान्धता। पतिं हित्वाऽशनात्सूकरजन्म च भविष्यति ॥८३-८४॥ ततो वल्गुली भूत्वा वृक्षेऽधःशिराः स्थित्वा स्वमलभुगभ-

---

१ धनिकस्य.

निष्ठुरं चोत्तरं ब्रूते स्वपत्युः सन्निधौ क्रुधा ॥
सप्तजन्मस्वकं[1] मूका दारिद्र्येण समं भजेत् ॥ ८६ ॥

या सपत्न्या सह द्वेषं करोति मदगर्विता ॥
सप्तजन्मसु दौर्भाग्यं तस्या एवातिदैन्यदम् ॥ ८७ ॥

बुद्ध्या याऽन्यपतिं वीक्षेदङ्गहीना भवेच्च सा ॥
कामतो वीक्षणाद्धीनगृहे दारिद्र्ययुग्जनिः ॥ ८८ ॥

अतोऽन्यो नैव सम्प्रेक्ष्य आयान्तं स्वपतिं मुदा ॥
प्रत्युद्गत्य पदौ क्षाल्यौ संवीज्यो व्यजनादिना ॥८९॥

पादसंवाहनं कार्यं मृदुवाक्येन भाषणम् ॥
भर्तुः सन्तोषतस्तुष्टा भविष्यन्ति त्रिमूर्तयः ॥ ९० ॥

किं दास्यन्तीष्टबन्ध्वाप्तभ्रातरः पितरावपि ॥
एक एव पतिः साक्षादैहिकामुष्मिकार्थदः ॥ ९१ ॥

विष्यति। पत्यै निष्ठुरवक्त्री सप्तजन्म मूका दरिद्रा च। सपत्नीद्वेष्ट्री दुर्भगा भविष्यति। बुद्ध्याऽन्यनरवीक्षकाङ्गहीना। कामतः परपुंवीक्षणाद्धीनगृहे दरिद्राऽतोऽन्यो न वीक्ष्यः। प्रोष्यागतं पतिं सम्मुखं गत्वा पादौ प्रक्षाल्य व्यजनादिना श्रमं हरेत्। पादसंवाहनादिना मृदुवाक्येन च तोषयेत्तेन त्रिमूर्तितोषः। बन्ध्वादिः किं दास्यति। एक एव पतिरैहि-

---

१ दुःखं.

गुरुर्देवश्च तीर्थं च सर्वमेव पतिर्मम ॥
इति निश्चितचित्ता या सा विज्ञेया पतिव्रता ॥ ९२ ॥

यावज्जीवत्पतिस्तावत्पवित्रा सा पतिव्रता ॥
मृते भर्तरि सा प्रेततुल्याऽस्पृश्या भवेद्धि सा ॥ ९३ ॥

पत्युर्विना स्त्रिया ज्ञेया सदाऽमङ्गलता खलु ॥
विधवा सा प्रेतकल्पा याऽनपत्या ततोऽधिका ॥९४॥

विधवा सम्मुखं याति यदा जिगमिषोः[1] पुरा ॥
मरणं तस्य निर्दिष्टं स्मृता पुत्रवती शुभा ॥ ९५ ॥

माता चेद्विधवा गन्तुः पुत्रस्याग्रे शुभप्रदा ॥
सा नारी न नमस्कारयोग्या या पुत्रवर्जिता ॥ ९६ ॥

तस्या आशीर्वचो नैव ग्राह्यं यत्स्यादमङ्गलम् ॥
तच्छापतोऽपि मरणमतस्तां नैव भाषयेत् ॥ ९७ ॥

अत एव समं भर्त्राऽनुगच्छेत्पतिदेवता ॥
किं वैभवेन देहेन पतिरेव सुखं स्त्रियाः ॥ ९८ ॥

कामुष्मिकार्थदः ॥८९-९१॥ गुरुर्देवस्तीर्थं च स एवेति यन्मतिः सा सती। यावत्स जीवति तावत्सा पवित्रा। मृते च पत्यौ साऽस्पृश्या शववदमङ्गलाऽनपत्या चेद्विशेषतः। सा प्रयाणे सम्मुखी चेद्यातुर्मरणदा। पुत्रवती चेन्नानिष्टदाऽपुत्रविधवाया आशीर्न ग्राह्या। यतोऽनिष्टं अतस्तां न भाषयेत्। किं वैभवेन देहेन। पतिरेव स्त्रियाः सुखम्। यथा मेघेन

---

१ गंतुमिच्छोः.

यथा मेघेन विद्युच्च चन्द्रेण सह चन्द्रिका ॥
अस्तं याति तथा पत्या प्रयात्विह पतिव्रता ॥ ९९ ॥

महाधर्मोऽनुगमनं श्रुतिस्मृतिसमीरितम् ॥
द्विचत्वारिंशत्संख्याककुलोद्धारणमात्मना ॥ १०० ॥

[1]प्रमीते भर्तरि सती स्वपतिं याऽनुगच्छति ॥
पदे पदे साऽश्वमेधसहस्रफलभाग्भवेत् ॥ १ ॥

पापी यदि पतिस्तस्या मृतोऽपि यमकिङ्करैः ।
नरकं नेतुमुद्युक्तैर्बद्धोऽपि सुतरां यदि ॥ २ ॥

पतिव्रताऽनुगमनं तस्य नारी करोति चेत् ॥
चिल्ली सर्पमिव स्वर्गं ततो नयति सा पतिम् ॥ ३ ॥

दृष्ट्वाऽनुगमनं तस्या भीता दूता यमस्य ते ॥
तं त्यक्त्वा दूरतो यान्ति भीतभीता यमालयम् ॥ ४ ॥

पतिव्रतां विमाने तामुपवेश्य सुवासिनीम् ॥
स्वर्गं नयन्ति त्वरितं नीराज्यापि सुराङ्गनाः ॥ ५ ॥

विद्युच्चन्द्रेण चन्द्रिका च तथा सती पत्या सहाग्निं विशेत्। महाधर्मोऽयं श्रुतिस्मृत्युक्तो यतो द्विचत्वारिंशत्कुलोद्धारः ॥९२-१००॥ अनुगमने च पदे पदेऽश्वमेधसहस्रफलं। पापोऽपि पतिर्यमदूतैर्बद्ध्वा नीतोऽपि तत्पत्नी अनुगमनं करोति चेत्ततस्तादृशमपि चिल्ली सर्पमिवोद्धृत्य तं स्वर्नयति। तां दृष्ट्वा भीता दूतास्तत्पतिं त्यक्त्वा पलायन्ते। तां विमाने उपवेश्य

---

१ मृते.

याम्या वदन्ति चान्योऽन्यं न नः कालात्तथा भयम् ॥
यथा पतिव्रतालोकाद्भयं नो जायतेतराम् ॥ ६ ॥

बिभेत्यर्कः सतीं दृष्ट्वा मन्दं मन्दं तपत्यहो ॥
भीतोऽग्निरपि चोष्णत्वं हित्वा शीतो भवत्यहो ॥ ७ ॥

ऋक्षवर्गो बिभेत्येषा हरिष्यति पदं त्विति ॥
एवं स्वर्भुवनं गत्वा तिष्ठेद्भर्त्रा सहैव सा ॥ ८ ॥

एवं सहानुगमनात्साध्व्याः स्वर्गः सुखेन हि ॥
स्थास्यत्येव स्थिरं पत्या सह हर्षात्सती दिवि ॥ ९ ॥

तिस्रः कोट्योऽर्धकोटी च हुताः केशाः स्वधर्मतः ॥
अग्नौ तत्फलमप्येतच्छृणुताद्यावधानतः ॥ ११० ॥

सा वसेच्छतकोट्यब्दं प्रतिकेशं मुदान्विता ॥
पत्या सह महामाना स्वर्गे लोके पतिव्रता ॥ ११ ॥

धवानुगमनात्पुण्यमीदृङ्मान्येदृशी कुले ॥
जाता चेन्नयति स्वर्गं कुलानां द्व्येकविंशती ॥ १२ ॥

देव्यो नीराज्य स्वर्नयन्ति। यमदूता ऊचुः। कालादपि अधिकं नः सत्या भयमिति। सूर्यो भीतो मन्दं तपति। भीतोऽप्यग्निः शीतो भवति। स्वपदं हरिष्यति किमिति नक्षत्रवर्गो बिभेति। सती भर्त्रा सह स्वर्गत्वा चिरं तिष्ठति ॥१०१-१०९॥ सार्धत्रिकोटिकेशाः स्वधर्मेणाग्नौ हुतास्तत्फलं प्रतिकेशं कोट्यब्दं पत्या सहानंदेन स्वर्वास ईदृक्पुण्यं पत्यनुगमनं।

---

१ अवलोकनात्.

पूर्वापरकुलोद्धर्त्र्यौ धन्यौ हि पितरौ खलु ॥
धन्योऽस्या अपि भर्ता या द्व्येकविंशतितारिणी ॥१३॥

पुण्यं सहगमस्येदं पातिव्रत्यं महाफलम् ॥
प्रसङ्गाद्वक्ष्यतेऽप्यन्यद्दुर्भगायाः फलं त्विह ॥ १४ ॥

यदि नारी दुराचारा यदि वा व्यभिचारिणी ॥
तस्याः फलं महानर्थमिह चान्यत्र चापि वा ॥ १५ ॥

यदि स्वर्गस्थिता द्व्येकविंशतिप्रमिताः शुभाः ॥
पितरस्तांश्च साऽऽदाय नरकान्याति दारुणान् ॥१६॥

सार्धत्रिकोटिरोमाणि प्रत्यब्दं प्रतिरोम च ॥
सा पूर्वजैर्धवेनापि नरके परिपच्यते ॥ १७ ॥

पतिव्रतापदस्पर्शात्पवित्रा भवति क्षमा ॥
अत एव क्षमा[1] साध्व्याः पदस्पर्शाभिकांक्षिणी ॥ १८ ॥

दैवयोगेन यदि मे स्पृशन्त्युस्राः[2] पतिव्रताम् ॥
तर्हि पूतो भविष्यामीतीच्छत्यर्कश्च चन्द्रमाः ॥ १९ ॥

ईदृक्कुले जाता चेद्द्विचत्वारिंशत्पूर्वापरकुलोद्धर्त्री तत्पितरौ धन्यौ भर्ता च। ईदृङ्महाफलं सहगमनपुण्यं। प्रसङ्गाद्दुर्भगायाः फलं शृणु। दुराचारा व्यभिचारिणी चेत्स्वर्गस्थपितॄनादाय दारुणनरकान्याति। स्वकेशमिताब्दान्पूर्वजैः सह नरके पच्यते। पतिव्रतापदस्पर्शात्पवित्रत्वमतो भूस्तत्पदस्पर्शं वाञ्छति ॥११०-११८॥ सत्याः स्वकिरणस्पर्शे रवि-

१ भूमिः २ किरणाः.

वायुश्च वरुणश्चापि सतीस्पर्शात्पुनाति हि ॥
समस्ता अपि तद्दृष्ट्या नूनं पूता भवन्ति हि ॥१२०॥

गृहे गृहे स्त्रियः सन्ति रूपलावण्यरञ्जिताः ॥
किं ताभिर्यदि चेत्साध्वी कुलोद्धर्त्री तु सैव हि ॥२१॥

पतिव्रता यस्य गृहे पुण्यवान्दैववान्स च ॥
सप्तजन्मार्जितं पुण्यं यदि चेल्लभ्यते सती ॥ २२ ॥

सतीयोगाल्लभन्तीह पुरुषार्थाश्चतुर्विधाः ॥
पुण्यानुबन्धतो लभ्या सम्मताऽत्र पतिव्रता ॥ २३ ॥

सती यस्य गृहे नास्ति पुण्यं तस्य न सिध्यति ॥
नापि यज्ञादिकर्माणि धर्मार्हः स नरोऽपि न ॥ २४ ॥

सती यस्य गृहे नास्ति तस्यारण्यं न दूरतः ॥
वृथा जन्म भवेत्तस्य कर्मबद्धो भवेत्स च ॥ २५ ॥

यस्येदृशी सती लब्धा पुण्यं तस्यैव सिध्यति ॥
पुत्रलाभः परो लोकः सतीयोगाल्लभेन्नृणाम् ॥ २६ ॥

श्चन्द्रश्चात्मानं पूतं मन्यते। वायुर्वरुणोऽन्ये च सतीस्पर्शात्पूता भवन्ति। रूपलावण्यरञ्जिताः स्त्रियो गृहे गृहे सन्ति किं ताभिः। एकैव साध्वी त्रिकुलपावनी। यद्गृहे सती न तत्र न पुण्यम्। सप्तजन्मार्जितपुण्यात्सतीलाभः। तल्लाभे चतुर्विधपुरुषार्थलाभः। यद्गृहे न सती स यज्ञकर्मधर्मानर्हः। तद्गृहं वनमेव। स कर्मबद्धः। तज्जन्म व्यर्थम्। सती लब्धा चेत्पुण्य-

स्त्रियं विना नरो यस्तु तस्य धर्मो न सिध्यति ॥
कर्मानर्हस्य पितरः पतन्ति स्वर्गता अपि ॥ २७ ॥

गङ्गास्नानाद्यथा पुण्यं तथा साध्वीप्रदर्शनात् ॥
सप्तजन्माघहृत्साध्वी या महापापिपावनी ॥ २८ ॥

आचार एवं हि पतिव्रताया बृहस्पतिर्देवगुरुर्जगाद ॥
गङ्गाधरार्भोऽपि सरस्वतीति ख्यातस्तमेवाखिलदं जगाद॥२९॥

(इति)श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्यगङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञितमहाराष्ट्रभाषान्वितगुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वतीयतिविरचितायां श्रीगुरुसंहितायां कर्मकाण्डे एकत्रिंशः ( अध्यायः ) ॥

॥ आदितः श्लोकाः ॥ ३५३८ ॥

सिद्धिः । सत्पुत्रलाभः परलोकश्च ॥१९-२७॥ सतीदर्शनं गङ्गास्नानाधिपुण्यम् । सप्तजन्मपापनाशश्च ॥ २८ ॥ आचार एवं हि० ॥१२९॥ इति चूर्णिकायां एकत्रिंशोऽध्यायः ॥

॥ इति एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

# ॥ अथ द्वात्रिंशोऽध्यायः ॥ ३२ ॥

॥ श्रीगणेशाय नमः ॥

इत्थं पतिव्रतारीतिः प्रवक्ति स्म बृहस्पतिः ॥
फलश्रुतिमपि प्राहानुगमस्यापि सन्मतिः ॥ १ ॥

अथापि विधवाचारं प्राह देवगुरुस्तदा ॥
देवर्षयश्च पप्रच्छुरिदमेवात्रधार्यताम् ॥ २ ॥

पतिव्रतायाः सामीप्ये यदि भर्ता मृतिं गतः ॥
तयाऽनुगमनं कार्यं सत्यमेव हि धैर्यतः ॥ ३ ॥

पतिव्रता गर्भिणी चेत्स्तन्यं[१]पार्भयुताऽथवा ॥
दूरतो वा मृतो भर्ता तया किं कार्यमुच्यताम् ॥ ४ ॥

अथ अध्यायसारसंग्रहश्लोकः—

रुक्मवतीमूचे प्रणतां तामष्टसुता सौभाग्यवती स्याः ।
प्रेतमपि द्वात्रिंश इहास्या वल्लभमाशूत्थापयदीशः ॥ १ ॥

बृहस्पतिरेवमुक्त्वाऽनुगमनासम्भवे विधवाधर्ममाह । समीपे भर्ता मृतश्चे-त्सत्या धैर्यादनुगमनं कार्यं । स्तन्यपपुत्रा गर्भिणी वा चेद्दूरतो वा पतिर्मृतश्चेदनुगमे दोषः ॥ १-४ ॥ सा विधिवद्यावज्जीवं वैधव्यं पालयेच्चे-

---

१ दुग्धपानकर्तृशिशुयुक्ता.

इत्थं देवैश्च सम्पृष्टो विस्तरेणावदद्गुरुः ॥
देवाः शृणुत यूयं तत्सावधानतयाऽखिलम् ॥ ५ ॥

समीपे चेन्मृतो भर्ता कर्तव्योऽनुगमस्तया ॥
न लब्धश्चेच्छवो यद्वा गर्भिणी सा भवेद्यदि ॥ ६ ॥

स्तन्यपश्चेत्कुमारोऽस्या दोषोऽनुगमनाद्भवेत् ॥
सुदूरे चेन्मृतो नैव कार्योऽनुगम एतया ॥ ७ ॥

वैधव्यं पालयेत्सा तु यावज्जीवं यथाविधि ॥
पुण्यं चानुगमस्यापि लभेत्तस्या न संशयः ॥ ८ ॥

विश्वस्तानां[1] महापुण्यं वैधव्याचारतोऽपि हि ॥
प्रमीते भर्तरि स्त्रीणां शिरसो वपनं स्मृतम् ॥ ९ ॥

बध्नाति कबरीं या हि विधवा तत्फलं शृणु ॥
पतिं स्वकेशपाशेन बध्नात्यस्याश्च दुर्गतिः ॥ १० ॥

शिरसो वपनं तस्मात्कार्यं विधवया सदा ॥
शिरःस्नानं तथा नित्यं सकृदह्नि च भोजनम् ॥ ११ ॥

त्तस्या अपि अनुगमफलं न संशयः। वैधव्याचारादपि महापुण्यं। मृते भर्तरि स्त्रीणां शिरोवपनं। या कबरीं बध्नाति सा केशपाशैर्धवं बध्नाति। द्वयोरपि दुर्गतिः ॥ ९-१० ॥ तस्माद्विधवया शिरसो वपनं कार्यं। नित्यं शिरःस्नानं च दिवा सकृद्भोजनं। विशेषादेकधान्याशनं। शक्तिश्चेद्भक्त्या

---

१ विधवानां.

तया विशेषतः कार्यमेकधान्यान्नभोजनम् ॥
उपोषणं त्र्यहं कार्यं शक्तिश्चेद्भक्तियोगतः ॥ १२ ॥

पञ्चाहं पक्षमात्रं वा शक्त्या कार्यमुपोषणम् ॥
अथवा भक्तिभावेन कार्यं चान्द्रायणं व्रतम् ॥ १३ ॥

चन्द्रोदये प्रतिपदि ग्रासमेकं चरेत्ततः ॥
वर्धमानान्ग्रसेद्ग्रासान्पूर्णायां दश पञ्च च ॥ १४ ॥

कृष्णपक्षे तु सम्प्राप्ते ग्रासांश्च ऱ्हासयेत्क्रमात् ॥
एकं ग्रासममायां वा नवैवं व्रतमाचरेत् ॥ १५ ॥

वृद्धा वा शक्तिहीना वा साऽप्येकान्नं सदाऽऽचरेत् ॥
फलाहारं चरेच्छक्त्या शाकाहारमथापि वा ॥ १६ ॥

क्षीरमात्रं पिबेत्स्वल्पं न तु दोषभियाऽधिकम् ॥
श्वासाश्चलन्ति तिष्ठन्ति यथा प्राणास्तथाऽऽचरेत् ॥

या सुखं[1] मञ्चके शेते सा पतिं रौरवं नयेत् ॥
स्वयं चापि समं पत्या भुंक्ते नरकयातनाम् ॥ १८ ॥

त्र्यहं ॥ ९-१२ ॥ पञ्चाहं पक्षमात्रं वोपोषणं चान्द्रायणव्रतं वा कार्यं ॥ १३ ॥ प्रतिपद्येकग्रासमेवं दिने दिने वर्धमानग्रासान्ग्रसेत् । पौर्णिमायां पञ्चदश । ततः कृष्णे ऱ्हासयेत् । अमायामेको ग्रास इति । वृद्धाऽशक्ता चेत्फलाहारं शाकाहारं वा भक्षेत्क्षीरं वा पिबेत् । येन श्वासोच्छ्वासाश्चलन्ति प्राणास्तिष्ठन्ति तावच्चरेत् । या मञ्चके शेते सा पत्या सह नरक-

१ सुखं यथा तथा.

करोति मङ्गलस्नानं या यद्वा देहमर्दनम् ॥
साऽपि तद्वद्गन्धपुष्पताम्बूलादि च वर्जयेत् ॥ १९ ॥

अपुत्रा विधवा चेत्सा प्रकुर्यात्पितृतर्पणम् ॥
तिलदर्भोदकैर्नामगोत्रोच्चारणपूर्वकम् ॥ २० ॥

विष्णुं च पूजयेन्नित्यं पतिभावनया सती ॥
विधवायाः पतिस्थाने स्मृत्या विष्णुः प्रयोजितः २१

यथा वृत्ता सती नारी जीवतः पत्युराज्ञया ॥
तथा वर्तेत वैधव्ये भक्त्या विष्णोरनुज्ञया ॥ २२ ॥

व्रतोपवासयात्रादि कुर्याद्विष्णोरनुज्ञया ॥
अथवा गुरुविप्राणां भक्त्या कुर्यादनुज्ञया ॥ २३ ॥

या सुवासिन्यवस्थायां प्रीतिर्वस्तु प्रियं च यत् ॥
तत्तद्विप्राय दातव्यं विदुषे भोजनादिकम् ॥ २४ ॥

माघकार्तिकवैशाखमासेषु नियमांश्चरेत् ॥
माघस्नानं माघमासे विष्णुस्मरणपूर्वकम् ॥ २५ ॥

यातनां भुंक्ते । मङ्गलस्नानं देहोद्वर्तनं गन्धपुष्पताम्बूलादि च वर्जयेत् । विधवाऽपुत्रा चेत्प्रत्यहं गोत्राद्युच्चारणपूर्वकं भर्त्रादिपित्रादितर्पणं कुर्यात् । पतिभावनया विष्णुं पूजयेत् । यथा पूर्वं पत्याज्ञया स्थिता तथा वैधव्येऽपि विष्णोराज्ञया गुरुविप्राज्ञया वा व्रतोपवासादि चरेत् ॥ १४-२३ ॥ सुवासिन्यवस्थायां यत्प्रियं तद्विप्राय देयं । विष्णूद्देशेन माघस्नानं । वैशाखे

वैशाखे जलदानं च दीपदानं च कार्तिके ॥
ब्राह्मणाय प्रदातव्यं यथाशक्ति च दक्षिणा ॥ २६ ॥

माघमासे घृततिलान्ब्राह्मणाय प्रदापयेत् ॥
वैशाखेऽपि च पानार्थं निर्जले स्थापयेत्प्रपाम् ॥ २७ ॥

शिवे गलन्तिकादानमखण्डं निर्मलाम्बुना ॥
गन्धैः परिमलद्रव्यैः सुपुण्यं शङ्करार्चनात् ॥ २८ ॥

ब्राह्मणानामपि गृहे शक्त्या दद्याज्जलं मुदा ॥
अतिथिभ्योऽपि विप्रेभ्यो दद्यादन्नं स्वशक्तितः ॥२९॥

तीर्थयात्रोत्सुकेभ्यश्च प्रदद्याच्छत्रपादुकाः ॥
गृहागतद्विजातीनां पादप्रक्षालनं चरेत् ॥ ३० ॥

व्यजनैर्वीजयित्वा च वस्त्राद्यैः पूजयेद्द्विजान् ॥
गन्धैः परिमलद्रव्यैर्वीटकाद्यैश्च तोषयेत् ॥ ३१ ॥

दद्याच्छक्त्योदपात्रं च द्राक्षा सुकदलीफलम् ॥
गुडयुक्ताम्लपानं च दद्याद्विप्राय चित्तहृत् ॥ ३२ ॥

जलदानं कार्तिके दीपदानं च सदक्षिणाकं देयं। माघे घृततिला देयाः। वैशाखे प्रपा स्थापनीया। शिवे शुद्धांबुनाऽखण्डगलंतिका देया। सुगन्धद्रव्यैः शिवः पूज्यः। ब्राह्मणगृहे शक्त्या जलं देयं। अतिथिविप्रेभ्योऽन्नं च। यात्रिकेभ्यश्छत्रपादुका देयाः। द्विजानां पादप्रक्षालनं कृत्वा व्यजनेन वीजयित्वा वस्त्रगन्धपरिमलैरभ्यर्च्य वीटकान्दत्वोदपात्रं द्राक्षा कदलीफलं स्वादु सगुडपानकं च दद्यात् ॥ २४-३२ ॥ भर्तृनामोच्चार्य विप्राय

उच्चार्य वा भर्तृनाम दद्यात्सङ्कल्पपूर्वकम् ॥
विप्राय सात्त्विकं दानं धर्मं चैवंविधं चरेत् ॥ ३३ ॥

विशेषात् कार्तिके भोज्या यवा एकान्नमेव वा ॥
वृन्ताकशिग्रुसुरणमधुतैलादि वर्जयेत् ॥ ३४ ॥

कांस्यपात्रे न भोक्तव्यं भोक्तव्यं द्विदलं न च ॥
स्वच्छं मनः सदा धार्यमेवं मासं समाचरेत् ॥ ३५ ॥

भुक्त्वा पलाशपत्रे च तत उद्यापनं चरेत् ॥
उद्यापनं सती कुर्याद्यद्यदाचरितं व्रतम् ॥ ३६ ॥

घृतपूर्णं कांस्यपात्रं दद्याद्विप्राय भक्तितः ॥
कृत्वा स्वापं क्षितौ दद्याद्ब्राह्मणाय च मञ्चकम् ॥३७॥

यद्यत्त्यक्तं स्वयं तत्तद्दद्याद्विप्राय भक्तितः ॥
त्यक्त्वा मासं रसं दद्याद्ब्राह्मणाय सदक्षिणम् ॥ ३८ ॥

पञ्चामृतं चतुर्मासं त्यक्त्वा चोद्यापनं चरेत् ॥
दद्यात्सालंकृतां धेनुं ब्राह्मणाय स्वशक्तितः ॥ ३९ ॥

सात्त्विकं दानं देयं। कार्तिके यवान्नमेकान्नं वा भोज्यं। वृन्ताकशिग्रुसुरणमधुतैलादि वर्ज्यं ॥ ३३-३४ ॥ तथा द्विदलं च। कांस्यपात्रे न भोक्तव्यं। मनः स्वच्छं धार्यं। एवं मासं चरेत्। पलाशपत्रे भुक्त्वोद्यापनं कार्यं। यद्यदाचीर्णं तस्य व्रतोद्यापनात्साङ्गता। घृतपूर्णं कांस्यपात्रं देयं। भूमौ सुप्त्वा विप्राय मञ्चको देयः। यद्यत्त्यक्तं तत्तद्भक्त्या विप्राय देयम्। मासं रसं त्यक्त्वा सदक्षिणं ब्राह्मणाय दद्यात्। चतुर्मासं पञ्चामृतं त्यक्त्वो-

विशेषतो व्रतं त्वेतद्दीपदानं महाफलम् ॥
दीपदानस्य चानन्तो महिमा श्रृणुतामराः ॥ ४० ॥

अन्यानि सर्वदानानि धर्मा अपि च येऽपरे ॥
ते सर्वे दीपदानस्य कलां नार्हन्ति षोडशीम् ॥ ४१ ॥

माघस्नानं चरेन्माघे सूर्याधोदयकालतः ॥
नियमेनैकमासं तु कुर्यान्माघव्रतं सती ॥ ४२ ॥

तिललड्डुकखर्जूरपक्वान्नादि च दापयेत् ॥
भक्त्या शक्त्या ब्राह्मणेभ्यो वित्तशाठ्यं न कारयेत् ४३

शर्करासहिता देया घृतपक्वमरीचिकाः ॥
दद्याद्दीपान्यथाशक्ति तापसांश्चापि भोजयेत् ॥ ४४ ॥

हेमन्ते शीतशान्त्यर्थं काष्ठानि ब्राह्मणाय च ॥
वस्त्राणि कम्बलादीनि प्रदद्याच्छक्तितः सती ॥ ४५ ॥

दद्याद्विद्वद्ब्राह्मणाय पर्यङ्कं सुखसुप्तिदम् ॥
चित्राणि रञ्जितान्यूर्णावस्त्राणि ब्राह्मणाय च ॥ ४६ ॥

द्यापनं कृत्वा सदक्षिणां गां विप्राय दद्यात्। विशेषाद्दीपदानं महाफलं श्रृणु। अन्यदानधर्मा दीपदानस्य षोडशीं कलां नार्हन्ति ॥ ३९-४१ ॥ माघे सूर्याधोदये नियमान्माघस्नानम् ॥ ४२ ॥ तिललड्डुकपक्वान्नादि ब्राह्मणाय देयम्। वित्तशाठ्यं न कार्यम्। सशर्करा घृतपक्वमरीचिका दीपाश्च देयास्तापसा भोज्याः। विद्वद्विप्राय पर्यङ्को रञ्जितोर्णावस्त्राणि च।

शुंठयाद्युष्णौषधं विप्रे दद्याच्छीतनिवारणम् ॥
एलाकर्पूरादियुक्तं ताम्बूलं च मनोहरम् ॥ ४७ ॥
वर्षपूर्त्यन्नसहितमृद्धं दद्याद् गृहं द्विजे ॥
तैर्थिकेभ्यः प्रदद्याच्च पादुके सुखकारके ॥ ४८ ॥
गन्धैः परिमलैः पुष्पैः केशवं चापि पूजयेत् ॥
रुद्राभिषेकविधिनाऽभ्यर्चेद्गौरीहरावपि ॥ ४९ ॥
धूपैर्दीपैश्च नैवेद्यैः पूजयेत्साम्बमीश्वरम् ॥
दीपमाला विशेषेण शङ्करप्रीतिकारिणी ॥ ५० ॥
पतिरूपं हृदा ध्यात्वा भक्त्या नारायणं हरिम् ॥
पूजयेदेकभावेन साऽपि पापाद्वियुज्यते ॥ ५१ ॥
नियमेन सदा तिष्ठेन्नारोहेच्च वृषं[1] सती ॥
कञ्चुकीं नैव बिभृयात्परिदध्यात्सितांशुकम् ॥ ५२ ॥

आरक्तकृष्णचित्रादिवस्त्रं दोषकरं स्मृतम् ॥
विधवा चेत्पुत्रवती सा वर्तेत सुताज्ञया ॥ ५३ ॥

शीतनिवारणार्थं शुंठयौषधादि देयम् । कर्पूरैलादियुक्ताम्बूलं च । वर्षपूर्त्यन्नयुतं गृहं देयम् । तैर्थिकेभ्यः पादुके च ॥ ४३-४८ ॥ गन्धादिभिः केशवः पूज्यः । रुद्रेण गौरीहरावभिषिच्य सर्वोपचारैः सम्पूज्य दीपमालिका देया ॥ ४९-५० ॥ पतिं नारायणं भावयित्वा पूजयेत्सा पापाद्वियुज्यते । सतीत्थं नियमेन तिष्ठेद्वृषं नारोहेत्कंचुकीं न दध्यात्सितवस्त्रं दध्यात् । कृष्णारक्तचित्रवस्त्रधारणे दोषः । पुत्रश्चेत् 'आत्मा वै पुत्रनामा' इति

---

१ वृषभं.

आत्मा वै पुत्रनामेति श्रुतेः पुत्रोऽपि च स्मृतः ॥
पितुः प्रतिनिधिस्तस्मात्पुत्राज्ञाऽपि व्रतादिषु ॥ ५४ ॥

एवं या विधवा नारी वेदशास्त्रादिभाषितम् ॥
भक्त्या धर्मं चरेत्साऽपि ज्ञेयाऽनुगमपुण्यभाक् ॥५५॥

पापी यदि पतिस्तस्या मृतः पूर्वं स्वपापतः ॥
यमलोकेऽपि नरके स्थितश्चेद्यातनार्दितः ॥ ५६ ॥

तत्पत्नी विधवाऽप्येवं चरेदाचारमुत्तमम् ॥
यदि प्रेत्य ततोऽप्येतमादाय स्वर्गमिष्यति ॥ ५७ ॥

एवं बृहस्पतिर्देवाँल्लोपामुद्राऽग्रतोऽब्रवीत् ॥
पतिव्रताशिरोरत्नं लोपामुद्रेति चास्तुवत् ॥ ५८ ॥

या या पतिव्रता नारी सा सा भागीरथीसमा ॥
तत्पतिः शङ्करसम उभौ पूज्यौ प्रयत्नतः ॥ ५९ ॥

एवं बृहस्पतिप्रोक्तो धर्मोऽयं ते मयोदितः ॥
अवधारय मे वाक्यं यस्मिन्प्रीतिस्तमाचर ॥ ६० ॥

श्रुतेर्व्रतादौ तदाज्ञां गृह्णीयात्। एवं वेदाद्युक्तधर्माचरणे सहगमनसमपुण्यं। पापी पतिर्मृतो नरके स्थितोऽपि तत्पत्नी एवमाचरेत्तर्हि सा प्रेत्य ततोऽपि पतिमादाय स्वर्गमिष्यति ॥ ५१-५७ ॥ एवमुक्त्वा गुरुराह। पतिव्रता-शिरोमणिर्लोपामुद्रा ॥ ५८ ॥ भागीरथीसमा पतिव्रता। तत्पतिः शिवसमः। उभौ यत्नात्पूज्यौ ॥ ५९ ॥ एवं गुरूक्तो धर्मो मयोक्तः।

---

१ शृणु.

दुःखं च सकलं त्यक्त्वा वचो हृदि निधेहि मे ॥
लोकसाधनभूतौ द्वौ मार्गौ ते कथितौ मया ॥ ६१ ॥
धैर्यं चेत्पत्यनुगमं कुरु सर्वोत्तमोत्तमम् ॥
यदि वा विधवाचारं तुल्यपुण्यं समाचर ॥ ६२ ॥
यस्मिंस्तेऽस्ति रुचिस्साध्वि तन्मे ब्रूहीति मूर्धनि ॥
तस्या धृत्वा करं प्रेम्णा पप्रच्छ स च तापसः ॥६३॥
परिपृष्टाऽपि तेनैवं विनयावनता सती ॥
भक्तियुक्ता सकरुणं तापसं प्राब्रवीदिदम् ॥ ६४ ॥
जय योगेश्वर जय त्वं पिता मे सहोदरः ॥
मनोहरो ममाद्य त्वं जननी जनकोऽप्यसि ॥ ६५ ॥
विदेशमागताऽहं तु बान्धवा न हि सन्निधौ ॥
त्वमन्तकालबन्धुर्मे सङ्गतोऽसि सुहृत्सखा ॥ ६६ ॥
द्वौ मार्गौ भवतोद्दिष्टौ कष्टं वैधव्यपालनम् ॥
अशक्यं भाति तत्स्वामिन्त्सोऽसिधारोपमो वृषः ॥६७॥

यस्मिंस्ते प्रीतिस्तमाचर। सर्वं दुःखं त्यक्त्वा मे वचो हृदि धेहि। लोकसाधनभूतौ द्वौ मार्गौ कथितौ। धैर्यं चेन्महाफलं अनुगमनं कुरु। समफलं वा वैधव्याचारं पालय। यस्मिंस्ते रुचिस्तद्ब्रूहीति तापसस्तन्मूर्ध्नि करं दत्त्वाऽपृच्छत्। सा भक्त्या तमाह। योगेश्वर जय। त्वं मे पितरौ सोदरश्च। बन्धुहीने विदेशेऽप्यन्तकाले त्वं मे सखा बन्धुश्च सङ्गतोऽसि। उक्तमार्गयोर्वैधव्यपालनं कष्टं। सोऽसिधारावद्धर्मः। नवं मे तारुण्यं

१ धर्मः.

ममाभिनवतारुण्यं लावण्यं पुण्यहृद्भवेत् ॥
बहुनिन्दापवादादि वर्तमानकलौ युगे ॥ ६८ ॥

सन्तोषो वर्धते नाथानुगमे मे विशेषतः ॥
यच्चाप्यनन्तपुण्यं तद्धवानुगमनं मतम् ॥ ६९ ॥

इत्याभाष्य नमस्कृत्य दधौ तत्पादयोः शिरः ॥
प्राह संसारमग्नं मां स्वामिंस्तारय तारय ॥ ७० ॥

तत उत्थाप्य तां योगीश्वरः स करुणाकरः ॥
दत्त्वाऽभयं करं प्राह धवानुगमनं कुरु ॥ ७१ ॥

त्वत्पत्युः खलु यत्स्थानं तत्तवापि च सम्मतम् ॥
अतो विशेषतो वक्ष्ये सावधानतया शृणु ॥ ७२ ॥

दूरतो गुरुदृष्ट्यर्थं सधवा त्वमिहागता ॥
पत्यारोग्येच्छया साध्वि भक्तियुक्तेन चेतसा ॥ ७३ ॥

विधिकृत्यं भावि जातं कः कालं दुर्जयं जयेत् ॥
यथेश्वरस्य सङ्कल्पस्तथा भवति नान्यथा ॥ ७४ ॥

सुलावण्यं च वर्तमाने कलौ निन्दापवादास्पदं भवेत् ॥ ६०-६८ ॥ अनन्तपुण्यभर्त्रनुगमने मे सन्तोष इति। तत्पदयोः शिरो धृत्वा संसारमग्नां मां तारयेत्याह। स तामुत्थाप्य करुणयाऽभयं दत्त्वाऽऽह। यत्पत्युः स्थानं तत्तवाप्यनुगमनं कुरु। सावधानतया शृणु। पत्या सहारोग्यार्थं त्वं भक्त्या गुरुदर्शनार्थमागताऽसि। विधिकृत्यं जातं। कालो दुर्जेय ईशसङ्कल्पवद्भवति

परिहार्यं न हि ब्रह्मलिखितं भावि यद्यदा ॥
तदा भविष्यति ह्येवं श्रुतिर्दुःखमतो वृथा ॥ ७५ ॥

हरिश्चन्द्रोऽपि चण्डालनिलये जलमाहरत् ॥
बली स बलिभूपालः सोऽप्यलं सुतलं गतः ॥ ७६ ॥

सहस्रकोटिवर्षायू रावणोऽपि लयं गतः ॥
दुर्योधनोऽपि कालेन ग्रस्तो बन्धुशतावृतः ॥ ७७ ॥

स्वच्छन्दमृत्युर्भीष्मश्च स चापि रणमूर्धनि ॥
पतितः सर्पदष्टोऽभूत्परीक्षित्कृष्णरक्षितः ॥ ७८ ॥

अनन्ता अवताराश्च भूत्वा भूत्वा लयं गताः ॥
मानवा दानवा देवाः कालाधीनाः समा इमे ॥ ७९ ॥

मानवान्दानवान्देवान्त्सर्वानपि जयत्ययम् ॥
अतोऽत्र भगवान् कालोऽजेय इत्युच्यते बुधैः ॥ ८० ॥

अत एव क्षितितले कोऽपि कालं न जेष्यति ॥
एकं गुरुं विना [1]सोऽपि भाविकस्य प्रसीदति ॥ ८१ ॥

नान्यथा। ब्रह्मलिखितमपरिहार्यं। यद्भावि तद्भविष्यत्यतो वृथा शोकः। हरिश्चन्द्रोऽन्त्यजगृहे जलमाहरत्। बली सुतलं गतः। चिरायू रावणोऽपि मृतः। सबन्धुदुर्योधनः कालग्रस्तः ॥ ६९-७७ ॥ स्वच्छन्दमृत्युर्भीष्मोऽपि रणे पतितः। परीक्षित्सर्पदष्टोऽनन्ताऽवतारा भूत्वा नष्टाः। नृदेवाद्याः कालाधीनाः। सर्वजेता कालो भगवानजेयोऽत्र गुरुं विना कालं को जेष्यति। हे सति, दूरात्त्वमागताऽतः शीघ्रं सङ्गमं गत्वा श्रीगुरुं

---

१ सद्गुरुरपि.

अतः परमिदं कार्यं सङ्गमे त्वरितं सति ॥
कुरु प्रियानुगमनं कृत्वा प्राग्गुरुदर्शनम् ॥ ८२ ॥

आगता त्वमियद्दूरं ततस्त्वं पश्य सद्गुरुम् ॥
तत आगत्य पत्या त्वं कुरु वह्निप्रवेशनम् ॥ ८३ ॥

एवमुक्त्वा भस्म मूर्ध्नि शवस्यालिप्य योगिराट् ॥
चतुरश्चतुरोऽप्यस्यै रुद्राक्षान्प्रददौ तदा ॥ ८४ ॥

योगीश्वरः प्राह साध्वि बद्ध्वा द्वौ कर्णयोर्द्वयोः ॥
कण्ठे चास्य ततोऽनेन कुरु वह्निप्रवेशनम् ॥ ८५ ॥

अन्यच्चापि प्रवक्ष्ये त्वं दर्शनाय गुरोश्चर ॥
अभिषेक्ष्यन्ति रौद्रेण सूक्तेन श्रीगुरोः पदे ॥ ८६ ॥

तत्तीर्थं त्वं समादाय स्वदेहं प्रोक्ष्य चास्य च ॥
प्रेतस्याप्यखिलाङ्गानि भक्तियुक्तेन चेतसा ॥ ८७ ॥

ततः सुवासिनीभ्योऽपि वायनानि बहूनि च ॥
दत्त्वाऽपि द्रव्यममितं त्वं ब्राह्मणमुखेऽर्पय ॥ ८८ ॥

दृष्ट्वा तत आगत्य अग्निप्रवेशं कुर्वित्युक्त्वा शवमूर्ध्नि भस्म लेपयित्वा रुद्राक्षान्दत्त्वाऽऽह । शवस्य कर्णयोः कण्ठे च द्वौ द्वौ बद्ध्वा तेन सहाग्निं प्रविश ॥ ७८-८५ ॥ अन्यच्च शृणु । गुरुदर्शनार्थं गच्छ । तत्र रुद्रसूक्ता-भिषिक्तगुरुपादोदकतीर्थम् ॥ ७८-८६ ॥ स्वदेहे प्रोक्ष्य शवस्य सर्वाङ्गे चाभ्युक्ष्य सुवासिनीभ्यो वायनान्यमितं धनं द्विजेभ्यश्च दत्त्वाऽग्निं विशेति

इत्युक्त्वा ब्राह्मणीं योगी तापसोऽगाद्यथाऽऽगतम् ॥
पतिव्रताऽपि भावेन यथोक्तं कर्तुमुद्यता ॥ ८९ ॥

संस्कारं षोडशं कर्तुमाहूय विदुषो द्विजान् ॥
औपासनाग्निसिद्ध्यादिप्रायश्चित्तं चकार सा ॥ ९० ॥

पतिव्रताऽपि सुस्नाता सुकौयाम्बशेरावृता ॥
कपोलयोर्हरिद्रां च दधौ भाले च कुंकुमम् ॥ ९१ ॥

कृत्वौपासनहोमादि विधिनाऽऽच्छादितं शवम् ॥
वाहयामास गङ्गायाः समीपं सा यथाविधि ॥ ९२ ॥

अग्निं हस्ततले धृत्वा मन्दं मन्दं तदग्रतः ॥
सुन्दरी च ययौ साध्वी साऽप्यानन्दितमानसा ॥९३॥

सा तारुण्यभराक्रान्ता रूपलावण्यरञ्जिता ॥
भूषिता भूषणैः कान्ता दुहिताऽब्धेरिवाबभौ[1] ॥ ९४ ॥

द्रष्टुं नार्योऽपि नागर्यो मुदा प्राप्ताः सहस्रशः ॥
पतिव्रतां तु तां वीक्ष्य हृष्टाः शीर्षाण्यकम्पयन् ॥ ९५ ॥

स चोक्त्वा गतः। साऽपि तथा कर्तुमुद्यता ॥ ८७-८९ ॥ विद्वद्द्विजजनानाहूय प्रायश्चित्तौपासनाग्निसिद्ध्यादि कृत्वा स्नात्वा पीतकौशेयं परिधाय हरिद्राक्ता कुंकुमरञ्जिता सा गङ्गायां यथाविध्याच्छन्नं शवं नाययित्वा करतलेऽग्निं धृत्वा मुदा तदग्रतो मंदं मंदं ययौ। रूपलावण्यरञ्जितां भूषितां लक्ष्मीमिव तां द्रष्टुं नार्यो नराश्च सहस्रशः एत्य हृष्टाः शीर्षाणि

---

१ लक्ष्मीरिव.

ता ऊचुरन्योऽन्यमहो प्राग्वयस्का तु बालिका ॥
अहो अलं पूर्वफलं दैवं पत्यैत्यसौ यतः ॥ ९६ ॥

पत्युः सुखं नैव लब्धं बालोऽपि न विलोकितः ॥
एकजीवा कथं भूत्वा परानन्देन गच्छति ॥ ९७ ॥

अन्या प्राहायि शंसास्यै[1] व्यर्थं जीवं तु मा जहि ॥
निवृत्य भूयो गच्छ त्वं पित्रोर्वेश्मेति कथ्यताम् ॥९८॥

अन्योचे ज्ञानवत्येषा सत्या नारी पतिव्रता ॥
जगन्नाथेदृशीं बुद्धिं सर्वस्त्रीभ्यः समर्पय ॥ ९९ ॥

धन्याम्बा जनकोऽस्याश्च द्व्येकैर्विंशतिवंशपा[2] ॥
पदे पदे मेधफलभोक्त्री प्रेतधवाग्रगा ॥ १०० ॥

एवं स्तुता नदीतीरं गता शान्ता पतिव्रता ॥
अग्निकुण्डसमीपे तु स्थापयामास तच्छवम् ॥ १ ॥

प्रज्वाल्य शोभनैः काष्ठैः क्रव्यादाग्निं[3] सुवासिनीः ॥
आहूयादाद्वायनानि ताभ्यः सौभाग्ययुङ्जि सा ॥ २ ॥

कम्पयन्त ऊचुः। प्राग्वयस्का बालेयं पत्या सहैति ॥ ९०-९६ ॥ सुखं न दृष्टं। बालोऽपि नालोकितः। कथमेकजीवा भूत्वाऽऽनंदेन याति। काचिदाहाहो अस्यै शंस। व्यर्थं मरिष्यसि। भूयो निवृत्य पितृगृहं व्रजेति। अन्योचे। प्राज्ञीयं सत्या नारी पतिव्रता। जगन्नाथेदृग्धियं सर्वस्त्रीभ्यो देहीति। एवं स्तुता शांता साऽग्निकुंडसमीपे श्मशाने शवं स्थापयित्वा क्रव्यादाग्निं सुकाष्ठैः प्रज्वाल्य सुवासिनीभ्यो विप्रेभ्यश्च धान्यपूर्णसुवस्त्र-

---

१ कथय २ द्विचत्वारिंशत् ३ क्रव्यादनामकं.

धान्यपूर्णे वंशपात्रे सुवस्त्रं कण्ठसूत्रयुक् ॥
हरिद्राकुङ्कुमादर्शकज्जलादि निधाय च ॥ ३ ॥

दत्त्वा स्त्रीभ्यः परिमलगन्धपुष्पादिभिः शुभैः ॥
सुवासिनीः पूजयित्वा ब्राह्मणेभ्यो धनं ददौ ॥ ४ ॥

नत्वा प्रार्थ्य समस्तान्त्सा प्राह मन्दस्मितानना ॥
आज्ञापयन्तु मां सर्वे प्रीत्या यास्ये पितुर्गृहम् ॥ ५ ॥

दीपावलिक्षणः प्राप्त आह्वानं मेऽपि चागतम् ॥
अनुज्ञापय भो मातः पितः पत्या समं व्रजे ॥ ६ ॥

माता मे सुन्दरी गौरी पिता मे शङ्करः परः ॥
आवामाह्वयतः प्रीत्या प्रेम्णा यास्याव आशु तत् ॥७॥

सहागतानपि प्राह प्रतियात स्वकं मुदा ॥
ग्रामं चिन्तां मा कुरुत लब्ध आनन्द आवयोः ॥ ८ ॥

श्वश्रूर्वा श्वशुरो वाऽपि यदि पृच्छति शर्म वाम् (नौ) ॥
नेदं ब्रूत स्पृशेद्दोषो युष्मांस्ते चेन्मरिष्यतः ॥ ९ ॥

कण्ठसूत्रहरिद्राकुंकुमादर्शादियुतवंशपात्राणि दत्त्वा गन्धादिभिः सुवासिनीः प्रपूज्य विप्रेभ्यो धनं दत्त्वा प्रार्थ्य सस्मिताऽऽह । सर्वे मामाज्ञापयन्तु ॥ ९७-१०९ ॥ दीपोत्सवे आह्वानमागतं । पितृगृहं यास्ये । गौरी मे माता पिता शिवश्च प्रेम्णाऽऽह्वयति । तत्र पत्या सह व्रजे । स्वग्रामस्थानाह । चिन्तां त्यक्त्वा ग्रामं प्रति यात । श्वशुराभ्यां नः शर्म ब्रूतान्यथा

भीमातटे सुखेन स्त उभौ श्रीगुरुसन्निधौ ॥
तीर्थवासं प्रकुरुत इति वाच्यं गुरून्प्रति ॥११० ॥

दर्शनार्थं गुरोर्गत्वा क्षेमं प्राप्य निरामयम् ॥
हर्षेण तिष्ठत इति ब्रूतास्माकं गृहे स्थितान् ॥ ११ ॥

एवमस्मद्गृहे सर्वानिष्टानाप्तान्सुहृज्जनान् ॥
अन्यानपि तथा ब्रूत प्रतियातेति चाब्रवीत् ॥ १२ ॥

इति श्रुत्वा वचस्तस्या दुःखिता ये समागताः ॥
स्वयं तु हृष्टवदना संस्थिता प्रेतसन्निधौ ॥ १३ ॥

अग्निं प्रज्वालयामास सकरीषशुभेन्धनैः[1] ॥
योगेश्वरेण कथितं तदा सस्मार सा सती ॥ १४ ॥

शवस्य कर्णयोरक्षौ द्वौ बबन्ध तथा गले ॥
विनयावनता भूत्वा ब्राह्मणान्पृच्छति स्म सा ॥ १५ ॥

सङ्कल्पो मे कृतो विप्राः सम्यगाशु च सङ्गमम् ॥
दृष्ट्वा श्रीगुरुसन्मूर्तिं चक्षुषाऽनेन तारिणीम् ॥ १६ ॥

ते मरिष्यतः । भीमातीरे गुरुसन्निधौ सुखेन स्तः । अत्र क्षेमं प्राप्य हर्षेण तिष्ठत इति सुहृज्जनादीनपि ब्रूतेति श्रुत्वा ते खिन्नाः । सा तु सस्मिता योगीशवचः स्मृत्वा शवकर्णयोः कण्ठे च रुद्राक्षान्बद्ध्वा विनयेन विप्रानाह ॥ १०६-११५ ॥ सङ्कल्पो मे कृतः । दृष्ट्या श्रीगुरुं वीक्ष्य

---

[1] शुष्कगोमयं.

दृष्ट्वैव स्वामिनं पश्चादागत्यानुगमं ततः ॥
करिष्ये यदि युष्माकमाज्ञा तर्ह्येव सत्वरम् ॥ १७ ॥

इति तद्वचनं श्रुत्वा समस्ता अब्रुवन्द्विजाः ॥
दहनं चास्तमानात्प्राग्यथा भूयात्तथा कुरु ॥ १८ ॥

इति सा तैरनुज्ञाता निर्गता यत्र संस्थितः ॥
श्रीसद्गुरुर्हृषीकेशो नरसिंहसरस्वती ॥ १९ ॥

सर्वे नराश्च नार्यश्च कुतूहलदिदृक्षवः ॥
अनुयाताः प्रशंसन्तः पातिव्रत्यं मनोहरम् ॥ १२० ॥

सा गच्छन्ती स्तुतिं चक्रे भोः स्वामिन्नरकेसरिन् ॥
दुर्भाग्यमावयोर्यस्मात्ततो वां (नौ) समुपेक्षसे ॥ २१ ॥

दाता सर्वेश्वरोऽपि त्वं शरणागतरक्षकः ॥
श्रेष्ठास्ति बिरुदालिस्ते कर्मास्माकं तु दुर्हरम् ॥ २२ ॥

इच्छामात्रात् त्रिभुवनं रजसा सृजसि प्रभो ॥
पासि सत्त्वगुणेन त्वं भोः स्वामिन्विश्वपालक ॥ २३ ॥

शीघ्रमेत्यानुगमं करिष्ये। भवतां रोचते किं ॥ १६-१७ ॥ त ऊचुरस्तात्पूर्वं दाहो यथा स्यात्तथा कुर्वित्युक्ता सा यत्र हृषीकेशस्तत्र प्रस्थिता। नरा नार्यश्च कौतुकं द्रष्टुमनुजग्मुः। गच्छंती साऽऽह। हे स्वामिन् नृसिंह, नौ दुर्भाग्यं तत उपेक्षसे। त्वं दाता सर्वेशः शरणदः। ते कीर्तिः श्लाघ्या। नौ कर्म तु दुर्हरं। हे त्रिमूर्ते, त्वं त्रिगुणैरिच्छयोत्पत्तिस्थितिलयान्करोषि।

लयं समस्तजगतः करोषि तमसाऽपि च ॥
गुणैस्त्रिभिस्त्वमेवैकस्त्रिमूर्तिरसि देव भोः ॥ २४ ॥

त्वदग्रतः सिद्धयोऽष्टौ क्रीडन्ति निधयो नव ॥
कुबुद्धिमावयोर्दृष्ट्वा नाथोपेक्षितवानसि ॥ २५ ॥

अंनयं वीक्ष्य लोकेऽस्मिन्राज्ञे कथयति द्रुतम् ॥
श्रुत्वा राजाऽपि दण्डार्हं दण्डयत्यविलम्बतः ॥ २६ ॥

रोगग्रस्तो यदा रोगी याति वैद्यगृहं प्रति ॥
वैद्योऽप्यगदंदानेन गदशान्तिं करोत्युत ॥ २७ ॥

त्वं त्रिमूर्त्यवतारोऽसि ख्यातिस्ते दूरतो गता ॥
त्वं हि भक्तजनाधार इति लोका वदन्ति च ॥ २८ ॥

मया किमपराद्धं ते ग्रामाणां विंशतिं द्रुतम् ॥
अतीत्य चागता ध्यायंस्त्वां विस्मृत्य स्वकानपि २९

मत्समानाः समानास्ता नार्यो भर्तृसुतान्विताः ॥
जाता शिलासमानाऽहं दुर्भगायाः कुतः सुतः ॥१३०॥

तेऽग्रे सिद्धयो निधयश्च क्रीडन्ति। नौ कुबुद्धिं दृष्ट्वोपेक्षितवानसि ॥ १८-२९ ॥ लोकोऽन्यायं दृष्ट्वा भूपाग्रे वक्ति। स शीघ्रं दण्ड्यं दण्डयति। रोगी वैद्यमेति स तमौषधेनागदं करोति। त्वं त्रिमूर्त्यवतारो भक्ताधार इति श्रुत्वा विंशतिग्रामानतीत्यारोग्यार्थं त्वां ध्यायन्ती शीघ्रमागताऽस्मि। भर्तृसुखा (ता) न्विता मत्तुल्या नार्योऽहं त्वश्मवज्जाता। दुर्भगायाः

---

१ अन्यायं २ औषधं.

सदा मम पती रोगी कुतः पुत्रो भवेन्मम ॥
अत एवागता स्वामिन्त्सकामस्तु ममागमः ॥ ३१ ॥

आरोग्यं मे भवेत्पत्युः सुपुत्रोऽपि च मे भवेत् ॥
कृपासिन्धो ममाशाऽद्य स्वामिन्त्सम्पूर्णतां गता ॥३२॥

मनोरथोऽपि फलितो भर्ताप्यारोग्यतां गतः ॥
पुत्रा हि बहवो जाताः प्रसिद्धाऽऽख्या तवाभवत् ३३

मनोरथा हि फलिता अतोऽनुज्ञामवाप्य ते ॥
कीर्तिमादाय यास्यामि परलोकं धवान्विता ॥ ३४ ॥

इति चिन्तयती मार्गे गच्छन्ती सुदती सती ॥
सङ्गमं प्राप्य चाश्वत्थे ददर्श स्वामिनं गुरुम् ॥ ३५ ॥

दूरे स्थित्वा क्षणं साध्वी साष्टाङ्गं प्रणनाम तम् ॥
गुरुस्तदाऽऽह सौभाग्यं ध्रुवं तेऽस्तु सुवासिनि ॥३६॥

एकभक्त्या पुनः साऽपि ननाम श्रीगुरुं पुनः ॥
स्वामी तथैव च प्राह तां त्वमष्टसुता भव ॥ ३७ ॥

कुतः सुतः । सदा मे भर्ता रोगी कुतः पुत्रः । पत्युरारोग्यं पुत्राश्च भविष्यन्तीत्याशयाऽगमं । हे दयाब्धे, आशा पूर्णा । मनोरथाः फलिताः । भर्ताऽगदोऽभूत्पुत्रा अपि लब्धास्त आख्या प्रसिद्धाऽभूत् । अतोऽनुज्ञां प्राप्य ते कीर्तिं गृहीत्वा भर्त्रा सह परलोकं यास्ये ॥ २६-३४ ॥ इति चिन्तयन्ती सा सङ्गमेऽश्वत्थे स्वामिनं दृष्ट्वा दूरात्साष्टाङ्गं ननाम । श्रीगुरुः सुवासिनि, ते सौभाग्यं ध्रुवमित्याह । पुनः सा भक्त्या ननाम । श्रीगुरुः पुनराहाष्ट-

इति स्वामिवचः श्रुत्वा मन्दहास्ययुता जनाः ॥
विस्तरात्कथयामासुस्तदा श्रीगुरवेऽखिलम् ॥ ३८ ॥

स्वामिन्नस्या धवोऽद्यैव गतोऽत्रैव हि पञ्चताम् ॥
परन्धामगतस्य स्त्री कथमेषा सुवासिनी ॥ ३९ ॥

शवः श्मशानं नीतश्च भवदाज्ञामवाप्य च ॥
कर्तुं धवानुगमनमिच्छन्तीयमिहागता ॥ १४० ॥

आज्ञया भवतः शीघ्रं गत्वा भूयः पतिव्रता ॥
धर्मेण भर्तारमनुगमिष्यत्यस्ततः पुरा ॥ ४१ ॥

इति तेषां वचः श्रुत्वा श्रीगुरुः प्रहसञ्जगौ ॥
स्थिरं सौभाग्यमेतस्या मरणं तु कथं भवेत् ॥ ४२ ॥

लोकाः शवं चानयत सत्वरं मम सन्निधौ ॥
कदा प्राणा गतास्तस्य निरीक्षिष्यामि चक्षुषा ॥ ४३ ॥

मम वाक्यं तु न मृषा भविष्यति विनिश्चितम् ॥
अस्याः स्थिरं हि सौभाग्यं सन्देहो नात्र दृश्यते ॥४४॥

पुत्रा भवेति श्रुत्वा मन्दहास्या जना ऊचुः। स्वामिन्नस्या धवोऽत्र मृतः कथमेषा सुवासिनी। शवः श्मशानं नीतो भवदाज्ञां लब्ध्वा शीघ्रं स्वधर्मेण पतिमनुयास्यतीति श्रुत्वा हसन् श्रीगुरुराह। अस्याः सौभाग्यं स्थिरं। कथं भर्ता मृतः शवमानयत। कदा प्राणा गता अहं वीक्ष्यामि (क्षिष्ये) ॥ ३९-४३॥ अस्याः स्थिरं सौभाग्यं। मम वाक्यं मृषा न। प्रेतसंस्कारो न कार्यः। द्रुतं

कर्पूरगौरो निर्धारं वाक्यस्यास्य करिष्यति ॥
न कार्यः प्रेतसंस्कारः शवमानयत द्रुतम् ॥ ४५ ॥

इति श्रीगुरुणाऽऽदिष्टा धावन्तस्ते जनास्तदा ॥
ते याताः शवमानेतुमन्येऽपि कुतुकान्विताः ॥ ४६ ॥

अत्रान्तरे द्विजास्तत्र चत्वारः पूजितुं गुरुम् ॥
समागता भक्तियुक्ताः पूजामारेभिरे गुरोः ॥ ४७ ॥

रुद्रसूक्तेनाभिषिच्य श्रीगुरोश्चरणे शुभे ॥
उपचारैः षोडशभिर्भक्त्याऽऽनर्चुः सुभाविकाः ॥ ४८ ॥

पादावनेजनं तीर्थमानर्चुरुपचारतः ॥
तावच्छवं समादाय ब्राह्मणा अपि चागताः ॥ ४९ ॥

शवं ते स्थापयामासुः श्रीगुरोः सम्मुखं द्विजाः ॥
श्रीगुरुः प्राह भो विप्रा दूरीकुरुत चांशुकम् ॥ १५० ॥

ततो गतप्रावरणं मुक्तबन्धं शवं तु तम् ॥
तीर्थाम्बुना प्रोक्षयेत्थमादिदेश[1] द्विजं गुरुः ॥ ५१ ॥

शवमानयत। इति श्रुत्वा सकौतुको लोको धावञ्च्छवमानेतुं ययौ ॥ १४४-१४६ ॥ अत्रान्तरे द्विजा गुरुमर्चितुमेत्य भक्त्या पूजामारभ्य रुद्रेण चरणेऽभिषिच्य तीर्थमानर्चुः। तावच्छवमादाय विप्रा एत्य ॥ ४४-४९ ॥ गुरुसम्मुखं शवं स्थापयामासुः। गुरुस्तदाच्छादनं बन्धांश्च विसर्जयित्वा तीर्थाम्बुना प्रोक्षेत्यादिशत्। ततः तीर्थेन प्रोक्षितं तं प्रभुः

---

१ आज्ञापितवान्.

गुर्वाज्ञ .. ताशजलैः प्रोक्षयामास तं द्विजः ॥
ददर्श श्रीगुरुश्चापि सुधादृष्टया शवं तदा ॥ ५२ ॥

गुरुणा स सुधादृष्टया वीक्षितोऽपि मृतो द्विजः ॥
जीवितश्चालयन्नङ्गमुत्थायोपाविशत्तदा ॥ ५३ ॥

नग्नोऽहमिति स ऱ्हीतः सावधानतया स्थितः
परिधाय नवं वस्त्रं पत्न्या दत्तमुपाविशत् ॥ ५४ ॥

उपाहूय स्त्रियं विप्रः पप्रच्छ क च भामिनि ॥
त्वयाऽऽनीतोऽहमप्येष कोऽयमत्र यतीश्वरः ॥ ५५ ॥

स्थितेष्वेतेषु चाप्यत्र कथं निद्रावृतोऽभवम् ॥
न बोधितस्त्वया कस्मादिति पप्रच्छ स स्त्रियम् ॥५६॥

पत्या पृष्टा स्मितमुखी सखी सर्वं शशंस सा ॥
तत उत्थाय तौ चोभौ गुरवे चक्रतुर्नतिम् ॥ ५७ ॥

तदंघ्र्योः शिर आधाय स्तुवीतः स्मारस्फुटाक्षरौ ॥
दृष्ट्वाऽऽनन्दाश्रुयुक्तौ तौ ननन्दुः सकला जनाः ॥५८॥

सुधादृष्टयाऽपश्यत् ॥ ५०-५२ ॥ ततो मृतोऽपि जीवितः सोऽङ्गानि चालयन्नुपविश्य नग्नोऽहमिति ऱ्हीतः पत्न्या दत्तं वस्त्रं परिधायोपविश्य पत्नीमुपाहूयाह । त्वयाऽहं क्वानीतोऽस्मि । कोऽयं यतीश एतेषु स्थितेषु निद्रितोऽभवं । त्वया कुतो न बोधित इति श्रुत्वा सस्मिता सा सर्वं शशंस । तत उभौ गुरुं नत्वा तत्पदयोः शिरो निधायास्फुटं सानन्दाश्रुयुक्तावूचतुः ॥ ५३-५८ ॥ आवां दोषाढ्यौ दोषानुसारीदं जन्मात्रापि

दम्पती ऊचतुः पापावावां दोषगणावृतौ ॥
दोषानुसारि जन्मेदं भोः स्वामिन्लब्धमावयोः ॥ ५९ ॥

अत्रापि दुर्धिया पापं कृत्वा मग्नावकाम्बुधौ ॥
त्रिमूर्ते तेन चावाभ्यां विस्मृते ते पदे गुरो ॥ १६० ॥

समस्तजीवमात्राणां रक्षिता त्वं हि शङ्करः ॥
ख्यातिस्त्रिभुवने तेऽसौ शरणाप्तवरप्रद ॥ ६१ ॥

सच्चिदानन्दरूपस्त्वं त्राहि त्राहि जगद्गुरो ॥
साक्षात्त्वं ब्रह्मविष्णवीशो विश्वमूर्ते परात्पर ॥ ६२ ॥

त्राहि त्राहि जगद्भर्तस्त्राहि त्राहि च विश्वकृत् ॥
गुरुनाथ कृपाब्धे त्वं भक्ताभीष्टवरप्रदः ॥ ६३ ॥

गुरुमूर्ते जय जय पशुपस्त्वं जटाधरः ॥
नृदेहेनावतीर्णोऽसि स्वावनायावनाविह ॥ ६४ ॥

पिनाकपाणे वां ( नौ ) त्राहि त्राहि देवशिरोमणे ॥
रक्षसि त्वं भक्तजनानापद्भ्योऽपि निरन्तरम् ॥ ६५ ॥

दुर्धिया पापं कृत्वा दुःखाब्धौ मग्नौ। त्रिमूर्ते, ते पदे विस्मृते। सर्वजीवत्राता त्वं शिवः। हे शरणद, त्रिभुवने ते कीर्तिः ख्याता ॥ ५९-६१ ॥ हे सच्चिदानन्द परात्पर, त्राहि। जगद्गुरो, त्वं साक्षात्त्रिमूर्तिः। हे विश्वकृज्जगद्भर्तः कृपाब्धे, त्वं भक्ताभीष्टदोऽसि। गुरुमूर्ते, जय। त्वं जटाधरः पशुपोऽत्र भक्ततारयणाय नृदेहेनावतीर्णोऽसि। हे पिनाकपाणे, त्राहि। हे देवशि-

१ दुःखसागरे. २ इह अवनौ स्वानां भक्तानामवनाय.

सर्वभूतनिवासस्त्वं वासुदेव नमोऽस्तु ते ॥
आवाभ्यां विदितोऽसि त्वं मायारूपप्रवर्तकः ॥ ६६ ॥

करोषीच्छावशात्सृष्टिं त्वमेवासीश विश्वकृत् ॥
आवाभ्यां विदितोऽसि त्वं ज्ञानरूपोऽस्यगोचरः ॥६७॥

लीलेयं ते त्रिभुवनं त्वदंघ्र्योः स्थापितं शिरः ॥
निश्चयेनेयमिच्छा वां (नौ) स्वामिन्माऽस्तु पुनर्भवः ६८

न शृणोति वचो यस्ते तस्मै क्रुध्यसि शिक्षक ॥
दृष्टोऽस्यावां प्रशान्तस्त्वं निष्कलङ्को निरावृतिः ॥६९॥

न तेऽस्ति मायिकः क्रोधस्त्वमानन्दसहस्रगुः ॥
भासि नानात्मकः स्वामिन्कृपाब्धे भक्तरक्षक ॥१७०॥

जीवमात्रे कृपा तेऽस्ति शरणागतरक्षक ॥
पुमर्थदाखिलं सौख्यं ददासीह परत्र च ॥ ७१ ॥

त्वं चिन्मात्राकरो देव त्वं च कारुण्यसागरः ॥
स्वामिन्क्षमस्वापराधान्नरसिंहसरस्वति ॥ ७२ ॥

रोमणे, त्वं स्वानापद्भ्यः पासि। हे वासुदेव, ते नमः। त्वं मायाप्रवर्तक इच्छया सृजसि। ज्ञानरूपोऽप्यगोचर इति ज्ञातं। त्रिभुवनं ते लीलाऽतः परं नौ पुनर्भवो माऽस्तु। यस्ते वचो न शृणोति तस्मै क्रुद्धोऽपि त्वं प्रशान्तो निष्कलङ्को निरावरणोऽसि। हे नानात्मकानन्तमूर्ते, ते क्रोधो न। स्वामिन्कृपाब्धे, रक्ष ॥ ६२-१७० ॥ हे शरणद, जीवमात्रे ते कृपा। हे पुमर्थद, त्वमिहामुत्र च सुखदोऽसि। हे चिन्मात्र करुणाकर स्वामिन्नपरा-

इति नानाविधैः स्तोत्रैर्दम्पतीभ्यां स संस्तुतः ॥
आश्वासयामास च तौ श्रीगुरुस्तुष्टमानसः ॥ ७३ ॥

पूर्णायुषोऽष्टपुत्रा वां भविष्यन्ति श्रियान्विताः ॥
पूर्वदोषाः प्रनष्टा वां देहान्ते मुक्तिरुत्तमा ॥ ७४ ॥

चतुर्विधाः पुमर्थाश्च लब्धा वां मत्प्रसादतः ॥
निःसन्देहं सुखेनैव भवद्भ्यां स्थेयमालये ॥ ७५ ॥

इति श्रुत्वा गुरोर्वाक्यं तत्र नार्यो नरा अपि ॥
उच्चैरानन्दिताः सर्वे चक्रुर्जयजयध्वनिम् ॥ ७६ ॥

सर्वेऽपि प्रणतिं चक्रुस्तुष्टुवुश्च जगुर्यशः ॥
नीराज्य भक्तिसंयुक्ताश्चक्रुर्जयजयध्वनिम् ॥ ७७ ॥

तत्रैको ब्राह्मणो धूर्तः कुबुद्धिः स नराधमः ॥
संशयाविष्टचित्तः सन्पप्रच्छ श्रीगुरुं तदा ॥ ७८ ॥

श्रीगुरो भगवन्स्वामिन्पृच्छाम्येकं वदस्व मे ॥
संशयोऽयं महानेष देव मे मनसि स्थितः ॥ ७९ ॥

धान्क्षमस्वेति नानास्तोत्रैः स्तुतस्तुष्टो गुरुस्तावाश्वास्याह । श्रीमन्तः पूर्णायुषोऽष्टपुत्रा वां भविष्यन्ति । पूर्वदोषा नष्टा देहान्ते उत्तमा मुक्तिश्च भविष्यति ॥ ७१-७४ ॥ मत्प्रसादाच्चतुर्विधाः पुमर्थाश्च लब्धाः । निःसंशयं गृहे सुखेन स्थेयमिति श्रुत्वाऽऽनन्दिता लोका जयध्वनिं चक्रुः । सर्वे प्रणतिं कृत्वा नीराज्य भक्त्या श्रीगुरुं तुष्टुवुः ॥ ७५-७७ ॥ तत्रैको धूर्तः कुधीः संशयेनाह । स्वामिन्गुरो, एकं पृच्छामि वद । मे चित्तेऽयं

वेदशास्त्रपुराणानि प्राहुरेतत्सनातनम् ॥
मूर्ध्नि यद्ब्रह्मलिखितं तत्सत्यं नैव संशयः ॥ १८० ॥

नापमृत्युर्द्विजस्यायं महामृत्युर्दिवाऽऽगतः ॥
जीवितोऽयं कथं ब्रह्मलिपिः सत्याऽथवा मृषा ॥ ८१ ॥

अभिप्रायं न वेद्म्यस्य स्वामिन्कथय तत्स्फुटम् ॥
इत्युक्तः श्रीगुरुर्मूर्खब्राह्मणं प्रहसञ्जगौ ॥ ८२ ॥
शृणुष्व ब्राह्मणेदं त्वं विस्तरेण वदामि ते ॥
शतायुर्निश्चितं त्वस्य विधिनैवाग्रजन्मनि ॥ ८३ ॥
लिखितं ब्राह्मणस्यात्र त्रिंशदायुर्मया तु तत् ॥
प्रार्थितं त्वग्रतो ब्रह्मंस्त्रिंशदायुः समर्पय ॥ ८४ ॥

शतायुरत्र देह्यस्मा इति भक्तहिताय मे ॥
गृहीतं ब्रह्मणस्तस्मान्मूढविप्र लिपिः सती ॥ ८५ ॥

तच्छ्रुत्वा विस्मिता लोकाः साष्टाङ्गं नेमुरीश्वरं ॥
स्वं स्वं स्थानं ययुः सर्वे दिक्षु ख्यातिरियं तता ॥८६॥

संशयः। वेदादिर्ब्रूते ॥ ७८-७९ ॥ ब्रह्मलिखितं सत्यं। द्विजस्यास्य महामृत्युर्दिवाऽऽगतः। ब्रह्मलिपिः सत्या चेत्कथं जीवितः स्फुटं वदेत्युक्तः श्रीगुरुर्हसन्मूर्खविप्रमाह। शृणु। विस्तराद्वच्मि। ब्रह्मणाऽत्रास्य त्रिंशदायुरग्रजन्मनि शतायुश्च निश्चितं ततो मे भक्तहिताय व्यत्यासमकरवं। ततो ब्रह्मलिपिः सत्येति श्रुत्वा विस्मिता लोका नत्वा स्वं स्वं स्थानं ययुरेवं

---

१ विस्तृता.

प्रीता सा सङ्गमे स्नाता पतियुक्ता पतिव्रता ॥
हृष्टान्तःकरणाभीष्टप्रदं गुरुमपूजयत् ॥ ८७ ॥
बहुद्रव्यं व्ययीकृत्य तर्पयामास सा द्विजान् ॥
अस्तङ्गतस्ततः सूर्यस्ताभ्यां प्राप गुरुर्मठम् ॥ ८८ ॥
नामधारक माहात्म्यमपूर्वं श्रीगुरोः कथा ॥
या वृत्ताऽप्यग्रतस्तां ते प्रवक्ष्येऽवहितः शृणु ॥ ८९ ॥
एवं गङ्गाधरवरसुतो यः सरस्वत्यभिख्यो
मुख्योपायं भवजलनिधेस्तर्तुमुत्तर्तुकामान् ॥
ब्रूते सच्छ्रीगुरुचरितकं विस्तराद्ग्रन्थमेतं
ये तं शृण्वन्त्यनुदिनमहो तेऽखिलाभीष्टभाजः ॥१९०॥

(इति) श्रीसि० रूपेण सर० न्वितगु० यां
श्रीगुरु० कर्मकाण्डे द्वात्रिंशः (अध्यायः)॥
आदितः श्लोकाः ॥ ३७२८ ॥

कीर्तिर्दिक्षु तता। सती भर्त्रा सह स्नात्वा हृष्टा गुरुमभ्यर्च्य बहुद्रव्यं द्विजेभ्योऽदात्। सूर्योऽस्तं गतः। दम्पतीभ्यां सह श्रीगुरुर्मठं ययौ ॥ ८०-८८ ॥ सिद्ध आहापूर्वं श्रीगुरुमाहात्म्यं। सावधानेनाग्रतो जातां कथां शृणु ॥ ८९ ॥ एवं गङ्गाधरवर० ॥ १९० ॥ इति चूर्णिकायां द्वात्रिंशोऽध्यायः ॥ ३२ ॥

॥ इति द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

१ जाता.

## ॥ अथ त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

॥ श्रीगणेशाय नमः ॥

नामधारकशिष्याग्र्यः संलग्नः सिद्धपादयोः ॥
करौ सन्धाय विनतो भक्तियुक्तोऽब्रवीदिदम् ॥ १ ॥

भोः प्राक्कथानुसन्धानं स्वामिन्त्सिद्धमुने त्विदम् ॥
गुरुमन्वागता कान्तान्विता साऽपि पतिव्रता ॥ २ ॥

श्रीगुरुश्च मठं प्राप्तस्ततश्चाग्रे कथं कथा ॥
प्रवृत्ता तां कथय मे भोः स्वामिन्विस्तरेण हि ॥ ३ ॥

इत्युक्तः सिद्ध ऊचे तं शृणु बालक दम्पती ॥
प्रातःकाले परेद्युस्तौ तं श्रीगुरुमुपागतौ ॥ ४ ॥

करौ बद्ध्वोचतुर्नम्रौ यदा शोकोऽभवत्तदा ॥
यतिरेकः समागत्य नानाधर्मानुपादिशत् ॥ ५ ॥

अथ सारसंग्रहश्लोकोऽयम्—

भुजगशिशुभृता नीता कुलयुगिह पुराग्न्याढये (?) ॥
स्वपुरमपि सती वेश्या तत इह विकपभूपौ (?) ॥ १ ॥

सिद्धपदलग्नो नामधारको नत्वा भक्त्याऽऽह । भोः सिद्धमुने, श्रीगुरुर्मठं प्राप भर्त्रा सह सती चान्वागताऽग्रतः कथां विस्तराद्ब्रूहीत्युक्तः सिद्ध आह । शृणु । परेद्युर्दम्पती गुरुमेत्य नत्वाऽऽह ॥ ४ ॥ यदा शोकोऽ

रुद्राक्षांश्चतुरो दत्त्वा प्राह बद्ध्वाऽस्य कर्णयोः ॥
द्वौ द्वौ कण्ठेऽपि च ततो दाहः कार्यो यथाविधि ॥६॥

अन्यच्च कथितं तेन रुद्रसूक्तेन च द्विजाः ॥
श्रीगुरोरभिषिञ्चन्ति पादे तत्तीर्थमानय ॥ ७ ॥

तेन तीर्थेन सर्वाङ्गं शवस्य प्रोक्ष्य चापि च ॥
स्वामिनो दर्शनं कार्यं श्रीनृसिंहाभिधस्य च ॥ ८ ॥

इत्युक्त्वा स ययौ साधुस्ते रुद्राक्षा इमे स्थिताः ॥
स्वामिन्पतिश्रवणयोर्द्वौ बद्धौ द्वौ गलेऽपि च ॥ ९ ॥

इति श्रुत्वा सतीसूक्तिं श्रीगुरुः प्रहसञ्जगौ ॥
मया रूपान्तरेणाक्षा[1] दत्ता भक्तिस्तवेक्षिता ॥ १० ॥

रुद्राक्षाणामनुपमो महिमोभयसिद्धिदः ॥
त्वं भक्तासि ततो वक्ष्ये सावधानतया शृणु ॥ ११ ॥

भवत्तदैको यतिरेत्य धर्मानुक्त्वा रुद्राक्षान्दत्त्वा पत्युः कर्णयोः कण्ठे च बद्ध्वा दाहं कुर्वित्याहान्यच्चोक्तं रुद्राभिषिक्तगुरुपदतीर्थेन शवस्य सर्वाङ्गानि प्रोक्ष्य स्वामिदर्शनं कुर्वित्युक्त्वा ययौ । तेऽमी रुद्राक्षाः पत्युः श्रवणयोर्गले च बद्धाः । तच्छ्रुत्वा हसन् श्रीगुरुराह । रूपान्तरेण मयाऽक्षा दत्तास्ते भक्तिर्दृष्टा ॥ १० ॥ रुद्राक्षमहिमोभयसिद्धिदस्त्वं भक्ताऽस्यतो वक्ष्ये शृणु

१ रुद्राक्षाः.

श्रद्धाभक्त्याऽथवाऽभक्त्या रुद्राक्षांश्च बिभर्ति यः ॥
तं न स्पृशन्ति पापानि नीचं वाऽप्यथवोत्तमम् ॥१२॥

रुद्राक्षधारणात्पुण्यमद्धा[1]ऽपरिमितं सति ॥
नेदृशेन समं पुण्यं यच्छ्रुतिस्मृतिसम्मतम् ॥ १३ ॥

नरः सहस्रसंख्याकरुद्राक्षस्रजमुत्तमाम् ॥
बिभर्ति स स्वरूपेण रुद्रो ज्ञेयोऽमरार्चितः ॥ १४ ॥

सहस्राणामलाभे तु बाह्वोः षोडश षोडश ॥
एकः शिखायां च चतुर्विंशतिः करयोर्द्वयोः ॥ १५ ॥

द्वात्रिंशता तथा कण्ठाभरणं मस्तकेऽभितः ॥
चत्वारिंशच्च षट् षट् च धार्याः श्रवणयोर्द्वयोः ॥१६॥

दृशोरेकोऽप्यष्टशतं रुद्राक्षा अप्युरःस्थले ॥
एवं बिभर्ति रुद्राक्षान्रुद्रपुत्रसमः स च ॥ १७ ॥

॥ ११ ॥ भक्त्याऽभक्त्या वा यस्तान्धत्ते तं पापानि न स्पृशन्ति नीचमपि । तद्धारणममितपुण्यं श्रुत्यादावुक्तम् ॥ १२-१३ ॥ सहस्राक्षधारी देवपूज्यः साक्षाद्रुद्रः । यद्वा बाह्वोर्द्विःषोडशैकः शिखायां, करयोश्चतुर्विंशतिः, द्वात्रिंशत्कण्ठे, मस्तके चत्वारिंशच्छ्रुत्योर्द्वादश, दृशोरेकोऽष्टोत्तरशतमुरसि धार्याः स रुद्रपुत्रसमः । प्रवालस्फटिकस्वर्णादिसहिता-

१ सत्यं.

प्रवालस्फटिकस्वर्णरूप्यवैडूर्यमौक्तिकैः ॥
सहिताः सुहिता अक्षमाला धार्या महाहिताः ॥ १८ ॥

तत्पुण्यममितं प्रोक्तं तेऽप्यक्षा बहुधाः स्मृताः ॥
लभ्यन्ते समये ये ये ते ते धार्याः प्रयत्नतः ॥ १९ ॥

यद्गले सन्ति रुद्राक्षास्तं न स्पृशति पातकम् ॥
निश्चिता सद्गतिस्तस्य रुद्रलोके त्वखण्डिता ॥ २० ॥

अक्षमालामनुष्ठाने धृत्वा जपति यो नरः ॥
तज्जपस्य फलं प्रोक्तमनन्तं शृणु चैकधीः ॥ २१ ॥

घोरं तस्य वृथा जन्म यो रुद्राक्षेण वर्जितः ॥
त्रिपुण्ड्रा नैव यन्मूर्ध्नि तस्य जन्म निरर्थकम् ॥ २२ ॥

रुद्राक्षान्मस्तके बद्ध्वा यद्वा श्रवणयोर्द्वयोः ॥
यः स्नाति मानवस्तस्य गङ्गास्नानफलं भवेत् ॥२३॥

रुद्राध्यायेन रुद्राक्षं योऽभिषिञ्चति भक्तिमान् ॥
लिङ्गार्चनसमं तस्य फलं भवति निश्चलम् ॥ २४ ॥

क्षमाला धार्यास्तत्पुण्यमामितम्। बहुविधा अपि ते यथालाभं धार्याः। यत्कण्ठेऽक्षास्तस्य न पापस्पर्शः। तस्य रुद्रलोकेऽखण्डा गतिः। तन्मालया जपेऽनन्तफलम्। रुद्राक्षभस्मपुण्ड्रवर्जितस्य व्यर्थं जन्म ॥१४-२२॥ मस्तके कर्णे चाक्षान्बद्ध्वा स्नानाद्गङ्गास्नानफलम्। रुद्रेण रुद्राक्षाभिषेका-

एकवक्त्रः पञ्चवक्त्र एकादशमुखोऽथवा ॥
चतुर्दशमुखोऽन्यो वा भवामयहरः[1] परः ॥ २५ ॥

रुद्राक्षा उत्तमा एते यद्वा लभ्यन्ति ये यदा ॥
प्रीत्या धार्यास्तदा तेऽपि चतुर्विधपुमर्थदाः ॥ २६ ॥

एषां प्राचीनमाख्यानं शृणु पातकनाशनम् ॥
विशेषतोऽशेषदोषा नश्यन्त्येवावधारय ॥ २७ ॥

राजा काश्मीरदेशीयो भद्रसेनाभिधोऽभवत् ॥
सुधर्मनामकस्तस्य प्रख्यातः सचिवोऽभवत् ॥ २८ ॥

राज्ञश्च मन्त्रिणः पुत्रो तारको नाम सद्गुणः ॥
उभावपि ज्ञानवन्तौ सखायौ तौ परस्परम् ॥ २९ ॥

एकस्थाने तिष्ठतः स्म समानवयसौ तु तौ ॥
क्रीडाविद्याभ्यासनादौ तौ सहैव हि चेरतुः ॥ ३० ॥

शयने भोजनादौ तौ प्रेम्णैव सह चेरतुः ॥
महाज्ञानौ कुमारौ तौ शङ्करार्चनतत्परौ ॥ ३१ ॥

लिङ्गार्चनफलम् । एकपञ्चैकादशादिवक्त्रा रुद्राक्षा भवापहा उत्तमाः । यथालब्धा अपि भक्त्या धार्याः पुरुषार्थदाः । पापनाशकामेषां पूर्वकथां शृणु । काश्मीरे भद्रसेनाख्यो राजा सुधर्मकस्तन्मन्त्री च तत्पुत्रौ तारकः सद्गुणश्च परस्परप्रेमयुक्तौ विद्याभ्यासक्रीडादौ सह चेरतुः । तथैव प्रेम्णा

---

१ संसाररोगः.

सर्वाङ्गेष्वपि रुद्राक्षभूषणान्येव चक्रतुः ॥
भस्मत्रिपुण्ड्रतिलकौ सर्वदैव सहासतुः ॥ ३२ ॥

स्वर्णाभरणरत्नानि मत्वा लोहसमानि तौ ॥
विना रुद्राक्षमालाभिर्दधतुर्नान्यभूषणम् ॥ ३३ ॥

मात्रा पित्रा बन्धुभिर्वा दत्तान्याभरणानि तौ ॥
लोहपाषाणतुल्यानि मत्वा प्रजहतुर्भुवि ॥ ३४ ॥

अथ तत्रैकदिवसे तस्य भूपस्य मन्दिरे ॥
पराशरऋषिः प्राप साक्षाद्ब्रह्मेव केवलम् ॥ ३५ ॥

आयान्तमृषिमालोक्य राजा बद्धकरो नतः ॥
पाद्यार्घ्याद्युपचारैस्तं पूजयामास भक्तितः ॥ ३६ ॥

सिंहासने चोपवेश्य स्तुत्वा नानाविधैः स्तवैः ॥
साष्टाङ्गं प्रणनामामुं राजाऽऽनन्दाश्रुसम्प्लुतः ॥ ३७ ॥

राजा मुनिवरं भक्त्या करौ सन्धाय चाब्रवीत् ॥
लग्नं सून्वोः पिशाचत्वं तयोः किं कारणं वद ॥ ३८ ॥

भोजनादौ च तौ शिवार्चनरतौ रुद्राक्षभूषितौ भस्मतिलकौ ॥२३-३२॥ स्वर्णाभरणरत्नानि लोहवत्पश्यन्तौ रुद्राक्षैर्विनाऽन्यद्भूषणं न दधतुः। पितृबन्धुदत्ताभरणानि लोहपाषाणवज्जहतुः। तत्रैकदा साक्षाद्ब्रह्मेव पराशर आप। राजा बद्धाञ्जलिः पाद्यादिभिस्तं सम्पूज्य भक्त्या सिंहासने उपवेश्य बहुस्तोत्रैः स्तुत्वा साष्टाङ्गं नत्वाऽऽनन्दाश्रुसम्प्लुतो भक्त्या प्रणत आह। पुत्रयोः पिशाचत्वे कारणं किं। दत्तमपि रत्नादि त्यक्त्वा

रत्नान्याभरणान्येतौ दत्तान्यपि न गृह्णतः ॥
कण्ठाभरणभूषादि रुद्राक्षैरेव कुर्वतः ॥ ३९ ॥

किं ज्ञानमेतयोः स्वामिन्नुक्तावपि न गृह्णतः ॥
भवान्प्रकथयत्वाभ्यां कुमारौ श्रोष्यतस्तु तत् ॥ ४० ॥

भूतं भव्यं भवद्वेद त्रिकालज्ञो भवान्मुनिः ॥
अनयोः कोऽस्त्यभिप्रायो विस्तरात्कथयस्व मे ॥४१॥

इति राजवचः श्रुत्वा हर्षयुक्तः पराशरः ॥
प्रहसन्कथयामास विचित्रं शृणु भूपते ॥ ४२ ॥

पुत्रस्य ते मन्त्रिणश्च शृणु विस्मयकारकम् ॥
वक्ष्यामि पूर्ववृत्तान्तं जातौ येनेदृशाविमौ ॥ ४३ ॥

पुरैका वारवनिता नन्दिग्रामे सुसम्मता ॥
तेजसा चन्द्रवद्भाता रूपलावण्यरञ्जिता ॥ ४४ ॥

पूर्णिमाचन्द्रवद्यस्याः शिरसि च्छत्रमुत्तमम् ॥
सुखासनं स्वर्णमयं यस्याः शोभासमन्वितम् ॥ ४५ ॥

रुद्राक्षैर्भूषाः कुरुतः । एतयोः किं ज्ञानं । प्रकाशयैतौ त्वद्वचः श्रोष्यतः । त्वं त्रिकालज्ञोऽस्यनयोरभिप्रायं विस्तरेण वद ॥३३-४१॥ इति श्रुत्वा स आह । अनयोर्विस्मयकरं पूर्वजन्म शृणु । यत ईदृशौ जातौ ॥४२-४३॥ पुरा नन्दिग्रामे काचिद्वारस्त्री रूपलावण्यरञ्जिता पूर्णचन्द्रवद्यस्याश्छत्रं

हिरण्मयं यद्भवनं हेममय्यौ च पादुके ।।
नानाविधानि चित्राणि यस्या आभरणानि च ।।४६।।

पर्यङ्को रत्नखचितो दिव्यानि वसनानि च ।।
गोमहिष्यश्वदास्यश्च यस्या बह्व्योऽभवन्नृप ।। ४७ ।।

अतीव सुन्दरी सोमकान्तिः सा नवयौवना ।।
सा सर्वाभरणा भाति मारस्येवापरा रतिः ।। ४८ ।।

दिव्यकुंकुमकस्तूरीगन्धपुष्पयुताऽश्चिता ।।
तस्या गेहेऽखिला भोगा आसन्ख्याताऽपि सर्वतः ४९

धान्यर्धिर्यद्धनस्यापि न मितिः कोटिसंख्यया ।।
ईदृशी वारवनिता नगरे ख्यातिमागता ।। ५० ।।

कान्ता सा सर्वदा प्रीता मता साऽपि पतिव्रता ।।
धर्मज्ञा तर्पयामास द्रव्यान्नवसनैर्द्विजान् ।। ५१ ।।

नानारत्नाश्चितस्तस्या उन्नतो नाटयमण्डपः ।।
नित्यं नृत्यति तत्रासौ सर्वाभरणभूषिता ।। ५२ ।।

हैमं चानुत्तमासनं । हेममयं गृहं पादुके चित्राणि नानाभरणानि च । रत्नपर्यङ्को दिव्यवस्त्राणि च । गोमहिष्यश्वदास्यो बह्व्यः । सा चन्द्राभा नवयौवना रतिवत् । दिव्यकुंकुमकस्तूर्याद्याः सर्वा भोगाः, धान्यर्धिः, कोटिसंख्याभिर्धनं चेदृशी ख्याता पतिव्रता धर्मज्ञा साऽन्नवस्त्रद्रव्यैर्विप्रानतोषयत् ।।४४-५१।। सा भूषिता रत्नखचितमण्डपे नित्यं नृत्यति

सखीवर्गैरपि समं नृत्यति स्म मनोरमम् ॥
कुक्कुटो मर्कटश्चोभौ बद्धौ तन्नाटयमण्डपे ॥ ५३ ॥

तौ च रुद्राक्षमालाभिः कुक्कुटो मर्कटोऽपि च ॥
तया सुभूषितौ शीर्ष्णि रुद्राक्षः कुक्कुटस्य च ॥ ५४ ॥

शिक्षितौ नृत्यकलया कुक्कुटो मर्कटोऽपि च ॥
अथैकस्मिन्दिने तत्र चित्रं जातं शृणुष्व तत् ॥ ५५ ॥

शिवव्रतीति चाख्यात एको धनिक आगतः ॥
रुद्राक्षमण्डितः शान्तः स वैश्यो भस्मभूषितः ॥ ५६ ॥

सकङ्कणे करे तस्य सूर्यकान्तिसमप्रभम् ॥
लिङ्गं च रत्नखचितं तेजसाऽतीव रञ्जितम् ॥ ५७ ॥

वेश्या वैश्यं समायान्तं दृष्ट्वा नत्वा च सादरम् ॥
नीत्वोपवेश्य चानर्च शोभने नाटयमण्डपे ॥ ५८ ॥

तत्करे रत्नखचितं कङ्कणं लिङ्गमप्यसौ ॥
यत्तेजो भूरि विततं तन्मनस्तेन मोहितम् ॥ ५९ ॥

सखीभिः समम्। तत्र रुद्राक्षभूषितौ कुक्कुटमर्कटौ विनोदेन बद्धौ। नृत्यकलया शिक्षितौ च। तत्रैकदा चित्रं जातं श्रृणु। शिवव्रती रुद्राक्षमण्डितः शान्तो भस्मादिग्धो वैश्यः सकङ्कणे करे सूर्याभं रत्नलिङ्गं गृहीत्वाऽऽप। वेश्या तं दृष्ट्वा गृहमानीयाभ्यर्च्य रत्नमण्डपेऽस्थापयत्। तत्करे तेजस्वि कङ्कणं लिङ्गं च दृष्ट्वा विस्मिता सखीमाह। इदं तेजोमयं

विस्मिता वारवनिता सखीं प्राह स्पृहान्विता ॥
तेजोमयमिदं वस्तु कांक्षते मे मनोऽप्यदः ॥ ६० ॥

वैश्याय परिपृच्छेदं यदि दास्यति मूल्यतः ॥
रत्याऽपि यदि वा तस्य भवेयं स्त्री त्र्यहं सती ॥६१॥

मूल्यमिच्छति चेल्लक्षसंख्याकं द्रव्यमर्पये ॥
यदस्य मनसि प्रीतिस्तत्पृच्छेति तथेति सा ॥ ६२ ॥

वैश्यं तथैव पप्रच्छ प्रहसन्प्राह सोऽपि ताम् ॥
मनोहरमिदं दास्ये केवलं रतिकांक्षया ॥ ६३ ॥

मुख्या वो वारवनिता या विख्याता पतिव्रता ॥
धृतव्रता चेन्मे कान्ता त्रिदिनं सर्वदाऽऽदृता ॥ ६४ ॥

तथेत्युक्तवतीं वेश्यां वैश्यो भूयः स्म पृच्छति ॥
व्यभिचारो हि वो धर्मः सत्यं वाक्यं कुतो हि वः ६५

क्व धर्मः क्व च वः कर्म शर्म किं नाम नर्म वः ॥
भर्मकारिष्वतः साध्वी धर्मवार्ता क्व पुंश्चलि ॥ ६६ ॥

कांक्षेऽस्मै पृच्छ। रत्या दास्यति चेत् त्र्यहं साध्वीत्वेनास्य भार्या भवामि ॥६२-६१॥ मूल्यमिच्छेच्चेल्लक्षद्रव्यं दास्ये। तथेति सा तं पप्रच्छ। वैश्यो हसन्नाह। मनोहरमिदं रतिकांक्षया दास्ये। वो मुख्या पतिव्रता वाराङ्गना त्रिदिनं मे कान्ता चेद्दास्ये। सा तथेत्याह। वैश्य आह। व्यभिचारो हि वो धर्मः, क्व सत्यं, क्व कर्म। भर्मकारिषु वो नर्म।

प्रख्यातो वः कुलाचारो व्यभिचारो हि रोचते ॥
मनोहरो नरो यो यो हृच्चाश्चल्यात्प्रतिक्षणम् ॥ ६७ ॥

इति वैश्यवचः श्रुत्वा वारमुख्याऽब्रवीत्स्वयम् ॥
सत्यं दिनत्रयं ते स्यां कुलस्त्रीवत्पतिव्रता ॥ ६८ ॥

याचितं देहि मेऽभीष्टं रमयामि मनस्तव ॥
रतिप्रसङ्गेन भृशं नूनं तनुमनोधनैः ॥ ६९ ॥

भूयो वैश्योऽब्रवीद्देहि दिव्यं[1] मे यदि सत्यवाक् ॥
त्रिदिनं धर्मपत्नीव भव त्वं कर्मणा सता ॥ ७० ॥

इत्युक्ता वारवनिता लिङ्गोपरि करं दधौ ॥
सुर्येन्दू साक्षिणौ कृत्वा वधूस्तस्याभवत्तु सा ॥ ७१ ॥

ततोऽभीष्टं करे तस्या बद्ध्वा वैश्यः स कङ्कणम् ॥
लिङ्गं च वारमुख्यायाः प्रददौ करपल्लवे ॥ ७२ ॥

पुंश्चल्यां क्व धर्मवार्ता, कुलाचारो व्यभिचारः ख्यातः, प्रतिक्षणं वां मनोहरो नरो रोचते। वेश्या स्वयमाह। त्रिदिनं सती ते कुलस्त्री भवामि। याचितं देहि। पद्मिन्यहं वाङ्मनःकायैः रतिप्रसङ्गेन रमयामि। वैश्य आह। एवं चेद्दिव्यं कुरु "कर्मणा ते धर्मपत्नी भवेयमिति"॥६२-७०॥ ततो वेश्या लिङ्गोपरि करं धृत्वा सूर्यचन्द्रौ साक्षिणौ कृत्वा तस्य भार्याऽभूत् ॥ ७१ ॥ स तत्करे कङ्कणं बद्ध्वा लिङ्गं दत्त्वाऽऽह। यथार्थं

[1] यदि सत्यवागसि तर्हि दिव्यं प्रमाणं देहि.

वैश्यो वेश्यामुवाचेदं प्राणेभ्योऽप्यधिकं मम ॥
इदं लिङ्गमृतं विद्धि यथार्थं ते मयोदितम् ॥ ७३ ॥

अतः प्रयत्नतस्त्वस्य रक्षणं कुरु सर्वथा ॥
यदा भवेल्लिङ्गहानिः प्राणांस्त्यक्ष्यामि तत्क्षणम् ॥७४॥

इति वैश्यवचः श्रुत्वा तथेत्यभ्युपगम्य सा ॥
प्राह प्राणसमं लिङ्गं पालयामि न संशयः ॥ ७५ ॥

अथोभौ हि भृशं तुष्टौ सूपविष्टौ च मण्डपे ॥
सूर्येऽस्तमित ऊचे सा वैश्यमन्तःपुरं चर ॥ ७६ ॥

स प्राह सन्निधौ लिङ्गं न भोगसमये वह ॥
रतिकाले शुचिस्थाने वेश्ये लिङ्गं निधेहि सत् ॥ ७७ ॥

इति वैश्यवचः श्रुत्वा लिङ्गरत्नं तु मण्डपे ॥
मध्यस्तम्भसमीपे च निधायान्तर्गृहं गता ॥ ७८ ॥

क्षणमात्रमभूतां तौ क्रीडासक्तावुभावपि ॥
क्षणात्तावत्प्रदीप्तेनाग्निना दग्धः स मण्डपः ॥ ७९ ॥

वच्मि । प्राणाधिकं मे लिङ्गं यत्नाद्रक्षास्य हानौ तत्क्षणं प्राणांस्त्यक्ष्यामि इति श्रुत्वा साऽऽह । तथाऽस्तु । प्राणवल्लिङ्गं पालयामि न संशयः । अथोभौ तुष्टौ मण्डपे उपविष्टौ तावत्सूर्योऽस्तं गतः । सा तमाहान्तःपुरं व्रजेति । वैश्य आह । रतिकाले सन्निधौ लिङ्गं न धार्यम् । शुचिस्थाने स्थापयेति श्रुत्वा सा मण्डपे रत्नस्तम्भे लिङ्गं निधाय तेन सहान्तर्गृहं गता । क्षणं क्रीडासक्तयोस्तयोः क्षणात्कर्पूरवन्नाव्यमण्डपोऽग्निना भस्म-

यथाऽग्नियोगात्कर्पूरो भस्मसान्नाटचमण्डपः ॥
तथाऽभवत्तदा वैश्यो विललाप निरीक्ष्य तत् ॥ ८० ॥

वैश्य ऊचेऽहहा प्राणलिङ्गं दग्धं तदा तु तम् ॥
निवार्य नागरा वह्निं शमयामासुरम्भसा ॥ ८१ ॥

शशामाग्निस्तदा यत्नाद्ददृशुर्लिङ्गमुत्तमम् ॥
तद्दग्धं भस्मसाज्जातं प्लुष्टौ[1] मर्कटकुक्कुटौ ॥ ८२ ॥

तद्दृष्ट्वा दुःखितो वैश्यो विलपन्निदमब्रवीत् ॥
प्राणलिङ्गं हि मे दग्धमतः प्राणांस्त्यजाम्यहम् ॥८३॥

इत्युक्त्वा निर्गतो गेहाद्बहिर्वैश्यः स सत्वरम् ॥
अग्निं प्रज्वाल्य बहुभिः काष्ठैर्ज्वालालिमालिनम् ॥८४॥

दग्धं मे लिङ्गमित्येष प्रविवेशाग्निमाशु तम् ॥
दृष्ट्वा नागरिका लोका विस्मिता दुःखिता सती॥८५॥

सात्कृतः ॥७२-७९॥ तद्दृष्ट्वा विलपन्वैश्य आहाहहा ! प्राणलिङ्गं दग्धं । तं निवार्य नागरा अग्निं वारयामासुः । शान्तेऽग्नौ तत्र मर्कटकुक्कुटौ दग्धौ । लिङ्गं भस्मसाज्जातं दृष्ट्वा वैश्यो दुःखितो विलपन्नाह । मे प्राणलिङ्गं दग्धं, प्राणांस्त्यक्ष्य इत्युक्त्वा गृहान्निर्गत्याग्निं काष्ठैः प्रज्वाल्य दग्धं मे लिङ्गमित्युक्त्वाऽग्निं विवेश । लोका विस्मिता दुःखिताश्च । वेश्याऽऽ-

---

१ दग्धौ.

वेश्या प्राहाहहाहो किं पतिहत्या मयाऽर्जिता ॥
मण्डपेन समं लिङ्गं क्षणाद्दग्धमहो कथम् ॥ ८६ ॥

मम प्राणेश्वरो वैश्यस्तस्य नाशोऽभवद्यतः ॥
तं विनाऽत्र क्षणं स्थेयं न पतिव्रतया मया ॥ ८७॥

इति निश्चित्य साऽऽहूय विप्रान्नत्वा यथाविधि ॥
अनुगन्तुं प्रवृत्ताऽभूद्ददौ दानानि धर्मतः ॥ ८८ ॥

भूषणानि च वस्त्राणि दत्त्वा कोशांस्तथाऽखिलम् ॥
द्विजेभ्यो दीपयामास सा वह्निं चन्दनेंधनैः ॥ ८९ ॥

आत्मनः सोदरान्बन्धून्नत्वाऽऽहाज्ञापयन्तु माम् ॥
भर्तारमनु यास्यामि सतीधर्मानुसारतः ॥ ९० ॥

इति तस्या वचः श्रुत्वा दुःखिता बन्धवोऽवदन् ॥
केयं तव मतिर्हीना धर्मोऽयं कीदृशस्तव ॥ ९१ ॥

वेश्यागृहे तु रत्यर्थं नरा आयान्त्यनेकशः ॥
तेषां संख्याऽपि नायं तु कथं जातः पतिस्तव ॥९२॥

हाहहा ! पतिहत्या मेऽर्जिता। मण्डपेन सह कथं लिङ्गं दग्धं। मे प्राणेशो वैश्यस्तन्नाशोऽभूत्तं विना साध्व्या मया क्षणं न स्थेयं। इति निश्चित्य विप्रानाहूयानुगन्तुं विधिवद्दानानि भूषावस्त्रकोशादि द्विजेभ्यो दत्त्वेन्धनैरग्निं प्रज्वाल्य ॥८०-८८॥ बन्धूनाह। सतीधर्मेण भर्त्रा सह यास्ये। इति श्रुत्वा दुःखितास्त ऊचुः। केयं ते मतिः। कोऽयं धर्मः। वेश्यागृहे रत्यर्थमागच्छतां न संख्या। कथं तेऽयं पतिः, क्व वैश्यः, क्व लिङ्गं, वो

कुतो वैश्यः कुतो लिङ्गं क्व धर्मोऽङ्गं कुतो वृथा ॥
जहासि वेश्याधर्मस्तु पुरुषो नूतनोऽन्वहम् ॥ ९३ ॥

कत्यायान्तीदृशो वैश्याः सर्वेषां त्वं कथं सती ॥
हसन्ति त्वां नागरिका लोकाः केयं मतिस्तव ॥९४॥

एवं जनैः समस्तैः सा बन्धुभिश्चापि वारिता ॥
नादृत्य वारवनिता साऽनुगन्तुं समुद्यता ॥ ९५ ॥

वेश्या प्राह तदा सर्वान्वैश्यो मे पतिरादृतः ॥
दिव्यं कृतं मया यत्र सूर्येन्दू साक्षिणौ स्थितौ ॥९६॥

व्रतं त्र्यहमहोरात्रं कृतं मे क्षितिसाक्षिकम् ॥
जाताऽहं धर्मतस्तस्य वैश्यस्यैवाङ्गना सती ॥ ९७ ॥

पतिर्मम प्रमीतः[1] स दैवात्किं जीवितेन मे ॥
ख्यातः पतिव्रताधर्मो वेदशास्त्रादिसम्मतः ॥ ९८ ॥

याऽनुयाति पतिं साध्वी प्रीत्या सा तु पदे पदे ॥
अश्वमेधफलं पूर्णं लभते नात्र संशयः ॥ ९९ ॥

नित्यनूतनः पतिः । कथं कस्य त्वं सती। लोकस्त्वां हसति । एवं बोधिताऽपि तान्त्साऽनादृत्याह । स मे पतिर्दिव्यं कृतं सूर्येन्दू साक्षिणौ । भूसाक्षिकं त्र्यहं तत्स्त्रीत्वमङ्गीकृतं । स मृतः किं जीवितेन । वेदादिमतः सतीधर्मः ॥८९-९८॥ पदे पदेऽश्वमेधफलदमनुगमनं ॥ ९९ ॥ सती

१ मृतः.

कुलैकविंशतिं मातापितृसम्बन्धिनीं तु सा ॥
पतिसम्बन्धिनीं चैव गृहीत्वा याति वै दिवम् ॥१००॥

यद्येते नरकस्था वा समस्तानपि तान्पितॄन् ॥
समादाय प्रयात्येषा स्वर्गं लोकमिति स्मृतिः ॥१०१॥

इयत्पुण्यं त्वनुगमे किं वृथा जीवितेन तत् ॥
संसारे दुःखदेऽसारे कदाऽपि मरणं खलु ॥ २ ॥

अत एव प्रार्थये व इत्युक्त्वाऽग्निमुपागता ॥
अग्निं प्रणम्य सा वेश्या सन्तोषेण युता सती ॥ ३ ॥

सर्वेश्वरं च संस्मृत्य मनसाऽर्कं प्रणम्य च ॥
अग्निं प्रदक्षिणीकृत्य प्रेम्णाऽनुद्विग्नचेतसा ॥ ४ ॥

सर्वान्द्विजान्नमस्कृत्य स्थिता साऽग्निसमीपतः ॥
दहने[1] विजहौ देहं तदा चित्रमभूदिदम् ॥ ५ ॥

मातृपितृभर्तृसम्बन्ध्येकविंशतिकुलानि स्वर्नयति । नरकस्थानपि तानादाय स्वर्यातीयत्पुण्यमनुगमे । किं वृथा जीवितेनासारे संसारे कदापि मृत्युः ॥१००-१०२॥ ततः प्रार्थये । इत्युक्त्वाऽग्निं नत्वा मुदा सर्वेशं स्मृत्वाऽर्कं नत्वाऽग्निं प्रदक्षिणीकृत्य द्विजान्नत्वाऽग्नौ देहं जहौ । तदा

१ अग्नौ.

सदाशिवः पञ्चवक्त्रो नागसूत्रोऽग्निमध्यतः ॥
दशहस्तः पानपात्रत्रिशूलडमरून्दधत् ॥ ६ ॥

भस्मलिप्तो जटाधारी समारूढः स नन्दिनम् ॥
उपर्येव दधौ वेश्यां कराभ्यां स तदा शिवः ॥ ७ ॥

तदा शशाम[२] कुण्डेऽग्निः सहसा भक्तवत्सलः ॥
जगन्नाथस्तु तद्भक्त्या प्रसन्नोऽभवदीश्वरः ॥ ८ ॥

व्योमकेशः समुद्धृत्य वेश्यां धृत्वा तु तां करे ॥
प्राह वेश्ये प्रसन्नोऽस्मि वरं वरय कांक्षितम् ॥ ९ ॥

परीक्षामेव ते कर्तुं धर्मधैर्यं च वीक्षितुम् ॥
ईश्वरोऽहमुपायातो वैश्यरूपेण ते गृहम् ॥ ११० ॥

अहमेवाभवं वैश्यो लिङ्गमप्यहमेव च ॥
मायाग्निः कल्पितो मेऽपि दग्धोऽसौ नाटयमण्डपः ११

चित्रं जातं। पञ्चवक्त्रः सायुधदशहस्तो भस्मलिप्तो जटिलो नन्दिवाहः शिवस्तां कराभ्यामुपर्येव दधौ। तदाऽग्निः शशाम। भक्तवत्सलो विश्वेशः प्रसन्न आह। इष्टं वरय ॥१०३-९॥ ते परीक्षां कर्तुं धैर्यं ज्ञातुं च वैश्यरूपेणागतोऽस्मि। लिङ्गमप्यहं। नाट्यमण्डपो दग्धो धैर्यं द्रष्टुं

---

२ शांतो बभूव.

वीक्षितुं ते मनोधैर्यं कृतमग्निप्रवेशनम् ॥
त्वया कृतं व्रतं सत्यं त्वमेवासि पतिव्रता ॥ १२ ॥

अहं तुष्टोऽस्मि ते भक्त्या वरं वरय कांक्षितम् ॥
दीर्घायुः श्रियमारोग्यं यच्चाभीष्टं वृणीष्व तत् ॥१३॥

इत्युक्त्वा प्राह सा वेश्या चन्द्रमौलिन्न भुव्यधः ॥
स्वर्गेऽपीच्छेऽहंयुभोग्यान्भोगान्नारकसम्मतान् ॥ १४ ॥

भृंगीभवितुमिच्छामि भवत्पादाम्बुजे सदा ॥
ममेष्टबन्धुवर्गाश्च तिष्ठन्तु तव सन्निधौ ॥ १५ ॥

दासीर्दासांश्च मेऽशेषान्त्स्वर्गं तान्त्सकलान्नय ॥
सर्वेश पशुप स्वामिन्स्थास्यामस्तव सन्निधौ ॥ १६ ॥

संसारयातनाभ्योऽस्मान्द्रुतं स्वामिन्विमोचय ॥
माऽस्माकं पुनरावृत्तिर्भवत्विति पदेऽग्रहीत् ॥ १७ ॥

चाग्निप्रवेशः कृतः। त्वं सत्यं पतिव्रताऽहं ते भक्त्या तुष्टो वरं दास्ये। दीर्घायुःश्र्यारोग्यादि वरयेति श्रुत्वा वेश्या साऽऽह। हे चन्द्रमौलिन्, पाताले भूमौ स्वर्गे च भोगान्नेच्छे ॥१०-१४॥ इष्टबन्धुदासीदाससहितां मां ते पादसन्निधौ स्थापयेतः संसारान्मोचय। पुनरावृत्तिर्मास्त्विति पदे दधौ

१ अहंकारवद्भिर्भोग्यान्.

इति तस्या वचः श्रुत्वा प्रसन्नः प्राह चेश्वरः ॥
छित्त्वा तद्भवबन्धं तान्स्वर्गं लोकमनीनयत् ॥ १८ ॥

यौ नाटयमण्डपे तस्या मर्कटः कुक्कुटस्तथा ॥
रुद्राक्षभूषितौ दग्धावुभावपि च ताविमौ ॥ १९ ॥

श्रृणु राजन्प्रवक्ष्यामि त्यक्त्वा मर्कटजन्म तत् ॥
तेन पुण्यप्रभावेन जातः सोऽयं तवोदरे ॥ २० ॥

कुक्कुटोऽपि स एवायं जातस्ते मन्त्रिणः सुतः ॥
रुद्राक्षधारणादेतौ जातौ राजसुतौ नृप ॥ २१ ॥

तावेतौ पूर्वसंस्काराज्जातौ राजसुतौ खलु ॥
ज्ञानवन्तावुभावेतावीशभक्तौ न संशयः ॥ २२ ॥

पूर्वजन्मनि चाज्ञानाज्जातं रुद्राक्षधारणम् ॥
तेन पुण्यप्रभावेन जातौ तव कुमारकौ ॥ २३ ॥

अधुना पूर्वसंस्कारजन्यज्ञानेन तावुभौ ॥
रुद्राक्षान्दधतः पुण्यमितिर्नैवानयोर्नृप ॥ २४ ॥

॥१९-१७॥ प्रसन्नः शिवस्तद्भवबन्धं छित्त्वा स्वर्लोकं निन्ये। राजन्, श्रृणु। यौ तत्र साक्षौ मर्कटकुक्कुटौ दग्धौ तौ तत्पुण्यात्तव मन्त्रिणश्च पुत्रौ जातौ। पूर्वसंस्काराज्ज्ञानवन्तावीशभक्तौ चाज्ञानादपि रुद्राक्षधारणाद्राजपुत्रौ जातौ। पूर्वसंस्कारादद्यापि रुद्राक्षान्दधतः। अनयोः पुण्य-

श्रीगुरुर्दंपती प्राह भूपमेवं पराशरः ॥
कुमारपूर्वचरितं विस्तरेणाब्रवीदिदम् ॥ २५ ॥

इति श्रुत्वा मुनिवचो राजा बद्धाञ्जलिर्नतः ॥
पराशरमृषिं भूयः पप्रच्छ विनयान्वितः ॥ २६ ॥

सिद्धोऽवदद्विस्तरेण वक्ष्ये तन्नामधारक ॥
कथेयमग्रियाऽपूर्वा सावधानोऽवधारय ॥ २७ ॥

एवं सरस्वत्यभिधोऽपि गङ्गाधरस्य पुत्रोऽथ गुरोश्चरित्रम् ॥
वक्ष्यत्यदः श्रोष्यति यस्तु भक्त्या लभेत्त्रिवर्गं[1] सहितं स मुक्त्या ॥ २८ ॥

(इति) श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्यगङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञितमहाराष्ट्रभाषान्वितगुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वतीयतिविरचितायां श्रीगुरुसंहितायां कर्मकाण्डे त्रयस्त्रिंशः (अध्यायः) ॥

॥ आदितः श्लोकाः ॥ ३८५६ ॥

मितिर्नेति श्रुत्वा राजा मुनिं नत्वा पुनः पप्रच्छ। सिद्ध आह। हे नामधारकाग्रतः कथां सावधानतया शृणु ॥१८-१२७॥ एवं सरस्वत्यभि० ॥१२८॥ श्रीगुरुसंहितायां चूर्णिकायां त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

॥ इति त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

१ मुक्त्या सहितं त्रिवर्ग—धर्मार्थकाममोक्षानित्यर्थः.

## ।। अथ चतुस्त्रिंशोऽध्यायः ।। ३४ ।।

।। श्रीगणेशाय नमः ।।

श्रीगुरुर्दम्पती प्राह तं काश्मीरनृपं प्रति ।।
एतद्रुद्राक्षमाहात्म्यं पुण्यं प्राह पराशरः ।। १ ।।

तस्य राज्ञः कुमारस्य चरितं पूर्वजन्मजम् ।।
पराशरेण मुनिना विस्तरेणोदितं शुभम् ।। २ ।।

तच्छ्रुत्वा भूपतिस्तुष्टो लग्नो मुनिपदाम्बुजे ।।
तस्थौ करद्वयं बद्ध्वा विनयावनतोऽग्रतः ।। ३ ।।

राजा मुनीश्वरं प्राह स्वामिन्नः सम्यगीरितम् ।।
रुद्राक्षधारणात्पुण्यं लब्धमात्मजयोः पुरा ।। ४ ।।

धृता आभ्यां हि रुद्राक्षा अज्ञानात्पूर्वजन्मनि ।।
तत्पुण्यफलतस्त्वेतौ जातौ राजकुमारकौ ।। ५ ।।

अथ सारसंग्रहश्लोकोऽयम्—

कृतकरपुटराजप्रार्थितर्षिः सुतमृतिहतये रुद्राभिषेकम् ।।
श्रुतिपुरमितसर्गेऽकारयद्राट्तनयसुतमृतितोऽजीवयद्द्राक् ।।१।।

श्रीगणेशाय नमः ।। श्रीगुरुर्दम्पती आहैव मुनिः रुद्राक्षमाहात्म्यं कुमारपूर्वजन्मचरितं चाह । तुष्टो भूपस्तत्पदे धृत्वा नत्वाऽऽह । स्वामिन्, पुत्राभ्यां रुद्राक्षधारणपुण्यं लब्धं । अज्ञानतो धारणादपि राजपुत्रौ जातौ ।

ज्ञानेनैवाधुना त्वेतौ रुद्राक्षान्दधतः सुतौ ॥
अतः परं कथं भावि पुत्रयोरेतयोर्वद ॥ ६ ॥

त्रिकालज्ञो भवान्वेत्ति भूतं भव्यं भवच्च यत् ॥
मुने कथय मे स्वामिन्फलं भावि कुमारयोः ॥ ७ ॥

इति राजवचः श्रुत्वा पराशर उवाच तम् ॥
अस्ति भाविफलं सम्यगनयोस्तव पुत्रयोः ॥ ८ ॥

राजन्यत्तव पुत्रस्य भावि तद्दुःखकारकम् ॥
श्रवणात्ते भवेद्दुःखं कथं वक्ष्यामि ते वद ॥ ९ ॥

राजा पुनर्नतः प्राह स्वामिन्कथय मेऽखिलम् ॥
दुःखस्यापि प्रतीकारं भवानेव करिष्यति ॥ १० ॥

इत्युक्तः स ऋषिः प्राह किमवाच्यं महात्मनाम् ॥
राजञ्छृणु कुमारस्ते द्वादशाब्दायुरेव हि ॥ ११ ॥

तत्रापि सप्तदिवसा अवशिष्टास्ततः परम् ॥
अष्टमे दिवसे मृत्युस्त्वत्पुत्रस्यागमिष्यति ॥ १२ ॥

ज्ञानेनाद्यापि दधतः। अनयोः कथं भावि तद्वद ॥ ६ ॥ भवांस्त्रिकालज्ञ इति श्रुत्वा पराशर आह। राजन्, यच्छ्रवणाद्दुःखं भवेत्तत्कथं वाच्यम् ॥७-९॥ पुनर्नत्वा राजाऽऽह। तदपि कथय। दुःखप्रतीकारं करिष्यसि। ऋषिराह। शृणु। ते पुत्रो द्वादशाब्दायुः। तत्र सप्तदिवसा अवशिष्टा

इति श्रुत्वा मुनेर्वाक्यं क्षणं राजाऽऽस मूर्च्छितः ॥
उत्थितोऽपि पुनस्तूच्चै रुरोदातीव दुःखितः ॥ १३ ॥

स प्राह दुःखितो धृत्वा पराशरपदाम्बुजे ॥
रक्ष रक्ष तपस्विन्मां त्वामहं शरणं गतः ॥ १४ ॥

एवं नानाप्रकारेण दुःखितो मुनिपादयोः ॥
सस्त्रीकः पतितो राजा किं करोमीति च ब्रुवन् ॥१५॥

ऋषीश्वरः कृपासिन्धुराश्वास्य प्राह तं नृपम् ॥
जगद्गुरुमुमाकान्तं प्रयाहि शरणं शिवम् ॥ १६ ॥

मनोगतं भयं त्यक्त्वा त्वं चिन्तय सदाशिवम् ॥
तमाराधय भक्त्या त्वं शूलपाणिः स रक्षिता ॥ १७ ॥

शृणुष्वैकाग्रमनसा भूपते कथयामि ते ॥
अजेयमपि तं कालं जेतुं सूपायमुत्तमम् ॥ १८ ॥

एको देवो व्योमकेशः स्वर्गे मृत्यौ रसातले ॥
भगवान्त्सच्चिदानन्दस्वरूपो निष्कलः शिवः ॥१९॥

अष्टमेऽह्नि मरिष्यतीति श्रुत्वा दुःखितो राजोच्चै रुदित्वा मुनिपदे धृत्वा स्वामिन्, शरणागतं मां पाहीति स्त्रिया सह तत्पदे पतित्वा किं करोमीत्याह। कृपाब्धिर्ऋषिस्तमाश्वास्याह। भयं त्यक्त्वा जगद्गुरुं साम्बं शूलपाणिं शिवं शरणं गत्वा भक्त्याऽऽराधय। स त्राता ॥१०-१६॥ भूप, शृण्वजेयमपि कलिकालं जेतुं सूपायं वच्मि। त्रिभुवने एको देवो

स देवो मूर्तिमन्तं तं ब्रह्माणं रजसाऽसृजत् ॥
ततः सृष्टिक्रमज्ञप्त्यै[1] स वेदांश्चतुरोऽसृजत् ॥ २० ॥

वेदान्विरिञ्चयेऽदात्तांस्[2]तेष्वेवोपनिषच्च या ॥
संरक्षिता चात्मतत्त्वसंग्रहाख्या महात्मना ॥ २१ ॥

रुद्राध्यायं वेदसारं यामाहुर्[3]भक्तवत्सलः ॥
सर्वेश्वरोऽपि तं ब्रह्मदेवाय प्रददौ मुदा ॥ २२ ॥

रुद्राध्यायस्य तस्यापि महिमाऽनुपमः खलु ॥
रुद्रोऽव्यय इति ख्यातो यस्य नाशः कदाऽपि नो २३

रुद्राध्यायः परं तत्त्वं शिवाख्यं सर्वतोऽधिकम् ॥
ब्रह्मा प्रकाशयामास चतुर्वेदांश्चतुर्मुखैः ॥ २४ ॥

पूर्वादिक्रमतो वेदाश्चत्वारो निर्गता विधेः ॥
मुखेभ्योऽत्र यजुर्वेदो दक्षिणास्यत उद्गतः ॥ २५ ॥

भगवान्सच्चिदानन्दरूपः शिवो रजसा विधिं सृष्ट्वा तस्मै सृष्टिज्ञानाय चतुर्वेदान्ददौ। तेष्वात्मतत्त्वसंग्रहाख्योपानिषद्रुद्रं वेदसारं ददौ। तच्छिवाख्यं परं तत्त्वं सर्वतोऽधिकं। पूर्वादिमुखतो विधिश्चतुर्वेदान्प्रकाशयामास।

---

१ ज्ञापनाय २ दत्तवान् ३ उपानिषदं.

रुद्राध्यायस्तूपनिषत्सारभूतोऽत्र कामधुक् ॥
यजुर्वेदान्तर्गतोऽमुं ब्रह्मदेवोऽब्रवीन्मुनीन् ॥ २६ ॥

समस्तेभ्यो मरीच्यत्रिप्रभृतिभ्यो यथाविधि ॥
देवर्षिभ्यो मुनिभ्यश्च कथयामास विश्वसृट् ॥ २७ ॥

मरीच्यत्रिमुखास्ते च सर्वे देवर्षयोऽपि च ॥
रुद्रमध्यापयामासुर्ऋषिभ्योऽनुक्रमेण हि ॥ २८ ॥

ततस्त ऋषयः शिष्यान्रुद्राध्यायं स्वकान्स्वकान् ॥
अध्यापयामासुरथो स्वशिष्यांस्तेऽपि चाब्रुवन् ॥ २९ ॥

एवं भुवि प्रवृत्तोऽयं रुद्रो मन्त्रो न चेदृशः ॥
शीघ्रसिद्धिप्रदो नान्यश्चतुर्वर्गप्रदोऽप्ययम् ॥ ३० ॥

महादोषा यदि कृताः पातकानि बहून्यपि ॥
पूतो भूत्वा रुद्रजपात्स गच्छेत्परमं पदम् ॥ ३१ ॥

ब्रह्मदेवेन विहितमन्यदप्येकमद्भुतम् ॥
यद्रुद्रदेवतीर्थं तत्स्नानात्पानाच्च तारकम् ॥ ३२ ॥

दक्षिणमुखात्कामधुग्यजुर्वेदान्तर्गतोपनिषत्सारभूतरुद्राध्यायः प्रकाशितः ॥१७-२६॥ स च मरीच्यादिभ्यो दत्तस्ते च स्वशिष्येभ्यस्तेऽपि स्वशिष्येभ्यश्चाध्यापयामासुरेवं भुवि प्रवृत्तोऽयं शीघ्रसिद्धिदश्चतुर्वर्गप्रदश्च महादोषसर्वपापहर्ता परमपदप्रदो रुद्राध्यायः ब्रह्मणैकमद्भुतं रुद्रतीर्थं कृतं ।

तेन दुष्कर्मनाशः स्यात्संसारोऽपि निवर्तते ॥
श्रीगुरूदितमार्गेण भजनाद्भवनिःसृतिः[1] ॥ ३३ ॥

सुकृतं दुष्कृतं वाऽपि येन यद्यत्पुराऽर्जितम् ॥
उप्तं येन तु यद्बीजं स लभेत्तस्य तत्फलम् ॥ ३४ ॥

पुरा सृष्टिप्रवृत्त्यर्थं ब्रह्मदेवेन निर्मितौ ॥
निजवक्षःस्थलाद्धर्मः परोऽधर्मश्च पृष्ठतः ॥ ३५ ॥

तं धर्मं भजतां सौख्यमिहामुत्र च सद्गतिः ॥
अधर्मसेवकः पापी सोभयत्रापि दुःखभाक् ॥ ३६ ॥

अमी कामक्रोधलोभमत्सराद्या महाभयाः ॥
अधर्मस्य सुता एते सर्वे नरकनायकाः ॥ ३७ ॥

गुरुतल्पगोपपत्यमुखा[2] नरकनायकाः ॥
कामुकाः पातका एते स्मृताः कामस्य पुत्रकाः ॥३८॥

यत्स्नानात्पानाच्च तारकं, श्रीगुरूक्तमार्गेण यद्भजनाद्दुष्कर्मनाशः संसारनिवृत्तिश्च । पूर्वं बीजभूतं सुकृतं दुष्कृतं वा यदुप्तं तस्य तथैव फलं । पुरा सृष्टिप्रवृत्त्यर्थं ब्रह्मणा स्ववक्षःपृष्टतो धर्माधर्मौ सृष्टौ ॥२७-३५॥ धर्मो भजतामिहामुत्र च सुखदोऽधर्मस्तूभयत्र दुःखदः । कामक्रोधलोभ-मत्सराद्या घोरा अधर्मसुता नरकप्रापकाः । गुरुतल्पगोपपापमुखाः काम-

---

१ संसारसागरान्निःसरणं २ जारकर्म.

ये कामतः सम्भवन्ति ते तु कामसुताः स्मृताः ॥
ये क्रोधतः सम्भवन्ति ते तु क्रोधसुताः स्मृताः ॥३९॥

मातृपितृवधोद्युक्ता ब्रह्महत्यासमुद्यताः ॥
क्रोधना नन्दना एते क्रोधस्य बहुतापनाः ॥ ४० ॥

देवब्रह्मस्वापहारस्वर्णस्तेयसुताक्रयाः[1] ॥
प्राप्तार्थरक्षका एते लोभपुत्रा इति स्मृताः ॥ ४१ ॥

सर्वानिमान्यमः प्राह प्रतियात महीतलम् ॥
स्वैः स्वैर्गुणैश्च संयुक्तान्नरान्कुरुत मा चिरम् ॥ ४२ ॥

उपपापैश्च पापैश्च तान्भृत्यैः सहितान्यमः ॥
प्राह प्रापयताशेषान्मल्लोकं भूमिचारिणः ॥ ४३ ॥

एवं यमेन चाज्ञप्तास्ते सर्वेऽपि महीं ययुः ॥
ते रुद्रजापकान्दृष्ट्वा ततो भीताः प्रदुद्रुवुः ॥ ४४ ॥

पुत्राः । मातृपितृविप्रहत्याकराः क्रोधपुत्राः । देवब्रह्मपरस्वहर्तृस्वर्णस्तेयिपुत्रीक्रायिमुखा लोभपुत्राः ॥३९-४१॥ एतान्यम आह । भुवं गत्वा लोकान्त्स्वगुणैर्युक्तान्कुरुत । सहायार्थं पापोपपापभृत्यान्गृह्णतेत्युक्तास्ते भुवं गत्वा रुद्रजपं श्रुत्वा भीता द्रुतमेत्य प्राहुः ॥४२-४४॥ हे यमराज,

---

१ कन्याविक्रयिणः.

उपगम्य महापापा यमं सर्वेऽपि कातराः ॥
ऊचुस्त्वदाज्ञया भूमिं याता भीतिं गता वयम् ॥४५॥

यमराज जय स्वामिन्महाराज नमोऽस्तु ते ॥
वयं ते किंकराः ख्याता अपि भीताः स्म भूतले॥४६॥

धरित्रीमद्य याताः स्मो वयं युष्मदनुज्ञया ॥
तत्र वह्निपुरीवाद्य दग्धा रुद्राग्निना वयम् ॥ ४७ ॥

इतः परं क्षितिं गन्तुं नैव शक्ताः कदाचन ॥
तान्रुद्रजापकान्वीक्ष्य स्वामिन्दग्धा भृशं वयम् ॥४८॥

इतः परं गतिः का नो गन्तुं शक्ता न चावनिम् ॥
रुद्रं जपन्ति यद्ग्रामे तं द्रष्टुमपि न क्षमाः ॥ ४९ ॥

ग्रामे ग्रामे नदीतीरे स्थिता विप्रा महापुरे ॥
देवालये सदा रुद्रं पुण्यक्षेत्रे जपन्ति च ॥ ५० ॥

अस्माभिस्ते महापापैः सुतरां योजिता अपि ॥
तेषां महादोषयुजां पातकस्य मितिर्न हि ॥ ५१ ॥

जय। स्वामिन्वयं ते किङ्कराः ख्याताः। भवदाज्ञया भुवं गतास्तत्र रुद्राग्निना दग्धा इतः परं भुवं गन्तुमशक्ता नः का गतिः। यद्ग्रामे रुद्रं जपन्ति तं द्रष्टुमप्यक्षमाः। ग्रामे नदीतीरे देवालये पुण्यक्षेत्रे चास्माभि-

प्रायश्चित्तसहस्रैस्तु येषां शुद्धिर्हि नैव च ॥
तेऽपि रुद्रजपाद्विप्राः पुण्यवन्तो भवन्ति हि ॥ ५२ ॥

यदाकदाऽपि भक्त्या वा रुद्राध्यायं पठन्ति ये ॥
तेऽपि स्वामिन्धर्मराज पुण्यवन्तो भवन्त्यरम्[१] ॥ ५३ ॥

घोरपापयुता वाऽपि पुण्यवन्तोऽद्य रुद्रतः ॥
कथं नो भुवि संचारः कष्टेनापि न गो गतिः ॥ ५४ ॥

रुद्रो भाति महादेव[२] कालकूटं महाविषम् ॥
अस्माकं भूतलं गन्तुं शक्तिर्नैव च सर्वथा ॥ ५५ ॥

ब्रह्मदत्तमहारुद्रविषशान्ति कुरु प्रभो ॥
रक्ष रक्ष यमास्मानित्यर्थयामासुरर्दिताः ॥ ५६ ॥

इति तैः प्रार्थितो भृत्यैः स यमः कम्पयञ्छिरः ॥
[३]अमर्षणो ययौ शीघ्रं ब्रह्मलोकं तदैव हि ॥ ५७ ॥

स्सुतरां दोषैर्योजिता अपि प्रायश्चित्तसहस्रैः शुद्ध्यभावेऽपि ते रुद्रजपात्पूताः पुण्यात्मानो भवन्ति । यदाकदाऽपि रुद्रपठनाद्घोरपापा अपि पुण्यवन्तो भवन्ति ॥४९-५४॥ कथं नो भुवि सञ्चारः । रुद्रः कालकूटविषं भात्यतोऽस्माकं भुवि गन्तुं सर्वथा नैव शक्तिः । तच्छान्तिं कुर्वस्मान्रक्षेति प्रार्थितो यमः शिरः कम्पयन् ब्रह्माणमेत्य विनयेनाह । हे स्रष्टः

१ शीघ्रं २ हे यम ३ कोपी.

यमो विधिमुपागत्य विनयावनतोऽब्रवीत् ॥
जगत्स्रष्टर्जय जय पद्मासन चतुर्मुख ॥ ५८ ॥

शरणं त्वां प्रपन्नाः स्मस्तत्राज्ञावर्तिनो वयम् ॥
अद्ययावन्मया नीताः पापास्तु नरकान्प्रति ॥ ५९ ॥

अद्य पापानुपाहर्तुं भृत्या मे प्रेषिता भुवि ॥
ते रुद्रेण पराभूता रुद्रः पुण्यान्करोति नॄन् ॥ ६० ॥

महापापोऽपि रुद्रेण पूतो याति जनो दिवम् ॥
हृतं रुद्रेण सर्वाघं शून्योऽभून्नरकालयः ॥ ६१ ॥

शून्येषु नरकेष्वद्य मम राज्यं निरर्थकम् ॥
मुक्तिं यातेषु सर्वेषु स्वामिन्त्सृष्टिः कुतोऽग्रतः ॥६२॥

अत्रोपायं विधत्स्वाशु देवात्रैव त्वमीश्वरः ॥
रक्ष नः क्रमसृष्टिं च स्वामिन्राज्यं गतं हि नः ॥६३॥

पद्मासन चतुर्मुख, जय । त्वां प्रपन्नोऽस्मि । भवदाज्ञयाऽद्ययावत्पापिनो नरकेषु क्षिप्ताः । अद्य तानानेतुं प्रेषिता अपि भृत्याः रुद्राध्यायेन पराभूताः । महापापोऽपि रुद्रेण पूतो दिवं याति । रुद्रेण सर्वपापं हृतं । नरकाः शून्या अभवन्मे राज्यं निरर्थकं । स्वामिन्त्सर्वेषु मुक्तिं प्राप्तेषु कुतोऽग्रतः सृष्टिरत्रोपायं कुरु । हे ईशास्मान्रक्ष । मे राज्यं गतम् ॥५९-६३॥ भवतै-

१ कुरु.

भवतैव तु मर्त्येभ्यः स्वामिन्नेतत्समर्पितम् ॥
रुद्राध्यायनिधानं हि किमर्थं दत्तमीदृशम् ॥ ६४ ॥

रुद्रजाप्यमनुष्ठीय यथाकथमपि क्षितौ ॥
आसन्मर्त्या अप्यमर्त्या दग्धं रुद्रेण पातकम् ॥ ६५ ॥

एवं सम्प्रार्थितो ब्रह्मा यमेन स चतुर्मुखः ॥
किञ्चिद्विचार्य स यमं प्रत्युवाच पितामहः ॥ ६६ ॥

ये दुर्मदा भक्तिहीना जपन्त्यज्ञाश्च तामसाः ॥
शयाना अपि तिष्ठन्तो व्रजन्तो येऽप्यशुद्धयः ॥ ६७ ॥

स्यात्तेषामधिकं पापं त्वया दण्ड्यास्त एव हि ॥
यथाविध्युपविष्टास्तु भक्त्या रुद्रं पठन्ति ये ॥ ६८ ॥

त्वया वन्द्यास्ते विपापा दूतेभ्यः शंस विस्फुटम् ॥
नाधिकं पुण्यमस्त्यन्यद्भक्त्या रुद्रजपान्नृणाम् ॥६९॥

पूर्वजन्मार्जितं पापं येनाल्पायुर्भवेन्नरः ॥
निष्कृतिस्तस्य पापस्य रुद्रजाप्येन सर्वथा ॥ ७० ॥

चेदृशं रुद्रनिधानं मर्त्येभ्यः कुतो दत्तं। कथमपि रुद्रमनुष्ठाय मर्त्योऽप्यमर्त्यो भवति। रुद्रेण सर्वपापं दग्धं। एवं प्रार्थितश्चतुर्मुखः पितामहः किञ्चिद्विचार्याह। ये दुर्मदा हीनास्तामसा अशुद्धयोऽभक्त्या शयानास्तिष्ठन्तो व्रजन्तो जपन्ति तेऽतिपापास्त एव दण्ड्याः। भक्त्योपविश्य विधिवत्पठन्ति ते वन्द्या इति दूतेभ्यः स्पष्टं कथय। भक्त्या रुद्रजापकानां ततोऽधिकपुण्यं न। पूर्वार्जितपापाद्योऽल्पायुर्भवेद्रुद्रजपेन सर्वथा तन्नि-

यद्यल्पायुर्नरः पापी रुद्रं जपति भक्तितः ॥
सर्वपापं विहायाशु दीर्घायुश्च सुखी भवेत् ॥ ७१ ॥

सम्पत्तिर्ज्ञानमारोग्यं तेजो वर्चो बलं धृतिः ॥
मेधाऽपि रुद्रं जपतां वर्धते शृणु धर्मराट् ॥ ७२ ॥

रुद्रेण चाभिषिच्येशं भक्त्या तत्तीर्थवारिणः ॥
ये कुर्वन्तीह पानं वा स्नानं वा पावनास्तु ते ॥ ७३ ॥

तेषां मृत्युभयं नास्ति शृण्वन्यत्कथयामि ते ॥
पुण्यवान्रुद्रजपतश्चिरजीवी भवेन्नरः ॥ ७४ ॥

स्नानं करोति श्रीरुद्राभिमंत्रितजलेन यः ॥
मृत्युर्भीतस्ततो गच्छेत्स तीर्णो भवसागरात् ॥ ७५ ॥

शतरुद्रीयेण शिवं येऽभिषिञ्चन्ति भक्तितः ॥
ते नराः पापनिर्मुक्ता भवन्तीह शतायुषः ॥ ७६ ॥

एतत्सर्वं परिज्ञाय दूतान्कथय सर्वशः ॥
धर्मराज न दण्डार्हा ब्राह्मणा रुद्रजापकाः ॥ ७७ ॥

ष्कृतिः ॥६४-७०॥ भक्त्या रुद्रजपात्सर्वपापं त्यक्त्वाऽऽशु दीर्घायुः सुखी च भवेत् ॥ ७१ ॥ सम्पत्तिज्ञानारोग्यतेजोवर्चोबलधृतिमेधा रुद्रजपाद्वर्धन्ते ॥ ७२ ॥ रुद्राभिषिक्ततीर्थपानात्स्नानाच्च पावनत्वं । न मृत्युभयं। रुद्रजापी पुण्यवान् चिरजीवी च । रुद्राभिमंत्रितजलस्नानाद्भीतो मृत्युः पलायते । स भवाब्धेस्तीर्णः । शतरुद्रीयेण भक्त्येशमभ्यर्च्य विपापः शतायुर्भवति । एतत्सर्वं दूतान्कथयेति श्रुत्वा यमः स्वस्थानमेत्य दूतां-

इति ब्रह्मवचः श्रुत्वा स्वस्थानं यम एत्य सः ॥
तथाऽऽदिशत्स्वकानेवं भूपं प्राह पराशरः ॥ ७८ ॥

एतं सुतायुर्वृद्ध्यर्थमुपायं कथयामि ते ॥
अभिषिञ्च शिवं रुद्रायुतेन क्षीरधारया ॥ ७९ ॥

ततो दशसहस्राब्दं पुत्रो जीवंति[1] सुस्थिरम् ॥
राज्यं च भोक्ष्यते हीन्द्रो देवनाथो यथा दिवि ॥८०॥

अस्य राज्ञः श्रियो नाशो न कदाऽपि भविष्यति ॥
भोक्ष्यतेऽकण्टकं राज्यं सन्तोषेण सुतस्तव ॥ ८१ ॥

आहूय शतशो विप्रान्कामक्रुल्लोभवर्जितान् ॥
विदुषो ज्ञाननिष्ठांश्च स्वधर्माचारतत्परान् ॥ ८२ ॥

एतैर्युक्तो नृप शिवेऽभिषेकं विधिना कुरु ॥
आयुर्वृद्धिर्भवेदस्य सद्यः श्रेयो भविष्यति ॥ ८३ ॥

स्तथाऽऽदिशत्। हे राजन्, ते सुतायुर्वृद्ध्यर्थममुमुपायं वच्मि। रुद्रायुतेनेशं क्षीरधारयाऽभिषिञ्च। ततो जीवितस्ते पुत्रो दिवीन्द्र इवात्र दशसहस्रवत्सरान् सुस्थिरं राज्यं करिष्यति। कदाऽप्यस्य श्रियो नाशो न। पुत्रैर्युक्तोऽकण्टकं राज्यं करिष्यति ॥७३-८१॥ क्रोधलोभवर्जिताञ्ज्ञाननिष्ठान्स्वधर्मरतान्विद्वाद्विप्रानाहूय सम्भारान्सम्भृत्य विधिवच्छिवाभिषेकं

---

१ जीविष्यति.

इत्थं पराशरेणोक्तो राजा हृष्टो यथोक्तवत् ॥
सर्वान्त्सम्भृत्य सम्भारान्त्समारेभेऽभिषेचनम् ॥ ८४ ॥

पराशरेण मुनिना यथाऽऽदिष्टस्तथा द्विजान् ॥
आह्वयामास विदुषः शतशोऽथ सहस्रशः ॥ ८५ ॥

शतसंख्याककलशैरखण्डरसधारया[1] ॥
शिवाभिषेकमकरोद्विधिना भक्तिभावितः ॥ ८६ ॥

तेन तीर्थोदकेनैव स्नापयामास तं सुतम् ॥
एवं सप्ताहमकरोदीश्वराराधनं नृपः ॥ ८७ ॥

सप्ताहे त्वन्तरे प्राप्ते मूर्च्छितः क्ष्माभृतः सुतः ॥
क्षणं पपात सहसा तं ररक्ष पराशरः ॥ ८८ ॥

तदा त्वदृश्यरूपेण यमदूता उपागताः ॥
ते महापुरुषाः पाशदण्डहस्ता भयङ्कराः ॥ ८९ ॥

कुर्विति प्रोक्तो हृष्टो राजा तथाविधान्विप्रानाहूय शतसंख्याककलशैर्विधिना भक्त्याऽखण्डरसधारया रुद्राभिषेकमकरोत्। तेन तीर्थेन सुतं च स्नापयामासैवमीशाराधनेन सप्ताहे प्राप्ते राजपुत्रो मूर्च्छितः पपात। तदाऽदृश्यरूपेण महान्तो दण्डपाशहस्ता भीषणा दंष्ट्राकराला यमदूता

---

१ दुग्धं, इक्षुरसो जलं वा.

दंष्ट्राकरालवदनास्तत्रैव सहसाऽऽगताः ॥
मन्त्राक्षतान्ददुस्तस्मै तदा ते रुद्रजापकाः ॥ ९० ॥

मन्त्राक्षता द्विजक्षिप्ताः कुमारोपरि चागताः ॥
दूरे तस्थुस्तदा दूताः स्थातुं शेकुर्न सन्निधौ ॥ ९१ ॥

हस्तस्थान्दूरतः पाशान्कुमारोपरि चिक्षिपुः ॥
शिवदूता दण्डहस्तास्तदा तान्हन्तुमागताः ॥ ९२ ॥

पलायनपरा आसन्यमदूता भयार्दिताः ॥
पृष्ठतो वेदपुंरूपाः शिवदूतास्तदाऽन्वगुः[1] ॥ ९३ ॥

एवं द्विजवरै राजकुमारो रक्षितस्तदा ॥
श्रुतिमंत्रैर्द्विजवराः कुमारायाशिषो ददुः ॥ ९४ ॥

सावधानः स्थिरमना राजपुत्रस्तदाऽभवत् ॥
राजाऽप्यानन्दपूर्णोऽभूच्चकार च महोत्सवम् ॥ ९५ ॥

आगताः । तदा रुद्रजापकैर्विप्रैर्मन्त्राक्षताः कुमारोपरि क्षिप्ताः ॥८२-९१॥ दूतास्तु दूरतः पाशान्कुमारोपरि चिक्षिपुः । तदा दण्डहस्तान्हन्तुमागताञ्छिवदूतान्दृष्ट्वा भयार्ता यमदूताः पलायनपरा आसुः । पृष्ठतो लग्नाः शिवदूता अनुजग्मुः । एवं श्रुतिमन्त्रै राजकुमारो रक्षितः । द्विजाः पुत्रायाशिषो ददुः । राजपुत्रः सावधानः स्थिरमनाश्चाभूत् । राजाऽप्यानन्दपूर्णो

---

१ पश्चाज्जग्मुः.

महर्षिं पूजयामास भोजयामास तान्द्विजान् ॥
ताम्बूलदक्षिणादिभ्यस्तोषयामास तान्द्विजान् ॥ ९६ ॥

सभां विरच्य महतीं सन्तुष्टः स महानृपः ॥
उपवेश्य मुनिं सिंहासनेऽन्यांश्च यथायथम्[1] ॥ ९७ ॥

भुक्तो राजा महिष्या च सममिष्टैः सुतेन च ॥
उपाविशत्सभायां स महानन्दोऽभवत्तदा ॥ ९८ ॥

आगतो नारदस्तत्र ब्रह्मपुत्रो नृपस्तदा ॥
तद्दर्शनोद्गतप्राणान्पुनराप्तुमिवोत्थितः ॥ ९९ ॥

प्रत्युद्गत्वा[2] समानीय पूजयामास तं नृपः ॥
उभौ हस्तौ समानीय विनयावनतोऽनमत् ॥ १०० ॥

राजा तं प्राह देवर्षे त्रैलोक्ये गमनं तव ॥
अपूर्वमद्य किं दृष्टं तन्मे वद महामुने ॥ १ ॥

महोत्सवं चक्रे ॥९२-९५॥ ऋषिं सम्पूज्य विप्रान्भोजयित्वा ताम्बूल-दक्षिणाभिस्तोषयित्वा महासभां विरच्य तुष्टःस्त्रिया सह भुक्तो नृपः सिंहासने पराशरं यथायथमन्यांश्चोपवेश्यानन्दितोऽभूत्तदा नारद आगतस्तं दृष्ट्वोत्थाय सम्पूज्य नत्वाऽऽह ॥९६-१००॥ हे देवर्षे, त्रैलोक्ये ते

---

१ यथायोग्यं २ संमुखं गत्वा.

नारदः प्राह भूपाद्य कैलासादागतोऽस्म्यहम् ॥
मार्गेऽपूर्वं मया दृष्टं तच्छृणुष्व वदामि ते ॥ २ ॥

महामृत्युः समं दूतैस्त्वत्पुत्रं हर्तुमागतः ॥
पराभूतोऽभवत्सद्यः शिवदूतैः स चागतैः ॥ ३ ॥

पराभूतास्ततस्ते तु यमं गत्वा तदब्रुवन् ॥
घ्नंत्यस्माञ्छिवदूतास्ते कथं नो भूतले गतिः ॥ ४ ॥

ततो यमोऽपि कुपितो वीरभद्रमुपागतः ॥
प्राह दूतान्कथं घ्नन्ति मामकांस्तावका वद ॥ ५ ॥

निजकर्मानुबन्धेन राजपुत्रं गतायुषम् ॥
नेतुमभ्यागतान्दूतांस्तावका घ्नन्ति तान्कथम् ॥ ६ ॥

वीरभद्रस्तदा प्राह क्रुद्धो यम शृणुष्व मे ॥
अस्य राजसुतस्यायुरयुताब्दं विनिश्चितम् ॥ ७ ॥

गमनं। यद्यपूर्वं दृष्टं तर्हि वद। नारद आहाद्य कैलासादागतोऽस्मि। मार्गे दृष्टं वच्मि। सदूतमहामृत्युस्ते पुत्रं हर्तुमागतः। स शिवदूतैः पराभूतो यममेत्याह। नः शिवदूता घ्नन्ति। वयं ते दासाः। इति श्रुत्वा कुपितो यमो वीरभद्रमेत्याह। स्वकर्मणा गतायुषं राजपुत्रमानेतुं गतान्नो दूतान्कुतः शिवदूता घ्नन्तीति श्रुत्वा कुपितो वीरभद्र आह। शृण्वस्य पुत्रस्या-

---

१ मम इमे मामकाः.

चित्रगुप्तमपृष्ट्वैते कथं दूतास्त्वयेरिताः ॥
ये जीवन्तो विसृष्टास्ते नास्मद्दूतैर्वरं कृतम् ॥ ८ ॥

ततो यमश्चित्रगुप्तं समाहूय सुतस्य तत् ॥
भूपतेः परिपप्रच्छ जीवितं लिखितं कियत् ॥ ९ ॥

इति पृष्टश्चित्रगुप्तो दृष्टवान्पट्टलेखनम् ॥
अपमृत्युर्द्वादशाब्दे लिखितस्तत्सुतस्य तु ॥ ११० ॥

तत्रैवान्यच्च लिखितं मृत्युं तीर्त्वाऽल्पकं त्वयम् ॥
जीविष्यत्ययुताब्दं तद्दृष्ट्वाऽभूच्छङ्कितो यमः ॥११॥

स्वामिन्नागः क्षमस्वेति वीरभद्रं क्षमाप्य सः ॥
ततो यमो गत इति प्रेक्षितं मेऽद्य भूपते ॥ १२ ॥

रुद्रानुष्ठानपुण्येन त्वत्पुत्रायुर्विवर्धितम् ॥
पराशरेण मुनिना मृत्युनाथो जितोऽद्य हि ॥ १३ ॥

इत्युक्त्वाऽऽपृच्छ्य राजानं नारदः प्रययौ दिवम् ॥
पराशरो मुनिश्चापि तथैव स्वाश्रमं गतः ॥ १४ ॥

युतायुः। चित्रगुप्तमपृष्ट्वा कुतो दूताः प्रेरिताः। जीवन्तस्ते दूता विसृष्टास्तदस्मद्दूतैर्न वरं कृतं। ततो यमश्चित्रगुप्तं पप्रच्छ ॥१०१-१०९॥ स पट्टे द्वादशेऽब्देऽल्पमृत्युं तीर्त्वाऽयुताब्दाञ्जीविष्यतीति तत्रैव लिखितं दृष्ट्वा चकितो यम एत्याह। स्वामिन्नपराधं क्षमस्वेति वीरभद्रं प्रार्थ्य गत इति मया दृष्टं। पराशरेणाद्य रुद्रानुष्ठानपुण्यतो महामृत्युं जित्वा ते पुत्रस्यायुर्वर्धितं। इत्युक्त्वाऽऽपृच्छ्य नारदो गतः। पराशरोऽपि

प्रस्थापिता द्विजाश्चापि ययू राजा जहर्ष सः ॥
पुत्रो निष्कण्टकं राज्यमयुताब्दं शशास सः ॥ १५ ॥

एवं रुद्रस्य महिमा तस्माद्योऽनेन शङ्करम् ॥
अर्चेत्कालभयं तस्य न कदापीह दम्पती ॥ १६ ॥

एवं श्रीगुरुनाथेन दम्पतीभ्यां सविस्तरम् ॥
रुद्राध्यायस्य माहात्म्यं कथितं नामधारक ॥ १७ ॥

अत एव बहुप्रीती रुद्राध्यायस्य सद्गुरोः ॥
तस्माद्रुद्राभिषेकेण भक्त्याऽर्च्यः श्रीगुरुः सदा ॥१८॥

गङ्गाधरजसरस्वत्युदितं चरितं गुरोः शृणोति नरः ॥
भवसागरपरपारं यात्याप्त्वा स त्रिवर्गमार्यवरः ॥१९॥

स्वाश्रमं ययौ। प्रस्थापिता द्विजाश्च यथागतं जग्मुः। स पुत्रोऽयुताब्दं निष्कण्टकं राज्यं शशास। एवं रुद्रमहिमा। तस्माद्यस्तेन शङ्करमर्चेत्तस्य कालभयं न। इत्थं श्रीगुरुर्दम्पतीभ्यां सविस्तरं रुद्रमाहात्म्यं शशंस। अत एव श्रीगुरो रुद्राध्यायस्य बहुप्रीतिः। तस्माद्रुद्राभिषेकेण श्रीगुरुर्नित्यमभ्यर्च्यः ॥११०-१८॥ गङ्गाधरजसरस्व० ॥११९॥ इति श्रीगु० चू० चतुस्त्रिंशो० ॥ ३४ ॥

(इति)श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्यगङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञितमहाराष्ट्रभाषान्वितगुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वतीयतिविरचितायां श्रीगुरुसंहितायां कर्मकाण्डे चतुस्त्रिंशः (अध्यायः)॥

॥ आदितः श्लोकाः ॥ ३९७५ ॥

॥ इति चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

## ॥ अथ पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

श्रीग० ॥ विनयावनतः प्राह तं सिद्धं नामधारकः ॥
दम्पतीभ्यां पुरा रुद्रमाहात्म्यं गुरुणोदितम् ॥ १ ॥

ततोऽग्रतः कथां वृत्तां विस्तरेण वदस्व मे ॥
विद्धं स्वान्तं[1] नितान्तं मे चरित्रेण गुरोर्गुरो ॥ २ ॥

सिद्ध ऊचे शृणुष्वार्य तुभ्यं वक्ष्येऽग्रतः कथाम् ॥
गुरुनाथमथापृच्छन्नता साऽपि पतिव्रता ॥ ३ ॥

करौ संधाय विनता भक्तियुक्ता पतिव्रता ॥
श्रीगुरो नोऽग्रतः कीदृग्गतिः स्थेयमतः कथम् ॥ ४ ॥

अथ सारसंग्रहश्लोकोऽयम्–

सुरहितदा कथा वृत्ता शरपुरमित इह सोमाख्यम् ॥
व्रतमपि यत इह सीमन्तिन्यलभदपि च दयितं नष्टम् ॥ १ ॥

नामधारक आह। हे सिद्ध पुरा रुद्रमाहात्म्यं श्रीगुरुणोक्तं ततो वृत्तां कथां विस्तराद्वद। तत्र मे मनो लग्नं। सिद्ध आहार्य शृणु। सा पतिव्रता श्रीगुरुं भक्त्या नत्वाऽऽह। भगवन्, सदैव ते चरणस्मरणार्थं

---

१ मनः.

भगवन् श्रीगुरो मह्यं मन्त्रमेकमुपादिश ॥
चरणस्मरणं येन भवतः स्यात्सनातनम् ॥ ५ ॥

श्रीगुरुः प्राह नारीणां पतिसेवैकसाधनम् ॥
उपदेशेन किं तासां मन्त्रो देयो न हि स्त्रियै ॥ ६ ॥

उपदेशात्स्त्रिया हानिर्दातुर्मन्त्रोऽपि हीयते ॥
शुक्राचार्यस्य तु पुरा जातमीदृक्पतिव्रते ॥ ७ ॥

इति श्रीगुरुणोक्ता सा बद्धपाणिर्नताऽब्रवीत् ॥
स्त्रियै मन्त्रः कुतोऽदेयः शुक्रस्य किमभूत्पुरा ॥ ८ ॥

विस्तरेणाखिलं स्वामिन्कृपया कथयस्व मे ॥
इत्युक्त्वा करुणं साध्वी पदलग्नाऽभवद्गुरोः ॥ ९ ॥

श्रीगुरुः प्राह तां साध्वि शृणु पूर्वकथामिमाम् ॥
पुरा सुरासुराणां हि समभूत्तुमु[1]लो रणः ॥ १० ॥

दैत्यसैन्यं हतं देवैः शुक्रोऽपि तदजीवयत् ॥
उत्थाप्य तन्मृतमपि भूयो युद्धाय चैरयत् ॥ ११ ॥

मे मन्त्रमुपादिश। श्रीगुरुराह। स्त्रीणां पतिसेवैव साधनं। मन्त्रो न देयः ॥ १-७ ॥ उपदेशे शुक्रस्येव दातुर्मन्त्रो हीयते। सा प्राह। श्रीगुरो, स्त्रियै मन्त्रः कुतो न देयः। शुक्रस्य किं जातं तत्सर्वं कृपया वदेति पदलग्नाऽभूत्। श्रीगुरुराह पूर्वकथां शृणु। पुरा देवदैत्यानां युद्धमभूत्। तत्र हतं दैत्यसैन्यं शुक्रः सञ्जीवन्या जीवयित्वा युद्धाय पुनः पुनः

१ महान्.

क्रुद्धो वज्रेण वज्री[1] तदहञ्च्छुक्रस्त्वजीवयत् ॥
सद्यो यात्यासुरं सैन्यं देवसैन्यवधाय तत् ॥ १२ ॥

एवं सत्येकदिवसे कैलासं प्राप्य देवराट् ॥
शुक्रमन्त्रप्रभावादि सर्वं प्राह शिवाय सः ॥ १३ ॥

ईश्वरः कुपितः प्राह नन्दिनं गच्छ सत्वरम् ॥
नन्दिकेश्वर वक्त्रेण धृत्वा शुक्रं समानय ॥ १४ ॥

इति स्वामिवचः श्रुत्वा धावन्गत्वा स नन्दिकः ॥
शुक्राचार्यं ध्याननिष्ठं दृष्ट्वाऽप्यास्येनै[2] चाददे ॥ १५ ॥

गृहीत्वा तं शिवं प्राप चक्रुः कोलाहलं द्विषः[3] ॥
अगस्त्योऽब्धिमिवाचार्यं शिवोऽभक्षदितीतरे ॥ १६ ॥

दिनानि कतिचिच्छुक्रः शिवस्य जठरे स्थितः ॥
ईशा[4] स विस्मृतो दैवान्मूत्रद्वारा विनिर्गतः ॥ १७ ॥

प्रैरयत् । एकदिने इंद्रः शिवमेत्य सर्वमाह । कुपितः शिवो नन्दिनं प्राह । शुक्रं मुखे धृत्वा शीघ्रमानयेति । तथेति स नन्दी गत्वा ध्याननिष्ठं शुक्रं धृत्वा शिवाय ददौ । दैत्यकुले आक्रान्तोऽभूत् । शिवः शुक्रमभक्षयत् ॥ ८-१९ ॥ स शिवोदरे कञ्चित्कालं स्थित्वा शिवेन विस्मृतो मूत्रद्वारा बहिर्गतः । पूर्वं स भार्गवः सन् शिवशुक्रसम्पर्काच्छुक्र इति ख्यातो भूत्वा

---

१ इन्द्रः २ मुखेन जग्राह ३ शत्रवो [ दैत्याः ] ४ ईश्वरेण.

पूर्वं सन्भार्गवः सोऽस्य शुक्रसम्पर्कतोऽभवत् ॥
लोके शुक्र इति ख्यातो भूयो दैत्यानजीवयत् ॥१८॥

इन्द्रो विचारयामास समाहूय पुरोहितम् ॥
बृहस्पते दैत्यगुरुर्जीवयत्यसुरान्कविः ॥ १९ ॥

यत्नाद्विघ्नं कुरुष्वास्य त्वं विवेकी पुरोहितः ॥
ततो बुद्धिविवेकात्त्वमधिकोऽसि बृहस्पते ॥ २० ॥

पश्य दैतेयभाग्यं यच्छुक्रो हितकरो गुरुः ॥
उत्थापयत्यपि मृतान्युद्धायायान्ति ते पुनः ॥ २१ ॥

तथा त्वं न करोष्यस्मानुपेक्षसि कथं गुरो ॥
ख्यातो भवान्देवगुरुर्बुद्ध्या शीघ्रं विचारय ॥ २२ ॥

पूज्यः समस्तदेवानां त्वं करोषि कृपां यदि ॥
शुक्रस्य किन्नु वैशिष्ट्यं भवता स समो न हि ॥ २३ ॥

इति नानाप्रकारेण स इन्द्रो देवनायकः ॥
तुष्ट्वोपचारैरानर्च तं तुतोष स गीष्पतिः ॥ २४ ॥

दैत्यानेत्य मृतानपि ताञ्जीवयामास। इन्द्रो विचार्य बृहस्पतिमाह। दैत्यगुरुर्दैत्याञ्जीवयति तत्र विघ्नं कुरु। त्वं ततोऽपि विवेकी। दैत्यभाग्यं पश्य। मृतानपि जीवयित्वा तद्गुरुर्युद्धाय तान्प्रेरयति। त्वं तथा न करोषि। न उपेक्षसे किं। त्वं बुद्ध्या ख्यातोऽस्यतः शीघ्रं विचारय। पूज्यस्त्वं कृपां करोषि चेच्छुक्रस्य किं वैशिष्ट्यं स त्वत्समो नेति तुष्ट्वाऽपूजयत्। स

१ शुक्रात्.

उपायं कथयामीन्द्र मन्त्रसत्त्वहरं परम् ॥
तस्य षट्कर्णगे मन्त्रे सामर्थ्यं नाशमेष्यति ॥ २५ ॥

कश्चित्तत्सन्निधौ धूर्तः प्रेषणीयः प्रयत्नतः ॥
विद्यार्थिरूपधृक्तेन मन्त्रविघ्नो भविष्यति ॥ २६ ॥

विद्यार्थित्वेन तनयः प्रेषणीयः कचो मम ॥
ग्रहीष्यति स तन्मन्त्रं नात्र कार्या विचारणा ॥ २७ ॥

इत्युक्त्वा कचमाहूय तमुवाच बृहस्पतिः ॥
गच्छ विद्यार्थिरूपेण शुक्रं दैत्यगुरुं सुत ॥ २८ ॥

निन्दां कृत्वाऽपि नः कायवाङ्मनोभिर्निषेव्य[1] तम् ॥
[2]ततः सञ्जीवनीं विद्यां पुत्र साधय यत्नतः ॥ २९ ॥

इति विज्ञापितः पुत्र इन्द्राद्यैरनुमोदितः ॥
विद्यार्थी सन्कचः प्राप्तः शुक्राचार्यं महामतिः ॥ ३० ॥

तुष्ट आह । हे इन्द्र, शृणूपायं । षट्कर्णगे मन्त्रे मन्त्रसत्त्वं नश्यति ॥ १६-२५॥ कश्चित् धूर्तो विद्यार्थी यत्नात्प्रेषणीयस्ततो विघ्नो भविष्यति । मत्सुतः कचस्तथैव प्रेषणीयः । स मन्त्रसारं हरिष्यति न संशय इत्युक्त्वा कचमाहूयाह । त्वं विद्यार्थिरूपेण शुक्रं गत्वाऽस्मन्निन्दां कृत्वा तं वाङ्मनःकायैर्निषेव्य ततः सञ्जीवनीविद्यां स्वीकुर्वित्याज्ञप्तः इन्द्राद्यनुमोदितः स कचो विद्यार्थी शुक्रमेत्य साष्टाङ्गं नत्वा करुणमग्रे स्थितः शुक्रस्तमाह ।

---

१ सेवां कृत्वा २ तस्मात्.

कविं प्रणम्य साष्टाङ्गं करुणं चाग्रतः स्थितः ॥
तदा पप्रच्छ तं शुक्रः कस्त्वमस्यागतः कुतः ॥ ३१ ॥

स प्राह द्विजपुत्रोऽहं कीर्तिस्ते वितता श्रुता ॥
विद्यार्थित्वेनैव भवत्सेवनार्थं ममागमः ॥ ३२ ॥

भवच्चरणसेवार्थं निश्चयेनागतोऽस्म्यहम् ॥
भक्तचिन्तामणिस्त्वं वा अनाथपरिपालकः ॥ ३३ ॥

इत्याह करुणं वाक्यं विनयावनतः कचः ॥
तत्र स्थिता शुक्रसुता प्रणता तातमब्रवीत् ॥ ३४ ॥

देवयानी प्राह शुक्रं ब्राह्मणो भात्ययं शुभः ॥
विद्यां दातुममुं तात शिष्यत्वेनोररीकुरु ॥ ३५ ॥

सुन्दरः स कचो भाति स्मरविस्मरणास्पदः[1] ॥
भूयान्मे पतिरित्येवं देवयानी व्यचिन्तयत् ॥ ३६ ॥

कस्त्वं कुत आगतोऽसीति। स आह द्विजपुत्रोऽहं ते कीर्तिं श्रुत्वा विद्यार्थित्वेन सेवार्थमागतोऽस्मि। भक्तचिन्तामणिरनाथपरिपालको भवान् ॥ २६-३३ ॥ एवं करुणं वदन्तं दृष्ट्वा शुक्रपुत्री देवयानी तातं नत्वाऽऽह ॥ ३४ ॥ शुभोऽयं विप्रोऽमुं शिष्यत्वेन स्वीकुर्विति ॥ ३५ ॥ स्मरोपमोऽयं मे पतिर्भवत्विति मनसा निश्चित्य पितरं प्रार्थयत्। सोऽपि पुत्रीवा-

---

१ कामविस्मरणस्थानभूतः.

इति सञ्चिन्त्य पितरं प्रार्थयामास सा सुता ॥
तद्वात्सल्यात्स शुक्रोऽपि शिष्यं तं स्वीचकार सः ॥३७॥

विद्याभ्यासे प्रवृत्तं तं धूर्तं मत्वाऽथ दानवाः ॥
ऊचुः कपटवेषोऽयं देवपक्षी समागतः ॥ ३८ ॥

विद्यामभ्यस्य देवेभ्यः शंसिष्यति ततो हि नः ॥
भङ्गो भविष्यति ततो यत्नः कार्योऽत्र नो महान् ॥३९॥

ततः कदाचित्स कचः समिदर्थं वनं गतः ॥
दैत्या अपि सहायार्थमनुजग्मुः कुबुद्धयः ॥ ४० ॥

कचेन सह ते गत्वा दैत्या जघ्नुः कचं वने ॥
ततः समिध आदाय स्वयं दैत्या गृहान्ययुः ॥ ४१ ॥

शुक्राचार्यस्य तनया देवयानी तदा प्रियम् ॥
अनवेक्ष्याह जनकं नाद्यापि प्रिय आगतः ॥ ४२ ॥

यावन्नायास्यति कचस्तावद्भोक्ष्यामि नैव च ॥
इति तस्या वचः श्रुत्वा चिन्तयामास भार्गवः ॥४३॥

त्सल्यात्तं स्वीचकार। दैत्यास्तं धूर्तं मत्वा कपटी देवपक्षी विद्यामभ्यस्यायं देवान्वक्ति चेन्नो हानिरतोऽस्य नाशे यत्नः कार्य इति विचार्य कदाचित्स-मिधार्थं वनं गतं कचमनुगम्य ते कचं हत्वा समिध आदाय गृहमागताः। देवयानी शुक्रमाह। कुतः कचोऽद्यापि नागतः। तं विना न भोक्ष्य इति

कचो वने मृत इति ज्ञात्वा ध्यानेन भार्गवः ॥
मन्त्रेण जीवयित्वा तमानयामास सत्वरम् ॥ ४४ ॥

ततो बहुतिथे काले दैत्या द्वेषसमन्विताः ॥
कचं वनङ्गतं भूयो निहन्युर्दुष्टबुद्धयः ॥ ४५ ॥

जीवयिष्यति तं भूय इति भीत्यैव तद्वपुः ॥
चूर्णीकृत्वा दश दिशो दैत्याः क्षिप्त्वा ययुर्गृहान् ॥४६॥

अस्तं गतस्ततः सूर्यो देवयानी न वीक्ष्य तम् ॥
पितरं प्राह कस्मान्मे प्रियोऽद्यापि न चागतः ॥ ४७ ॥

कचो मम प्राणसखस्तन्नानयसि चेत्पितः ॥
विषं पिबेयं तद्वक्त्रं ततो दर्शय मे पितः ॥ ४८ ॥

कन्यावात्सल्ययुक्तोऽथ शुक्रो ध्यानेन वीक्ष्य तम् ॥
हतं छिन्नं च विज्ञाय जजाप मनुमुत्तमम् ॥ ४९ ॥

अहो मन्त्रस्य सामर्थ्यात्प्राप्तो जीवन्कचो गृहम् ॥
देवयानी तुतोषामूमालिंग्यापि पिता तथा ॥ ५० ॥

श्रुत्वा ॥ ४३ ॥ शुक्रस्तं मृतं ज्ञात्वा मन्त्रेण जीवयित्वाऽऽनयत्। पुनर्द्विषो दैत्याः कालान्तरे वनं गतं कचमनु गत्वा दुर्धिया तं हत्वा पुनर्जीवयिष्यतीति भिया तद्देहं चूर्णीकृत्य दिक्षु क्षिप्त्वा गृहान् ययुः। सूर्येऽस्तं गते देवयानी पितरमाह। प्राणसखोऽद्यापि नागतः। शुक्रस्तथाविधमपि तं

---

१ देवयानीम्.

पुनर्विचारयामासुर्दैत्याः किं कार्यमद्य नः ॥
हतं स जीवयत्येनं कन्यास्नेहात्पुनर्गुरुः ॥ ५१ ॥

कर्तव्योऽयमुपायोऽद्य श्व एवैकादशीदिने ॥
हुत्वाऽस्य भस्म गुरवे देयं पानेन संयुतम् ॥ ५२ ॥

निश्चित्यैवं ततोऽन्येद्युरेकादश्यां कचं बहिः ॥
नीत्वा हत्वा च हुत्वाऽस्य जगृहुर्भस्म यत्नतः ॥५३॥

मिश्रीकृत्य तु तद्भस्म पानेन सह दानवाः ॥
विश्वासेन तु शुक्राय ददुस्ते तत्पपौ कविः ॥ ५४ ॥

अदृष्ट्वा तं पुनर्देवयानी पितरमब्रवीत् ॥
रुदती सुदती क्वास्ते सखा मम सुखाकरः ॥ ५५ ॥

तदा ध्यानेन शुक्रोऽपि प्रेक्षन्नपि न दृष्टवान् ॥
खिन्नाऽभूद्देवयानी सा तन्मोहात्सोऽपि दुःखितः ५६

विचार्य सर्वतोऽदृष्ट्वा ततः स्वोदरगं कचम् ॥
दृष्ट्वा सन्दिग्धचित्तोऽभूत्कविः किं कार्यमद्य मे ५७

ज्ञात्वा जीवयित्वाऽऽनयत्। पुनर्दैत्यास्तं हत्वा हुत्वा च तद्भस्म पानेन सह शुक्राय ददुः ॥ ४४-५३ ॥ कचमदृष्ट्वा कन्याऽऽह। क्व प्रियः। तं नानयसि चेद्विषं पिबेयम्। शुक्रो ध्यानेनेतस्ततस्तमदृष्ट्वा ज्ञानदृष्ट्या स्वोदरगतं ज्ञात्वाऽऽह। दैत्यैर्मत्कुक्षौ क्षिप्तः। किं तेन प्रयोजनं। तदानयनान्मे

पुत्रीं शुक्र उवाचायि कचो मदुदरं गतः ॥
दैत्यैः क्षिप्तः स मत्कुक्षौ ततो[1] निष्कास्यते कथम् ५८

तस्य निर्गमनान्मृत्युर्ममापि च भविष्यति ॥
वद कल्याणि मे पुत्रि तेन किं ते प्रयोजनम् ॥ ५९ ॥

देवयानी कविं प्राह मम कामोऽयमीदृशः ॥
पत्नी स्यां[2]मप्युभौ नित्यं स्थास्यावो निकटे तव ॥६०॥

मत्पतिः स भवत्वेवं संकल्पो मम चेत्पितः ॥
नानयिष्यसि तं प्राणांस्त्यक्ष्यामीह तवाग्रतः ॥६१॥

इति श्रुत्वा स सन्दिग्धः[3] शुक्रः कन्यामबोधयत् ॥
तत्प्रापणान्मरिष्येऽहं पुत्रि दाता पिता तव ॥ ६२ ॥

पुत्रीं प्राह समस्तांस्त्वं जीवयिष्यस्यहो पुनः ॥
प्राणा यास्यन्ति ते त्वत्र चित्रमेतद्विभाति मे ॥ ६३ ॥

शुक्रोऽवदत्सुतां पुत्रि मत्तो नान्योऽत्र कश्चन ॥
सञ्जीवनीमिमां वेत्ति को मामुत्थापयिष्यति ॥ ६४ ॥

मृत्युर्भवेत्। पुत्री आह। तत्पत्नी भूत्वा त्वन्निकटे तेन सह स्थास्येऽयं मे सङ्कल्पो मृषा चेन्मरिष्ये। संदिग्धः शुक्र आह। तदानयनान्मे मरणम्। पुत्री आह। सर्वप्राणदाता त्वं कथं मरिष्यसि ॥ ५४-६३ ॥ शुक्र आह।

---

१ उदरात् २ भवेयं ३ संदेहयुक्तः.

मन्त्रो वाच्यो न कस्यापि कस्यचिच्चेद्यदा स च ॥
भवेत्षट्कर्णगोऽसार[1]ः कचान्मेऽपि मृतिर्भवेत् ॥ ६५ ॥

तदश्रुत्वा पुनः कन्या धृत्वा पितृपदेऽब्रवीत् ॥
बद्धहस्ता वत्सल मे तात मन्त्रमुपादिश ॥ ६६ ॥

ततः कचं जीवय भो मृत्युस्ते चेद्भविष्यति ॥
जीवयिष्यामि मन्त्रेण त्वामित्थं तत्पदे दधौ ॥ ६७ ॥

शुक्रः प्राह स्त्रियै मन्त्रो न देयः पुत्रि सर्वथा ॥
शास्त्रेण दोषाः कथिताः स्त्रीभ्यो मन्त्रप्रदानतः ॥६८॥

पतिभक्तिः स्त्रिया धर्मो मन्त्रो देयो न योषितः ॥
मन्त्रदानाद्दातृमन्त्रसत्त्वं द्राङ्नाशमेष्यति ॥ ६९ ॥

देवयानी कविं प्राह सुखेनैव जपं कुरु ॥
प्राणांस्त्यक्ष्याम्यहमिति प्रोक्त्वा सा मूर्च्छिताऽपतत् ७०

उत्थाप्यालिंग्य च सुतां कविर्दुहितृवत्सलः ॥
तां मा भीरिति चाश्वास्य ददौ सञ्जीवनीमनुम्[2] ॥ ७१ ॥

सञ्जीवनीं मत्तोऽन्यो न वेद । मन्त्रोऽन्यस्मै न देयः । षट्कर्णगो मन्त्रोऽसारो भवेत् । ततः कचार्थे मे मृत्युः । कन्याऽऽह । मे मन्त्रं देहीति शुक्रं जगौ । स्त्रीणां पतिसेवा । मन्त्रो न देयः । दाने चानेकदोषा दातृमन्त्रहानिश्च । तर्हि त्वं सुखेन मन्त्रजपं कुर्वहं मरिष्ये इति कन्या मूर्च्छिताऽपतत् ।

---

१ निर्बलः २ मंत्र.

शुश्राव जीवितो दैवात्कचः कुक्षिगतोऽपि तम् ॥
षट्कर्णगोऽभवन्मन्त्रोऽथ कचार्थं पिताऽजपत् ॥ ७२ ॥

शुक्रोदरं विदार्याशु निर्गतः स कचस्तदा ॥
शुक्रो ममार तं देवयानी मन्त्रादजीवयत् ॥ ७३ ॥

त्रिवारं तन्मनुं श्रुत्वा मेधावी स दधार तम् ॥
भृशं स मनसा तुष्टः कार्यं सिद्धमिति द्विजः ॥ ७४ ॥

ततः कचः कविं नत्वा बद्धपाणिर्जगाद तम् ॥
घातयन्त्यसुरा द्वेषादत आज्ञापयस्व[1] माम् ॥ ७५ ॥

विद्या लब्धा प्रसादात्ते पूर्णाः सर्वे मनोरथाः ॥
कृपया तेऽभवं पूर्ण इत्युक्त्वा तत्पदे दधौ ॥ ७६ ॥

प्रहृष्टोऽपि कविर्गेहं प्रयाहीत्यादिदेश तम् ॥
तद्वासोऽञ्चलमादाय[2] कन्योचे मत्पतिर्भव ॥ ७७ ॥

कन्यावत्सलः शुक्रस्तामुत्थाप्यालिङ्ग्य मा भीरित्याश्वास्य मन्त्रं ददौ । ततः कचार्थे जजाप । स शुक्रकुक्षिं विदार्य निर्गतः ॥ ६४-७३ ॥ ततो मृतं शुक्रं देवयानी जीवयामास । मेधावी कचस्त्रिः श्रुत्वा जग्राह । स्वकार्यं सिद्धमिति तुष्टः शुक्रं नत्वाऽऽह ॥ ७४-७६ ॥ दैत्या द्वेषान्मां घ्नन्ति, मे विद्या लब्धा, ते कृपया कामाः पूर्णा इति पदे दधौ । हृष्टः शुक्रो गृहं गच्छेत्यादिशत् । तद्वस्त्रं धृत्वा देवयानी आह । मे पतिर्भव । त्रिवारं

---

१ आज्ञापयामास २ वस्त्रप्रांतं.

त्रिर्हतस्त्वं तु दनुजै रक्षिता मे तवासवः ॥
विद्या प्रदापिता पित्रा ततो मां[1]ऽवश्यमुद्वह ॥ ७८ ॥

कच ऊचे भगिन्येव गुरुपुत्री तु बालिके ॥
मत्प्राणरक्षणान्माता त्वमेव मम सुव्रते ॥ ७९ ॥

दोषं मयि त्वदुद्वाहादृषयः स्थापयन्त्यहो ॥
भगिनी जननी त्वं मेऽपराधान्क्षन्तुमर्हसि ॥ ८० ॥

देवयानी प्रकुपिता शापं दास्यत्युवाच तम् ॥
विद्याश्रमो वृथा तेऽस्तु त्वं सर्वं विस्मर क्षणात् ॥८१॥

मदन्तःकरणस्थाऽऽशा घातिता कूटचेतसा[2] ॥
विद्यालेशोऽपि ते माऽस्तु शापं मेऽमुं गृहाण रे ॥८२॥

कच ऊचे वृथा शापो दत्तोऽतो भीरु ते करम् ॥
हीनो ब्रह्मकुलादन्यो ग्रहीष्यति मदुक्तितः ॥ ८३ ॥

ब्रह्मज्ञानी पिता तेऽपि विद्यां तेमृतजीवनीम् ॥
उपादिशत्ततो विद्या नाशमेष्यत्यतः परम् ॥ ८४ ॥

ते प्राणा रक्षिता विद्या च दापिता ॥ ७७-७८ ॥ कच आह । गुरुपुत्री स्वसा प्राणदानाच्च माताऽतस्ते विवाहादृषयो मयि दोषारोपं कुर्युः । हेऽम्ब, भगिनि, क्षमस्व । सा कुपिताऽऽह । वृथा ते विद्याश्रमः । सर्वं विस्मर । रे कूटचित्त, मदाशा घातिताऽतो विद्यालेशोऽपि त्वयि माऽस्तु ॥ ७९-८२ ॥ कच आह । मे वृथा शापो दत्तः । ब्रह्मकुलातिरिक्तस्त्वां वरिष्यति । पित्रा ते सञ्जीवनी दत्ताऽतो नश्यतीति शप्त्वा गृहं गतः । देवा हृष्टाः । षट्-

---

१ मां २ कपटचित्तेन.

इति शप्त्वा ततः प्राप स्वगेहं स कचस्तदा ॥
हृष्टा देवा ततो दैत्या इत ऊर्ध्वं न जीविताः ॥ ८५ ॥

अपात्रयोजनाच्छुक्रमन्त्रो निःसारतां गतः ॥
स्त्रियै मन्त्रस्ततः साध्वि नैव देयः प्रयत्नतः ॥ ८६ ॥

स्त्रीणां तु पतिसेवैकधर्मो मन्त्रेण किं पुनः ॥
अतो व्रतोपवासादि कार्यं गुर्वाज्ञया तया ॥ ८७ ॥

सावित्री[1] श्रीगुरुं प्राह वाक्यं तेऽतीव मे मतम् ॥
भवत्पदाब्जस्मृत्यर्थं व्रतमेकमुपादिश ॥ ८८ ॥

भवद्वाक्यं प्रमाणं नौ न जाने त्वां विना परम् ॥
त्वमेव मे व्रतं नाथ व्रतं त्वत्पादसेवनम् ॥ ८९ ॥

अथापि त्वत्पदाम्भोजभक्तिदार्ढ्यार्थमेव मे ॥
आज्ञां देहीति तत्पादौ धृत्वा प्राह कृपां कुरु ॥ ९० ॥

तुष्टोऽथ श्रीगुरुः प्राह व्रतं ते कथयाम्यहम् ॥
सौभाग्यस्थैर्यदं तेऽपि पत्यू राजसुखप्रदम् ॥ ९१ ॥

कर्णगे मन्त्रेऽत ऊर्ध्वं दैत्या न जीविताः। अपात्रयोजनाच्छुक्रमन्त्रोऽसारोऽभूत्। ततः स्त्रीभ्यो मन्त्रो न देयः। तासां पतिसेवा धर्मः। व्रतं च गुर्वाज्ञया कार्यम्। साध्वी आह। ते वाक्यं नः प्रमाणम्। भवत्पादसेवा च व्रतम्। अथापि भक्तिदार्ढ्यार्थं कृपां कुर्विति पदे दधौ। तुष्टो गुरुराह। ते सौभाग्यस्थैर्याय ते पत्यू राजसुखाय च व्रतं वक्ष्ये ॥८३-९१॥

---

१ पतिव्रता.

दम्पती प्रोचतुः स्वामिन्प्रमाणं नौ भवद्वचः ॥
भवान्यथाऽऽज्ञापयति करिष्यावस्तथैव हि ॥ ९२ ॥

गुरुवाक्यं न यः कुर्यात्स घोरं नरकं व्रजेत् ॥
तव वाक्यं प्रमाणं नावित्युक्त्वा दधतुः पदे ॥ ९३ ॥

अथ श्रीगुरुनाथोऽसौ सुव्रतं विश्वतारकम् ॥
कथयामास सन्तोषाद्दम्पतीभ्यां कृपाकरः ॥ ९४ ॥

सिद्धोऽब्रवीत्कौतुकेन श्रीगुरुर्नामधारकम् ॥
दम्पतीभ्यामतिप्रेम्णा व्रतमेतदुपादिशत् ॥ ९५ ॥

श्रीगुरुर्दम्पती प्राह कथयिष्येऽत्र वां कथाम् ॥
पप्रच्छुर्ऋषयः पूर्वमितिहासं सुतं किल ॥ ९६ ॥

सूतो मुनीश्वरानूचे तद्व्रतं कथयामि वाम् ॥
नारीणामथवा पुंसां व्रतं परमपावनम् ॥ ९७ ॥

स्वच्छन्दोऽनारतानन्दो[1] निर्विकल्पो निरामयः ॥
य ईश्वरस्तमर्च्येद्यः स सर्वाभीष्टभाग्भवेत् ॥ ९८ ॥

दम्पती ऊचतुः । यदादिशासि तन्नः प्रमाणम् । यो गुरुवाक्यं न भजेत्स नरकं व्रजेदिति पदे दधतुः । सिद्ध आह । हे नामधारक, कृपाब्धिः श्रीगुरुः प्रेम्णा विश्वतारकं व्रतमाह । हे दम्पती, सूतेन ऋषिभ्यः कथितं वक्ष्ये । स्त्रीणां पुंसां वा पावनं व्रतम् । स्वच्छन्दं पूर्णानन्दं निरामयमीशं

---

१ सदानंदः.

विरक्तः कामयुक्तो वा विषयासक्त एव वा ॥
यो भक्त्या पूजयेदीशमीश्वरोऽस्मै प्रसीदति ॥ ९९ ॥

संसाराब्धिं समुत्तर्तुं दम्पती[1] योऽभिवांछति ॥
स शिवव्रतमेतत्तु सोमवाराख्यमाचरेत् ॥ १०० ॥

एतेन परपारं द्राग्यास्यति श्रुतिशासनात् ॥
सकलाभीष्टसिद्धिः स्यादीश्वरार्चनतो नृणाम् ॥ १ ॥

सोमवाराभिधं पुण्यं व्रतानामुत्तमं व्रतम् ॥
ईश्वरार्चनरूपं यत्सकलाभीष्टसाधकम् ॥ २ ॥

उपोष्य नक्तं भुक्त्वा वा व्रती स विजितेन्द्रियः ॥
वैदिकाद्युक्तमार्गेण यथाविधि समाचरेत् ॥ ३ ॥

ब्रह्मचारी गृही वाऽन्यो नारी वाऽपि कुमारिका ॥
भर्तृहीनाऽपि विधवा व्रतमेतत्समाचरेत् ॥ ४ ॥

यो भजेत्स सर्वेष्टभाक्। विरक्तः कामुको वा यो भजेत्तस्मै शिवः प्रसीदति। भवाब्धिं तर्तुं सोमवारव्रतम्। एतेनाशु सर्वाभीष्टसिद्धिर्मोक्षश्च ॥ ९२-१०१ ॥ ईशार्चनरूपमिष्टदमेतद्व्रतानामुत्तमं व्रतम्। चतुर्वर्णाश्रमाः स्त्रियः कुमारि विधवाऽपि उपोष्य नक्तं भुक्त्वा वेन्द्रियाणि जित्वा विधिने-

---

१ हे दंपती.

अत्र वां[1] कथयिष्यामि व्रताख्यानं पुरातनम् ॥
श्रोतव्यं भक्तियुक्तेन सावधानेन चेतसा ॥ ५ ॥

कथा स्कन्दपुराणोक्ता श्रवणादपि सिद्धिदा ॥
आर्यावर्ताभिधे देशे राजन्वति[2] पुरा नृपः ॥ ६ ॥

चित्रवर्मा स धर्मात्मा पुण्यराशिः स्वधर्मकृत् ॥
रक्षको धार्मिकाणां यो योऽप्यधार्मिकशिक्षकः ॥ ७ ॥

पुण्यं तेनाखिलं चीर्णं जिताः सर्वेऽपि वैरिणः ॥
सम्पदोऽप्यखिला लब्धा ईदृक्शूरः पराक्रमी ॥ ८ ॥

स चिरं सेवयामास धर्मपत्न्या समं शिवम् ॥
पुत्रार्थं दैवयोगेन जज्ञे तस्य तु पुत्रिका ॥ ९ ॥

रूपलक्षणसम्पन्ना सुन्दरी पार्वतीव सा ॥
लावण्यरञ्जिता यस्या अभाद्धा भास्करप्रभा[3] ॥ ११० ॥

दमाचरेत्। अत्रार्थे स्कन्दपुराणोक्तेतिहासं सावधानेन शृणु। आर्यावर्ते धर्मात्माऽधार्मिकशिक्षकः, धार्मिकत्राता, चित्रवर्मा राजाऽभूत्। तेन पुण्यं चीर्णम्। रिपवो जिताः सर्वसम्पदश्च लब्धाः। स पराक्रमी पत्न्या सह पुत्रार्थं शिवं भेजे। दैवाद्रूपलावण्यसम्पन्ना भास्वती पुत्री जज्ञे ॥ २-१० ॥

---

१ युवां प्रति २ सुराज्ञि देशे राजन्वान् ३ भास्करप्रभासदृशी.

विज्ञातुं जातकं तस्या आहूता भूभृता तदा ॥
लग्नं दृष्ट्वा ज्योतिषिका अतीन्द्रियविदोऽवदन् ॥११॥

सुलक्षणा त्वियं कन्या सीमन्तिन्याख्यया भवेत् ॥
उमेव मङ्गलाढ्येयं दमयन्तीव रूपिणी ॥ १२ ॥

भागीरथीव सत्कीर्तिर्लक्ष्मीरिव गुणान्विता ॥
प्राज्ञीयं देवमातेव सीतातुल्या पतिव्रता ॥ १३ ॥

कान्त्या च सूर्यसदृशी या शान्त्या चन्द्रमा इव ॥
पत्या दशसहस्राब्दं राज्यं चानुभविष्यति ॥ १४ ॥

एवं ते जातकज्ञास्तज्जातकं समुपादिशन् ॥
हृष्टो राजा तदा तेभ्यो विप्रेभ्यश्च ददौ धनम् ॥ १५ ॥

सुखोपविष्टे सदसि कदाचिद्राजनि द्विजः ॥
निर्भयः कश्चिदाहेदं भो राजन्नवधारय ॥ १६ ॥

शृणु मे वचनं कन्या तवेयं सर्वलक्षणा ॥
अस्याश्चतुर्दशे वर्षे वैधव्यं हि भविष्यति ॥ १७ ॥

तज्जातकं ज्ञातुमाहूता द्विजा ऊचुः। सीमन्तिनीनाम्नीयं सुलक्षणा, गौरीव मङ्गला, दमयन्तीव रूपिणी, ॥ ११-१२ ॥ गङ्गेव सत्कीर्तिः, श्रीरिव गुणाढ्याऽदितिवत्प्राज्ञी, सीतेव सती, सूर्यवद्भास्वती, चन्द्रवच्छान्ताऽयुताब्दं भर्त्रा सह राज्यमनुभविष्यति ॥ १३-१४ ॥ इति श्रुत्वा हृष्टो राजा तेभ्यो धनं ददौ। कदाचिन्निर्भयो विप्रो राजानमाह। सुलक्षणाया अपि ते पुत्र्याश्चतुर्दशे वर्षे वैधव्यं भविष्यतीति श्रुत्वा राजा मूर्च्छितः।

इति विप्रवचः श्रुत्वा स राजा मूर्च्छितोऽभवत् ॥
प्राप्यापि चेतनां विप्रवाक्याच्चिन्तान्वितोऽभवत् १८

विप्रस्तु निर्गतो दुःखं निवेद्याथ नृपो भृशम् ॥
दुःखार्तः प्राह निखिलमीश्वराधीनमेव हि ॥ १९ ॥

सीमन्तिनी सा वव्रृधे सीमन्तिन्युत्तमा क्रमात् ॥
सप्ताब्दां वीक्ष्य राजाऽऽह कन्या देया कथं न्त्वियम् २०

चतुर्दशेऽब्दे वैधव्यं द्विजेनास्याः प्रभाषितम् ॥
इति व्याकुलितौ जातौ राज्ञी राजा च सर्वदा ॥ २१ ॥

चिक्रीड साऽङ्गणे कन्या धन्या मान्या सखीवृता ॥
शुश्राव भावि वैधव्यं द्विसप्ताब्दैर्द्विजेरितम् ॥ २२ ॥

ततः साऽल्पवयस्काऽपि कन्याऽभूद्भृशदुःखिता ॥
कदाचिद्दैवयोगेन काचित्प्राज्ञी गृहं गता ॥ २३ ॥

याज्ञवल्क्यस्य पत्नी सा या मैत्रेयीति गीयते[1] ॥
गृहागतां पवित्रां तां नत्वा कन्या पदेऽग्रहीत् ॥ २४ ॥

विप्रः निर्गतः। प्रबुद्धो दुःखार्तो राजाऽऽह। सर्वमीशाधीनमिति ॥ १७-१९ ॥ ततः सप्ताब्दां सीमन्तिनीं वीक्ष्य राजाऽऽह। कथमियं देया। चतुर्दशेऽस्या वैधव्यमिति राज्ञी राजा च दुःखितौ। अङ्गणे क्रीडन्ती सीमन्तिनी तच्छ्रुत्वा साऽपि दुःखिताऽभूत्। तत एकदा गृहागतां याज्ञवल्क्यपत्नीं मैत्रेयीं नत्वा सीमन्तिन्याह। मातर्मां पाहि। सौभाग्यस्थै-

---

१ बृहदारण्यके गीयते.

कन्या प्रणम्य साष्टाङ्गं सन्धाय करसम्पुटम् ॥
प्रणता प्राह करुणं मातर्मां परिपालय ॥ २५ ॥

मत्सौभाग्यस्थैर्यकरमुपायं ब्रूहि रक्षणम् ॥
चञ्चलं मे मनो यस्मादतस्त्वां प्रार्थयेऽभयं[1] ॥ २६ ॥

इति कन्यावचः श्रुत्वा प्राह तां ब्रह्मवादिनी ॥
शरणं व्रज सोमं ते सौभाग्यं सुस्थिरं भवेत् ॥ २७ ॥

कन्या प्राह कथं सोमः सेवनीयो वदाखिलम् ॥
व्रतं वाऽपि कथं कार्यं वद त्वं जननी मम ॥ २८ ॥

ब्रह्मस्त्री सा पुनः प्राह सोमवारव्रतं कुरु ॥
सोमवारेऽर्चय शिवं कृत्वोपोषणमादरात् ॥ २९ ॥

सम्यग्यथाविधि स्नात्वा वसित्वा दिव्यमंशुकम् ॥
स्थिरीकृत्य मनो गौरीहरं भक्त्या समर्चय ॥ १३० ॥

पापक्षयोऽभिषेकेण साम्राज्यं पीठपूजनात् ॥
गन्धाक्षतैश्च पुष्पैश्च सौभाग्यं सौख्यमुत्तमम् ॥ ३१ ॥

र्योपायं ब्रूहि । मे मनः खिन्नमिति श्रुत्वा साऽऽह । सोमं शरणं याहि । सौभाग्यं स्थिरं भवेत् । कन्याऽऽह । मातस्तत्प्रकारं वद । मैत्रेय्याह । सोमवारे उपोष्य ॥ २०-२९ ॥ विधिवत् स्नात्वा सुवस्त्रं परिधाय भक्त्या गौरीशं पूजय । अभिषेकात्पापनाशः, पीठार्चनात्साम्राज्यं, गन्धपुष्पार्प-

---

१ भयनिवर्तनं.

सौगन्ध्यं धूपदानेन सुकान्तिर्दीपदानतः ॥
भोगा नैवेद्यार्पणेन लक्ष्मीस्ताम्बूलदानतः ॥ ३२ ॥

चतुर्विधाः पुमर्थास्तु लभ्यन्ते नतिमात्रतः[1] ॥
अष्टैश्वर्योपलब्धिश्च यन्मन्त्रजपतो मता ॥ ३३ ॥

कोशसम्पूर्णता होमात्स्तवात्सर्वसमृद्धयः ॥
तृप्तिः स्यात्सर्वदेवानां तदर्थं[2] विप्रभोजनात् ॥ ३४ ॥

सोमवारव्रतं त्वेवं कन्यके त्वं समाचर ॥
क्लेशा नश्यन्ति दुरितं भयं चाप्तं हरो हरेत् ॥ ३५ ॥

गौरीहरार्चनेनाशु सर्वपापक्षयो भवेत् ॥
सीमन्तिनीति चाकर्ण्य स्वीचकार व्रतं ततः ॥ ३६ ॥

ततः सा निर्गता प्राज्ञी चक्रे सीमन्तिनी व्रतम् ॥
तद्दृष्ट्वा तत्पिता हृष्टः सोद्वाहार्हा[3]ऽभवत्सुता ॥ ३७ ॥

णात्सौभाग्यं सुखं च। धूपात्सौगन्ध्यं, दीपदानात्कान्तिः। नैवेद्यदानाद्भोगाः, ताम्बूलदानाल्लक्ष्मीर्नत्या चतुर्विधपुरुषार्थाः, जपादष्टैश्वर्याप्तिः, होमात्कोशापूर्तिः, स्तुत्या समृद्धिः, विप्रभोजनात्सर्वदेवतृप्तिः, एवं सोमवारव्रतात्पापक्लेशभयनाशः। प्राप्तमपि भयं नश्येदित्युक्त्वा सा गता। कन्या व्रतं चक्रे। तद्दृष्ट्वा हृष्टः पिता प्राह। यत्प्राक्तनं तद्भविष्यतीयं

---

१ नमस्कारमात्रतः २ शिवार्थं ३ विवाहयोग्या.

राजाऽवदद्विवाहोऽस्याः कार्यः काले यथाविधि ॥
यथाऽस्याः प्राक्तनं भावि तथा भवतु निश्चितम् ॥३८॥

मन्त्रिणं प्रेषयित्वा स वरं[1] राष्ट्रान्तराद्वरम् ॥
नलगोत्रभवं त्विन्द्रसेनपुत्रं समानयत् ॥ ३९ ॥

वराय चन्द्रकान्ताय तां चन्द्राङ्गदवर्मणे ॥
वैवाहिकेन विधिना ददौ राजा महोत्सवैः ॥ १४० ॥

भूमण्डलस्था भूपाला विवाहं समुपागताः ॥
सर्वे सम्मानिता राज्ञा दानमानादिना तदा ॥ ४१ ॥

नानालङ्कारसंयुक्तं पारिबर्हं वराय राट् ॥
ददौ दासादि च धनं ब्राह्मणेभ्यो मुदा बहु ॥ ४२ ॥

सर्वान्प्रस्थापयामास तं तु जामातरं नृपः ॥
स्नेहेन स्थापयामास गृहे दुहितृवत्सलः ॥ ४३ ॥

विवाहार्हा देयेति विचार्य ॥ ३०-३८ ॥ मन्त्रिणं प्रेषयित्वा नलगोत्रजेन्द्रसेनपुत्रं चारुं चन्द्राङ्गदमानीय तस्मै विधिना महोत्सवेन सीमन्तिनीं ददौ ॥ ३९-४० ॥ तदोद्वाहार्थं प्राप्ता भूपा दानमानादिना सत्कृताः द्विजाश्च धनादिना । नानालङ्कारयुक्पारिबर्हं दासीदासांश्च वरायादात् ॥ ४१-४२ ॥ दुहितृवत्सलो राजा सर्वान्प्रस्थाप्य जामातरं गृहे स्थापया-

---

१ श्रेष्ठं.

भार्यास्नेहात्स्थितः सोऽपि जामाता श्वशुरालये ॥
निर्ययौ राजपुत्रः स जलक्रीडार्थमेकदा ॥ ४४ ॥

कालिन्दीं[1] स नदीं गत्वा राजपुत्रोऽपि सानुगः ॥
उभयत्र तटे तस्य चतुरङ्गं बलं स्थितम् ॥ ४५ ॥

राजा यमे[2]भगिन्यप्सु तरन्हर्षादितस्ततः ॥
जल्हादान्येऽपि च तथा प्रवाहे सुमनोहरे ॥ ४६ ॥

स मध्येयमु[3]नं दैवात्तरन्मग्नोऽभवत्तदा ॥
हाहाकारं विधायाह जनो वा उद्धरोद्धर ॥ ४७ ॥

भृत्याः सैन्यं च सकलं नाविकाश्चोदकान्तरे ॥
सर्वेऽप्यन्वेषयामासुर्निमज्ज्योन्मज्ज्य नोऽलभन् ॥४८॥

धावन्तश्चित्रवर्माणमेत्योचुर्दुःखपीडिताः ॥
जामाता ते जले मग्नः सोऽन्विष्टोऽपि न दृश्यते ॥४९॥

मास। स च भार्याप्रेम्णा तत्र स्थितः। एकदा क्रीडार्थं यमुनां गत्वोभयतीरस्थे चतुरङ्गसैन्ये पश्यति सति हर्षाज्जले तरंश्चन्द्राङ्गदोऽगाधे ह्रदे निमग्नः। उद्धरोद्धरेति सर्वे हाहाकारं चक्रुः ॥ ४३-४७ ॥ तत्रान्विष्य नालभन्। भृत्याः शीघ्रमेत्य तच्चित्रवर्माणमूचुः। कालिन्द्यां सकृन्मग्नोऽ-

---

१ यमुनां २ यमुना ३ पारे मध्ये षष्ठ्या वा.

स कालिन्द्यां तरन्मग्नो ह्रदेऽगाधजले क्षणात् ॥
सकृन्निमग्नो भूयो नो दृष्टोऽस्माभिर्गवेषितः[1] ॥ ५० ॥

इति दूतवचः श्रुत्वा स राजा मूर्च्छितोऽपतत् ॥
कन्या श्रवणमात्रेण प्राणांस्त्यक्तुं समुद्यता ॥ ५१ ॥

स राजा सान्त्वयन्पुत्रीं कालिन्दीं सत्वरं ययौ ॥
राजपत्नी समं पुत्र्या शोकार्ताऽपि नदीं गता ॥ ५२ ॥

सीमन्तिनी सा शोचन्ती प्राह देव पुरान्तक[2] ॥
शरणं त्वां प्रपन्नायै मरणं किं ददासि मे ॥ ५३ ॥

चतुर्दशेऽब्दे वैधव्यं ज्ञात्वा त्वां शरणं गता ॥
वृथा ते पूजनं जातं सोमवारे मया कृतम् ॥ ५४ ॥

दानं ते ध्रुवमश्रावि ततस्त्वां शरणं गता ॥
उपेक्षसे कुतो नेयमपकीर्तिर्हि ते हर ॥ ५५ ॥

न्विष्टोऽपि भूयः क्वापि न दृष्ट इति। इति श्रुत्वा राजा मूर्च्छितः कन्या च प्राणांस्त्यक्तुमुद्यता। तां निवार्य तया पत्न्या च सह यमुनां प्राप। सीमन्तिनी प्राह। हा देव पुरान्तक, चतुर्दशेऽब्दे वैधव्यं ज्ञात्वाऽपि शरणागतां मां न रक्षसि तेऽर्चनं वृथा किम्। ते दानं ध्रुवं श्रुत्वा शरणागतां मामुपेक्षसे

---

१ अन्वेषितः २ हे त्रिपुरांतक.

स्मृत्वा गुर्वीं याज्ञवल्क्यपत्नीं प्राह शुचाऽर्दिता ॥
अहो व्रतं मे कथितं सौभाग्यस्थैर्यदं त्विदम् ॥ ५६ ॥

तद्वाक्यं शिरसा धृत्वा भवानीशो मयाऽर्चितः ॥
कथं कृता ममोपेक्षा त्वया शिव शिव प्रभो ॥ ५७ ॥

सीमन्तिनी विलप्यैवं मर्तुं कृतमतिस्तदा ॥
शोकेन महता युक्ता नदीनिकटमागता ॥ ५८ ॥

तथाविधां पिता दृष्ट्वा धावंस्तां धर्तुमागतः ॥
वात्सल्येन समालिंग्य दुःखितोऽभूद्भृशं नृपः ॥ ५९ ॥

पुरोहिता मन्त्रिणश्च सैन्यं चापि सुदुःखितम् ॥
अन्वेष्टुमाह्वयामास नाविकान्लोकपालकः ॥ १६० ॥

नदीन्हदानि सर्वाणि ते विविच्यापि नाप्नुवन् ॥
ततोऽतीव शुशोचार्ता बाला राज्ञाऽपि बोधिता ॥ ६१ ॥

भृत्या राजकुमारस्य शोकेन महताऽऽवृताः ॥
इन्द्रसेनाय तत्पित्रे कथयामासुरर्दिताः ॥ ६२ ॥

ते नेयमपकीर्तिः । व्रतेन ते सौभाग्यस्थैर्यमिति मैत्रेयीवाक्यं शिरसा धृत्वा तेऽर्चनं कृतम् । हे हरे, कथमुपेक्षसे ॥ ४८-५७ ॥ एवं विलप्य मर्तुं नदीं प्रविष्टा । राजा शीघ्रं तां धृत्वा वात्सल्येनालिंग्य दुःखितः । मन्त्रिपुरोहिताः सैन्यं च दुःखितम् । सर्वनदीह्रदा अन्विष्टा अपि पतिर्न प्राप्त इति सीमन्तिनी बोधिताऽपि शुशोच । राजभृत्या गत्वेन्द्रसेनाय तदूचुः ।

इन्द्रसेनोऽपि तच्छ्रुत्वा शोकं कृत्वा भृशं ततः ॥
महिष्या सममागत्य निमग्नो यत्र चात्मजः ॥ ६३ ॥

विलेपतुर्भृशं तत्र मीलितौ तावुभावपि ॥
हा[1] हा कुमारेति शिर उरस्ताडनपूर्वकम् ॥ ६४ ॥

हा पुत्र हा गुणनिधे इति राज्ञी शुशोच सा ॥
सैन्यं मन्त्री नागराश्च सर्वेऽपि भृशदुःखिताः ॥ ६५ ॥

क्व गतोऽसि प्राणनाथा[2] इति सीमन्तिनी तदा ॥
पतिता तान्विलोक्यान्ये दुःखिताः श्वशुरादयः ॥६६॥

सीमन्तिन्याह पितरं किं वृथा जीवितेन मे ॥
किमैश्वर्येण राज्येन कुर्वेऽनुगमनं खलु ॥ ६७ ॥

अथापृच्छन्नृपो विप्रा यदिच्छति सुता तु तत् ॥
विप्रा ऊचुर्धवशवं विनाऽनुगमनं कथम् ॥ ६८ ॥

स सस्त्रीकः शोकार्तस्तत्रागतः। हा हा कुमारेति शिरस्ताडनपूर्वकं शुशोच। हा पुत्र गुणनिधे इति राज्ञी शुशोच। नागरा मन्त्री सैन्यं सर्वं दुःखितम्। हा प्राणनाथ, क्व गतोऽसीति पतितां सीमन्तिनीं दृष्ट्वा सर्वे दुःखिताः ॥ ६८-६६ ॥ सीमन्तिनी आह। किं वृथा जीवितेन राज्यै-

---

१ इदमिंद्रसेनवाक्यम् २ दूराद्धूते प्लुतिः.

शवमन्वेष्य कालिन्द्यां ततः [1]पृष्टं समाचर ॥
स प्राह लभ्यते नैव तत्किं कार्यमतः परम् ॥ ६९ ॥
द्विजा ऊचुर्न तावद्धि कार्यं निश्चीयते न हि ॥
जीवितो वा मृतो वेति पुत्रीमाश्वासयन्नृपः ॥ ७० ॥
पुरोहिता मन्त्रिणश्च दुःखिताः प्राह तौ नृपौ ॥
भाव्यं त्वपरिहार्यं हि विधिलेखो न चान्यथा ॥ ७१ ॥
नान्यथा क्रियते भावि देवैरपि ततो मृषा ॥
दुःखमेतदतो भूपौ गच्छतं स्वपुरं किल ॥ ७२ ॥
ततो गतावुभौ भूपाविन्द्रसेनोऽतिदुःखितः ॥
बहुधा बोधितोऽपि ज्ञैर्न विसस्मार तां शुचम् ॥ ७३ ॥
सर्वं राज्यादि सन्त्यज्य पुत्रशोकार्दितोऽवसत् ॥
आक्रान्तं तत्पुरं तस्य दायादैः क्रूरमानसैः ॥ ७४ ॥
कारायां स्थापयामासुर्महिष्या सह तं नृपम् ॥
उपेक्ष्य सर्वभोगांस्तौ पुत्रशोकेन दुःखितौ ॥ ७५ ॥

श्चर्येण चानुगमनं कुर्वे। राजा तद्विप्रेभ्यो न्यवेदयत्। विप्रा ऊचुः। शवं विना नानुगमनं। मृतो वा नवेति न निश्चीयते। यावच्छवो न लभ्येत तावन्न कार्यमिति श्रुत्वा राजा पुत्रीमाश्वासयत्। भाव्यमपरिहार्यं। विधिलेखो नान्यथा क्रियते देवैरपीतो मृषा दुःखम्। स्वपुरं प्रति यातेति पुरोहितादिभिर्बोधितौ राजानौ स्वपुरं गतौ ॥ ६७-७२ ॥ बोधितोऽपीन्द्रसेनो दुःखं न विसस्मार। राज्यं त्यक्त्वा शोकार्तोऽभूद्दायादैस्तत्पुरमाक्रम्योपेक्षितसर्वसुखं सस्त्रीकं तं कारायां स्थापयामासुः ॥ ७३-७५ ॥ चित्रवर्मा

---

१ धवानुगमनं पूर्वं पृष्टं.

पुत्रीं ररक्ष यत्नेन चित्रवर्मा नृपो गृहे ॥
लोकनिन्दापनुत्त्यै सा प्राणांस्त्यक्तुं समुद्यता ॥ ७६ ॥

तामाश्वास्याब्रवीद्राजा पुत्रो बाले कुले न मे ॥
एका पुत्री त्वमस्माकं पुत्रवत्त्वां[1]ऽनुपालये ॥ ७७ ॥

लोका निन्दन्तु वैधव्याचारः शास्त्रादृते कथम् ॥
वैधव्याचरणं बाले वर्षेऽतीते समाचर ॥ ७८ ॥

इति तातवचः श्रुत्वा दुःखिता साऽवदच्छिव ॥
हा देव शूलपाणे मां कथमेवमुपेक्षसे ॥ ७९ ॥

इति शोकार्दिता साऽपि नियमेनाचरद्व्रतम् ॥
उपोष्य सोमवारेऽर्च्यं भक्त्येश्वरमपूजयत् ॥ १८० ॥

कुमारस्तु निमग्नोऽसौ कालिन्दीसलिले विधेः ॥
प्रवाहपतितोऽगात्स पातालं यत्र वासुकिः ॥ ८१ ॥

नागिन्यो नागलोकस्था यमुनाह्रदमागताः ॥
नदीप्रवाहमग्नं तं ददृशुर्नृपनन्दनम् ॥ ८२ ॥

लोकनिन्दापनुत्त्यै मर्तुमुद्यतां पुत्रीं यत्नात्संरक्ष्याश्वास्य तामाह। मे कुले त्वमेका पुत्रवत्त्वाऽनुपालये। वर्षेऽतीते शास्त्रतो वैधव्याचारं कुर्विति श्रुत्वा साऽऽह। हा शिव, कथं मामुपेक्षसे इति। शोकार्ताऽपि सोमवारे उपोष्य

---

१ त्वां.

दृष्ट्वा मृतोपमं धृत्वा सिषिचुर्दययाऽमृतम् ॥
अमृतस्पर्शनादेव मृतप्रायोऽपि चोत्थितः ॥ ८३ ॥

नागकन्यास्तमादाय तक्षकाय न्यवेदयन् ॥
विचित्रं नगरं दृष्ट्वा साश्चर्योऽभून्नृपात्मजः ॥ ८४ ॥

पातालरचनां दृष्ट्वा शोभां चन्द्रपुरीनिभाम् ॥
गोपुराणि[1] सरत्नानि तडिद्वत्सोज्ज्वलानि च ॥ ८५ ॥

वैडूर्यनीलमाणिक्यवज्रमुक्ताफलाञ्चितैः ॥
महारम्यैरपि गृहैः पुरं भातं हिरण्मयम् ॥ ८६ ॥

चन्द्रकान्तिसमां भूमिं कपाटैश्च हिरण्मयैः ॥
नानारत्नैरनुपमैर्युतं गेहं समाविशत् ॥ ८७ ॥

सभां ददर्श महतीं सभ्या यत्राहयो[2]ऽखिलाः ॥
दृष्ट्वा सर्पानसंख्यातानाश्चर्यं प्राप भूमिपः ॥ ८८ ॥

नियमेन भक्त्या चेश्वरमानर्च। यत्र चन्द्राङ्गदो मग्नस्तत्र नागकन्या एत्य मृतप्रायं तं सुधासेचनाज्जीवयित्वा वासुकये न्यवेदयन् ॥ ७६-८४ ॥ चन्द्राङ्गदश्चित्रं पुरं चन्द्रपुरीमिव पातालरचनां रत्नाञ्चितगोपुराणि ॥ ८५ ॥ नीलमाणिक्यवज्राद्यञ्चितगृहाढ्यं हिरण्मयं पुरं, चन्द्रकान्तिसमां भूमिं, नानारत्नाञ्चितहिरण्मयकपाटानि, महतीं सभां, तत्रासंख्यातसर्पान्मध्ये

---

१ पुरद्वाराणि २ सर्पाः.

मध्येसभं महापीठे नागनाथं सुशोभितम् ॥
सूर्यकान्तिसमाभातं सूपविष्टं महोन्नतम् ॥ ८९ ॥

विद्युत्प्रायानेकरत्नयुक्तानेकफणान्वितम् ॥
पीतं वासो वसानं तं कुण्डलैरभिरञ्जितम् ॥ १९० ॥

अनेकरत्नखचितमुकुटैश्च विराजितम् ॥
फणासहस्रसुच्छत्रैः कमनीयैश्च मण्डितम् ॥ ९१ ॥

नवयौवनसंयुक्ता नानाभरणभूषिताः ॥
पतिं भजन्तीरमिता अपि तत्र ददर्श सः ॥ ९२ ॥

सभायामुपविष्टं तं नागराजं महाद्युतिम् ॥
दृष्ट्वा राजकुमारोऽसौ साष्टाङ्गं प्रणनाम ह ॥ ९३ ॥

पप्रच्छ नागपः कन्याः कस्यायं कुत आगतः ॥
कुत्र स्थितोऽयं पुरुषो दृश्यते शुभलक्षणः ॥ ९४ ॥

नागकन्या अथ प्रोचुर्वंशो ज्ञातो न चास्य तु ॥
कालिन्द्यास्तु[1] प्रवाहेऽयं लब्धोऽस्माभिरिहाहृतः[2] ॥९५॥

महापीठे सूर्यकान्ति भास्वद्रत्नयुक्तानेकफणं पीतवस्त्रं नानारत्नाञ्चितमुकुट-कुण्डलधरं भूषितानेकतरुणस्त्रीसेवितं नागराजं दृष्ट्वा साष्टाङ्गं ननाम ॥ ८६-९३ ॥ नागराजः कन्या आह । कोऽयं कुत आगतः शुभलक्षणः ।

१ पारे मध्ये षष्ठ्या वा २ आनीतः.

इत्युक्तस्तं स पप्रच्छ नाम किं ते क्व जन्म ते ॥
किमर्थमागतोऽसि त्वं वद देशः क्व वा तव ॥ ९६ ॥

राजपुत्र उवाचाङ्ग यस्तु भूमण्डले श्रुतः ॥
नैषधाधिपतिः श्रीमान्पुण्यश्लोको नलाभिधः ॥ ९७ ॥

इन्द्रसेनः सुतस्तस्य मम जन्म ततोऽभवत् ॥
चन्द्राङ्गद इति ख्यातो गतोऽहं श्वशुरालयम् ॥ ९८ ॥

निमग्नोऽहं जलक्रीडानिरतो यमुनाजले ॥
अगाधे विधियोगेन निमग्नो मूर्च्छितोऽभवम् ॥ ९९ ॥

ततः प्रवाहपतितं मामादायाहिकन्यकाः ॥
आनिन्युः सफलं मेऽद्य जन्म ते दर्शनादभूत् ॥ २०० ॥

पूर्वार्जितेन पुण्येन धन्यं जातं हि जीवितम् ॥
त्वत्पाददर्शनादद्य कृतार्थोऽस्मि न संशयः ॥ १ ॥

श्रुत्वा सकरुणं वाक्यं हृष्टस्तक्षकपोऽब्रवीत् ॥
भयं ते माऽस्तु पुत्रेति प्रददौ धैर्यमुत्तमम् ॥ २ ॥

ता ऊचुर्नास्य वंशो ज्ञातः कालिंद्यां लब्धोऽत्रानीतः ॥ ९४-९५ ॥ नागेशस्तं पप्रच्छ। किं ते नाम, क्व जन्म, क्व देशः, किमर्थमागतोसि। चन्द्राङ्गद आह। नैषधेशः पुण्यश्लोको यो नलस्तज्ज इन्द्रसेनस्तत्पुत्रोऽहं चन्द्राङ्गदः। श्वशुरगृहं गतो दैवाद्यमुनायां मग्नोऽभवं। तं मामादाय कन्या आनिन्युः। सफलं मे जन्म। पूर्वार्जितान्मे सफलं जीवितं। ते पददर्शनात् कृतार्थोऽस्मि। शेष आहाभयं तेऽस्तु। त्वं निर्मलो भासि। त्वद्गृहे

शेषोऽब्रवीद्राजपुत्र भासि त्वमतिनिर्मलः ॥
युष्माकं सदने नित्यं को देवः पूज्यते वद ॥ ३ ॥

इति राजसुतः पृष्टो हर्षनिर्भरमानसः ॥
सविस्तरमवादीत्तं देवोऽस्माकं हि शङ्करः ॥ ४ ॥

देवः समस्तदेवानां यस्य नाम सदाशिवः ॥
वामभाग उमा यस्य स देवः पूज्यते शिवः ॥ ५ ॥

तत्तेजसोऽजंनि[1] ब्रह्मा जगत्सृजति राजसः ॥
यः सदाशिव इत्युक्तः स देवः पूज्यते शिवः ॥ ६ ॥

यस्य सत्त्वगुणादेव महाविष्णुर्जजान ह ॥
लोकानां पालको नित्यं स देवः पूज्यते शिवः ॥ ७ ॥

तमोगुणाश्च यस्यैव रुद्रा एकादशाभवन् ॥
संहर्तारोऽस्य जगतः स देवः पूज्यते शिवः ॥ ८ ॥

आकाशवायुतेजोऽम्बुपृथिवीव्यापकोऽधिकः ॥
इच्छामात्रेण यः स्रष्टा स देवः पूज्यते शिवः ॥ ९ ॥

को देवः पूज्यते। चन्द्राङ्गद आह। शङ्करः सर्वेषां देवः सदाशिवो नो दैवतं। यद्वामाङ्गे उमा ॥ ९६-२०४ ॥ यत्तेजसा जगत्स्रष्टा राजसो ब्रह्मा, यत्सत्त्वगुणाल्लोकपालो विष्णुर्यतो जगत्संहर्तारस्तामसा एकादशरुद्राः। यः पञ्चभूतव्यापक इच्छया स्रष्टाऽप्यसक्तोऽजश्चिन्मयो निरञ्जनः शास्त्रकृत,

१ जातः.

सर्वभूतेष्वसक्तोऽजश्चिन्मयात्मा निरञ्जनः ॥
अरूपोऽचिन्तनो देवः स देवः पूज्यते शिवः ॥२१०॥

यः शास्त्रयोनिर्यस्योभे कुण्डले शेषतक्षकौ ॥
त्रिनेत्रश्चन्द्रमौलिर्यः स देवः पूज्यते शिवः ॥ ११ ॥

इति तस्य वचः श्रुत्वा सन्तुष्टो नागनायकः ॥
राजपुत्रं समालिङ्ग्य तुष्टोऽस्मीति तमब्रवीत् ॥ १२ ॥

राजपुत्र समृद्धं मे राष्ट्रमेतद्ददामि ते ॥
पाताल एव तिष्ठ त्वं भुक्त्वा भोगाननेकशः ॥ १३ ॥

मल्लोके यानि रत्नानि मुख्यान्यपि च सर्वशः ॥
तुभ्यं दास्यामि तिष्ठ त्वं सुखेनैवेह सर्वदा ॥ १४ ॥

पश्य पाताललोकोऽयं स्थानं त्वनुपमं त्विदम् ॥
कल्पद्रुमैश्च सम्पूर्णं मम राज्यमकण्टकम् ॥ १५ ॥

यस्य शेषतक्षकौ कुण्डले व्याघ्रचर्माम्बरं च स त्रिनेत्रश्चन्द्रमौलिर्नो दैवतं ॥ ९-११ ॥ शेषस्तुष्टस्तमालिंग्याह तुष्टोऽस्मि । समृद्धं राष्ट्रं ते दद्मि । भोगान्भुक्त्वा पाताल एव तिष्ठात्रत्यमुख्यरत्नानि ते दास्ये ॥ १२-२१४॥ अनुपमं पातालं मेऽकण्टकं राज्यम् ॥ १५ ॥ भूमौ स्वप्नेऽपि दुर्लभममृत-

१ शास्त्रकर्ता शास्त्रप्रमेयः.

नामृतं दृश्यते भूमौ स्वप्नेऽपीह जलोपमम् ॥
वापीकूपतडागेषु परिपूर्णमिहामृतम् ॥ १६ ॥

न रोगा नापि पीडाश्च नास्ति मृत्युभयं त्विह ॥
स्वप्नावस्थामपि प्राज्ञ कोऽपि नैवेह पश्यति ॥ १७ ॥

सुखं वस कुमार त्वं सर्वचिन्ताविवर्जितः ॥
इति प्रेम्णा राजपुत्रं प्रार्थयामास सर्वशः ॥ १८ ॥

राजपुत्रोऽब्रवीन्नाग[1] पुत्र एकोऽस्म्यहं पितुः ॥
चतुर्दशाब्दिका भार्या तन्वीशा[2]र्चनतत्परा ॥ १९ ॥

पाणिग्रहोऽधुनैवाभूत्तत्र लग्नं मनो मम ॥
पित्रोः पादाम्बुजं द्रक्ष्ये यतस्तौ दुःखितौ स्थितौ २२०

निमग्ने मयि कालिन्द्यां पितरौ शोकमूर्च्छितौ ॥
पत्नी चापि मृतं मत्वा मां मरिष्यंति तेऽखिलाः २१

दृष्टं वः पादकमलं हृष्टं जातं मनो मम ॥
कष्टं हत्वाऽविता[3]ः प्राणा इष्टं मे स्वीयदर्शनम् ॥ २२ ॥

मत्र कूपादिपूर्णम्। नात्र रोगपीडा मृत्युभयं च। न स्वप्नोऽत्र सुखं वसेति प्रार्थितश्चन्द्राङ्गद आह। पित्रोरेकोऽहं पुत्रः। भार्या चतुर्दशाब्दा व्रतपराऽधुनोद्वाहोऽभूत्तत्र मनो लग्नं। दुःखितपित्रोः पदं द्रक्ष्ये। तौ पत्नी च मां मृतं मत्वा मरिष्यन्ति। वः पदं दृष्टं। मनो हृष्टं। स्वेष्टदर्शनं कारये-

१ हे नाग २ ईशः ३ रक्षिताः.

इत्युक्तस्तक्षकेशोऽपि नानाभूषाम्बराणि च ॥
दत्त्वाऽमृतं पाययित्वा पत्न्यर्थमपि चार्पयत् ॥ २३ ॥

दत्त्वाऽपूर्वाणि रत्नानि कल्पवृक्षफलानि च ॥
सुदुर्लभान्यमूल्यानि भूमौ तानि च सोऽर्पयत् ॥ २४ ॥

कुमारं तस्य रक्षार्थं दत्त्वा प्राह यदा यदा ॥
हृदा स्मरसि मां राजन्कार्यसिद्धिर्भवेत्तव ॥ २५ ॥

इत्युक्त्वा स च सन्तोषाद्वाहनार्थं पुनर्ददौ ॥
मनोवेगं चतुरगं[1] तुरगं सकुमारकम् ॥ २६ ॥

एवं स राजतनयः प्रेम्णा प्रस्थापितोऽभयः ॥
नागाधिपेन हृष्टेन प्रतस्थे चानुनीय तम् ॥ २७ ॥

नागाधिपं नमस्कृत्य स सनागोऽश्वमारुहत् ॥
मनोवेगेन निरगान्नागपुत्रेण संयुतः ॥ २८ ॥

निमग्नो यत्र कालिन्द्यां क्षणात्तत्स्थानमागतः ॥
जलाद्बहिः स निर्गत्य तटे तस्थौ यमस्वसुः[2] ॥ २९ ॥

त्युक्तः शेषोऽमृतं पाययित्वा पत्न्यर्थं च दत्त्वाऽपूर्वभूषाम्बररत्नकल्पद्रुफलानि ॥ १९-२४ ॥ रक्षार्थं स्वकुमारं च दत्त्वाऽऽह। यदा मां स्मरसि तदा ते कार्यसिद्धिर्भवेत्। इत्युक्त्वा मनोवेगाश्वं दत्त्वा प्रेम्णा प्रस्थापयामास। स तं नत्वा नागपुत्रेण सहाश्वमारुह्य कालिन्द्यां यत्र मग्नस्तत्रोद्गतः

१ चतुरं यथा तथा गच्छतीति चतुरगः २ यमुनायाः.

सीमन्तिनीभि[1]: स्निग्धाभि[2]: सीमन्तिन्यपि तत्र च ॥
स्नातुं सोमदिने दृष्ट्वा भूपतिं साऽवदत्सखीम् ॥२३०॥
पश्य पश्येदमाश्चर्यं निर्गतोऽयं जलाद्बहिः ॥
सखि कोऽयं पुमान्नागपुत्रेण सह गच्छति ॥ ३१ ॥
राक्षसोऽयं वेषधरः कोऽयं मानुषरूपधृक् ॥
तुरगारूढ आयाति भाति यो मे मनोहरः ॥ ३२ ॥
अहो रूपमहो तेजश्चकास्ति[3] द्युपतिर्यथा ॥
दिव्यमाल्याम्बरधरो यत्सुगन्धिः प्रसर्पति ॥ ३३ ॥
दशयोजनपर्यन्तं यत्सुगन्धिः प्रवर्तते ॥
दृष्टो मे रूपवानीदृक्पुरा क्वापीति भाति मे ॥ ३४ ॥
भीता भीताऽपि तद्रूपं दृष्ट्वा दृष्ट्वा पुनः पुनः ॥
मद्भर्त्रा सदृशः कोऽयमिति सस्मार सा पतिम् ॥३५॥
राजपुत्रोऽपि तां वीक्ष्य प्राह केयं प्रियासमा ॥
प्रिया चेत्कण्ठसूत्रादि मुक्ताहारश्च नेक्ष्यते ॥ ३६ ॥

॥ २६-२९ ॥ तद्दिने सोमवारे सखीभिः सह स्नानार्थमागता सीमन्तिनी तं दृष्ट्वाऽऽह। सखि कोऽयं नागपुत्रेण सह जलान्निर्गतः राक्षसो वेषधारी नरो वाऽश्वारूढ एति। अहो रूपमहो तेजः सूर्यवत्। यत्सुगन्धिर्दशयोजनं प्रसरति ॥ ३०-३३ ॥ ईदृग्दिव्यमाल्यधर ईदृक्पुरा क्वापि दृष्ट इति भाति। एवं शश्वद्दृष्ट्वा दृष्ट्वा भीता मत्पतिसदृश इति पतिं सस्मार ॥ ३४-३५ ॥ स च तां वीक्ष्याह। केयं। प्रिया चेत्कण्ठसूत्रहारादि न

१ स्त्रीभिः २ वयस्याभिः ३ शोभते.

पुनर्वीक्ष्याङ्गलक्ष्माणि प्राहास्यां कुंकुमं निशा ॥
नैव प्राणप्रियातुल्या केयं चिन्तासमन्विता ॥ ३७ ॥

विचार्यैवं समुत्तीर्य सोऽश्वात्स्मृत्वा वधूं नृपः ॥
नागपुत्रेण सहितो नदीतीर उपाविशत् ॥ ३८ ॥

सीमन्तिनीं समाहूय पप्रच्छ प्रीतिसंयुतः ॥
क्व ते जन्म च किं नाम वद कस्ते पतिः सति ॥ ३९ ॥

बाल्येऽपि दुःखिता कस्माद् दृश्यते शोकलक्षणम् ॥
विस्तरेण वदस्वेति सोऽतिस्नेहात्स्म पृच्छति ॥ २४० ॥

सीमन्तिनीति चाकर्ण्य स्वयं ह्रीता[२]ऽवदत्सखीम् ॥
सखि मे सर्ववृत्तान्तं कथयास्मै त्वमादितः ॥ ४१ ॥

सखी तमाह सुदती ख्याता सीमन्तिनी सती ॥
चन्द्राङ्गदस्य महिषी पुत्रीयं चित्रवर्मणः ॥ ४२ ॥

दृश्यते। न च कुंकुमं हरिद्रा च। केयं चिन्ताग्रस्तेति विचार्योत्तीर्य तीर उपविश्य सीमन्तिनीमाहूयाह। किं ते नाम, क्व जन्म, कः पतिः, बाल्ये कुतो दुःखं, प्रेम्णा पृच्छामि सर्वं वद। ह्रीता सीमन्तिनी सखीमाह। सर्वं कथयेति। सखी आह। सीमन्तिनीयं चन्द्राङ्गदपत्नी चित्रवर्मपुत्री

१ हरिद्रा २ लज्जिता.

अस्याश्चन्द्राङ्गदो नाम पतिः सोऽतीव सुन्दरः ॥
जले क्रीडन्निहैवाङ्ग निमग्नो दैवयोगतः ॥ ४३ ॥

शोकेन तेन चार्तेयं वैधव्येनातिदुःखिता ॥
सुचिरेणातिशोकेन नष्टं लावण्यमुत्तमम् ॥ ४४ ॥

सोमवारव्रतं नित्यं करोत्यद्य ह्युपोषिता ॥
स्नानार्थमागताऽस्त्यद्य कालिन्द्यां विमले जले ॥ ४५ ॥

श्वशुरावपि चैतस्याः पुत्रदुःखेन दुःखितौ ॥
राष्ट्रं हृत्वा तु दायादैः कारायां स्थापितौ तु तौ ४६

ततः सीमन्तिनी त्वेषा शूलपाणिं समर्चति ॥
सोमवारे सदा भक्त्या कुरुतेऽसावुपोषणम् ॥ ४७ ॥

सख्यामेवं ब्रुवन्त्यां सा प्राह सीमन्तिनी स्वयम् ॥
भवान्कन्दर्परूपः क इत्थं भूतं क्व पृच्छति ॥ ४८ ॥

गन्धर्वो वा भवान्सिद्धः सुरो वा किन्नरोऽथवा ॥
नरो वा मे नृवद्भाति किमर्थं पृच्छसीह माम् ॥ ४९ ॥

॥ ३६-४२ ॥ अस्याः पतिरत्रैव दैवान्निमग्नोऽतो वैधव्यशोकेन दुःखिता । लावण्यं नष्टं । सोमवारव्रतं करोत्यतः स्नानार्थमागता । राष्ट्रं हृत्वा दुःखितौ श्वशुरौ कारायां दायादैर्बद्धौ । तत इयमुपोष्य सोमवारे शिवमर्चति ॥ ४३-४७ ॥ सीमन्तिनी आह । कामरूपो भवान्क्वेत्थं पृच्छति । नृवद्भातोऽपि भवान्गन्धर्वः सिद्धो देवो वा किमर्थं पृच्छति । प्रेम्णा ते

स्नेहभावेन ते प्रश्नो गहनोऽतीव भाति मे ॥
दृष्टो मया भवान्क्वापि नाधिगच्छामि निश्चयम् ॥२५०॥

आप्तभावेन पृष्टत्वात्स्वजनो लक्ष्यते भवान् ॥
किं नाम भवतो ब्रूहीत्युक्त्वा सस्मार सा पतिम् ॥५१॥

स्मृत्वा स्वपतिरूपं सा विललापातिदीनवत् ॥
सा बाष्पाकुलिता जाता पतिता धरणीतले ॥ ५२ ॥

तस्या दुःखं स विज्ञाय कुमारश्चकितोऽभवत् ॥
मुहूर्तमवरुध्यापि प्रादुश्चक्रे[1] स्वयं शुचम् ॥ ५३ ॥

कृत्वा स सुचिरं दुःखं प्रक्षाल्याश्रुमुखं स्वकम् ॥
त्वं तूष्णीं तिष्ठ मा शोचीः सिद्धोऽहमिति सोऽब्रवीत् ५४

सीमन्तिन्याः सशोकाया उपागत्य नृपात्मजः ॥
करे धृत्वा स तामूचे मा शुचः कथयामि ते ॥ ५५ ॥

इत्युक्त्वा तां रहो नीत्वा स प्राह परिसान्त्वयन् ॥
तव भर्ता मया दृष्टः स सुखी वर्ततेऽन्तिके[2] ॥ ५६ ॥

प्रश्नो गहनः। आप्तत्वेन स्वजन इव लक्ष्यत इति पतिं स्मृत्वा दीनवद्विलपन्ती भुवि पतिता ॥ ४८-५२ ॥ तां तथाविधां दृष्ट्वा मुहूर्तं धैर्यं धृत्वाऽपि शुशोच ॥ ५३ ॥ चिरादश्रु प्रक्षाल्य तां करे धृत्वाऽऽह। तूष्णीं तिष्ठ, मा शुचः, सिद्धोऽहमित्युक्त्वा तां रहस्याह। ते भर्ता मे दृष्टोऽन्तिके सुखी

१ प्रकटं चक्रे २ समीपे.

व्रतपुण्यप्रभावात्ते शीघ्रमेष्यति ते पतिः ॥
तदेतां मा कृथाश्चिन्तां तं तृतीयेऽह्नि पश्यसि ॥ ५७ ॥

सखा मे ते पतिः कान्ते स मत्प्राणो ददामि ते ॥
शपथं शिवपादस्य सन्देहो नात्र बालिके ॥ ५८ ॥

इत्याभाष्य पुनः प्राह नेदमुद्धाटयाधुना ॥
तच्छ्रुत्वाऽतीव दुःखार्ता साऽबला प्रेमविह्वला ॥ ५९ ॥

सिषेच लोचनाभ्यां सा प्रेमाश्रु यदखण्डितम् ॥
प्राक्तः[1] शतगुणं मेने तं मे पतिरयं त्विति ॥ २६० ॥

मुखारविन्दं सदृशं लोचने कोमलेऽमले ॥
चपला मृदुला चापि वागास्यमपि हास्ययुक् ॥ ६१ ॥

तादृक्कोऽन्योऽस्ति मृदुवाग्भाषतेऽपि तथा कथम् ॥
परः करं मे धर्ताऽयं मृदुस्स्पर्शोऽप्यवेदि मे[2] ॥ ६२ ॥

पत्युर्लक्ष्माणि सर्वाणि मया ज्ञातानि सर्वशः ॥
तानि भान्तीह सर्वाणि तस्मादेष हि मे प्रियः ॥ ६३ ॥

आस्ते। व्रतप्रभावात्तृतीयेऽह्नि पश्यसि, चिन्ता माऽस्तु। स मे सखा प्राणसमः शिवशपथं वहे। नात्र संशयः ॥ ५४-५८ ॥ इदं नोद्धाटयेति श्रुत्वा प्रेमविह्वला सा प्रेमाश्रु जहौ। मेऽयं पतिरिति शतगुणं प्रेमवृद्धं सस्मितं मुखं पद्मनेत्रे मृदुवाक्यं च नान्यः स परः कथं मे करं स्पृशेत्। स्पर्शोऽपि मृदुः ॥ ५४-६२ ॥ सर्वपतिचिह्नान्यत्र भान्त्यतोऽयं मे

१ पूर्वतः २ मया ज्ञातः.

अस्य दर्शनमात्रेण प्रेमाश्रु बहु निर्गतम् ॥
नात्र सन्देह इत्युक्त्वा भूयोऽभूत्सा ससंशया ॥ ६४ ॥

कुतो मे दैवहीनायाः पतिरेष्यति नेदृशम् ॥
पुण्यं यमस्वसरि यो मग्नः स कथमेष्यति ॥ ६५ ॥

मृतोऽपि पुनरायात एवं नापि कथा श्रुता ॥
स्वप्नो दृष्टोऽथवा भ्रान्तिरनिर्वाच्यैव नैव किम् ॥ ६६ ॥

धूर्तोऽयं वेषधारी वा यक्षो वा राक्षसोऽथवा ॥
किन्नरो वा नरो वाऽयं कपटो मायिकोऽथवा ॥ ६७ ॥

किंवा तन्मुनिपत्न्युक्तव्रतयोगात्समागतः ॥
किं चित्रं गिरिजानाथे प्रसन्ने किमु दुर्लभम् ॥ ६८ ॥

शङ्करश्चेत्प्रसन्नोऽस्य कुतो दुःखं ददाति यः ॥
दग्धं वाऽपीष्टद इति चिन्तयामास सा सती ॥ ६९ ॥

पतिर्यद्दर्शनात्प्रेमाश्रु निर्गतामित्युक्त्वा पुनः साशङ्कमाह। कुतो दैवहीनाया मे पतिः। नेदृक्पुण्यं, मग्नः कथमेष्यति, एवं वार्ताऽपि न श्रुता, स्वप्नो वेयं भ्रान्तिर्वा। धूर्तोऽयं वेषधारी यक्षो रक्षोऽन्यो वा। किंवा मैत्रेयीवाक्ययोगादागतः पतिर्नात्र चित्रम्। ईशे प्रसन्ने किं दुर्लभं। क्व वा दुःखं। स

१ सर्वप्राणहर्तुर्यमस्य भगिन्यां यमुनायां २ दग्धमपि ददाति। अत्र मदालसाकथा सूचिता। सा मृता दग्धाऽपि कालांतरे शिवेन कुवलयाश्वाय भर्त्रे दत्तेति मार्कंडेये श्रूयते। स्कांदेऽपि दग्धा शबरी शबराय दत्तेति स्मर्यंते।

तावद्राजकुमारोऽश्वमारुरोह सहाहिना ॥
सीमन्तिनीं समापृच्छ्य प्रतस्थे गन्तुमालयम् ॥ २७० ॥

मनोवेगेन सोऽश्वोऽपि तस्य राष्ट्रमुपागमत् ॥
अग्रतः प्रेषयामास नागपुत्रं नृपात्मजः ॥ ७१ ॥

नाग त्वं गच्छ कथय द्विषंते मे समागमम् ॥
न शृणोति स चेत्तस्मै हनिष्यामीति शंस भोः ॥ ७२ ॥

इत्यादिष्टः स नागोऽपि ययौ त्वरितमग्रतः ॥
उपस्थायाग्रतः क्रूरं वचनं प्राह विद्विषम् ॥ ७३ ॥

व्रज चन्द्राङ्गदं द्रष्टुं कुटुम्बेन सह द्रुतम् ॥
पातालं यो ययौ सर्पराजं वीक्षितुमोजसा ॥ ७४ ॥

कालिन्द्यां मग्न इत्येवं मत्वा युष्माभिरत्र हि ॥
स्वामिघातः कृतस्तस्य पितू राष्ट्रं हृतं बलात् ॥ ७५ ॥

अद्य वच्मि हितं सद्यः शरणं तं हि गच्छत ॥
प्राणापेक्षाऽस्ति चेदिन्द्रसेनं सिंहासने कुरु ॥ ७६ ॥

दग्धमपि ददौ। एवं चिन्तयन्तीं तामापृच्छ्य चन्द्राङ्गदोऽश्वमारुह्य ॥ ६३-७० ॥ शीघ्रं पितृराष्ट्रमुपेत्य नागपुत्रमाह। त्वं गत्वा मदागमं शंस। न शृणोति चेत्तं हन्मीत्याज्ञप्तो नागपुत्रो गत्वा क्रूरगिरा शत्रूनाह[1]। स नद्यां मृत सर्पदर्शनं कृत्वा पातालादागतं चन्द्राङ्गदं द्रष्टुं शीघ्रं प्रयात। इति मत्वा स्वामिघातः कृतो राज्यं च हृतम्। हितं वच्मि। प्राणेच्छा चे-

१ शत्रवे.

मित्रं नागकुलं यस्य स वश्चूर्णीकरिष्यति ॥
तस्य चन्द्राङ्गदस्याशु दर्शनार्थं प्रयात भोः ॥ ७७ ॥

मद्वचो रोचते नो चेत्सोऽद्य प्राणान्हरिष्यति ॥
प्रेषितो नागनाथेन सहायायागतोऽस्म्यहम् ॥ ७८ ॥

इति तद्वचनं श्रुत्वा दायादाः प्रययुर्भयम् ॥
कृतं न साधु दुर्बुद्ध्या यास्यामः शरणं ततः ॥ ७९ ॥

बलात्कारो यदि भवेत्तक्षकोऽस्मान्हनिष्यति ॥
लोका निन्दां करिष्यन्ति गमिष्यन्त्यसवोऽपि नः २८०

एवं विचार्य ते भूपं वस्त्रभूषणभूषितम् ॥
सिंहासनेऽपि सस्त्रीकमुपवेश्य क्षमाप्य च ॥ ८१ ॥

इन्द्रसेनं प्रणम्योचुरपराधाः कृता हि नः ॥
त्वं प्राणान्रक्ष चास्माकमिति ते जगृहुः पदम् ॥ ८२ ॥

इन्द्रसेनं नृपं प्राह नागपुत्रो नृपाद्य ते ॥
पातालादागतः पुत्रो योऽगाच्छेषं निरीक्षितुम् ॥ ८३ ॥

दिन्द्रसेनं राज्यारूढं कृत्वा तं शरणं यात। नो चेच्छेषेण सहायार्थं प्रेषितोऽहं वो हन्मीति श्रुत्वा भीतास्त ऊचुः। दुर्धिया न साधु कृतं। ततः शरणं यामो नो चेन्नो हनिष्यति ॥ ७१-८० ॥ इति विचार्येन्द्रसेनं सत्कृत्य सस्त्रीकं तं सिंहासने उपवेश्यापराधान् क्षमस्व नस्त्राहीति पदं दधुः ॥ ८१-८२ ॥ नागपुत्र इन्द्रसेनमाह। शेषं द्रष्टुं गतस्ते पुत्रः

राजा श्रुत्वैव तद्वाक्यं मृतसञ्जीवनोपमम् ॥
दुःखितो मूर्च्छितो भूमौ पतितो महिषीयुतः ॥ ८४ ॥

नागपुत्रस्तमुत्थाप्य प्राह दुःखं तु विस्मर ॥
आयाति दर्शनार्थं ते वत्सोऽयं पुत्रवत्सल ॥ ८५ ॥

वीतशोकस्ततो राजा समाहूय स मन्त्रिणम् ॥
नगरं समलङ्कर्तुमादिदेशातिहर्षितः ॥ ८६ ॥

इत्यादिश्य स्वयं राजा परिवारेण संयुतः ॥
ययौ निरीक्षितुं पुत्रं महिष्या[१] सहितो द्रुतम् ॥ ८७ ॥

वृद्धाः पुरोहिताः सर्वे मन्त्रिणो नागरा नराः ॥
सुतं मृतमिवायातं कौतुकाद्द्रष्टुमुत्सुकाः ॥ ८८ ॥

ननन्दुः सकला लोका राजा प्राप्तमहासुखः ॥
कदा पुत्रमुखं द्रक्ष्य इति सञ्जातलालसः ॥ ८९ ॥

नेदुर्वाद्यानि सर्वत्र लोका हृष्टमनोरथाः ॥
उच्चैर्जयध्वनिं चक्रू राजपुत्राप्तिकारणात् ॥ २९० ॥

पातालादागत इति श्रुत्वा राजा पत्न्या सह मूर्च्छितः। तमुत्थाप्य नागपुत्र आह। दुःखं विस्मर पुत्रो दर्शनार्थमेतीति श्रुत्वा विशोको राजा मन्त्रिणमाहूय नगरमलङ्कर्तुमादिश्य सपरिवारः सस्त्रीको राजा ययौ। पुरोहितादयः सर्वे मृतमप्यागतं श्रुत्वा कौतुकं दिदृक्षवो ननन्दुः। कदा पुत्रं द्रक्ष्य इति राजा त्वरयामास ॥ ८३-८९ ॥ वाद्यानि नेदुः। हृष्टा लोका उच्चैर्जयशब्दं

१ भार्यया.

सर्वे ससम्भ्रमं प्राप्य ददृशुः पुत्रमुत्तमम् ॥
चन्द्राङ्गदोऽपि पितरं दृष्ट्वा प्रीत्या ननाम तम् ॥९१॥

प्रेम्णा पुत्रं समालिंग्य राजा हर्षजलाप्लुतः ॥
सगद्गदाक्षरः साश्रुनेत्रोऽदा[1]दाशिषं नृपः ॥ ९२ ॥

पुत्रं प्राहेन्द्रसेनोऽसौ बाल प्राणस्त्वमागतः ॥
शवोपमोऽभवं पुत्र त्वां विनेति पुनः पुनः ॥ ९३ ॥

सुतो मातरमालिंग्य कृशां तामतिदुःखिताम् ॥
प्राहाम्बां मन्निमित्तं ते कष्टमीदृगुपस्थितम् ॥ ९४ ॥

पुत्रोऽहं नैव ते शत्रुः पाताले सुखमुत्तमम् ॥
भोक्तुं गत्वा महादुःखं दत्तं ते नार्पितं सुखम् ॥ ९५ ॥

दिव्ये पातालविवरे गत्वा शेषस्य सन्निधिम् ॥
कष्टं दत्तं मयेदृक्ते नक्तंदिवमहो भृशम् ॥ ९६ ॥

अतीव मृदुलं मातुः स्वपुत्रविषये मनः ॥
अतस्ते कष्टमधिकं सुतस्य ग्रा[2]ववन्मनः ॥ ९७ ॥

चक्रुः । सर्वे ससम्भ्रमं गत्वा तं ददृशुः । चन्द्राङ्गदः प्रीत्या पितरं ननाम । सानन्दाश्रुः सगद्गदवाग्राजा तमालिंग्याह । त्वां विना शवप्रायोऽभवम् । त्वं प्राण आगतोऽसि ॥ ९०-९३ ॥ चन्द्राङ्गदो दुःखितां कृशां मातरमालिंग्याह । मन्निमित्तं ते कष्टम् ॥ ९४ ॥ पाताले सुखं भुक्त्वा ते कष्टं दत्तम् । नाहं ते पुत्रः किं तु शत्रुरहो मे भृशं कष्टं दत्तम् । मातुर्मनोऽतीव

---

१ ददौ २ पाषाणवत्.

मातुर्दुःखं न यो वेत्ति स मूढो मलवत्सुतः ॥
एकनाडीस्तन्यपानदानोत्तीर्णः कथं भवेत् ॥ ९८ ॥
न दैवतं परं मातुः पुत्रस्य कथमुद्धृतिः ॥
मातुर्ऋणात्ततः साक्षाद्भवानी जननी मता ॥ ९९ ॥
मात्रे ददाति यो दुःखं स मूर्खो नरकं व्रजेत् ॥
स सप्तजन्म दारिद्र्यं यायात्सन्ततिवर्जितः ॥ ३०० ॥
ततोऽन्ये द्रष्टुमायाताः स्वसारो भ्रातरोऽपि च ॥
प्रधानाद्या नागरिका लोकाः शोकान्तकं[1] सुतम् ॥ १ ॥
ततो हृष्टतमैः सर्वैः समं नगरमाविशत् ॥
उत्सवेनैव महता प्रययौ निजमन्दिरम् ॥ २ ॥
चन्द्रसेनोऽप्यतिप्रीत्या सत्कृत्यांशुकभूषणैः ॥
नागपुत्रं पुत्रमित्रं गमयामास सादरम् ॥ ३ ॥
प्राह चन्द्राङ्गदस्तातं नागेशेन ममोपरि ॥
कृतो महोपकारश्च मम प्राणाश्च रक्षिताः ॥ ४ ॥

मृदु। पुत्रस्य पाषाणवत् कठिनं। मातुर्दुःखं न वेत्ति स मल एवैकनाडी-स्तन्यदानार्पणात्कथमुद्धारः। माता भवानी ततोऽन्यन्न दैवतम् ॥९५-९९॥ मातृदुःखदः सन्ततिहीनः सप्तजन्म दारिद्रभाग्दुर्गतिं याति। ततो भ्रातृ-स्वसृनागरिकाद्या द्रष्टुमागताः। तैर्हृष्टैः सहोत्सवेन नगरं प्रविश्य प्रीत्या वस्त्रभूषणैः सर्वान्सत्कृत्य सत्कृतं नागपुत्रं प्रस्थापयामास। नागोपकारं निवेद्यानीतं सर्वं पित्रे दत्त्वा ननाम। इन्द्रसेन आह। मे स्नुषा दैव-

१ शोकहरं सुतं द्रष्टुमित्यन्वयः.

धनादि चामितं दत्तमित्युक्त्वा यत्समाहृतम् ॥
दत्त्वा तत्सकलं पित्रे प्रणनाम स तत्पदे ॥ ५ ॥

नागपुत्रस्तमामन्त्र्य ययौ राजा तु हर्षितः ॥
स्वभृत्यं प्रेषयामास चित्रवर्मपुराय सः ॥ ६ ॥

राजा प्राह तदा साध्वी स्नुषा मे दैवशालिनी ॥
तस्या धर्मेण मे पुत्रो जीवितो नात्र संशयः ॥ ७ ॥

आराधितस्तया देवः शङ्करः सर्वशङ्करः ॥
तेनैव रक्षितः पुत्रस्तत्सौभाग्यवती स्नुषा ॥ ८ ॥

इत्युक्त्वा त्वरितं दूतं प्रेषयामास भूमिपः ॥
इन्द्रसेनश्चित्रवर्मराज्ञे सर्वं निवेदितुम् ॥ ९ ॥

ततो दूतो गतः शीघ्रं चन्द्रवर्मपुरं शुभम् ॥
तस्मै शशंस तत्सर्वं जामात्रागमनादिकम् ॥ ३१० ॥

तच्छ्रुत्वाऽतीव सन्तुष्टश्चित्रवर्मा ददौ मुदा ॥
वार्ताहराय[1] वस्त्राणि भूषणानि महामनाः ॥ ११ ॥

शालिनी। तया शिव आराधितस्तेन पुत्रस्त्रात इति दूतान्प्रैरयत्ते चन्द्रवर्माणं गत्वा सर्वं न्यवेदयन् ॥ ३००-३०९ ॥ स च तेभ्यो वस्त्रभूषादि ददौ। ततः सपुत्रमिन्द्रसेनं महोत्सवेनानयत्। चन्द्रसेनः पत्न्याः शोकं

१ दूताय.

ततः स आह्वयामास पुत्रेण सहितं नृपम् ॥
इन्द्रसेनं च सोऽप्यागात्पुत्रदारादिसंयुतः ॥ १२ ॥

महोत्सवेन चानीतो वरश्चन्द्राङ्गदस्तदा ॥
सीमन्तिनीमुपागम्य तस्याः शोकं जहार सः ॥ १३ ॥

दिव्यवस्तून्यदात्तस्यै पातालादाहृतानि सः ॥
अमृतं पाययामास महानन्दस्तदाऽभवत् ॥ १४ ॥

वस्त्रभूषा ददौ पत्न्यै कल्पवृक्षफलान्यपि ॥
सा भूषादि दधौ याति यत्कान्तिर्दशयोजनम् ॥ १५ ॥

ततो महोत्सवेनासौ सीमन्तिन्या समं नृपः ॥
स्वपुरं प्रययावीदृक्सीमन्तिन्या [1]महाविधिः ॥ १६ ॥

ततः स्वपुरमायातं सीमन्तिन्या युतं सुतम् ॥
राजाऽप्यभिषिषेचासौ राज्यं चक्रेऽयुतं [2]समाः ॥ १७ ॥

सोमवारव्रतस्येदं लेभे सीमन्तिनी फलम् ॥
गौरीहरार्चनात्तस्या लब्ध इष्टार्थ उत्तमः ॥ १८ ॥

हृत्वा पातालादानीतं दिव्यवस्तु दत्त्वाऽमृतमपाययत्। कल्पवृक्षफलानि दिव्यवस्त्रादि च ददौ। यत्कान्तिरतीव दूरगा तैः सा भूषिता रेजे। ततस्तया सह स्वपुरमेत्य पित्रा राज्येऽभिषिक्तः सोऽयुतवर्षं राज्यं चक्रे। हे सोमवारे गौरीशार्चनादेवं सीमन्तिन्या इष्टार्थो लब्धः। श्रीगुरुराह। हे

१ महद्दैवं २ वर्षाणि.

एवं चित्रं व्रतमिदं सम्मतं मम दम्पती ॥
सुवासिनि शृणुष्वेदं प्रीत्या मे कथितं व्रतम् ॥ १९ ॥

त्वं कुरुष्व व्रतं त्वेतत्सौभाग्यं ते स्थिरं भवेत् ॥
अखण्डा श्रीश्च कन्याश्च पुत्रा आधेहि मद्वचः ॥ ३२० ॥

दम्पती ऊचतुः प्रीत्या भगवन्किं व्रतेन वाम् (नौ)[१] ॥
आवयोस्तव सेवैव तारिणी दुःखहारिणी ॥ २१ ॥

आवयोः प्राणनाथस्त्वं नो वां (नौ) देवस्त्वया विना ॥
स्मरणं तेऽस्त्वखण्डं वामि (नावि) ति तौ दधतुः पदे ॥ २२

श्रीगुरुर्दंपती प्राह युवाभ्यां हि मदाज्ञया ॥
सोमवारव्रतं कार्यं सैव सेवा परा मम ॥ २३ ॥

गुरुस्तथेति भाषन्तौ गमयामास दम्पती ॥
तावत्तत्पितरः प्राप्ताः पुत्रदर्शनलालसाः ॥ २४ ॥

ते कन्यासुतवार्तां तां श्रुत्वा जल्हादिरेऽखिलाः ॥
ब्राह्मणांस्तर्पयामासुर्व्ययीकृत्य धनं बहु ॥ २५ ॥

दम्पती, एतद्व्रतं ॥ ३१०-३१९ ॥ सौभाग्याखण्डश्रीपुत्रादिदं व्रतं कुरुत । तावूचतुः । किं व्रतेन । ते सेवा तारिणी दुःखहारिणी च । त्वं प्राणनाथो देवश्च । ते चरणस्मरणमखण्डमस्तु । श्रीगुरुराह । मदाज्ञयेदं व्रतं कार्यं सैव मे सेवेति । तथेति भाषन्तौ तौ प्रस्थापयामास । तावत्पितरः

१ आनंदिरे.

सम्पूज्य श्रीगुरुं सर्वे भक्त्याऽऽनन्दितमानसाः ॥
भोजयित्वा द्विजांश्चान्यान्भक्त्या चक्रुर्महोत्सवम् ॥२६॥

प्रणम्य श्रीगुरुं सर्वे तदादिष्टा ययुर्मुदा ॥
स्वग्रामं श्रीगुरोरेवं यशो व्याप्तं दिगन्तरम् ॥ २७ ॥

दम्पत्योरभवन्पुत्रास्तयोः पञ्च शतायुषः ॥
यथा श्रीगुरुणा प्रोक्तं तथैवाभूत्तयोः खलु ॥ २८ ॥

प्रत्यब्दं श्रीगुरोरस्य गन्धर्वपुरमेत्य तौ ॥
दर्शनं चक्रतुर्भक्त्या शिष्याभूत्सद्गतिस्तयोः ॥ २९ ॥

चरित्रं श्रीगुरोरेवं पवित्रं नामधारकः ॥
सिद्धास्यपद्मगलितमद्धा[१]ऽमृतमिवापिबत् ॥ ३३० ॥

तद्वक्ति गङ्गाधरजः सरस्वत्यभिधो द्विजः ॥
प्रीयादनेन स्वपतिः[२] श्रीनृसिंहसरस्वती ॥ ३१ ॥

यत्ख्यातिरीदृशी तस्माद्भजत्वेनं जनोऽखिलः ॥
सद्यः प्रसन्नो भवति भगवान्नात्र संशयः ॥ ३२ ॥

प्राप्तास्ते हृष्टा बहुद्रव्यं व्ययीकृत्य ब्राह्मणान्भोजयित्वा श्रीगुरुं भक्त्या (सं-) पूज्य महोत्सवं कृत्वा श्रीगुरुणाऽऽदिष्टास्ते ग्रामं ययुः । एवं श्रीगुरोर्यशः प्रसृतं । श्रीगुरूक्तवद्दम्पत्योर्जातं । दीर्घायुः पञ्च पुत्राश्च जाताः ॥ ३२०-३२८ ॥ तौ प्रत्यब्दं श्रीगुरुदर्शनं कृत्वाऽन्ते सद्गतिं गतौ । एवं पवित्रं श्रीगुरोश्चरित्रं सिद्धेनोक्तं तत्सरस्वती वक्ति । भगवान्भजतां सद्यः फलदः । शर्करातोऽ-

---

१ साक्षात् २ स्वभक्तपालकः.

शर्करातोऽतिमधुरा रुचिराऽसौ कथा वरा ॥
करकङ्कणदृष्टयर्थं किमादर्शप्रयोजनम् ॥ ३३ ॥

साक्षात्पुरःस्थस्य तु किमुपमायाः प्रयोजनम् ॥
सुकीर्तेः श्रीगुरोस्तद्वत्ख्याता वाच्या कथा किमु ॥ ३४

सर्वे शृण्वन्तु वक्ष्ये वो हितं तूभयसाधनम् ॥
गुरुनाथस्य भजनं शीघ्रं सर्वार्थसाधनम् ॥ ३५ ॥

सुलभाऽमृतप्रपेयं विन्यस्ता भूतले मया पेयम् ॥
गुरुचरितं स्वाद्वमृतं सर्वैः सततं यतो लभेदमृतम् ३६

कामधुग्गुरुचरित्रपानतः पावनो भवति मानवो नतः ॥
यस्य नाम खलु कामधुक्तु तत्सर्वकामदमशेषदोषहृत् ३३७

तिमधुरा कथा। करकङ्कणदर्शनायादर्शप्रयोजनं किं। पुरःस्थस्योपमा किमर्था। तथा गुरुकथा स्वानुभववेद्योभयसाधनं हितं गुरुभजनं शीघ्रं सर्वार्थदं च ॥ २९-३५ ॥ सुलभाऽमृतप्रपेयं० ॥ ३६ ॥ कामधुग्गुरुचरित्र० ॥ ३७ ॥ इति चूर्णिकायां पंचत्रिंशोऽध्यायः ॥

(इति) श्रीसि० स० नृसिं० महा० गु० वासु०
श्रीगु० पञ्चत्रिंशः (अध्यायः)

आदितः श्लोकाः ॥ ४३१२ ॥

॥ इति पंचत्रिंशोऽध्यायः ॥

——

## ॥ अथ षट्त्रिंशोऽध्यायः ॥ ३६ ॥

॥ श्रीगणेशाय नमः ॥

नामधारकशिष्योऽथ लग्नः सिद्धपदाम्बुजे ॥
करौ सन्धाय विनतो भक्तियुक्तोऽब्रवीदिदम् ॥ १ ॥

जय सिद्धमुने त्वं हि भवसागरतारकः ॥
ब्रह्मज्ञानी बुधोऽविद्यातिमिरध्वान्तभास्करः ॥ २ ॥
मोहमय्यां तमस्विन्यां[1] सुप्तं मां मायया दृढम् ॥
गुरुलीलामहाभेर्या सुखं बोधितवानसि ॥ ३ ॥

अज्ञानतिमिरार्कस्त्वं सङ्गतोऽसीह सद्गुरुः ॥
चिन्मयात्मन्सिद्धमुने पारं नीतोऽस्म्यहं त्वया ॥ ४ ॥

स नामधारकेणेत्थं विनीतेन स्तुतो मुनिः ॥
सिद्धः साक्षाद्गुरुस्तुष्टः प्रददावभयङ्करम् ॥ ५ ॥

अध्यायसारसङ्ग्रहश्लोकोऽयम्—

तर्कपूर्युजि हलमुखी स्त्री सुशिक्षणमिषत ईट् ॥
आह्निकाचरणमवदच्छात्तयसंमतमु (?) सुधिये ॥ १ ॥

नामधारको भक्त्या नत्वाऽऽह । भवतारक सिद्ध जय । त्वमज्ञानध्वा-न्तसूर्यः । गाढं निद्रितोऽप्यहं गुरुलीलामहाभेर्या बुद्धोऽस्मि । चिन्मया-त्मना त्वया पारं नीतोऽस्मि । इति तुष्टः सिद्धोऽभयं ददौ । तदा स

---

१ रात्र्यां.

तदाऽवदत्पुनः शिष्यः कथं वृत्ता कथाऽग्रतः ॥
विस्तरेण वद स्वामिन्पाययालं कथामृतम् ॥ ६ ॥

कथामृतश्रवणतो न तृप्यति मनो मम ॥
अतो विस्तरतो ब्रूहि कथामिति पदेऽग्रहीत् ॥ ७ ॥

सिद्धोऽवदत्कथामग्र्यां शृणु त्वं नामधारक ॥
श्रवणादेकचित्तेन सर्वोऽपि ज्ञानमाप्नुयात् ॥ ८ ॥

गुरोर्गन्धर्वनगरे जातोऽस्य महिमा महान् ॥
तन्न वक्ष्याम्यहं सर्वं सारभूतं वदाम्यहम् ॥ ९ ॥

अशेषमहिमाख्याने प्रयायाद्विस्तृतिं कथा ॥
साक्षाद्धर्यवतारस्य लीलाख्याने क ईश्वरः ॥ १० ॥

तस्मिन्गन्धर्वनगरे एकोऽभूद्वैदिको द्विजः ॥
बहुश्रुतो विरक्तोऽपि कर्ममार्गविशारदः ॥ ११ ॥

प्रतिग्रहं न गृह्णाति परान्नं न भुनक्ति च ॥
मिथ्या न वक्ति मौनीव प्रतिवादं करोति नो ॥१२॥

पुनराहाग्रतः कथामृतं पाययाद्यापि न मे तृप्तिरिति पदे दधौ। सिद्ध आहैकाग्रचित्तः शृणु। ज्ञानं लभेत्। तत्रानेकाचित्राणि जातान्यथापि सारं वक्ष्ये ॥ १-९ ॥ अन्यथा ग्रन्थो विस्तरेत्साक्षाद्विष्णववतारकथां कृत्स्नां को वदेत्। तत्रैको विरक्तः कर्ममार्गज्ञो विप्रः प्रतिग्रहपरान्नमिथ्योक्ती-

स याया[1]वरवृत्त्यैव जीवनं कुरुते मुदा ॥
ईदृशं तं न सेहेऽस्य ललना कोपनानना[2] ॥ १३ ॥

ब्राह्मणः शुक्लवृत्त्यैव सदासक्तमुवास सः ॥
विनाऽतिथिं न बुभुज आतिथेयः स धार्मिकः ॥१४॥

तस्मिन्ग्रामेऽभवद्विप्रभोजनं प्रत्यहं बहु ॥
विप्राः सहस्रसंख्याका बुभुजुर्मिष्टमादरात् ॥ १५ ॥

मिष्टान्नेन द्विजाः पुष्टास्तुष्टा दक्षिणयाऽपि च ॥
मिष्टान्नवार्ता अन्योऽन्यं हृष्टा ऊचुश्च तेऽन्वहम् ॥१६॥

तच्छ्रुत्वा विप्रवनिता दैन्यार्ता भृशदुःखिता ॥
चिन्ताग्रस्ताऽवदद्देव श्रीहरे परमेश्वर ॥ १७ ॥

स्वप्नेऽपीदृङ् न वीक्षेऽन्नं दैवहीनाभवं कथम् ॥
दरिद्रं पतिमुद्वाह्य जाताहं कष्टभाक्सदा ॥ १८ ॥

स्त्यक्त्वा यायांवरवृत्त्या मुदावर्ततातिथिं विना न बुभुजे । तत्स्त्री कोपना तन्न सेहे। तत्र प्रत्यहं धनिनो विप्रभोजनं चक्रुः । मिष्टान्नं भुक्त्वा विप्रा अन्योन्यं प्रशशंसुः । तच्छ्रुत्वा ब्राह्मणी दुःखिताह । श्रीहरे, स्वप्नेऽपीदृगन्नं नेक्षे दरिद्रपतिं वृत्वा जन्मप्रभृति कष्टभाक्स्याम् । पूर्वा-

१ प्रत्यहं धान्ययाच्ञारूपा वृत्तिः २ कोपयुक्तं आननं यस्याः.

यादृक्पूर्वार्जितं तादृग्लब्धो हीनः पतिर्मया ॥
यद्योगेन च दारिद्र्यं देव वीक्षेऽनिशं बत ॥ १९ ॥

स्त्रीभिः सह द्विजाः सर्वे नित्यं मिष्टान्नभोजिनः ॥
तैः कृतं सुकृतं पूर्वमीदृग्लाभस्ततोऽभवत् ॥ २० ॥

दैवहीनः पतिर्मेऽयमाहूतोऽपि न गच्छति ॥
मिष्टं परान्नं किं कार्यं नारायण मयाधुना ॥ २१ ॥

एवं चिन्तान्वितभूत्सा कदाचिदथ तत्र तु ॥
विप्रान्भोजयितुं प्राप्तो विप्र एको महाधनः ॥ २२ ॥

स तु तस्या दरिद्रायाः पतिं भोक्तुं समाह्वयत् ॥
आमन्त्रयामास च तां धवेन सहितां धनी ॥ २३ ॥

उपेत्य सा पतिं प्राह महाहर्षेण संयुता ॥
भवता सह मे प्राप्तं ब्राह्मणस्य निमन्त्रणम् ॥ २४ ॥

र्जितानुसारी पतिर्यद्योगाद्दारिद्र्यं वीक्षे ॥१०-१९॥ अन्ये सस्त्रीका मिष्टाशिनस्तैः प्राक्सुकृतं कृतम् ॥ २० ॥ दैवहीनो मे पतिराहूतोऽपि न याति। नारायण किं कर्तव्यम्। एवं चिन्तान्वितायां तस्यां ब्राह्मणभोजनं कर्तुं धनी एत्य सधवां तां भोक्तुमाह्वयत् सा हर्षेण पतिमुपेत्याह। पका-

१ अपरपक्षार्थमिति शेषः.

सुपक्वान्नान्यनेकानि भूयसीर्दक्षिणा अपि ॥
परिधानान्यमूल्यानि स प्राणेश्वर दास्यति ॥ २५ ॥

स्वीकुर्वामन्त्रणमिदमथवाज्ञापयस्व माम् ॥
कांक्षते मे मनोऽतीवापूर्वपक्वान्नभोजनम् ॥ २६ ॥

इति श्रुत्वा स्त्रिया दैन्यमुदासीनोऽवदत्स ताम् ॥
भोक्तुं यथासुखं गच्छ न यास्येऽहं कदाचन ॥ २७ ॥

इत्यादिष्टाबला मूढा धनिनं प्राप्य साब्रवीत् ॥
न यास्यति पतिर्भोक्तुमायास्याम्यहमेव तु ॥ २८ ॥

स प्राह मेऽस्ति सङ्कल्पो दम्पत्यर्चनरूपकः ॥
पतिर्यास्यति चेद्भोक्तुं त्वमागच्छ ममालयम् ॥२९॥

इति तस्य वचः श्रुत्वा खिन्नाभूत्सा द्विजाङ्गना ॥
हन्त नारायणारब्धं[1] प्रमाणं किं करोम्यहम् ॥ ३० ॥

न्नदक्षिणामूल्यवस्त्रदाता विप्रो भवता समं मां भोक्तुमाह्वयति । मे मनस्त-त्कांक्षते । विप्र आह । त्वं यथासुखं भोक्तुं गच्छाहं नायास्ये । इत्युक्ता सा धनिनमेत्याह । पतिर्नैत्यहमेष्ये । स आह । मे दम्पतिभोजन-सङ्कल्पः ॥२१-२९॥ इति श्रुत्वा खिन्नाह । हा नारायण । प्रारब्धं

१ प्रारब्धं प्रमाणं.

कथं हीनं हि मे दैवं कर्तव्यं किमतः परम् ॥
पत्युर्योगान्न मे लभ्यं स्वाद्वन्नं स्वप्नदुर्लभम् ॥ ३१ ॥

एवं विचार्य बहुशः सा नृसिंहसरस्वतीम् ॥
एत्य प्रणम्य साष्टाङ्गं विनयावनताऽब्रवीत् ॥ ३२ ॥

स्वामिन्हितं कुरु स्वन्नं कदापीदृङ् न लभ्यते ॥
पत्ये कथय विप्रस्य गृहे भोक्तुं चरेति मे ॥ ३३ ॥

स दम्पती आह्वयति न शृणोति पतिर्मम ॥
किं कर्तव्यं मया भुंक्ते न परान्नं कदाऽपि सः ॥३४॥

कृपां कुर्वद्य मे स्वामिन्पतिं प्रेषय यत्नतः ॥
आमन्त्रणं समीचीनं सुवस्त्रान्नादि लभ्यते ॥ ३५ ॥

इति तस्या वचः श्रुत्वा श्रीगुरुः प्रहसन्निव ॥
तस्याः पतिं समाहूय प्राह द्विजनिमन्त्रणम् ॥ ३६ ॥

ब्राह्मण त्वं द्विजगृहं व्रज भोक्तुं निमन्त्रितः ॥
स्त्रियास्ते मनसोऽभीष्टं शिष्टमिष्टान्नभोजनम् ॥ ३७ ॥

प्रमाणं। कथं मे दैवं हीनं। पतियोगान्मेऽपि स्वाद्वन्नं दुर्लभमित्युक्त्वा श्रीगुरुमेत्य साष्टाङ्गं नत्वोचे। हितं कुरु। परान्नं भोक्तुं पतिमाज्ञापय। स न कदापि परान्नं भुंक्तेऽतः कृपां कृत्वा यत्नात्तं प्रेरयामन्त्रणं समीचीनं सुवस्त्रान्नादि लभ्येतेति श्रुत्वा हसञ्श्रीगुरुर्विप्रमाहूयाह। त्वं परान्नं भोक्तुं व्रज। ते स्त्रिया परान्नभोजनेच्छास्ति ॥३०-३७॥ पत्या स्त्रीच्छा

पत्याज्ञनावासनासौ पूरणीया त्वयानघ ॥
कुलस्त्रिया मनस्त्वीदृग्दुःखितं नैव कारयेत् ॥ ३८ ॥
इति श्रुत्वा गुरोर्वाक्यं प्रणम्य ब्राह्मणोऽब्रवीत् ॥
परान्नं नैव मे ग्राह्यं यद्येवं नियमोऽपि मे ॥ ३९ ॥
न गृह्णाति गुरोर्वाक्यं स घोरं नरकं व्रजेत् ॥
आज्ञां ते शिरसा धृत्वा यास्ये भोक्तुं परालयम् ॥४०॥
इत्युक्त्वा गुरुमापृछ्य सभार्यः स गृहं गतः ॥
आनन्दिता तस्य कान्ता ततो भोक्तुं गतावुभौ ॥४१॥
यजमानो धनी सोऽपि सं[१]कल्प्य द्विजभोजनम् ॥
भोजयामास पक्वान्नैरनेकैः स्त्रीयुतान्द्विजान् ॥ ४२ ॥
ब्राह्मणी भुक्तिसमये विपरीतं ददर्श सा ॥
पंक्त्यां च भोजनागारे सहाश्नन्ति श्वसू[२]कराः ॥ ४३ ॥
मनसाऽतीव निर्विण्णा सा त्यक्त्वा पात्रमुत्थिता ॥
उच्चैस्तदेव सा प्राह ब्राह्मणानां च भुञ्जताम् ॥ ४४ ॥

पूरणीया कुलस्त्रिया मनो न पीडयेत् ॥ ३८ ॥ विप्र आह । यद्यपि परान्नं न ग्राह्यमिति मे नियमः ॥ ३९ ॥ अथापि गुरुवाक्याश्रवणे नरकोऽतस्ते वचो मूर्ध्नि धृत्वा यास्य इति गुरुमापृच्छ्य गृहं गतः । सातीव हृष्टा । ततस्तौ भोक्तुं गतौ । यजमानो विप्रभोजनं सङ्कल्प्य परिविष्टैनैकपक्वान्नादिभिर्भोजयामास । ब्राह्मणी भोजनसमये श्वसूकरोच्छिष्टान्नं दत्तं वीक्ष्य निर्विण्णान्नं त्यक्त्वोत्थायोच्चैस्तत्र तदेवाह । पत्युः समीपेऽपि

---

१ पित्रुद्देशेनेति शेषः २ सूकरः = ग्रामवराहः.

 

प्राप्य पत्युः समीपे सा तदेवोच्चैर्जगाद ह ॥
किमश्नास्यपवित्रान्नं श्वक्रोडोच्छिष्टमीदृशम् ॥ ४५ ॥

स्त्रियं स प्राह मे भग्नं त्वत्तो दैवमिहाधुना ॥
व्यक्तं परोदनं त्यक्तं भुक्तं श्वोच्छिष्टमद्य तु ॥ ४६ ॥

इति प्रकुपितो विप्रः स्त्रिया सह गुरुं ययौ ॥
ननाम परया भक्त्या श्रीगुरुं नामधारक ॥ ४७ ॥

श्रीगुरुः प्राह तां दृष्टं परान्नस्य सुखं त्वया ॥
पीडितोऽस्ति सदा नाथः फलितोऽद्य मनोरथः ॥४८॥

इति श्रीगुरुणोक्ता सा पदलग्नाभवद्गुरोः ॥
बद्धहस्तावदद्दीना स्वामिन्नागः क्षमस्व मे ॥ ४९ ॥

मया मन्दधिया लोभाद्दोषाब्धौ पातितः पतिः ॥
बलान्नीतः परान्नार्थं स्वामिन्नागः क्षमस्व मे ॥ ५० ॥

चिन्तार्दितो द्विजः प्राह स्वामिन्कर्तव्यमद्य किम् ॥
दोषा लग्ना मयि प्राज्या व्रतभङ्गोऽभवन्मम ॥ ५१ ॥

श्वसूकरोच्छिष्टान्नमेतत्किमश्नासीत्याह । स प्राह त्वत्तो मे दैवं भग्नं । परान्नं त्यक्तमप्यद्य श्वोच्छिष्टं भुक्तमिति कुपितस्तया सह गुरुमेत्य ननाम । श्रीगुरुर्ब्राह्मणीं प्राह । परान्नसुखं दृष्टं ते मनोरथः फलितः किं ॥४०-४८॥ सा दीनाहापराधं क्षमस्व । दुर्धिया पतिर्दोषाब्धौ बलात्पातितः । द्विज आह । स्वामिन्, किं कार्यं व्रतभङ्गोऽभूत् । परान्नं न ग्राह्यमिति सङ्कल्पित-

१ सूकरः २ परान्नं ३ अपराधं.

परान्नं न ग्रहीष्यामीत्येवं सङ्कल्पितं तु तत् ॥
भग्नं मे कृत्यया द्वेष्ट्र्या बहुदोषाश्च कारिताः ॥ ५२ ॥

इति तस्यानुतप्तस्य श्रुत्वा गां[2] श्रीगुरुर्हसन् ॥
प्राहास्याः पूरितः कामः सैषा तृप्तिं गता खलु ॥५३॥

परान्नं न कदा भोक्ष्य इति सङ्कल्पितं त्वितः ॥
सत्यं भविष्यति सदा मा खिदो दोष एष न ॥ ५४ ॥

अन्यत्ते कथयिष्यामि सहजो धर्म एष तु ॥
कदाचिन्न लभेद्विप्रो दैवे पित्र्ये च कर्मणि ॥ ५५ ॥

कर्मलोपप्रसक्तौ चेदाहूतो व्रज तत्र तु ॥
भोक्तुं व्रजान्यथा दोषा अनन्ताः परिकीर्तिताः ॥५६॥

इति श्रुत्वा गुरोर्वाक्यं साष्टाङ्गं प्रणिपत्य सः ॥
विनयावनतो भूत्वा पप्रच्छ द्विज आदरात् ॥ ५७ ॥

कस्मादन्नं ग्रहीतव्यं दोषाः कुत्र भवन्ति च ॥
कस्य द्वारं न गन्तव्यं स्वामिन्कथय विस्तरात् ॥५८॥

मप्यनया वैरिण्या बहुदोषाः कारिताः । इत्यनुतप्तं तं गुरुराह । स्त्रीकामाः पूरिताः । सा तृप्ता । सङ्कल्पोऽपि न भग्नो मा खिदोऽयं न दोषः ॥४९-५४॥ कदाचिद्दैवे पित्र्ये कर्मणि विप्रालाभे तत्र भुक्तौ न दोषोऽन्यथा दोषः । विप्रो नत्वा सादरमाह । कस्मादन्नं ग्राह्यं, क्व दोषः । श्रीगुरुराह ।

---

१ वाणीं.

इति तस्य वचः श्रुत्वा गुरुः प्राह सविस्तरम् ॥
सावधानतया श्रोतः शृणु तन्नामधारक ॥ ५९ ॥

श्रीगुरुः प्राह भो विप्र ग्राह्यमन्नं मयोच्यते ॥
शिष्येणान्नं ग्रहीतव्यं गुरोर्गेहे त्वसंशयम् ॥ ६० ॥

विदुषो वैदिकस्यापि मातुलस्य गृहे तथा ॥
श्वशुरस्य च साधोश्च सोदराणां गृहेऽपि च ॥ ६१ ॥

द्विजाभावे कर्मलोपप्रसक्तौ ग्राह्यमोदनम् ॥
गायत्रिकाजपं कुर्यात्तस्य दोषो न विद्यते ॥ ६२ ॥

मातुः पितुः सकाशाद्ये सेवां गृह्णन्ति तद्गृहे ॥
लोभाभिभूतगेहे च वर्ज्यमन्नं प्रयत्नतः ॥ ६३ ॥

पीडयित्वा कलत्रादीन्ये धर्मं कुर्वतेधमाः ॥
तदन्नभोजनाद्दोषा बहवः परिकीर्तिताः ॥ ६४ ॥

शस्त्रिणो गर्वितस्यापि मल्लयुद्धरतस्य च ॥
वीणावाद्यादिसक्तस्य वर्ज्यमन्नं प्रयत्नतः ॥ ६५ ॥

सावधानतया शृणु ॥ ५६-५९ ॥ गुरुमातुलविद्वद्वैदिकश्वशुरसोदरगृहे भोक्तव्यम्। कर्मलोपप्रसक्तौ विप्रगृहे भुक्त्वा गायत्रीजपाच्छुचिः। यो लोभी पित्रोः सकाशात्सेवां गृह्णाति, दारादीन्पीडयन्धर्मं करोति, शस्त्री,

बहिष्कृतस्य विप्रस्य याचनाजीविकस्य च ॥
वैश्वदेवविहीनस्य वर्ज्यमन्नं प्रयत्नतः ॥ ६६ ॥

पक्वं बहुभिरेकत्र वैश्वदेवः पृथङ्न हि ॥
दोषास्तदन्नभुक्त्या तद्वर्ज्यमन्नं प्रयत्नतः ॥ ६७ ॥

भूत्वा सर्वगुरुर्मन्त्रान्यो ददाति धनेच्छया ॥
शिष्यसंग्रहकृच्चास्य वर्ज्यमन्नं प्रयत्नतः ॥ ६८ ॥

क्रोधी ब्राह्मणविद्वेषी यश्च त्यक्त्वा कुलस्त्रियम् ॥
तिष्ठत्यस्य गृहे चापि वर्ज्यमन्नं प्रयत्नतः ॥ ६९ ॥

तामसक्रूरकृपणसुदुराचार्यधार्मिकः ॥
धनमत्तोऽपि चैतेषां वर्ज्यमन्नं प्रयत्नतः ॥ ७० ॥

पतिं निजसुतान्वाऽपि या विहायैव तिष्ठति ॥
ब्राह्मणी विप्र तस्याश्च वर्ज्यमन्नं प्रयत्नतः ॥ ७१ ॥

विप्रोऽपि स्वर्णकारित्वं यः करोति कुयाचकः ॥
यश्च स्त्रीविजितस्त्वेषां वर्ज्यमन्नं प्रयत्नतः ॥ ७२ ॥

गर्वी, युद्धकृत्, वाद्यसक्तो, बहिष्कृतो, याचको, वैश्वदेवाकर्ता, धनेच्छया सर्वेभ्यो मन्त्रदाता, शिष्यसंग्रहकृत्क्रोधी, ब्रह्मद्वेषी कुलस्त्रीत्याजकः ॥६०-६९॥ तामसः, क्रूरः, कृपणो, दुराचारो, धनमत्तस्त्यक्तपतिपुत्रा ब्राह्मणी, स्वर्णालङ्कारकृद्द्विजः स्त्रीजितः, स्तेयी, परदारगामी, अश्वक्रेता, भृतका-

स्तेयकृत्परदारस्थो योऽश्वविक्रयकृद्द्विजः ॥
भृतकाध्यापकश्चास्य वर्ज्यमन्नं प्रयत्नतः ॥ ७३ ॥

द्यूतकृन्निष्ठुरो यश्च भुंक्तेऽस्नातश्च यद्गृहे ॥
भगवत्कीर्तनं नास्य वर्ज्यमन्नं प्रयत्नतः ॥ ७४ ॥

नैव सन्ध्यामुपास्ते यो दानं च न ददाति यः ॥
पितृकर्मविहीनोऽस्य वर्ज्यमन्नं प्रयत्नतः ॥ ७५ ॥

द्रव्यलोभेन जपति मन्त्रं दम्भेन वा ऋणम् ॥
दत्त्वार्थं सञ्चिनोत्यस्य वर्ज्यमन्नं प्रयत्नतः ॥ ७६ ॥

विश्वासघातकः पक्षपातकृन्नीतिहापकः ॥
स्वधर्मत्याजकश्चास्य वर्ज्यमन्नं प्रयत्नतः ॥ ७७ ॥

यो द्वेष्टि विदुषं साधून्यो नरो गुरुनिन्दकः ॥
कुलदेवोत्सर्जकोऽस्य वर्ज्यमन्नं प्रयत्नतः ॥ ७८ ॥

गोविप्रघातकः स्त्रीघ्नो यश्च स्वान्नस्य दूषकः ॥
परान्नस्तुतिकृच्चास्य वर्ज्यमन्नं प्रयत्नतः ॥ ७९ ॥

ध्यापको, द्यूतकृन्निष्ठुरः, स्नानं विना भोक्ता, भगवत्कीर्तनानादरः, सन्ध्योपास्त्यकर्ता, दातृवारकोऽदाता, पितृकर्माकर्ता, द्रव्यलोभेन दम्भेन वा जपिता, कुसीदवृत्तिर्विश्वासघाती, स्त्रीघ्नः, स्वान्नदूषकः, परान्नस्तुतिकृत्पक्षपात्यन्यायी, स्वधर्मत्याजकः ॥७०-७८॥ साधुद्वेषी, गुरुनिन्दक-

१ द्रव्यमादायाध्यापकः.

आशाबद्धस्त्वेकगृहे सदा तिष्ठति योऽपि च ॥
दातारं वारयत्यस्य वर्ज्यमन्नं प्रयत्नतः ॥ ८० ॥

सर्वान्यः शरणं याति स चण्डालो भविष्यति ॥
सर्वान्नमत्ति यश्चास्य वर्ज्यमन्नं प्रयत्नतः ॥ ८१ ॥

पुत्रीं जामातरं क्रोधान्निर्भर्त्सयति योऽपि च ॥
पुत्रहीनश्च तस्यापि वर्ज्यमन्नं प्रयत्नतः ॥ ८२ ॥

यो विवाहोत्तरं काले न जुहोति परालये ॥
प्रायो भुनक्ति तस्यापि वर्ज्यमन्नं प्रयत्नतः ॥ ८३ ॥

नाचरत्याश्रमं धर्ममद्वैतं वक्ति केवलम् ॥
विनानुभवमस्यापि वर्ज्यमन्नं प्रयत्नतः ॥ ८४ ॥

कुक्षिं बिभर्ति यः शाठ्यात्तदन्नाशनतोऽन्धता ॥
आयुर्हानिश्च बाधिर्यं स्मृतिमेधाधृतिक्षयः ॥ ८५ ॥

परालये यो वसति नित्यं भुंक्तेऽर्पयत्यसौ ॥
स्वपुण्यं यजमानाय तद्दोषान्स्वीकरोति च ॥ ८६ ॥

स्त्यक्तकुलदेवः ॥ ७९ ॥ आशयैकगृहस्थ एषामन्नं वर्ज्यम् । सर्वजाति-शरणो यश्च सर्वान्नमत्ति स चण्डालो भविष्यति । तदन्नं वर्ज्यम् । पुत्री-जामातृनिर्भर्त्सकोऽपुत्र औपासनहीनो, नित्यं परान्नभुक्केवलमद्वैतवक्ता, शाठ्यात्कुक्षिम्भरिस्तदन्नाशनादन्धताऽयुःस्मृतिमेधाधृतिनाशो बाधिर्यं च । नित्यं परान्नाशने स्वपुण्यनाशो दातृपापसंग्रहश्च । यथा परान्ना-

गोभूस्वर्णेभरत्नाश्वादानाद्दोषस्तथा न हि ॥
यथा परान्नभुक्त्या च परस्त्रीसङ्गतोऽपि च ॥ ८७ ॥

सदा परगृहावासाल्लक्ष्मीर्नश्यति गच्छति ॥
दर्शे परान्नभुक्त्या च मासपुण्यं विनिश्चितम् ॥ ८८ ॥

गच्छेद्भोक्तुं समाहूतोऽनाहूतो नापदं विना ॥
द्विजालयेऽपि शूद्रेणाहूतो भोक्तुं न च व्रजेत् ॥८९॥

यावत्पुत्रो नैव जातस्तावत्पुत्रीगृहे खलु ॥
न भुञ्जीत समुत्पन्ने पौत्रे दोषो न विद्यते ॥ ९० ॥

सूर्यचन्द्रोपरागे च सूतके मृतकेऽपि वा ॥
दानं चापि न गृह्णीयात्तीर्थे पात्रे तथैव च ॥ ९१ ॥

खलराड्भृत्यरजकलोहकारककाष्ठतट् ॥
स्वर्णहृद्वृषलीमद्यपोऽतो दानं विवर्जयेत् ॥ ९२ ॥

स्वाचारं ब्राह्मणा येऽत्राचरिष्यन्त्यप्यसक्तितः ॥
कुतो दैन्यं भजेत्तेषां सुखभाजस्त एव हि ॥ ९३ ॥

शने दोषस्तथा गोभूस्वर्णादिप्रतिग्रहदोषो न। परस्त्रीसङ्गेऽपि महादोषः। सदा परगृहवासाल्लक्ष्मीनाशो, दर्शे परान्नाशनान्मासपुण्यक्षयः ॥८०-८९॥ आहूतो भोक्तुं गच्छेच्छूद्राहूतो न गच्छेत्। यावत्पौत्रो न जातस्तावत्पुत्रीगृहेऽभोज्यम्। सूर्यादिग्रहे सूतके तीर्थे च न दानं ग्राह्यम्। खलराजभृत्यरजकलोहकारस्वर्णहृद्वृषलीमद्यपेभ्योऽपि न। स्वाचारवतां क

तदधीनाः सुराः सर्वे कामधेनुश्च तद्गृहे ॥
निवसेत्सिद्धयोऽप्यष्टौ तत्र स्थास्यन्ति सर्वदा ॥९४॥

मदान्धा इह ये विप्राः स्वधर्माचारवर्जिताः ॥
त एव तेन पापेन दरिद्रार्ताः पतन्त्यपि ॥ ९५ ॥

स विप्रः प्राह भो स्वामिन्प्रार्थनां मेऽवधारय ॥
स्वाचारं श्रोतुमिच्छामि कृपया कथयस्व मे ॥ ९६ ॥

त्वं त्रिमूर्त्यवतारोऽसि श्रीगुरुः करुणाकरः ॥
स्वामिन्भक्तजनाधार आचारं म उपादिश ॥ ९७ ॥

श्रीगुरुर्ब्राह्मणं प्राह साधु पृष्टं त्वयानघ ॥
वक्ष्ये पृष्टं सदाचारं य उक्त ऋषिभिः पुरा ॥ ९८ ॥

कदाचिन्नैमिषारण्ये मुनीमां च तपस्यताम् ॥
पराशरऋषिः प्राप तान्मुनीन्स यदृच्छया ॥ ९९ ॥

ते प्रत्यादित्सव इवोद्गतास्तनुत्थिता मुनिम् ॥
वृद्धं सत्कृत्याभिवाद्याचारं पप्रच्छुरादरात् ॥१००॥

दैन्यम्। ते सुखभाजः। तदधीना देवास्तद्गृहे कामधेनुः सिद्धयश्च। मदान्धाः स्वाचारं त्यक्त्वा दरिद्राः स्युः। विप्र आह। कृपया स्वाचारं कथय। त्वं त्रिमूर्त्यवतारः कृपालुः स्वाधारश्च। श्रीगुरुराह। ऋषिप्रोक्तं स्वाचारं वक्ष्ये। कदाचिन्नैमिषारण्ये पराशर आगतः ॥९०-९९॥ तमभिवाद्य ऋषय ऊचुः। स्वाचारे नः पदे पदे संशयोऽतो गुरुं विना-

आचाराचरणेऽस्माकं संशयो हि पदे पदे ॥
त्वं ब्रह्मर्षिरसि विख्यात उपदेशो हि ते वरः ॥ १ ॥

गुरुं विना न हि ग्राह्य आचारोऽप्यथवा मंनुः ॥
तस्माद्गुरुः पवित्रस्त्वमाचारं न उपादिश ॥ २ ॥

एवं स प्रार्थितः प्राह पराशरमहामुनिः ॥
आचारं कथये यस्माद्यत्नात्सर्वसिद्धयः ॥ ३ ॥

ब्राह्मे मुहूर्त उत्थाय सद्भक्त्या संस्मरेद्गुरुम् ॥
ब्रह्माणं चिन्तयेद्विष्णुं महेशं च सलक्षणम् ॥ ४ ॥

सूर्यादिकेतुपर्यन्तान्संस्मरेच्च नवग्रहान् ॥
सनत्कुमारं सनकं सनन्दनसनातनौ ॥ ५ ॥

तुंबरुं च स्मरेत्सिद्धान्योगिनः पितृदेवताः ॥
सप्ताब्धिभुवनद्वीपान्सप्तर्षीन्गां नमेत्ततः ॥ ६ ॥

तत उत्थाय चाचम्य मूत्रोत्सर्गं विधाय च ॥
शुचिर्भूत्वा विधानेन विधिनाचमनं चरेत् ॥ ७ ॥

चारो मनुर्वाग्राह्यस्त्वं गुरुरुपादिशेति प्रार्थितः पराशर आह। सर्व-सिद्धिदाचारं वक्ष्ये। ब्राह्मे मुहूर्त उत्थाय भक्त्या गुरुं त्रिमूर्तीन्ग्रहान्सन-कादिसिद्धयोगिपितृदेवसप्ताब्धिभुवनद्वीपर्षीन्स्मृत्वा गां नत्वाचम्य

१ मंत्रः.

स्नानात्पूर्वं परं चापि पानोर्ध्वं शयनोत्तरम् ॥
उपविश्य विधानेन द्विज आचमनं चरेत् ॥ ८ ॥

भोजनादौ तथैवान्ते छिक्कायां जृम्भणेऽपि च ॥
विण्मूत्रोत्सर्गतश्चोर्ध्वं द्विज आचमनं चरेत् ॥ ९ ॥

अपाने निर्गते दुष्टशब्दोच्चारे कुदर्शने ॥
आद्यान्तयोः कर्मणश्च द्विज आचमनं चरेत् ॥ ११० ॥

सन्निधौ नास्ति चेत्तोयं श्रोत्रस्पर्शं समाचरेत् ॥
सप्त देवा यतस्तत्र तत्स्पर्शादाचमो भवेत् ॥ ११ ॥

अग्निरापश्च देवश्च वरुणार्केन्दुवायवः ॥
विप्रस्य दक्षिणे कर्णे नित्यं तिष्ठन्ति देवताः ॥ १२ ॥

मूत्रोत्सर्गाच्छुचिर्भूत्वा कृत्वा स्नानं च मानसम् ॥
अरुणोदयपर्यन्तमुपविश्य जपं चरेत् ॥ १३ ॥

विना गायत्रिकामन्त्रं वेदमन्त्रान्पठेत्सुधीः ॥
अरुणे तूदिते गत्वा मलोत्सर्गं चरेद्बहिः ॥ १४ ॥

स्नानात्पूर्वं परश्चाधोवायुनिःसृतौ भोजनादावन्ते च क्षुते विण्मूत्रोत्सर्गे शुद्धयन्ते ॥१००-१०९॥ दुःशब्दोच्चारे कुदर्शने कर्मण आद्यान्तयोश्च द्विराचामेत्। जलालाभे दक्षिणकर्णेऽग्न्यब्देववरुणार्केन्दुवाता देवतास्तत्स्पर्शादाचमनफलम्। ततो मानसस्नानं कृत्वारुणोदयपर्यन्तं गायत्रीं विना वेदं पठेत्। ततो निवीतं पृष्ठतः

निवीतं पृष्ठतः कृत्वोपवीतं[1] नैर्ऋतीं दिशम् ॥
गत्वोपविश्याधोवक्त्रो वस्त्रेणाच्छाद्य मस्तकम् ॥१५॥

उत्तराभिमुखश्चाह्नि नक्तं चेद्दक्षिणामुखः ॥
मौनी नेतस्ततः पश्यन्नार्कचन्द्रर्क्षखं जनान् ॥ १६ ॥

मलमूत्रोत्सृतिं कुर्यात्स्थित्वा यस्तूत्सृजेद्द्विजः ॥
यावत्यङ्गेऽस्य रोमाणि तावद्वर्षं स नारकी ॥ १७ ॥

कच्छोत्सर्गं विना मूत्रत्यागे शौचं विनाऽपि च ॥
कच्छस्य धारणाच्चापि तथैव नरकं व्रजेत् ॥ १८ ॥

कदाचित्तु जलालाभे गङ्गां संस्मृत्य लोष्टतः ॥
शौचं कार्यं भक्षणादि वर्ज्यं यावच्छुचिर्न हि ॥ १९ ॥

मलोत्सर्गे भुवं वह्निम नोत्सृजेद्धरिते तृणे ॥
पर्णेषु च सुशुष्केषु मलोत्सर्गं समाचरेत् ॥ १२० ॥

पुण्यवृक्षाध्वदेवादिसमीपे नोत्सृजेन्मलम् ॥
लिङ्गं धृत्वा जलासन्नं गत्वा शौचं समाचरेत् ॥ २१ ॥

कृत्वा वस्त्रेण शिर आच्छाद्य दिवोदङ्मुखो रात्रौ दक्षिणमुख उपविश्य मौनीतस्ततोऽपश्यंस्तृणे मलोत्सर्गं कुर्यात्। कच्छोत्सर्गं विना मलमूत्रत्यागे शुद्धिं विना च कच्छधारणेऽनुपवेशनेन मलत्यागे च नरकः ॥११०-१९॥ कदाचिज्जलालाभे गङ्गां स्मृत्वा लोष्टादिना शौचं कार्यम्। यावच्छुद्धि पानादि वर्जयेत् ॥ १२० ॥ हरित्तृणे पुण्यवृक्षाध्वदेवाम्बुसमीपे

१ यज्ञोपवीतं.

शौचार्थं मृत्तिका ग्राह्या शुद्धा वर्ज्या प्रयत्नतः ॥
वल्मीकमूषकोत्खातनदीमध्यस्थमृत्तिकाः ॥ २२ ॥

मार्गस्थमृत्तिका वर्ज्या वृक्षाधःस्था तथैव च ॥
देवालयक्षेत्रतीर्थमृत्तिका चापि गर्हिता ॥ २३ ॥

वापीकूपतडागस्था मृत्तिका च प्रशस्यते ॥
प्रोक्ष्योदकेन शौचार्थं मृदादेया विचक्षणैः ॥ २४ ॥

आर्द्रामलप्रमाणेन लिंग एकं प्रदापयेत् ॥
पिण्डान्गुदे तथा पञ्च त्रींस्त्रीनेकैकहस्तके ॥ २५ ॥

तथैव पादयोर्देया मृत्तिका मूत्रशौचके ॥
मलोत्सर्गे तु द्विगुणा त्रिगुणा वीर्यनिःसृतौ ॥ २६ ॥

एतच्छौचं गृहस्थस्य द्विगुणं ब्रह्मचारिणः ॥
त्रिगुणं च वनस्थस्य यतिनश्च चतुर्गुणम् ॥ २७ ॥

रात्रावर्धं सङ्कटे च मार्गे चापि तदर्धतः ॥
शौचाचरणतो नॄणां धर्मसिद्धिर्भवेद्द्रुतम् ॥ २८ ॥

च नोत्सृजेत्। लिङ्गं धृत्वा जलसमीपं गत्वा शौचं कुर्यात्। वल्मीक-
मूषकोत्खातमार्गदेवालयक्षेत्रतीर्थस्थमृत्तिकाऽग्राह्या। वापीकूपतडागस्था
शस्तार्द्रामलकप्रमाणमृत्पिण्डो लिङ्गे एकः, गुदे पञ्च, मूत्रे प्रतिहस्तं
प्रतिपादं च त्रींस्त्रीन्मलोत्सर्गे द्विगुणम्। शुक्रोत्सर्गे त्रिगुणम्। एतद्
ब्रह्मचारिणो द्विगुणं। वनिनस्त्रिगुणं। यतेश्चतुर्गुणं। रात्रावर्धं। सङ्कटे

व्रतबन्धोत्तरं त्वेतद्द्विजस्याचरणं स्मृतम् ॥
शौचं स्त्रीशूद्रबालानां गन्धलेपावधि स्मृतम् ॥ २९ ॥

शौचोत्तरं च गण्डूषानष्टौ ब्राह्मण आचरेत् ॥
षट् क्षत्रश्चतुरो वैश्यः शूद्रश्चापि च वामतः ॥ ३० ॥

गण्डूषोत्तरमाचम्य शुचिस्थाने द्विवारतः ॥
कुलदेवं स्मरेद्वक्ष्ये शृण्वाचमविधिं द्विजाः ॥ ३१ ॥

विप्रदक्षिणहस्ते तु कथ्यते तीर्थपञ्चकम् ॥
करमध्ये वह्नितीर्थं मूले ब्राह्मं प्रकीर्तितम् ॥ ३२ ॥

तर्जन्यंगुष्ठमध्ये च पितृतीर्थं प्रचक्ष्यते ॥
अंगुल्यग्रे देवतीर्थं कनिष्ठाधस्तथार्षकम् ॥ ३३ ॥

प्रतिग्रहाचमपितृदेवर्ष्यर्चनमेव तैः ॥
ब्रह्मतीर्थेन चाचम्य केशवाद्यैस्त्रिभिः करौ ॥ ३४ ॥

गोविन्द विष्णो इत्याभ्यां प्रक्षाल्यांगुष्ठमूलतः ॥
ओष्ठौ सम्मृज्य मधुसूदन त्रिविक्रमेति च ॥ ३५ ॥

मार्गे च तदर्धम् ॥२१-२९॥ शौचाच्छीघ्रं धर्मसिद्धिः। स्त्रीशूद्रानुपनीतानां गन्धलेपक्षयावधि शौचम्। ततो वर्णक्रमादष्ट षट् चतुर्द्विगण्डूषा वामतस्त्याज्याः। तत आचम्य कुलदेवं स्मरेत। द्विजदक्षहस्ते मध्येऽग्नितीर्थं, मूले ब्राह्मं, तर्जन्यंगुष्ठमध्ये पित्र्यमङ्गुल्यग्रे दैवं, कनिष्ठाध आर्षम्। तैः क्रमात्प्रतिग्रहाचमनपितृदेवर्षिक्रियाः। ब्रह्मतीर्थेन केशव

वामन श्रीधरेत्याभ्यां मुखमुन्मार्जयेत्करम् ॥
वामं प्रोक्ष्य हृषीकेशेत्यङ्घ्री प्रोक्ष्य तथाऽप्युभौ ॥३६॥

पद्मनाभेत्यथो शीर्षं प्रोक्ष्य दामोदरेति च ॥
संहतत्र्यङ्गुलीभिश्च मुखं सङ्कर्षणेति च ॥ ३७ ॥

नासे साङ्गुष्ठतर्जन्या वासुदेवेति नामतः ॥
प्रद्युम्नेत्यथ साङ्गुष्ठानामिक्या चक्षुषी क्रमात् ॥३८॥

स्पृष्ट्वानिरुद्ध पुरुषोत्तमेत्यथ तथा श्रुती ॥
अधोक्षज नृसिंहेति नाभिमच्युतनामतः ॥ ३९ ॥

साल्पाङ्गुष्ठेन च स्पृष्ट्वा हृदं पाणितलेन च ॥
जनार्दनेत्युपेन्द्रेति [1]कं सर्वांगुलिभिः स्पृशेत् ॥ १४० ॥

बाहुमूले कराग्रेण हरे कृष्णेति नामतः ॥
द्विजातेरुपनीतस्य स्मृतमाचमनं त्विदम् ॥ ४१ ॥

नारायण माधवेति त्रिरपः पीत्वा, गोविन्द विष्णो इति करौ प्रक्षाल्य, मधुसूदन त्रिविक्रमेत्यङ्गुष्ठमूलेनोष्ठौ सम्मृज्य, वामन श्रीधरेति मुखं वामकरं च प्रोक्ष्य ॥३०-३८॥ हृषीकेश पद्मनाभेति पदे, शीर्षं च दामोदरेति संहतत्र्यंगुलिभिर्मुखं, सङ्कर्षणेति सांगुष्ठतर्जन्या नासापुटे, सांगुष्ठानामिक्या नेत्रे श्रोत्रे च वासुदेवादिषड्भिः। सांगुष्ठकनिष्ठयाऽच्युतेति नाभिं, तलेन जनार्दनेति हृत्, उपेन्द्रेति सर्वांगुलिभिः शीर्षं, द्वाभ्यां कराग्रेण बाहुमूलयोश्चेति। सन्ध्यावन्दनहोमादौ द्विराचामेत्। एत-

१ मस्तकं.

एवं सन्ध्यावन्दने च होमेऽन्यत्रापि कर्मणि ॥
केशवाद्यैश्चतुर्थ्यन्तैः सम्बुद्धया वापि नामभिः ॥ ४२ ॥

नमोन्तैरेकाचमनं चतुर्विंशतिनामभिः ॥
स्याद्द्विराचमनं भूयस्तथा तैरेव नामभिः ॥ ४३ ॥

आदावन्ते द्विराचामेद्यदि वै तदसम्भवे ॥
केशवाद्यैस्त्रिभिः पीत्वा द्वाभ्यां प्रक्षालयेत्करौ ॥४४॥

ततः कर्णं स्पृशेदेवं सन्ध्यातोऽन्यत्र चोदितम् ॥
शूद्रादिहीनसंस्पर्शे स्नाने वान्तौ च भोजने ॥ ४५ ॥

फलाहाराशने पाने श्मशानागमनेऽपि च ॥
स्वान्यपादक्षालने च द्विराचमनमिष्यते ॥ ४६ ॥

जलालाभे स्पृशेच्छ्रोत्रमेतदन्यत्र कर्मणः ॥
य आचमविधिं कुर्याद्भक्त्या दैन्यं कुतोऽस्य च ॥४७॥

मुखदुर्गन्धनाशार्थं वक्ष्येऽथो दन्तधावनम् ॥
त्यक्त्वा सर्वाणि पर्वाणि षष्ठीं प्रतिपदं तथा ॥ ४८ ॥

दसम्भवे त्रिभिस्त्रिः पीत्वा द्वाभ्यां करौ प्रक्षाल्य कर्णं स्पृशेत्। शूद्रादिस्पर्शे स्नाने वान्तौ आहारे श्मशानगमने स्वान्यपादक्षालने च द्विराचामेत्। विधिवदाचामे कुतो दैन्यम् ॥३९-४७॥ पर्वनन्दानवमीद्वादशीरविभौमाहश्राद्धाहवर्जं दन्तधावनम्। खर्जूरकेतकीनारिकेलकाष्ठैर्दन्तधावने

नवमीं द्वादशीं त्यक्त्वा रविभौमार्कवासरान् ॥
श्राद्धाहं मङ्गलं त्यक्त्वा प्रकुर्याद्दन्तधावनम् ॥ ४९ ॥

कण्टकिद्रुमखर्जूरकेतकीनारिकेलकैः ॥
काष्ठैर्यो धावयेद्दन्तान्स चण्डालो भविष्यति ॥१५०॥

खादिरोदुम्बरवटापामार्गार्ककरञ्जकैः ॥
एतैः सुपुण्यकाष्ठैश्च प्रकुर्याद्दन्तधावनम् ॥ ५१ ॥

द्वादशांगुलकं विप्रे क्षत्रे प्रोक्तं नवांगुलम् ॥
षडंगुलं दन्तकाष्ठं कथितं वैश्यशूद्रयोः ॥ ५२ ॥

आयुर्बलं चेत्यनेन मन्त्रेण प्रार्थ्य मन्त्रवित् ॥
छित्वा काष्ठं मृदूकृत्य तदग्रं धावयेद्रदान् ॥ ५३ ॥

मुखदुर्गन्धीत्यनेन नैर्ऋत्यां काष्ठमुत्सृजेत् ॥
कृत्वा द्वादशगण्डूषान्द्विराचमनमाचरेत् ॥ ५४ ॥

प्रातःस्नानं ततः कुर्याद्येन सर्वं प्रसिध्यति ॥
प्रातःस्नानान्नृणां तेजोबलायुवर्धनं मतम् ॥ ५५ ॥

चण्डालता। खादिरोदुम्बरापामार्गकरञ्जकाष्ठैर्वर्णक्रमाद्द्वादशनवाष्टषडंगुल-मितैर्दन्तधावनम्। आयुर्बलमिति काष्ठं छित्वा मुखदुर्गन्धीति दन्तधावनं कृत्वा नैर्ऋत्यां काष्ठं त्यक्त्वा द्वादशगण्डूषान्कृत्वाचामेत्। ततः सर्व-सिद्धिदं प्रातःस्नानं यस्मात्तेजोबलायुःप्रज्ञावृद्धिदुःस्वप्ननाशदेववशता

प्रज्ञापि वर्धते नश्येद्दुःस्वप्नं[1] सर्वदेवताः ॥
वशा भवन्ति सौभाग्यसुखपुष्टिमुदो लभेत् ॥ ५६ ॥
दरिद्रचिन्ताशोकघ्नं स्नानं पापविनाशनम् ॥
नित्यं कुर्याद्गृहस्थस्तु प्रातर्मध्याह्न एव च ॥ ५७ ॥
यतिर्व्रती वनस्थश्च त्रिकालं तत्समाचरेत् ॥
एकवारं ब्रह्मचारी प्रातःस्नानं समाचरेत् ॥ ५८ ॥
सङ्कटे तु जलालाभेऽशक्तौ रोगे त्विदं मतम् ॥
वायुस्नानं गोरजोभिराग्नेयं भस्मनाम तम् ॥ ५९ ॥
आपोहिष्ठेति तिसृभिर्मन्त्रस्नानमुदीरितम् ॥
भौमस्नानं मृदा प्रोक्तं दिव्यं सातपवर्षतः ॥ १६० ॥
विष्णुध्यानं मानसं च गुरुदर्शनतोऽपि च ॥
तीर्थस्नानफलं प्रोक्तं पित्रोश्चापि पदाम्बुभिः ॥ ६१ ॥
शरीरप्रोक्षणात्तीर्थस्नानजं फलमिष्यते ॥
एतानि गौणस्नानानि सङ्कटे योजयेद्बुधः ॥ ६२ ॥

सौभाग्यपुष्ट्यानन्दाः ॥४८-५६॥ चिन्तादारिद्र्यशोकपापघ्नं प्रातःस्नानं नित्यं कार्यं, सकृद्ब्रह्मचारिणः प्रातर्मध्याह्ने च गृहिणः व्रतिवनियतीनां त्रिकालं। सङ्कटेऽशक्तौ चाऽपोहीतित्रिभिर्मन्त्रस्नानं। मृदा भौमं। सातपवृष्ट्या दिव्यं। विष्णुध्यानं मानसं। गुरुदर्शनं पित्रोः पादाम्बुना प्रोक्षणं तीर्थस्नानं। चण्डालस्य स्पर्शे वान्ते रते च जलावगाहनं।

---

१ स्वप्नशब्दस्य पुंस्त्वेऽपि फलविवक्षया नपुंसकत्वं. तथा च पौराणिकाः॥ दुःस्वप्नं च नृभिर्दृष्टं सुस्वप्नमुपजायते इत्यादि.

जलस्नानेनैव शुद्धिश्चण्डालस्पर्शने मता ॥
वान्ते रते च शूद्रस्य स्पर्शे मान्त्रादि वा चरेत् ॥६३॥

यस्य देहो दृढस्तस्य वारुणं मुख्यमीरितम् ॥
रुग्णस्य चाप्यशक्तस्य गौणस्नानं च शक्तितः ॥६४॥

उष्णोदकेन वाशक्तौ यत्पवित्रं स्वभावतः ॥
जलं तदग्निसंस्पर्शाद्विशेषाद्गृहिणो मतम् ॥ ६५ ॥

गृहे तूष्णोदकस्नाने नाचमो नाघमर्षणम् ॥
न सङ्कल्पस्तर्पणं च वस्त्रनिष्पीडनं स्वतः ॥ १६६ ॥

शीतमिश्रोष्णसलिलैरापोहीति तृचा तथा ॥
गायत्र्या चाभिमन्त्र्यैव स्नायादन्ते च मार्जयेत् ॥६७॥

पुत्रोद्भवक्रान्त्यशौचश्राद्धाहव्रतपर्वसु ॥
नोष्णोदकेन शीतेन न माङ्गल्योत्सवादिषु ॥ ६८ ॥

नद्यां प्रवाहाभिमुखोऽन्यत्र प्राङ्मुख एव वा ॥
सपवित्रो बद्धशिखो मौनी स्नानं समाचरेत् ॥ ६९ ॥

शूद्रादिस्पर्शे यस्य देहो दृढस्तस्य मुख्यम् । अन्यथा गौणं । अशक्तस्यो- ष्णोदकेन वा । जलं स्वभावपूतमग्निस्पर्शाद्विशेषतस्तद्गृहस्थस्य मुख्यं । गृहस्नाने सङ्कल्पाचममार्जनाघमर्षणतर्पणादि न ॥५७-६६॥ शीतजल- मिश्रोष्णजलमापोहीति तृचा गायत्र्याभिमन्त्र्य स्नात्वाऽन्ते मार्जयेत् । पुत्रोत्पत्तिक्रान्तिश्राद्धाहव्रतपर्वसु नोष्णाद्भिर्माङ्गल्योत्सवादिषु न शीताद्भिः स्नायात् । नद्यां प्रवाहाभिमुखोऽन्यत्र प्राङ्मुखः सपवित्रो बद्धशिखो मौनी

कृत्वाघमर्षणं कृत्वा देवादीनां च तर्पणम् ॥
आचम्य मन्त्रवद्वस्त्रं परिधाय स्मरेद्धरिम् ॥ १७० ॥

अपवित्रः पवित्रो वेत्युक्त्वापोहीति मार्जयेत् ॥
निषिद्धो मङ्गलस्नाने रविवारो ज्वरप्रदः ॥ ७१ ॥

कान्तिहानिः सोमवारे भौमवारे मृतिः स्मृता ॥
श्रीलाभो बुधवारे च हानिः स्याद्गुरुवासरे ॥ ७२ ॥

पुत्रहानिः शुक्रवारे सम्पल्लाभः शनेर्दिने ॥
ज्ञात्वैवं मङ्गलं स्नायान्न शीर्ष्णा सधवा सदा ॥ ७३ ॥

अशक्तश्चेन्नदीतीरे नदीं ध्यात्वार्द्रवाससा ॥
देहं संशोधयेत्तेन स्नानस्यापि फलं मतम् ॥ ७४ ॥

काषायरक्तमलिनजीर्णदग्धाम्बरस्य च ॥
एकवस्त्रस्य यत्पुण्यं तद्धरन्तीह राक्षसाः ॥ ७५ ॥

श्वेतवस्त्रं ब्राह्मणस्य मुख्यं प्रावरणं च वा ॥
परिधानोत्तरं भस्म धारयेन्मन्त्रपूर्वकम् ॥ ७६ ॥

स्नायात्। मार्जनाघमर्षणतर्पणादि कृत्वाऽऽचम्य समन्त्रं शुष्कवस्त्रं परिधायापवित्र इति विष्णुं स्मरेत्। रविवारेऽभ्यङ्गस्नाने ज्वरः ॥६७-७१॥ चन्द्रे कान्तिहानिर्भौमे मृतिः, बुधे श्रीलाभः, गुरुशुक्रवारेऽपत्यहानिः, शनौ सम्पल्लाभः। सधवाया नित्यं शिरःस्नानम् न। अशक्तौ गङ्गां स्मृत्वाऽऽर्द्रवस्त्रेण देहशोधने गङ्गास्नानफलम्। काषायरक्तमलिनजीर्ण-दग्धैकवस्त्रधर्तुः पुण्यं राक्षसा हरन्ति ॥७२-७५॥ श्वेतं सोत्तरीयं ब्राह्मणस्यान्येषां रक्तादि। परिधानोत्तरं द्वारवतीगङ्गामृद ऊर्ध्वपुण्ड्रा

द्वार्वती मृत्तिका मुख्या धार्यालाभे तु भस्मनः ॥
तदभावे तु गङ्गामृदूर्ध्वपुण्ड्रः प्रशस्यते ॥ ७७ ॥

अंगुष्ठेन तु पुष्टीच्छुर्विष्णुसायुज्यदां मृदम् ॥
धारयेन्मध्यमांगुल्यायुष्कामोऽथान्नकामवान् ॥७८॥

अनामिकयाथ तर्जन्या मुमुक्षुः पातकी नखैः ॥
दशांगुलस्तूत्तमः स्यान्मध्यमोऽष्टांगुलो मतः ॥ ७९ ॥

षडंगुलः कनिष्ठः स्याद्यथाचारं वहेन्मृदम् ॥
केशवेति ललाटे च नाभौ नारायणेति च ॥ १८० ॥

वक्षस्थले माधवेति गोविन्देति गलेऽपि च ॥
विष्णुनाम्ना दक्षकुक्षौ मधुसूदननामतः ॥ ८१ ॥

दक्षबाहौ दक्षकर्णेऽपि त्रिविक्रमनामतः ॥
वामकुक्षौ वामनेति श्रीधरेत्यपरे भुजे ॥ ८२ ॥

हृषीकेशेत्यन्यकर्णे पद्मनाभेति पृष्ठतः ॥
दामोदरेति मूर्ध्न्येवं कृष्णे[१] सङ्कर्षणादिभिः ॥ ८३ ॥

धार्याः। पुष्टीच्छुरंगुष्ठेनायुष्कामो मध्यमयान्नकामोऽनामिक्या तर्जन्या-मुमुक्षुर्विष्णुसायुज्यदां मृदं दध्यात्। नखैर्धारणात् पापम्। दशाष्टषडंगुल-तिलका उत्तममध्यमाधमाः। शुक्ले केशवादिभिः कृष्णे सङ्कर्षणादिभिर्लला-टनाभिवक्षोगलदक्षकुक्षिबाहुकर्णवामकुक्षिभुजकर्णपृष्ठमूर्धसु तथा भस्मना

१ कृष्णपक्षे,

ऊर्ध्वपुण्ड्रान्मृदा धृत्वा ततो भस्मापि धारयेत् ॥
हरेर्हरस्यापि तोषाद्भुक्तिर्मुक्तिश्च निश्चिता ॥ ८४ ॥

श्राद्धादौ देवताकृत्ये विवाहादिदिने शुभे ॥
अभ्यङ्गोर्ध्वं सूतके च मृत्तिकां नैव धारयेत् ॥ ८५ ॥

ब्रह्मयज्ञे तर्पणे च यज्ञे सन्ध्यादिकर्मसु ॥
दर्भा ग्राह्या अवश्यं ते दशधा परिकीर्तिताः ॥ ८६ ॥

कुशकाशयवोशीर[1]गोधूमव्रीहिकुन्दराः[2] ॥
तृणं मौञ्जयाश्च दूर्वाश्च दश दर्भाः प्रकीर्तिताः ॥८७॥

आहरेत्प्रत्यहं दूर्वा श्रावणे मासि दर्शके ॥
अयातयामाः सम्प्रोक्ता आहृता मन्त्रपूर्वकम् ॥ ८८ ॥

दूर्वाश्चतस्रो विप्रस्य तिस्रस्तु क्षत्रियस्य च ॥
विशो द्वे शूद्रस्य चैका पवित्रार्थं करे स्मृता ॥ ८९ ॥

दूर्वाया महिमापारो मूले रुद्रोऽग्रतो विधिः ॥
मध्ये विष्णुः स्थितस्तस्याः पवित्रं पापनाशनम् ९०

तिर्यक्पुण्ड्राः च धार्यास्ततो हरिहरतोषाद्भुक्तिमुक्ती च । श्राद्धादौ विवाहादिशुभे दिनेऽभ्यङ्गे च न भस्म धार्यम् ॥७६-८५॥ सूतके न मृत् । तर्पणसन्ध्यादिकर्मसु दर्भपवित्रस्यावश्यकता । कुशकाशयवोशीरगोधूमव्रीहिकुन्दरतृणमौञ्जदूर्वा दशदर्भाः प्रत्यहं श्रावणे दर्शे वा ग्राह्यास्तेऽयातयामाः। विप्रस्य चत्वारः, क्षत्रस्य त्रयो, विशो द्वौ, शूद्रस्यैकः, पवित्रार्थं

[1] वाळा [2] पोईशाक.

चक्रं धृत्वा करे विष्णुर्यथा दैत्यान्निहन्ति च ॥
निहन्ति राक्षसान्धृत्वा त्रिशूलं हीश्वरो यथा ॥ ९१ ॥
वज्रं धृत्वा यथेन्द्रश्च हन्त्यद्रीनेवमेव च ॥
दूर्वापवित्रं धृत्वैव निःशेषं हन्ति पातकम् ॥ ९२ ॥
तृणाद्रिं स्पर्शनादग्निर्भस्मसात्कुरुते यथा ॥
तथा दर्भपवित्रं च भस्मसात्कुरुते ह्यघम् ॥ ९३ ॥
सग्रन्थि ब्रह्मयज्ञादौ भोजने ग्रन्थिवर्जितम् ॥
पवित्रं धारयेद्भक्त्या ब्राह्मणः करयोर्द्वयोः ॥ ९४ ॥
कर्पूरमग्निर्वा[1]घौघं पवित्रं दहति क्षणात् ॥
प्रादेशमात्रे द्वे दर्भे पवित्रं कर्मणि स्मृतम् ॥ ९५ ॥
दाने जपादौ स्वाध्याये होमे च पितृकर्मणि ॥
सुवर्णरौप्यमुद्रे च सपवित्रे च धारयेत् ॥ ९६ ॥
दैवे विशिष्टा सौवर्णी राजती पितृकर्मणि ॥
अनामिक्यां तु सौवर्णी तर्जन्यां रजतस्य च ॥ ९७ ॥

करे धार्यः ॥८६-९०॥ मूलेऽस्य रुद्रो, मध्ये विष्णुरग्रे विधिः । चक्रं धृत्वा विष्णुः, शूलं धृत्वा रुद्रो, व्रजं धृत्वा शक्रोऽरीन्हन्ति तथा पवित्रधारी पापं हन्ति । तृणाद्रिमग्निरिव पवित्रं पापं दहति । सग्रन्थि यज्ञादौ ग्रन्थिहीनं भोजने च पवित्रम् ॥९१-९४॥ प्रादेशमात्रदर्भपवित्रे करयोर्धृते कर्पूरमग्निरिवाघं हरतः । जपदानहोमादौ स्वर्णरौप्यमुद्रायुतपवित्रे धार्ये । दैवे सौवर्णी, पैत्र्ये राजती, अनामिक्यां सौवर्णी, तर्जन्यां राजती, खड्गमुद्रा

१ अग्निरिव.

खड्गमुद्रा कनिष्ठिक्यां न जीवत्पितृकस्य सा ॥
योगपट्टोत्तरीये च तर्जन्यां रौप्यमुद्रिका ॥ ९८ ॥

गयाश्राद्धं पादुके च न जीवत्पितृकस्य च ॥
नवरत्नाङ्किता मुद्रा यस्य तस्य न पातकम् ॥ ९९ ॥

एकरत्नान्वितां वाऽपि मुद्रां दध्याद्द्विजः सदा ॥
सन्ध्याकालं प्रवक्ष्यामि त्रिप्रकारं द्विजोत्तमाः ॥२००॥

उत्तमा तारकोपेता मध्यमा लुप्ततारका ॥
अधमा सूर्यसहिता प्रातःसन्ध्या त्रिधा मता ॥ १ ॥

उत्तमा भास्करोपेता मध्यमा लुप्तभास्करा ॥
अधमा तारकोपेता सायंसन्ध्या त्रिधा मता ॥ २ ॥

अध्यर्धयामादासायं सन्ध्या मध्याह्निकी स्मृता ॥
पूर्वं तु विहितात्कालात्करणं व्यर्थमीरितम् ॥ ३ ॥

शिखां बध्वा दर्भपाणिर्द्विराचम्य यथाविधि ॥
धृत्वाल्पानामिकांगुष्ठैर्यतिर्वर्णी च पञ्चभिः ॥ ४ ॥

कनिष्ठिक्याम् । सा जीवत्पितृकस्य न । तथा योगपट्टोत्तरीयगयाश्राद्ध-पादुका न । नवरत्नाङ्कितैकरत्नाङ्किता वा शस्ता । नक्षत्रयुता प्रातः-सन्ध्योत्तमा, लुप्तनक्षत्रा मध्यमार्कसहिताधमा । सायंसन्ध्यार्क-युक्तोत्तमा, लुप्तार्का मध्यमा, सनक्षत्राधमाध्यर्धयामादासायं मध्याह्न-सन्ध्या । विहितादन्यत्राचरणं निष्फलम् ॥९९-२०३॥ शिखां बध्वा

गृही नासां शनैर्वायुं सव्ययापूर्य कुम्भके ॥
सोङ्कारा व्याहृतीः सप्त गायत्रीं शिरसा सह ॥ ५ ॥

त्रिर्जपेद्दक्षनाडीतः शनैरेव विरेचयेत् ॥
वामहस्ते स्वर्णरौप्यकाष्ठपात्रं जलान्वितम् ॥ ६ ॥

निधाय मार्जयेन्निन्द्यं भिन्नं द्विमुखमृण्मये ॥
वरान्तैर्मूर्ध्नि नान्तैश्च पदोर्हृदि सथांततः ॥ ७ ॥

आपोहिष्ठेति तिसृभिः पच्छो मार्जनमीरितम् ॥
प्रातः सूर्यश्चेति मध्यन्दिन आपः पुनंत्विति ॥ ८ ॥

सायमग्निश्चेति मन्त्राचमं कृत्वाप्युपस्पृशेत्[3] ॥
मार्जयित्वाप[4]सूक्तेन ऋतञ्चेत्यघमर्षणम् ॥ ९ ॥

कृत्वाचम्याथ गायत्र्या त्रिरर्घ्याणि प्रदापयेत् ॥
मित्राय गोशृङ्ग[5]मात्रमुद्धृत्यैव जलाञ्जलिम् ॥ २१० ॥

सपवित्र आचम्येडया[1] पूरयित्वा गृहस्थः पञ्चांगुलिभिरन्योऽल्पानामिकांगुष्ठैः कुम्भयित्वा सोङ्कारा व्याहृतीः सशिरस्कां गायत्रीं च त्रिर्जपित्वा शनैः पिङ्गलया[2] रेचयेत्। वामहस्ते स्वर्णादिपात्रे जलं धृत्वा मार्जयेत्। भिन्नं द्विमुखं मृण्मयं पात्रं वर्ज्यम्। वरान्तैर्मूर्ध्नि, नान्तैः पदे, हृदि सथान्तैरापोहीति तृचेन मार्जयित्वा प्रातः सूर्यश्चेति, मध्यान्हे आपः पुनंत्विति, सायं चाग्निश्चेति प्राश्याप्सूक्तेन मार्जयित्वर्तञ्चेत्यघमर्षणं कृत्वाचम्य तिष्ठन्गोशृङ्गमात्रमुद्धृत्याञ्जलिना गायत्र्या त्रिरर्घ्याणि कालात्यये

---

१ डावी नाकपुडी २ उजवी नाकपुडी ३ आचामेत् ४ आपोहिष्ठेतिनवर्चेन ५ द्वादशांगुलम्.

तुर्यं कालात्ययेऽथैकं मध्याह्ने हंस इत्यृचा ॥
उपविष्टोऽर्पयेत्सायं कथयिष्येऽर्घ्यकारणम् ॥ ११ ॥

त्रयस्त्रिंशत्कोटिमिता मन्देहाख्यास्तु राक्षसाः ॥
कुर्वंत्यर्कोदये विघ्नं ततो लुप्येत कर्म च ॥ १२ ॥

उपोषणं च देवानां भवेन्नश्येदतो जगत् ॥
तस्मादर्घ्याणि देयानि तानि वज्रोपमानि तु ॥ १३ ॥

दैत्यान्प्रतिदिनं घ्नन्ति ते तु ब्रह्मकुलोद्भवाः ॥
हत्या तद्धननात्तस्मात्कर्तव्या भूप्रदक्षिणा ॥ १४ ॥

असावादित्यो ब्रह्मेति ध्यात्वासिच्य प्रदक्षिणम् ॥
परीत्य ब्रह्महत्यातो ब्राह्मणो हि भवेच्छुचिः ॥ १५ ॥

गृहे त्वेकगुणं पुण्यं बहिर्दशगुणं स्मृतम् ॥
नद्यां शतगुणं तीर्थे पुष्करादौ सहस्रकम् ॥ १६ ॥

चतुर्थं । तथैवोपविष्टः सायं । मध्यान्हे आनतो हंस इत्यृचैकं च दद्यात् ॥ ४-११ ॥ त्रयस्त्रिंशत्कोटिमिता मन्देहसंज्ञा राक्षसाः सूर्योदये विघ्नं कुर्वन्ति ततः कर्म लुप्येत । देवानामुपोषणं जगन्नाशश्चातो वज्रास्त्रोपमार्घ्यदानाद्दैत्यनाशस्ते ब्रह्मकुलजास्तद्धत्याशान्त्यै असावादित्यो ब्रह्मेति परिक्रमाद्भूप्रदक्षिणापुण्यम् । ततो दोषनाशः । सन्ध्यायां गृहे एकगुणपुण्यम् । बहिर्दशगुणं नद्यां शतगुणं । पुष्करादौ सहस्रं । गङ्गाया-

अमितं सुरनद्यां[1] च सन्ध्यावन्दनजं फलम् ॥
दिवारतिसुरापानमिथ्याभाषणपातकम् ॥ १७ ॥

बहिःसन्ध्यावन्दनेन नश्येत्तद्वज्जपस्य हि ॥
गृह एकगुणं नद्यां त्रिघ्नं दशगुणं वने ॥ १८ ॥

गोष्ठे च वह्निशालायां शतघ्नं तीर्थदेवयोः ॥
सहस्रघ्नं[2] हरिहरसमीपेऽनन्तमीरितम् ॥ १९ ॥

जपे काष्ठासने दुःखं यशोहानिर्ऋणं भवेत् ॥
दौरात्म्यं पल्लवे वस्त्रे दारिद्र्यं व्याधिरश्मनि ॥ २२० ॥

कुशासने वशीकारो रोगपापविनाशनम् ॥
प्रज्ञायुष्याभिवृद्धिश्च भस्मनि व्याधिनाशनम् ॥ २१ ॥

सौख्यं च कम्बले पीठे ज्ञानं कृष्णाजिने स्मृतम् ॥
श्रीर्मोक्षो व्याघ्रकृत्तौ च व्याहृत्योपविशेदिहै[3] ॥ २२ ॥

ममितम् । बहिः सन्ध्यावन्दने दिवारतिसुरापानानृतभाषणाघनाशः । जपे गृहे एकगुणं पुण्यं । नद्यां त्रिगुणं । वने गोष्ठे च दशगुणं । वह्निशालायां शतगुणं । तीर्थे सहस्रं । हरिहरसमीपेऽनन्तफलम् ॥१२-२०॥ तीर्थे सहस्रं । हरिहरसमीपेऽनन्तफलम् । काष्ठासने दुःखमयशो ऋणं । पल्लवे दारिद्र्यं । पाषाणे व्याधिः । कुशे वशीकारो रोगपापनाशः प्रज्ञायुर्वृद्धिः । भस्मन्यारोग्यं । कम्बले सुखं । कृष्णाजिने ज्ञानं । व्याघ्रकृत्तौ श्रीर्मोक्षश्च ।

---

१ गंगायां. २ सहस्रगुणितं ३ आसने.

प्रयतः पृथिवीं प्रार्थ्य भूतान्युत्सार्य भावयेत् ॥
यथाङ्गमात्मन्यात्मानं देव्या तद्रूपमेकधीः ॥ २३ ॥

आर्षदैवतछन्दांसि स्मरन्नक्षरपूर्वकान् ॥
न्यासान्कृत्वा तत्त्वमुद्राः प्रदर्श्य मनुदेवताम् ॥ २४ ॥

तां बालां बालादित्येति त्रिभिर्ध्यानैस्त्रिकालतः ॥
ध्यात्वा चागच्छ वरद इति तिष्ठन्समाहितः ॥२५॥

प्राङ्मुखो मन्त्रार्थमनुसन्दधानो जपेच्छनैः ॥
सोङ्कारव्याहृतिं देवीं छिन्नपादां स्रजांशुके ॥ २६ ॥

सावधानेन मनसा नासाग्रार्पितदर्शनः ॥
शनैर्जपित्वा गायत्रीं न्यसेदन्ते हृदादिषु ॥ २७ ॥

प्रशंसन्तीह गायत्रीं गायन्तं त्रायते यतः ॥
सर्वेषां सम्मतं त्वेतन्मन्त्र इत्यक्षरद्वयम् ॥ २८ ॥

मकारं मन इत्याहुस्त्रकारं त्राणमेव च ॥
मनस्त्राणात्स्मृतो मन्त्रः पापतापापहारकः ॥ २९ ॥

व्याहृत्योपविश्य भूमिं प्रार्थ्य भूतान्युत्सार्यार्षछन्दोदैवतस्मृतिपूर्वं न्यासं कृत्वा मुद्राः प्रदर्श्य बालां बालादित्येति त्रिभिस्त्रिकालं ध्यात्वागच्छ-वरद इति प्राङ्मुखस्तिष्ठन्मन्त्रार्थमनुसंदधानोऽविच्छेदपूर्वकं सोङ्कारव्याहृति-गायत्रीं वस्त्राच्छन्नमालयैकाग्र्येण नासाग्रदृष्टिः शनैर्जपित्वान्ते हृदादि न्यासान्कुर्यात्। गायतस्त्राणाद्गायत्री, मनस्त्राणान्मन्त्रः ॥२१-२९॥

जकारो जन्मविच्छेदः पकारः पापनाशकः ॥
तयोर्योगाज्जपः प्रोक्तः पापजन्मनिवर्तकः ॥ ३० ॥

मूलं हि सर्ववेदानां गायत्री सर्वसम्मता ॥
गायत्र्याश्च जपादेव वेदपाठफलं लभेत् ॥ ३१ ॥

जन्म सूकरवत्तस्य गायत्रीं न जपेत्तु यः ॥
गायत्रीं यो जपेद्विप्रः सोऽभीष्टफलभाग्भवेत् ॥ ३२ ॥

गायत्रीमात्रसारो हि ब्राह्मणः परिकीर्तितः ॥
करोतु वा न वाप्यन्यत्स मैत्रो ब्राह्मणः स्मृतः ॥३३॥

जले जपति यस्तस्य प्रज्ञाहानिर्भवेत्खलु ॥
जलेऽग्नयस्त्रयः सन्ति श्रुत्युक्ता विश्वभेषजीः[1] ॥ ३४ ॥

दक्षिणाग्निर्गार्हपत्याहवनीय इति त्रयः ॥
सन्त्यप्स्वतो जपात्तत्र मन्त्रतेजो विनश्यति ॥ ३५ ॥

अतो जपे जलं वर्ज्यमुपविश्य शुभासने ॥
मालां धृत्वा नाभिदेशे प्रातःकाले जपेन्मनुम् ॥३६॥

जन्मविच्छेदपापनाशनाज्जपः वेदमूलगायत्रीजपाद्वेदपाठफलमिष्टाप्तिश्च। तं विना द्विजस्य सूकरत्वम्। जले त्रयोऽग्नयस्तत्र जपात्प्रज्ञाहानिः। प्रातर्नाभिदेशे, मध्याह्ने हृदि, सायं मुखसमीपे च जपमाला धार्या।

---

१ अप्सु मे सोमो अब्रवीदंतर्विश्वानि भेषजा ॥ अग्निं च विश्वशंभुवं ॥ आपश्च विश्वभेषजीः ॥.

मध्याह्ने हृदयस्थाने मालां धृत्वा जपेन्मनुम् ॥
मालां मुखसमीपे च धृत्वा सायं जपेन्मनुम् ॥ ३७ ॥

प्रातःकाले जपेत्तिष्ठन्मध्याह्ने चोन्मुखो जपेत् ॥
उपविश्याथवा स्थित्वा पक्षद्वयमिहोदितम् ॥ ३८ ॥

उपविश्यैव सायं तु जपेद्वृक्षाग्रदर्शनः ॥
वृक्षाभावे नासिकाग्रनयनो जपमाचरेत् ॥ ३९ ॥

गृहस्थोऽष्टोत्तरशतं त्रिकालं जपमाचरेत् ॥
वानप्रस्थश्च संन्यासी सहस्रं जपमाचरेत् ॥ २४० ॥

अष्टोत्तरशतं कुर्याज्जपमार्तोऽथवा द्विजः ॥
अष्टाविंशतिसङ्ख्याकं शक्तश्चेत्स ततोऽधिकम् ॥४१॥

मानसस्तूत्तमजप उपांशुर्मध्यमो मतः ॥
उच्चैः श्रुतः परैर्यस्तु वाचिकः सोऽधमो मतः ॥४२॥

त्रिपदीं यस्तु गायत्रीं जपेद्व्याहृतिभिः सह ॥
सोङ्कारां तस्य नश्यन्ति महापापानि सर्वशः ॥ ४३ ॥

प्रातस्तिष्ठन्तथा मध्याह्ने उन्मुखः, सायमुपविश्य च जपेत् ॥३०-३९॥ गृहिणोऽष्टोत्तरशतजपः। प्रतिसन्ध्यं यतिवनिनोः सहस्रमार्तस्याष्टोत्तरशतमष्टाविंशतिर्वा। शक्तस्याधिकजपः। मानस उत्तमः, उपांशुजपो मध्यमः, उच्चैरधमः। प्रतिपादं विरम्य सोङ्कारव्याहृतिगायत्रीजपाद्

प्रतिपादं विरम्यैव यो जपेद्भक्तिभावितः ॥
सर्वे तस्य महादोषाः प्रणश्यन्ति न संशयः ॥ ४४ ॥

अतोऽवश्यं जपेत्पच्छो ब्रह्महत्यादिपातकम् ॥
परिहाय लभेत्पुण्यमनन्तं[1] नात्र संशयः ॥ ४५ ॥

सङ्ख्यानात्करशाखाभिः फलमेकगुणं जपे ॥
अङ्गुलीपर्वभिश्चापि फलं दशगुणं स्मृतम् ॥ ४६ ॥

सङ्ख्यानाच्छङ्खमणिभिः फलं शतगुणं स्मृतम् ॥
प्रवालमालाजपतः सहस्रगुणितं फलम् ॥ ४७ ॥

स्फटिकैः परिसङ्ख्यानात्फलं दशसहस्रकम् ॥
मौक्तिकैर्लक्षसङ्ख्याकं दशलक्षं च पद्मकैः ॥ ४८ ॥

फलं कोटिगुणं स्वर्णमणिभिर्गणनात्स्मृतम् ॥
रुद्राक्षैर्गणनात्पुण्यमनन्तं जपकर्मणि ॥ ४९ ॥

कुशग्रन्थिमयीमाला जपेऽपि बहुपुण्यदा ॥
जपेत्सुनिश्चलं स्थित्वा मालाशब्दं न कारयेत् ॥२५०॥

ब्रह्महत्यादिमहापापनाशोऽनन्तपुण्यं च । करशाखांगुलिपर्वशंखमणिप्रवालस्फटिकमौक्तिकपद्माक्षिस्वर्णमणिरुद्राक्षमालाभिरुत्तरोत्तरं दशगुणितं पुण्यम् ॥४०-४९॥ कुशग्रन्थिमालाऽपि बहुपुण्यदा । मणिशब्दो न

---

१ मोक्षपर्यवसायि.

संस्कृतां ग्रथितां मालामाच्छाद्य जपमाचरेत् ॥
मणिमङ्गुष्ठमध्याभ्यामपसार्य जपेन्मनुम् ॥ ५१ ॥

मालाप्रान्ते स्थितो मेरुर्जपे तं नैव लङ्घयेत् ॥
त्रिःप्राणायामतो मेरूल्लङ्घनाघं विनश्यति ॥ ५२ ॥

त्रिदिनं यस्तु नियतो गायत्रीजपमाचरेत् ॥
त्रिविधानि च पापानि तस्य नश्यन्ति सर्वशः ॥५३॥

सन्ध्यातिरिक्तगायत्रीजपादष्टोत्तराच्छतात् ॥
लघुपापानि नश्यन्ति नात्रकार्या विचारणा ॥ ५४ ॥

सहस्रजपतो देव्यां[1] उपपापपरिक्षयः ॥
महापातकसंहारो देव्याः कोटिजपान्मतः ॥ ५५ ॥

यं यं चिन्तयते कामं तं तं प्राप्नोति जापकः ॥
जपेद्यो द्रव्यमादाय तस्य दोषा अनेकशः ॥ ५६ ॥

द्रव्यादानेन जपतश्चण्डालीं योनिमाव्रजेत् ॥
जपेन्मनो दृढं कृत्वा पश्येन्नेतस्ततो जपी ॥ ५७ ॥

कार्यः । संस्कृतमाला ग्राह्यांगुष्ठमध्याभ्यां मणिरपसार्यः मेरूल्लंघने त्रिः प्राणायामाः । त्रिदिनं गायत्रीजपात्त्रिविधपापलयः । सन्ध्यातिरिक्ताष्टोत्तरशतवारगायत्रीजपाल्लघुपापनाशः । सहस्रजपादुपपापनाशः । कोटिजपान्महापापनाश इष्टकामाप्तिश्च । द्रव्यादानतो जपाच्चण्डालत्वं । शूद्रादि-

१ गायत्र्याः.

न वदेत्कञ्चन जपेन्नैव शूद्रादिसन्निधौ ॥
कण्डूयनं नैव कुर्याज्जपकाले कदाचन ॥ ५८ ॥

अज्ञानतो यदि भवेद्दोष एकतमोऽपि च ॥
श्रोत्रं स्पृष्ट्वा स्मरेद्विष्णुं दोषा नश्यन्ति तस्य च ५९

यत्रोपदिश्यते देवी देवता दश यत्र च ॥
तत्कर्णस्पर्शनाद्दोषा नश्यन्ति ब्राह्मणस्य हि ॥ ६० ॥

जपकाले तु चण्डालो यदा दृष्टिपथं व्रजेत् ॥
कुर्याद्द्विराचमं तेन तस्य शुद्धिः प्रकीर्तिता ॥ ६१ ॥

सम्भाषणात्तु पतितैः स्नानादेव शुचिर्मतः ॥
तस्मात्सर्वप्रयत्नेन भाव्यं मौनव्रता जपे ॥ ६२ ॥

अगत्या तु स्वजातीयैर्भाषणं चेत्कृतं जपे ॥
तद्विष्णोरिति मन्त्रेण शुद्धिस्तस्यापि कर्मणि ॥ ६३ ॥

यदायाति जपे निद्राप्यपानो वा व्रजेदधः ॥
जृम्भो वा स भवेद्दोषी क्रोधयुक्तस्तथैव च ॥ ६४ ॥

समीपे न जपेत्। जपे कण्डूयनभाषणादिवर्ज्यं अज्ञानतो दोषे कर्णं स्पृष्ट्वा विष्णुं स्मरेत् ॥५०-५९॥ जपे चण्डालदर्शने द्विराचमनम्। पतितादिसम्भाषणे स्नानं। ततो मौनी जपेत्। अगत्या स्वजातीयैः सह भाषणे तद्विष्णोरिति जपः। जपे निद्रागमेऽधो वायुगतौ जृम्भणे वा

अज्ञानाज्ज्ञानतो वापि यदि दोषः समुद्भवेत् ॥
श्रोत्राचमाच्छुचिः स स्यात्सूर्यधेनुप्रदर्शनात् ॥ ६५ ॥

जपादिदं विष्णुरिति दोषनाशः पुरोदितः ॥
एवं जपात्सर्वसिद्धिर्ऋषयो नात्र संशयः ॥ ६६ ॥

ततः प्रातर्जपेन्मैत्रमन्त्रान्मध्यन्दिने तथा ॥
सौरान्सायमुपस्थाने वारुणांश्च क्रमाज्जपेत् ॥ ६७ ॥

स्वसूत्रोदितमन्त्रांश्च यथाविधि[1] जपेद्बुधः ॥
वृद्धाचारप्रमाणेन कुर्याद्गुर्वभिवादनम् ॥ ६८ ॥

दिशस्तासां पतींश्चापि परिक्रम्य नमेद्द्विजः ॥
उच्चार्य गोत्रप्रवरान्छर्मान्तं[2]स्वाख्यया नमेत् ॥ ६९ ॥

एवं सन्ध्यामुपास्याथ कुर्यादौपासनं गृही ॥
सायं प्रातर्विवाहोर्ध्वं नियतं[3] होममाचरेत् ॥ २७० ॥

आरम्भः सायङ्कालात्तु द्विवारं होममाचरेत् ॥
उदितोऽनुदितश्चेति पक्षौ द्वौ होम एव हि ॥ ७१ ॥

क्रोधे वा कर्णं स्पृष्ट्वा सूर्यं धेनुं च दृष्ट्वेदंविष्णुरिति जपेत् ॥६०-६६॥ प्रातर्मैत्रैर्मध्याह्ने सौरैः सायं वारुणैर्मन्त्रैरुपस्थाय ॥ ६७ ॥ स्वसूत्रोक्तमन्त्रान्जप्त्वा दिगीशान्नत्वा गोत्राद्युच्चारपूर्वकं गुरुमभिवादयेत् ॥६८-६९॥ तत उदितानुदितपक्षानुसारेण सायं प्रातश्चौपासनं कुर्यात्। भूस्थे खर्परस्थेऽग्नौ न जुहुयात्। विधितः कुण्डे स्थण्डिले वाऽग्निं प्रतिष्ठाप्य

१ ऋष्यादिस्मरणपूर्वकं २ वर्मादेरप्युपलक्षणं ३ नित्यं नैमित्तिकं.

भूमिष्ठे खर्परस्थेऽग्नौ न हुनेत्स्थण्डिलेऽनलम् ॥
कुण्डे वा संस्कृते स्थाप्य हुनेद्वाप्संस्कृतक्षितौ ॥ ७२ ॥

कुण्डस्थाग्निं शुचिः प्रादुष्कृत्यार्कास्तोदयात्पुरा ॥
दीप्ते वह्नौ हुनेन्नैव शूर्पेणाग्निं प्रदीपयेत् ॥ ७३ ॥

पर्णेन दीपनाद्व्याधिः शूर्पेण च धनक्षयः ॥
हस्तेन धमनान्मृत्युर्मुखेनायुःक्षयो मतः ॥ ७४ ॥

धमेद्वेणुधमन्याग्निं व्यजनेनाथवा द्विजः ॥
प्रज्वाल्य शुष्ककाष्ठैस्तं ध्यात्वाभ्यर्च्य यथाविधि॥७५॥

यत्र ज्वालाः सुदीप्ताश्च तत्रैवाहुतिरिष्यते ॥
प्राग्घुत्वा समिधं पश्चाद्धुनेद्द्रव्यं सुसंस्कृतम् ॥ ७६ ॥

समिधः पुष्पदूर्वाद्या शूद्रानीता विगर्हिताः ॥
विप्रक्रीताश्च होमस्य द्रव्याणि कथयामि वः ॥ ७७ ॥

नीवाराः शालयस्तेषां तण्डुलाश्च मनोहराः ॥
गोधूमाश्च यवा यावनाला मुख्यस्तु गोरसः ॥ ७८ ॥

सूर्यास्तोदयात्प्राक्प्रादुष्कृत्य वेणुधमन्या व्यजनेन वा धमेत्। शूर्पपर्णहस्त-मुखतो धमनाद्धननाशो व्याधिर्मृत्युरायुःक्षयः। समित्पुष्पदूर्वाद्याः शूद्रानीता विप्रक्रीता निन्द्याः नीवारशालितण्डुलगोधूमयवयावनालगोरसा होम्याः

षष्टिसंख्याकधान्यैश्च जुहुयात्प्रथमाहुतिम् ॥
घृतप्लुतां न च न्यूनां द्वितीयां भूयसीं ततः ॥७९॥

घृताभावे कदाचित्तु तिलतैलं प्रशस्यते ॥
तिला अपि च होतव्यास्तेऽपि हौम्याः स्मृता बुधैः २८०

उपस्थानादि कृत्वैवं होमं कृत्वा ततः परम् ॥
ब्रह्मयज्ञं तर्पणं च बहिः कुर्याद्वदामि तत् ॥ ८१ ॥

मध्याह्नसन्ध्योत्तरं वा प्रातर्होमोत्तरं तु वा ॥
ब्रह्मयज्ञं सकृत्कुर्याद्वैश्वदेवोत्तरं तु वा ॥ ८२ ॥

जलाशयसमीपे तु ब्रह्मयज्ञः प्रशस्यते ॥
स्नात्वाचम्य नियम्यासून् जपेद्विद्युदसीति च ॥८३॥

वामोरूपरि संस्थाप्य दक्षिणं पादमेव च ॥
कृत्वोपस्थं करे वामे दूर्वे धृत्वा ततो द्विजः ॥ ८४ ॥

सन्धाय वामान्यकरौ धृत्वा तौ दक्षजानुनि ॥
द्यावापृथिव्योर्वा सन्धि वीक्षमाणो जपेत्ततः ॥ ८५ ॥

॥७०-७८॥ ज्वालायां समिधं हुत्वा षष्टिधान्यैः पूर्वाहुतिं ततो भूयसीं द्वितीयां हुनेत्। घृताभावे तिलतैलं तिलाश्च हौम्याः। उपस्थानादि समाप्य ब्रह्मयज्ञः त्वधुना मध्यान्हसंध्योत्तरं वैश्वदेवान्ते वा सकृत्कार्यः। जलाशये स्नात्वाचम्योपस्थं कृत्वा सपवित्रांजलिं दक्षजानुनि धृत्वा

सोङ्कारव्याहृतिं देवीं त्रिवारं प्रजपेद्बुधः ॥
पच्छोऽर्धर्चश ऋक्शश्च साङ्गं वेदं ततः क्रमात् ॥८६॥

स्वाध्यायदिवसे वेदान्यथाशक्ति जपेद्द्विजः ॥
अनध्याये तु सम्प्राप्ते स्वल्पं वेदं जपेद्द्विजः ॥ ८७ ॥

अध्यायं वापि सूक्तं वा तदशक्तावृचोऽपि वा ॥
परिदध्यान्मनुं चान्ते नमो ब्रह्मण इत्यमुम् ॥ ८८ ॥

ततो वृष्टिरसीत्युक्त्वा विसृजेदञ्जलिं ततः॥
ततश्च तर्पणं कुर्यादृषयः कथयामि वः ॥ ८९ ॥

दर्भा मुख्या ब्रह्मयज्ञे यत्र देवाः प्रतिष्ठिताः ॥
वसुरुद्रादित्यदेवपितृतृप्तिर्यतो भवेत् ॥ २९० ॥

ब्रह्मयज्ञो दिवा कार्यो नावकाशो यदा तदा ॥
गायत्रीं त्रिः पठेत्तेन वेदपाठफलं लभेत् ॥ ९१ ॥

द्यावापृथिव्योः सन्धिं वीक्षमाणः सोऽङ्कारव्याहृतीः पच्छोऽर्धर्चश ऋक्शो गायत्रीं स्वाध्याये शक्त्या साङ्गं वेदमनध्याये सूक्तमृचो वा जपित्वा त्रिर्नमो ब्रह्मण इति ॥७९-८८॥ वृष्टिरसीति च पठित्वा तर्पयेत्तत्र मुख्या दर्भा यत्र देवाः स्थितास्ततो वसुरुद्रादित्यदेवर्षिपितृतृप्तिः। ब्रह्मयज्ञो दिवा कार्यः। सङ्कटे त्रिवारं गायत्रीजपाद्वेदपाठफलम्। ततो देवतीर्थेन

---

१ त्रिरावर्तयेत्.

देवांश्च देवतीर्थेन सकुशाग्रयवाम्बुना ॥
ऋषितीर्थादृषीन्पितॄन्पितृतीर्थेन तर्पयेत् ॥ ९२ ॥

पात्रे न तर्पणं कार्यं न तथैव जलाशये ॥
नापि भूमौ तथा गेहे निषिद्धं परिकीर्तितम् ॥ ९३ ॥

भूमौ दर्भान्निधायैव तत्र तर्पणमाचरेत् ॥
नामोच्चारणपूर्वं तु कुर्याद्भक्तिपुरःसरम् ॥ ९४ ॥

सतिलाञ्जलयो देयाः पितृभ्योऽपि यथोक्तवत् ॥
शिलायां न तिला धार्या न भूमौ काष्ठपात्रके ॥ ९५ ॥

रोमकूपादिस्थानेषु स्थापिताश्च तिलास्तु ये ॥
भवन्तु ते कृमिप्राया निषिद्धास्ते न संशयः ॥ ९६ ॥

गृहे तु तर्पणे नैव तिला ग्राह्याः कदाचन ॥
बहिर्जलाशये नित्यं प्रकुर्यात्तिलतर्पणम् ॥ ९७ ॥

श्वेतास्तिला देवतानामृषीणां धूम्रवर्णकाः ॥
कृष्णास्तिलाः प्रशस्यन्ते पितॄणां तर्पणादिषु ॥ ९८ ॥

सयवकुशाद्भिर्देवतर्पणम्। ऋषितीर्थेनर्षितर्पणम्। पितृतीर्थेन तिलाद्भिश्च पितृतर्पणम्। पात्रे जले भूमौ न कार्यम्। भूमौ दर्भान्निधाय तत्र कार्यम्। भक्त्या नामगोत्राद्युच्चारपूर्वकं तर्पणं कार्यम्। गृहे न तिलैस्तर्पणम्। शिलाभूमिकाष्ठरोमकूपादिषु स्थापितास्तिलाः कृमिप्रायाः ॥८९-९७॥ श्वेता देवानां, धूम्रा ऋषीणां, कृष्णाः पितॄणाम् ॥ ९८ ॥ देवार्थमुपवीतं

उपवीती देवकार्ये निवीती ऋषिकर्मणि ॥
प्राचीनावीत्यपि तथा सर्वदा पितृकर्मणि ॥ ९९ ॥

एकोऽञ्जलिर्देवताभ्यो द्वौ द्वावृषय एव च ॥
त्रयस्त्रयः पितृभ्यश्च देया अञ्जलयो द्विजैः ॥ ३०० ॥

अन्यस्त्रीभ्योऽञ्जलिस्त्वेकस्त्रयो मातृभ्य एव च ॥
आचार्यपत्न्यै सापत्नमात्रे द्वावञ्जली मतौ ॥ १ ॥

अक्षता एव मुख्याः स्युर्ग्राह्या देवर्षितर्पणे ॥
अनन्तपुण्यदाः कृष्णतिलास्तु पितृतर्पणे ॥ २ ॥

शुक्रार्कभौमवारेषु नन्दातिथिषु चैव हि ॥
तारकायां मघायां च न कुर्यात्तिलतर्पणम् ॥ ३ ॥

त्रिं[1]नृष्वब्दतदर्धार्धं विवाहव्रतचौलतः ॥
माङ्गल्ये जन्मनक्षत्रे न कुर्यात्तिलतर्पणम् ॥ ४ ॥

तिलेष्वपि निषिद्धेषु जलेनैव च तर्पयेत् ॥
धृत्वा दर्भपवित्रं च हस्ते काञ्चनमुद्रिकाम् ॥ ५ ॥

ऋष्यर्थं निवीतम्, पित्रर्थं प्राचीनावीतम्। एकोञ्जलिर्देवेभ्यो, द्वौ ऋषिभ्य मेकैकः। देवानां यवाः पितृणां तिलास्तृप्तिदाः। शुक्रार्कभौमनन्दातिथि- तारकामघाजन्मर्क्षेषु तिलतर्पणं न। विवाहव्रतचौलतः त्रिपुंसपिण्डैर्नै- मित्तिकं विना वर्षतदर्धार्धं तिलतर्पणं वर्ज्यम्। सदर्भपवित्राद्भिः कार्यम्। अन्याभ्या- स्त्रयः पितृभ्यो मातृभ्यश्च, सपत्नमात्राचार्यपत्नीभ्यां द्वौ।

१ त्रिपुरुषेषु.

अप्रक्षाल्य पदे स्नानं तर्पणं च तिलैर्विना ॥
विना दक्षिणया श्राद्धं निष्फलं परिकीर्तितम् ॥ ६ ॥

तस्मान्निषिद्धान्यदिने प्रकुर्यात्तिलतर्पणम् ॥
दीपावल्यां तथा कार्यं यमस्य तिलतर्पणम् ॥ ७ ॥

आश्विने कृष्णपक्षे तु चतुर्दश्यां प्रतर्पयेत् ॥
सव्येन वापसव्येन प्रकुर्याद्यमतर्पणम् ॥ ८ ॥

यमस्यैकैकनाम्ना तु तर्पयेद्ब्राह्मणो यमम् ॥
त्रिभिस्त्रिभिश्चाञ्जलिभिर्यमनामानि वच्मि वः ॥ ९ ॥

यमाय धर्मराजाय मृत्यवे चान्तकाय च ॥
वैवस्वताय कालाय सर्वभूतक्षयाय च ॥ ३१० ॥

औदुम्बराय दध्नाय नीलाय परमेष्ठिने ॥
वृकोदराय चित्राय चित्रगुप्ताय ते नमः ॥ ११ ॥

यमस्यैतानि नामानि कीर्तितानि मुनीश्वरैः ॥
एकैकनामतः कार्यं नद्यादौ यमतर्पणम् ॥ १२ ॥

पादक्षालनं विना स्नानं, तिलैर्विना तर्पणं, दक्षिणां विना श्राद्धं निष्फलम् ॥९९-३०८॥ दीपावल्यां सव्येनापसव्येन वा यमं, धर्मराजं, मृत्युमन्तकं, वैवस्वतं, कालं, सर्वभूतक्षयं, औदुम्बरं, दध्नं, नीलं, परमेष्ठिनं, वृकोदरं, चित्रं, चित्रगुप्तं च त्रिस्त्रिस्तर्पयेत्। ततः पापपीडा-

नश्यन्ति तस्य पापानि पीडयन्ति गदा न तम् ॥
शनिश्च नापमृत्युश्च तस्य यस्तर्पयेद्यमम् ॥ १३ ॥
माघमासे शुक्लपक्षे तर्पयेदष्टमीतिथौ ॥
राजर्षिप्रवरं भीष्मं वर्षपापं व्यपोहति ॥ १४ ॥
ब्रह्मयज्ञं विधायैवं तर्पणं च प्रदापयेत् ॥
सूर्यायार्घ्याणि मध्यान्हसन्ध्यायां च यथाविधि ॥१५॥
एवं सत्कर्मयोगं स श्रीगुरुर्नामधारकम् ॥
कथयामास विप्राय मयाप्युक्तः स एव ते ॥ १६ ॥
तमेव गङ्गाधरनन्दनो मनोहरं द्विजाचारमशेषतोषदम् ॥
सरस्वती वक्ति स शृण्वतां सतामभीष्टदो दास्यति वै
वरान्वरान् ॥ ३१७ ॥

(इति)श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्यगङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञितमहाराष्ट्रभाषान्वित-गुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वतीयतिविरचितायां श्रीगुरुसंहितायां कर्मकाण्डे षट्त्रिंशः (अध्यायः) ॥

॥ आदितः श्लोकाः ॥ ४५२९ ॥

रोगशनिबाधापमृत्युर्न । माघशुक्लाष्टम्यां भीष्मतर्पणाद्वर्षपापनाशः । एवं ब्रह्मयज्ञो विधिवन्मध्यान्हसंध्या च कार्या । इति श्रीगुरूक्तं ते मया कथितम् । तमेव गङ्गा० इ० षट्त्रिंशोऽध्यायः ॥

॥ इति षट्त्रिंशोऽध्यायः ॥ ३६ ॥

## ॥ अथ सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

॥ श्रीगणेशाय नमः ॥

नामधारक ऊचेऽङ्ग वद सिद्धाग्रतः कथाम् ॥
ततः किं कथयामास श्रीगुरुर्ब्राह्मणाय हि ॥ १ ॥

सिद्धः प्राह प्रवक्ष्यामि गुणवन्नामधारक ॥
साक्षान्नारायणो वेद सर्वं स कृपयाऽवदत् ॥ २ ॥

कश्चिन्मूर्त्यवतारस्य प्रयासो धर्मवर्णने ॥
ज्ञानं दत्त्वाऽपि यो हीनमुखाद्वेदानवाचयत् ॥ ३ ॥

स भक्तकामकल्पद्रुरयं श्रीगुरुरीश्वरः ॥
आचारं कथयामास कृपया ब्राह्मणाय हि ॥ ४ ॥

श्रीगुरुर्ब्राह्मणं प्राह गृही कृत्वा गृहं त्विह ॥
अग्निमन्[1]थनकाष्ठादि रक्षयेद्यदवश्यकम् ॥ ५ ॥

अध्यायसारसंग्रहश्लोकोऽयम्—

प्रमिताक्षरोक्तिगुरुराह सुचित्सुरपूजनादिसकलाह्निकवित् ॥
अशनादिधर्मशयनादिविधिं स्वरपूर्मितेऽत्र हतभक्तविधिः ॥३७॥

नामधारक आहाग्रतः श्रीगुरुणोक्तं वद। सिद्ध आह। साक्षान्नारायणः सर्वज्ञो दययाऽवदत्। धर्मवर्णनेऽस्य कः प्रयासो हीनमुखादपि यो वेदानवाचयत्। स भक्तकल्पद्रुः श्रीगुरुराह। गृही भूत्वाऽरणिमणिघृत-

१ अरणी.

मणि[1]र्धृतं च श्रीखण्डतिलकृष्णाजिनादिकम् ॥
गृहे तिष्ठति यस्यास्य दुरितं नैव बाधते ॥ ६ ॥

सा[2]रसः शुक्लपक्षे च रक्षणीयः प्रयत्नतः ॥
समस्तपापसंहर्त्री धेनुः पाल्या प्रयत्नतः ॥ ७ ॥

विधिना पूजयेद्देवानुपलेपादिना गृहम् ॥
संस्कृत्य प्रत्यहं कुर्यान्नियतो देवपूजनम् ॥ ८ ॥

हिरण्मयं ताम्रमयं रौप्यं मृण्मयमेव वा ॥
पात्रं सम्मार्जने ग्राह्यं कांस्यं वर्ज्यं तथैव च ॥ ९ ॥

कन्यानववधूशूद्रहस्ततो नोपलेपनम् ॥
न हस्तेनोपलेपादि कार्यं दक्षकरेण च ॥ १० ॥

नैर्ऋतीतः समारभ्य कार्यं रात्रौ तु नैव च ॥
अगत्या भस्मना कार्यं नोदकेन न सान्तरम् ॥ ११ ॥

देवागारमलंकुर्याद्रङ्गवल्यादिनाऽन्वहम् ॥
शुभासने समाविश्य देवपूजां समारभेत् ॥ १२ ॥

श्रीखण्डकृष्णाजिनतिलान्गृहे रक्षेत्। शुक्ले सारसं नित्यं पापघ्नीं धेनुं च रक्षेत। नित्यं गृहमुपलिम्पेत् ॥ ८ ॥ कांस्यं विना धातुपात्रमत्र ग्राह्यम् ॥ ९ ॥ वामहस्तेन कन्याशूद्रहस्तेन च न लिम्पेत्। निर्ऋतित उपलेपः कार्यो न सान्तरः रात्रावगत्या भस्मनाद्भिः। देवालयं रङ्गवल्या रङ्ग-

१ शालग्राम २ पाक्षिविशेषः.

ब्राह्मणानां यथा सन्ध्या तथा कालत्रयं चरेत् ॥
भक्त्यैव देवतापूजां ब्राह्मणावहितः शृणु ॥ १३ ॥

त्रिकालपूजनाशक्तौ प्रातः कार्या यथाविधि ॥
पञ्चोपचारैर्मध्याह्ने गन्धाद्यैर्देवमर्चयेत् ॥ १४ ॥

सायं नीराजनं कार्यं मन्त्रैः पुष्पाणि भक्तितः ॥
उक्तकाले त्वशक्तश्चेद्भुक्तिकालेऽर्चयेत्सुरम् ॥ १५ ॥

न कुर्याद्देवपूजां यः स याम्यनगरं व्रजेत् ॥
गत्वा निरन्तरं भुंक्ते नरकान्सोऽतिदारुणान् ॥ १६ ॥

यस्य द्विजकुले जन्म स पूजां न करोति च ॥
भुंक्ते चेद्यमदण्डयः स यज्ञ[1]हीनोऽपि तादृशः ॥ १७ ॥

देवपूजाप्रकारांश्च विधानं च वदामि ते ॥
तृप्येन्नारायणो देवो जगन्नाथो जलार्चनात् ॥ १८ ॥

तुष्येदग्न्यर्चनाद्विष्णुरग्निपूजा ततोऽधिका ॥
सर्वेषां मानसी पूजा पूजनानां प्रशस्यते ॥ १९ ॥

यित्वाऽऽसने उपविश्य सन्ध्यावत्त्रिकालं देवपूजां कुर्यात्। अशक्तौ विधिवत् प्रातर्मध्याह्ने पञ्चोपचारः, सायं नीराजनमन्त्रपुष्पैश्चासम्भवे भोजनकाले वा। पूजाऽकरणे घोरनरको यमदण्डश्च ॥ १८ ॥ जलार्काग्निपूजनान्नारायणप्रीतिः। स्वर्गापवर्गदा मानसपूजा प्रशस्ता। स्थण्डिले

१ पंचमहायज्ञ.

तुष्येन्नारायणः साक्षाच्छ्रद्धया सूर्यपूजनात् ॥
सामान्या स्थण्डिले पूजा प्रतिमाऽल्पधियां मता ॥२०॥

पूजयेद्यज्ञपुरुषं विज्ञाता बुद्धिमान्नरः ॥
स्वर्गापवर्गदा यज्ञपूजा मुख्या बुधैः स्मृता ॥ २१ ॥

अथवा पूजयेद्धेनुं ब्राह्मणं च विशेषतः ॥
त्रिमूर्तयो हि तुष्यन्ति भक्त्या श्रीगुरुपूजनात् ॥ २२ ॥

त्रिमूर्तिर्गुरुरेवेति वक्ति श्रुतिरपि स्मृतिः ॥
गुर्वर्चनादभीष्टाप्तिः पुरुषार्थाप्तिरेव च ॥ २३ ॥

स्थिरान्तःकरणं नैव कलौ प्राप्ते नृणामतः ॥
मनःस्थैर्याय सूपायः कृतः शार्ङ्गधरेण तु ॥ २४ ॥

प्रकाशितं हृषीकेशा[1] शालग्रामार्चनं परम् ॥
सचक्र[2]शालग्रामाम्बुप्राशनात्पातकक्षयः ॥ २५ ॥

अधिगम्य गुरोराज्ञां प्रतिमां पूजयेद्द्विजः ॥
वेदमन्त्रैर्विधानेन भक्त्याऽकपटया धिया ॥ २६ ॥

मध्यमाऽल्पधियां प्रतिमापूजा धेनुब्राह्मणपूजाऽपि । गुरुस्त्रिमूर्तिस्तत्पूजना-दिष्टपुमर्थलाभो ब्रह्मादितोषश्च । कलौ विष्णुना मनःस्थैर्यार्थं शालग्रामार्चनं विहितम् । सचक्रशालग्रामाम्बुपानात्पापक्षयः । गुर्वाज्ञया भक्त्या

१ अयं शब्दः हलंतः २ चक्रांकितं द्वारवतीसमुद्भवं.

स्त्रीणां नैव च शूद्राणां वेदमन्त्रः प्रशस्यते ॥
तेषां पौराणिका मन्त्रा उदिताश्च गुरूदिताः[1] ॥ २७ ॥

श्रीगुरोराज्ञया योऽर्चेत्काष्ठं पाषाणमेव वा ॥
देवः स एव भवति स च भक्त्या प्रसीदति ॥ २८ ॥

उपविश्य शुचिः पीठे स्वप्राणांस्त्रिर्नियम्य च ॥
येभ्यो मातेति पुन्ङ्गधं[2] निवार्यात्मानमुद्दिशेत् ॥ २९ ॥

आत्मानमुपचारांश्च प्रोक्ष्य प्रणवमन्त्रतः ॥
पूजां सङ्कल्प्याङ्गन्यासान्कृत्वा कलशमर्चयेत् ॥ ३० ॥

देवदक्षिणभागे तु कलशं स्थापयेत्सुधीः ॥
शंखघण्टेऽर्चयेद्देववामदक्षिणतः क्रमात् ॥ ३१ ॥

[3]पुरा विसृज्य निर्माल्यं नैर्ऋत्यां दिशि निक्षिपेत् ॥
धौतवस्त्रं निधायाथ दीपं प्रज्वालयेद्ध्रुवम् ॥ ३२ ॥

पूजा कार्या । स्त्रीशूद्राणां द्विजोक्ताः पौराणिकमन्त्रा न तु वैदिकाः । गुर्वाज्ञया भक्त्याऽर्चितं काष्ठाद्यपि देवो भवेत् ॥१९-२८॥ शुचिः पीठे उपविश्य प्राणानायम्य, येभ्यो मातेति पुङ्गन्धं निवार्य, पूजां सङ्कल्प्याङ्गन्यासं कृत्वा स्ववामतः कलशघण्टे दक्षिणे शंखमभ्यर्च्याऽत्मानं दक्षभागस्थपूजोपचारांश्च प्रोक्ष्य ॥२९-३१॥ निर्माल्यं नैर्ऋत्यां विसृज्य,

---

१ विप्रोक्ताः २ मनुष्यगंधं ३ पूर्वं.

श्रद्धाभक्त्या गुरुं नत्वा कायेन मनसा गिरा ॥
आगमोक्तविधानेन पीठपूजां चरेत्पुरा ॥ ३३ ॥

द्वारपूजां ततः कृत्वा ध्यात्वा स्वात्मनि चित्कलाम् ॥
तदेव देवरूपं च चिन्तयेल्लक्षणोक्तवत् ॥ ३४ ॥

आवाहनं ततः कुर्यात्पुंसूक्तस्याऽद्यया ऋचा ॥
द्वितीययाऽऽसनं दद्यात्पाद्यं दद्यात्तृतीयया ॥ ३५ ॥

चतुर्थीमृचमुच्चार्य दद्यादर्घ्यं यथार्हतः ॥
ऋचा तथैव पञ्चम्या दद्यादाचमनं शुचि ॥ ३६ ॥

ऋचा षष्ठ्याऽर्पयेत्स्नानं सम्भवे सति चार्पयेत् ॥
पञ्चामृतैश्च स्नपनं पञ्चमन्त्रैः पृथक्पृथक् ॥ ३७ ॥

भक्त्या पुरुषसूक्तेन रुद्रेणान्यैरथापि वा ॥
मन्त्रैर्घण्टानिनादेन कुर्याद्देवाभिषेचनम् ॥ ३८ ॥

स्नानान्त आचमं दद्याद्देवं पीठे न्यसेद् दृढम् ॥
दद्याच्चाऽपि सप्तम्या शुद्धे देवाय वाससी ॥ ३९ ॥

धौतवस्त्रं प्रसार्य, दीपं प्रज्वाल्य मनोवाक्कायैर्गुरुं नत्वा पीठपूजां द्वारपूजां च कृत्वा स्वात्मस्थचित्कलां देवरूपां ध्यात्वा पुंसूक्तस्य प्रथमर्चाऽऽवाह्य। द्वितीययाऽऽसनं, तृतीयया पाद्यं, चतुर्थ्याऽर्घ्यं, पञ्चम्याऽऽचमनं, षष्ठ्या स्नानं, सति सम्भवे पञ्चामृतैः स्नपनम् ॥३२-३७॥ पुंसूक्तरुद्रादिभिरभिषेकमाचमनं च दत्वा पीठे देवं दृढं स्थापयेत्। सप्तम्या वस्त्रे आचमनं।

उपवीतं तथाऽष्टम्याऽऽचमो[1] देयो द्वयोरपि ॥
सुगन्धा अक्षताश्चापि नवम्या च समर्पयेत् ॥ ४० ॥

ऋचा दशम्या पुष्पाणि देयानि विविधानि च ॥
मनःपूर्वकमभ्यर्चेद्विविधैः कुसुमैः शृणु ॥ ४१ ॥

पुष्पार्पणविधानं तु वक्ष्यामि मुनिसम्मतम् ॥
उत्तमानि तु पुष्पाणि स्वारामारण्यजानि हि ॥ ४२ ॥

स्वयं त्वरण्यजातानि मध्यमानि द्विजोत्तम ॥
अधमानि तु पुष्पाणि विक्रीतानि न संशयः ॥ ४३ ॥

अगत्या प्रोक्ष्य ग्राह्याणि[2] सुश्वेतान्युत्तमानि च ॥
रक्तं पीतं मध्यमं च कृष्णं चित्रं तथाऽधमम् ॥ ४४ ॥

पुष्पं पर्युषितं निन्द्यं सच्छिद्रं कृमिभक्षितम् ॥
स्वयं च पतितं भूम्यां नैव देवाय दापयेत् ॥ ४५ ॥

सहस्रपत्रं तुलसीपत्रं बिल्वदलं तथा ॥
नैव पर्युषितं प्रोक्तं ग्राह्यं तद्गाङ्गवारिवत् ॥ ४६ ॥

अष्टम्योपवीते आचमनं। नवम्या गन्धाक्षतान्दशम्या पुष्पाणि, उत्तमान्यारामजानि, मध्यमानि वनजान्यधमानि विक्रीतानि। श्वेतान्युत्तमानि। रक्तपीतानि मध्यमानि, कृष्णचित्राण्यधमानि। पर्युषितं, सछिद्रं, स्वयं च्युतं च वर्ज्यं। पद्मबिल्वतुलस्यो गङ्गाम्बुवन्न पर्युषिताः ॥३८-४६॥

---

१ आचमनं २ अधमान्यपि.

शतपत्रं च बकुलं चम्पकं नागकेसरम् ॥
पाटलं मल्लिकाजातीकल्हारं करवीरकम् ॥ ४७ ॥

पुष्पाण्येतानि सर्वेभ्यो देयान्यथ विवर्जयेत् ॥
पूजको विष्णुपूजायां निर्गुण्डीगिरिकर्णिकाम्[1] ॥ ४८ ॥

आरक्तकरवीरार्कधत्तूरामरपत्रकम् ॥
कपित्थशिग्रुकूष्माण्डपुष्पं वर्ज्यं च सर्वथा ॥ ४९ ॥

एतेषामर्पणाद्दोषः शृणु [2]तं मुनिकीर्तितम् ॥
पूजकेन तु पूजायां विष्णवे यदि दीयते ॥ ५० ॥

अर्कपुष्पं तस्य नाशः पूजकस्य भविष्यति ॥
धत्तूरपुष्पदानेन प्रज्ञानाशो दरिद्रता ॥ ५१ ॥

गिरिकर्णीपुष्पदानाद्भवेत्तस्य कुलक्षयः ॥
अर्पकस्य भवेच्छोकः कण्टकारिसुमार्चनात् ॥ ५२ ॥

दुःखं कुटजपुष्पेण शाल्मलीसुमतो गदः ॥
अतः सम्यग्विचार्यैव दद्यात्पुष्पाणि विष्णवे ॥ ५३ ॥

पद्मबकुलचम्पकनागकेसरपाटलमल्लीजातिकल्हारकरवीराणि सर्वप्रियाणि। विष्णवेऽर्कपुष्पे दत्ते स्वनाशः, धत्तूरे प्रज्ञाधननाशः। गिरिकर्णिकायां कुलनाशः। कण्टकार्यां शोकः। कुटजे दुःखं। शाल्मल्यां रोगः। अतो

---

१ विष्णुक्रांत २ दोष.

शङ्करार्चनकाले तु पुष्पाणीमानि वर्जयेत् ॥
कपित्थं केतकीं श्यामां रक्तपुष्पं शशाङ्कम् ॥ ५४ ॥

करञ्जं धातकीनिम्बमाधवीबकुलानि च ॥
तथा दाडिमपुष्पाणि नैव देयानि शम्भवे ॥ ५५ ॥

चूतपुष्पाणि कुन्दानि दोषदानि सुमानि तु ॥
मुख्यानि श्वेतपुष्पाणि भक्त्या देयानि शम्भवे ॥५६॥

वर्जयेत्तुलसीं यत्नाद्गणेशस्य समर्चने ॥
दुर्गाशक्तिर्नैव पूज्या दूर्वया तु कदाचन ॥ ५७ ॥

एवंविधानि पुष्पाणि ज्ञात्वा देयानि भक्तितः ॥
धर्मार्थकाममोक्षाप्तिस्ततो भवति निश्चिता ॥ ५८ ॥

देयः सुधूप आघ्रेय एकादश्या ऋचा ततः ॥
एकार्तिक्याभिधो दीपो द्वादश्याऽर्प्य ऋचा तथा ५९

त्रयोदश्या च नैवेद्यमाचमादि समर्पयेत् ॥
ऋचाऽर्पयेच्चतुर्दश्या ताम्बूलं फलसंयुतम् ॥ ६० ॥

विचार्य पुष्पं देयं। शिवाय कपित्थकेतकीशशाङ्ककरञ्जधातकीनिम्बमाधवीबकुलकृष्णरक्तपुष्पाणि न देयानि। श्वेतानि देयानि ॥४७-५६॥ गणेशाय तुलसी, देव्यै दूर्वा च न देया। एवं विचार्य पुष्पार्पणाच्चतुर्विधपुमर्थलाभः। एकादश्या धूपं, द्वादश्या दीपं, त्रयोदश्या नैवेद्यं, चतुर्दश्या

१ धायटी.

स्वर्णपुष्पं दक्षिणार्थं दद्यान्नीराजनं तथा ॥
पञ्चदश्या तु षोडश्या पुष्पाञ्जलिमथार्पयेत् ॥ ६१ ॥

साष्टाङ्गं प्रणमेद्देवं नातिसंमुखमागतः ॥
गर्भालये पृष्ठदेशे नमस्कारं न कारयेत् ॥ ६२ ॥

नमस्कारविधानं ते प्रवक्ष्यामि द्विजोत्तम ॥
पूर्वं प्रदक्षिणां कृत्वा प्रणमेच्च ततः परम् ॥ ६३ ॥

गत्वा समीपं प्रणमेन्मातरं पितरं गुरून् ॥
दृष्ट्वाऽऽयान्तं द्विजं गत्वा सम्मुखं प्रणमेत्सदा ॥६४॥

उक्त एको नमस्कारः सभार्यै न पृथक्पृथक् ॥
देवतायतने चापि तथैव प्रणमेत्सुधीः ॥ ६५ ॥

मातृपितृगुरूणां च नमस्कारविधिस्त्वयम् ॥
कर्णौ स्पृष्ट्वा स्वहस्ताभ्यां यथास्वं दक्षिणोत्तरौ॥६६॥

व्यस्ताभ्यां स्वकराभ्यां च सम्मुखस्थगुरोः पदौ ॥
जानुप्रभृतिपादान्तं विमृज्यैवाभिवादयेत् ॥ ६७ ॥

ताम्बूलफलदक्षिणाः। पञ्चदश्या नीराजनं। षोडश्या पुष्पाञ्जलिः। गर्भगृहं पृष्ठसम्मुखदेशं च हित्वा साष्टाङ्गं नमेत्। प्रदक्षिणाया आदावन्ते च नमेत्। पितरौ गुरून् द्विजं च नमेत्। सभार्यै एको नमस्कारो न पृथक् ॥५७-६५॥ गुर्वादीनां वन्दनं तु कराभ्यां स्वकर्णौ स्पृष्ट्वा व्यस्तपाणिर्गुरोर्जानुप्रभृतिपादपर्यन्तं विमृज्य नमेत्। माता, पितोपनीता,

गुरुस्थानानि चैतानि मुनीनां सम्मतानि च ॥
तानि ज्ञात्वा द्विजः श्रेष्ठः प्रकुर्यादभिवादनम् ॥ ६८ ॥

माता पिता गुरुर्धाता भयहर्ताऽन्नदायकः ॥
सपत्नमाता गायत्रीदाता चैव पुरोहितः ॥ ६९ ॥

ज्येष्ठभ्राता पितुर्भ्राता मातुर्भ्राता वयोऽधिकाः ॥
मित्राणीष्टा नमस्कार्या ज्ञानवृद्धा विशेषतः ॥ ७० ॥

नमने तु निषिद्धानि स्थानानि कथयामि ते ॥
अविद्यो वयसा न्यूनो न नमस्कारमर्हति ॥ ७१ ॥

समित्पुष्पाक्षतकुशधर्तारं न नमेद्द्विजम् ॥
स्वयं च तादृशो नैव नमस्कुर्यात्कदाचन ॥ ७२ ॥

दृष्टश्च दूरतो नैव नमस्कार्यश्च होमकृत् ॥
स्नानकाले जले वाऽपि न नमेच्च परस्परम् ॥ ७३ ॥

यो धावति च यः क्रुद्धो विज्ञातो धनगर्वितः ॥
स नार्हति नमस्कारं मङ्गलस्नानतत्परः ॥ ७४ ॥

विद्यादाताऽन्नदो, भयहर्ता, सपत्नमाताऽग्रजः, पितृव्यो गुरुरेव वयोधिकमित्रेष्टज्ञानवृद्धा नमस्कार्याः वयोन्यूनमविद्यमक्षतसमित्पुष्पकुशधरं स्नानादिकर्मस्थं धावन्तं क्रुद्धं गर्वितं शवं मूर्खं हीनं च न नमेत्। नैक-

शवं मूर्खजनं हीनं नमस्कुर्यान्न कर्हिचित् ॥
ब्राह्मणं चैकहस्तेन नमस्कुर्यान्न कर्हिचित् ॥ ७५ ॥

अथ वाद्यैर्नृत्यगीतैर्देवसन्तोषमाचरेत् ॥
स्तोत्रैः सम्प्रार्थयेद्भक्त्या सनकादीन्त्समर्चयेत् ॥७६॥

पूजां समर्प्य देवाय धृत्वा पीठेऽञ्जलिं नमेत् ॥
जपान्ते तूत्तरां पूजां कृत्वा चोद्वासयेद्धृदि ॥ ७७ ॥

एवं देवं समभ्यर्च्य भुक्तिं मुक्तिं च विन्दति ॥
वैश्वदेवं पञ्चसूनादोषघ्नमपि[1] कारयेत् ॥ ७८ ॥

सङ्कल्प्य चान्नसंस्कृत्यै कुण्डे वन्हिं प्रबोध्य च ॥
ध्यात्वा संस्कृत्य साज्यान्नमेकभागाद्विधेर्हुनेत् ॥ ७९ ॥

द्वितीयभागात्तु बलिहरणं च विधीयते ॥
तृतीयभागात्पितृभ्यः श्वकाकेभ्यश्च तुर्यतः ॥ ८० ॥

हस्तेन विप्रं नमेत् ॥६७-७५॥ गीतवाद्यैर्देवं तुष्ट्वा भक्त्या स्तोत्रैः प्रार्थ्य सनकादीनभ्यर्च्य मन्त्रं जपित्वोत्तरपूजां कृत्वा देवं हृद्युद्वासयेदनेन भुक्तिर्मुक्तिश्च। पञ्चसूनादोषनाशात्मसंस्कारार्थं वैश्वदेवं सङ्कल्प्यान्नं संस्कृत्य कुण्डे ध्यातेऽग्नौ ज्वालायां विधिना प्रथमभागत आहुतीर्हुत्वा ॥७६-७९॥ द्वितीयभागाद्बलिहरणं। तृतीयात्पितृदानं। चतुर्थाच्छ्वकाकेभ्यः।

---

१ अपि शब्दादात्मसंस्कारार्थमन्नसंस्कारार्थं च.

पञ्चमात्सनकादिभ्यो मनुष्येभ्योऽर्पयेद्द्विजः ॥
अन्नं न चेत्तन्दुलाद्यैर्वैश्वदेवं तु कारयेत् ॥ ८१ ॥

तद्वैश्वदेवकाले तु य आगच्छेत्स चातिथिः ॥
चण्डालो वाऽपि चोरो वा तस्मा अन्नं प्रदापयेत् ८२

दूतान्यमोऽब्रवीदेवं वैश्वदेवो न यद्गृहे ॥
नातिथ्यमतिथीनां च नान्नदानं च यद्गृहे ॥ ८३ ॥

आनेयास्ते मया दण्ड्या यद्गृहेऽतिथिपूजनम् ॥
तद्गृहं नैव गन्तव्यं भवद्भिर्विष्णवनुज्ञया ॥ ८४ ॥

यो मातृपितृघाती च श्वपाकोऽपि तदाऽऽगतः ॥
शक्त्या प्रदेयं तेभ्योऽन्नं ब्राह्मणानेव भोजयेत् ॥८५॥

न विचार्यं गोत्रकुलं दद्यादन्नं द्विजातये ॥
अतिथौ विमुखे नैव पुनः पित्रागमो गृहे ॥ ८६ ॥

यज्ञं कुर्याद्घृताद्यैस्तु प्रवासी यद्यपि द्विजः ॥
कन्दमूलादिभिर्वाऽपि देवयज्ञं चरेद्बुधः ॥ ८७ ॥

पञ्चमात्सनकादिभ्यो देयम् । अन्नाभावे प्रवासे च घृततन्दुलफलादिना वैश्वदेवः कार्यः । वैश्वदेवकाल आगतोऽतिथिश्चण्डालोऽन्योऽपि तस्मा अन्नं देयम् । यमो दूतानाह । यद्गृहे नाऽतिथ्यं वैश्वदेवश्च ॥८०-८३॥ त आनेया दण्ड्याश्चेति मे विष्णोराज्ञेति । ततः पितृघ्नश्वपाकेभ्योऽप्यन्नं देयम् । गोत्राद्यपृष्ट्वा विप्रा भोज्याः । अतिथिवैमुख्ये पितृकोपः । वैश्वदेवा-

नैव साधुजनः कुर्यादग्रदानं विनौदनम् ॥
चान्द्रायणं चरेद्विप्रः पञ्चयज्ञाकृतौ बुधः ॥ ८८ ॥

वैश्वदेवात्पूर्वमेव गृहं यद्यागतोऽतिथिः ॥
तस्मै भिक्षा प्रदातव्या वैश्वदेवफलं लभेत् ॥ ८९ ॥

स्वयं बलिं न विसृजेद्विसृजेत्परहस्ततः ॥
चान्द्रायणात्तस्य शुद्धिर्विसृष्टो येन वै बलिः ॥ ९० ॥

अविसृज्य बलिं भुंक्ते यः स दोषी भवेद्द्विजः ॥
तद्दोषपरिहाराय प्राणायामान्षडाचरेत् ॥ ९१ ॥

गृहाङ्गणे बलिं[1] दत्वा गवे ग्रासं प्रदापयेत् ॥
नित्यश्राद्धं ततः कुर्यान्नैमित्तिकमथापि च ॥ ९२ ॥

नित्यश्राद्धे नैव पिण्डा नाग्नौकरणमीरितम् ॥
न तत्र दक्षिणा देया ब्रह्मचर्यं न कारयेत् ॥ ९३ ॥

गोदोहमात्रं यज्ञान्ते स्थित्वा विप्रो निजाङ्गणे ॥
आकांक्षेदतिथिं भक्त्या पूजयेच्च समागतम् ॥ ९४ ॥

त्पूर्वमप्यागताय भिक्षवेऽन्नदानाद्वैश्वदेवफलम्। स्वयं बलिं न विसृजेद-विसृज्य नाश्नीयात्। अविसृज्य भुक्तौ षट्प्राणायामैः शुद्धिः। गृहाङ्गणे बलिं गवे ग्रासं च दत्वा पिण्डदानाग्नौकरणादिरहितं नित्यश्राद्धं कुर्यान्नात्र ब्रह्मचर्यम् ॥८४-९३॥ गोदोहमात्रमङ्गणेऽतिथिमाकांक्षेदागतं श्रान्तं

[1] श्वचांडालपतितभूतवायसबलिं.

श्रान्तो यः क्षुधितः प्राप्तो विशेषात्तं प्रपूजयेत् ॥
तथाऽस्तमानसमयेऽभ्यागतं चापि गौरवात् ॥ ९५ ॥

यो वैश्वदेवसमये सम्प्राप्तो ब्राह्मणोत्तमः ॥
स च पूज्यः प्रयत्नेन वर्णानां ब्राह्मणो गुरुः ॥ ९६ ॥

यो वैश्वदेवसमये पूजयेद्ब्राह्मणातिथिम् ॥
तेन सर्वेऽर्चिता देवास्तुष्यन्त्यग्निमुखाः सुराः ॥ ९७ ॥

मरुद्गणोऽर्यमा ब्रह्मा तृप्तिं याति सदाशिवः ॥
तुष्टा भवन्ति ते देवाः सर्वेऽप्यातिथिपूजनात् ॥ ९८ ॥

पादप्रक्षालनात्तस्य तृप्यन्ति पितरोऽखिलाः ॥
तद्भोजनाद्ब्रह्मविष्णुमहेशा यान्ति तुष्टताम् ॥ ९९ ॥

यतीशो ब्रह्मचारी च गृहं याति यदा यदा ॥
देयं तदा तदाऽप्यन्नं महापुण्यं ततो भवेत् ॥ १०० ॥

दत्तं चेद्ग्रासमात्रान्नं मेरुदानसमं फलम् ॥
आद्यन्ते स्वल्पमप्यम्बु दत्तं चेदब्धिदानवत् ॥ १ ॥

भक्त्यापूज्यान्नं देयम्। सायमप्येवम्। स गुरुस्तत्तोषादग्न्यादयस्तुष्यन्ति। तत्पादक्षालनात्पितृतृप्तिर्ब्रह्मादीनां च तुष्टिः। यदा ब्रह्मचारी यतिश्चैष्यति तदाऽन्नं देयं महाफलम्। ग्रासमात्रदत्तान्नमद्रिवत्। अल्पमप्याद्यन्तोदक-

सम्प्राप्तमतिथिं त्यक्त्वा यो भुनक्ति द्विजाधमः ॥
स श्वयोनिं प्रयात्येव जायते गर्दभस्ततः ॥ २ ॥

अतो दत्त्वाऽतिथिभ्योऽन्नं ततोऽद्याद्बालवृद्धयुक्[1] ॥
पंक्तिभेदं न कुर्वीत समं भुञ्जीत पंक्तिगः ॥ ३ ॥

पंक्तिभेदे भवेद्दोषः सायम्प्रातर्न चान्तरा ॥
गृहस्थस्याशनं प्रोक्तमादौ प्रक्षालयेत्पदौ ॥ ४ ॥

उभौ हस्तावुभौ पादौ पञ्चमं मुखमुच्यते ॥
पञ्चार्द्रो भोजनं कुर्याच्छतायुर्जायते द्विजः ॥ ५ ॥

मौनी भुञ्जीत सततं प्राङ्मुखो भोजनं चरेत् ॥
संस्थाप्योभौ समौ पादावुपविश्य चरेद्भुजिम् ॥ ६ ॥

ब्राह्मणस्य चतुष्कोणं मण्डलं भस्मसंयुतम् ॥
क्षत्रियस्य त्रिकोणं तु वर्तुलं मण्डलं विशः ॥ ७ ॥

शूद्रस्य चार्धचन्द्राभं प्रोक्तं तत्र तु मण्डले ॥
वसुरुद्रादित्यमुखान्देवानावाहयेद्द्विजः ॥ ८ ॥

दानमब्धिवत्। अतिथित्यागे श्वखरयोनिं व्रजेत्। पञ्चयज्ञलोपे चान्द्रायणम्। दिवा रात्रौ भोजनमध्ये बालवृद्धैः सह भुञ्जीत। पंक्तिभेदे दोषः ॥९४-१०३॥ हस्तपादमुखार्द्रो मौनी समौ पादौ संस्थाप्य विप्रश्चतुष्कोणं मण्डलं सभस्म, क्षत्रस्त्रिकोणं, वैश्यो वर्तुलं, शूद्रोऽर्धचन्द्राकारं कृत्वा वसुरुद्रादित्यब्रह्मादीन् तत्राऽवाहयेत्। मण्डलं विनाऽशने पिशा

---

१ भोजनं कुर्यात्.

मण्डलेनोपजीवन्ति ब्रह्माद्या अपि देवताः ॥
अत एव प्रकर्तव्यं मण्डलं विधिना द्विजैः ॥ ९ ॥

योऽकृत्वा मण्डलं भुंक्ते तदन्नरसमश्नुते ॥
निशाचरपिशाचादिवर्गोऽतो मण्डलं चरेत् ॥ १० ॥

प्राङ्मुखं भोजनं शस्तं मध्यमं पश्चिमाननम् ॥
उदङ्मुखं पितृकार्ये काम्यं स्याद्दक्षिणाननम् ॥ ११ ॥

विदिङ्मुखं निषिद्धं च सौवर्णं राजतं शुभम् ॥
ताम्रं पद्मपलाशादिपत्रजं पात्रमुत्तमम् ॥ १२ ॥

ताम्रं गृहस्थस्य वर्ज्यं वर्ज्यं धातुमयं यतेः ॥
ताम्रस्फटिकपाषाणकाष्ठपात्रं यतेः शुभम् ॥ १३ ॥

कदलीगर्भपत्रे च पालाशे मध्यपत्रके ॥
वल्लीपलाशपात्रे च भुक्त्वा चान्द्रायणं चरेत् ॥ १४ ॥

कदम्बकोविदारार्कवटाश्वत्थादिपत्रके ॥
भोजनं चेत्कृतं येन स तु चान्द्रायणं चरेत् ॥ १५ ॥

चाद्योऽन्नरसं भुंक्ते। प्राक्यत्यङ्मुखं भोजनं शस्तं। दक्षिणमुखं काम्यं। पितृकृत्ये उदङ्मुखं। विदिङ्मुखं निषिद्धम्। स्वर्णरौप्यपात्रे पद्मपलाशादिपत्रे भोक्तव्यम् ॥४-१२॥ गृहस्थस्य ताम्रं वर्ज्यं। यतेस्ताम्रस्फटिककाष्ठाश्ममयं शुभं। कदलीगर्भपत्रपलाशमध्यपत्रवल्लीपलाशपत्रेषु भोजने चान्द्रायणम्। वटार्काश्वत्थादिपत्रे च चान्द्रायणम्। लोहमृन्मय-

---

१ ताम्रातिरिक्तधातुमय.

लोहपात्रे मृन्मये वा भूपृष्ठे वसनेऽपि वा ॥
यो भुनक्ति द्विजातिः स नरकं प्रति गच्छति ॥ १६ ॥

आयुर्यशोबलप्रज्ञावृद्धिः स्यात्कांस्यभाजने ॥
अतो गृहस्थस्य मुख्यं कांस्यपात्रं तु भोजने ॥ १७ ॥

पञ्चमानाधिकं ग्राह्यं पात्रं न्यूनं न शस्यते ॥
स्वर्णपात्रसमं प्रोक्तं कांस्यं षोडशमानकम् ॥ १८ ॥

अभ्यङ्गस्नानताम्बूले कांस्यपात्रे च भोजनम् ॥
विधवायाः स्त्रियो वर्ज्यं यतेश्च ब्रह्मचारिणः ॥ १९ ॥

एरण्डपत्रं निषिद्धं शुनश्चर्मादपि द्विज ॥
ततोऽप्यतिनिषिद्धं च भिन्नं यत्कांस्यभाजनम् ॥१२०॥

प्रभिन्नकांस्यपात्रेऽतो निषिद्धं भोजनं स्मृतम् ॥
महादोषकरं प्रोक्तं सन्ध्यासमयभोजनम् ॥ २१ ॥

भोजनं नाऽचरेद्विप्रः पतितस्य समीपतः ॥
शूद्रभुक्तावशेषान्नं ब्राह्मणस्य न शस्यते ॥ २२ ॥

भूपृष्ठवस्त्रेषु च नरकः। पञ्चमानाधिकं षोडशमानपर्यन्तं कांस्यपात्रे भोजने बलायुर्यशःप्रज्ञावृद्धिः। कांस्यपात्रभोजनाभ्यङ्गताम्बूलानि न विधवाव्रतियतीनाम्। एरण्डपत्रं भिन्नकांस्यपात्रं च श्वचर्मवत्। सन्ध्याकाले पतितसन्निधौ च नाश्नीयात् ॥१३-२२॥ न च बालैः सह। न

न बालैः सह भुञ्जीत श्राद्धाहे निशि नैव च ॥
न गृण्हीत स्वहस्तेन स्वयमापोशनोदकम् ॥ २३ ॥

अभ्यङ्गापोशने स्वस्य स्वयं नैव च सेव्यते ॥
बुद्धिमान्द्यं भवेत्तस्मात्परहस्तेन कारयेत् ॥ २४ ॥

तथैव मण्डलं स्वस्य स्वयं कुर्यान्न कर्हिचित् ॥
स्वयं कृते भवेत्पुत्रघात आयुःक्षयस्तथा ॥ २५ ॥

परिवेषणकाले तु नमस्कृत्वाऽभिधारयेत् ॥
पायसादि च सूपान्तं परिवेषणमीरितम् ॥ २६ ॥

गायत्र्या परिविष्टान्नं प्रोक्ष्याथ परिषिच्य च ॥
सत्यन्त्वेति दिवा रात्रावृतन्त्वेति च मन्त्रतः ॥ २७ ॥

दक्षभागे बलीन्दद्याच्चित्रादिभ्यः समन्त्रकान् ॥
तान्विसृज्य ततो हस्तं प्रक्षाल्य नियतो द्विजः ॥२८॥

तर्जनीमध्यमांगुष्ठैर्धृत्वा भोजनभाजनम् ॥
वामहस्तेन चान्येन गृहीत्वाऽऽपोशनं द्विजः ॥ २९ ॥

च शूद्रभुक्तावशिष्टमश्नीयात् ॥ २३ ॥ श्राद्धाहे निशि न च । आपोशनं स्वयं न ग्राह्यम् । अभ्यङ्गमण्डले स्वस्य स्वयं न कार्ये । स्वयं कृते पुत्रघातायुःक्षयौ । परिवेषणकाले नत्वाऽभिधार्य पायसादिसूपान्तं परिविष्टान्नं गायत्र्या प्रोक्ष्य सत्यं त्वेति दिवा, रात्रावृतन्त्वेति परिषिच्य दक्षभागे चित्रबलीन्दत्वा विसृज्य हस्तं प्रक्षाल्य वामतर्जनीमध्यांगुष्ठैर्भुक्तिपात्रं

पिबेत्समन्त्रं यदि चेद्गृहीत्वाऽऽपोशनं जलम् ॥
त्यक्त्वा गृह्णाति चेदन्यत्स गृह्णाति श्वमूत्रकम् ॥१३०॥

कर आपोशनं धृत्वा यो नमेद्यश्च तं नमेत् ॥
आशीर्वादं च वा दद्यादुभयोर्दोष ईरितः ॥ ३१ ॥

मौनेन भोजनं शस्तं भुक्तौ शब्दादि नोच्चरेत् ॥
मन्त्रपूर्वमपः पीत्वा मुखे प्राणाहुतीर्हुनेत् ॥ ३२ ॥

आपोशनं विना भुंक्ते यः स दोषमवाप्नुयात् ॥
गायत्र्यष्टशतं जप्त्वा तद्दोषान्मुच्यते द्विजः ॥ ३३ ॥

प्राणाहुतेर्विधानं तु श्रुतिप्रोक्तं शृणु द्विज ॥
प्राणाग्निहोत्रमेतत्तु सर्वपापापहारकम् ॥ ३४ ॥

कार्पासराशिं दहति स्पर्शमात्राद्यथाऽनलः ॥
तथा प्राणाग्निहोत्रेण सर्वं पापं प्रणश्यति ॥ ३५ ॥

प्राणाहुतिविधानेन चतुर्वर्गः प्रसिध्यति ॥
पठेद्गीतोदितं श्लोकमन्नं स्पृष्ट्वा समाहितः ॥ ३६ ॥

चेच्छ्व-धृत्वाऽऽपोशनं समन्त्रं पिबेत्। आपोशनं त्यक्त्वाऽन्यद्गृहीतं चेच्छ्व-मूत्रवत्तत्। गृहीतापोशनो न नमस्कार्यः सोऽप्यन्यं न नमेत्। नाऽशिषं वदेदुभयोर्दोषः ॥२३-३१॥ आपोशनं विना भोजनेऽष्टोत्तरशतगायत्रीजपाच्छुद्धिः। समन्त्रमपः पीत्वाऽहं वैश्वानरोऽन्नं ब्रह्मेत्यनयोरर्थं ध्यात्वाऽ

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ॥
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ ३७ ॥

अन्नं ब्रह्मा रसो विष्णुर्भोक्ता देवो महेश्वरः ॥
एवं ध्यात्वैव यो भुंक्ते सोऽन्नदोषान्न लिप्यते ॥३८॥

अतो ध्यात्वैव मन्त्रार्थमग्निरस्मीति चास्य च ॥
प्राणाहुतीर्ग्रसन्नास्य एकैकं जुहुयात्क्रमात् ॥ ३९ ॥

तर्जन्यंगुष्ठमध्याभिराद्यप्राणाहुतिं हुनेत् ॥
मध्यमानामिकांगुष्ठैरपानाहुतिमेव च ॥ १४० ॥

कनिष्ठानामिकांगुष्ठैर्हुनेद्व्यानाहुतिं मुखे ॥
हुनेत्कनिष्ठिकांगुष्ठतर्जनीभिरुदानकाम् ॥ ४१ ॥

हुनेत्समानाहुतिं च पञ्चांगुलिभिरादरात् ॥
स्थानान्येषां हृदि गुदे नाभौ कण्ठेऽखिलाङ्गके ॥४२॥

दन्तैरसंस्पृशन्प्राणाहुत्यन्नं तु गिलेद्द्विजः ॥
जिह्वयैव गिलेन्मौनी भोजनं तु समाचरेत् ॥ ४३ ॥

ग्निरस्मीति जपेत्सोऽन्नदोषैर्न लिप्यते। तर्जन्यंगुष्ठमध्याभिः प्राणाहुतिं, मध्यानामिकांगुष्ठैरपानाहुतिं, कनिष्ठानामिकांगुष्ठैर्व्यानाहुतिं, तर्जनीकनिष्ठांगुष्ठैरुदानाहुतिम् ॥३२-४१॥ सर्वाभिः समानाहुतिं च मुखे हुनेत्। दन्तैरसंस्पृशन्जिह्वया गिलेत्। स्नानेऽमौने वरुणः फलं नयेत्

स्थानेषु पञ्चसु प्रोक्तं मौनं सर्वार्थसाधनम् ॥
स्नाने मौनं धृतं नोचेत्तत्फलं वरुणो नयेत् ॥ ४४ ॥

होमे मौनं धृतं नोचेल्लक्ष्मीर्गच्छति तस्य च ॥
भुक्तौ मौनं धृतं नोचेदपमृत्युर्भविष्यति ॥ ४५ ॥

मौनस्यासम्भवे प्राणाहुतिपर्यन्तमेव च ॥
मौनं सर्वस्याप्यवश्यं विशेषोऽप्यत्र कथ्यते ॥ ४६ ॥

जीवत्पितुर्नैव मौनं न ज्येष्ठभ्रातृकस्य च ॥
तयोरपि स्मृतं मौनमवश्यं श्राद्धभोजने ॥ ४७ ॥

भुञ्जीत मधुरान्नं प्राङ्मध्येऽम्लं कठिनं च यत् ॥
मध्ये द्रवान्नं नाश्नीयादन्ते च कठिन तथा ॥ ४८ ॥

तिक्तं द्रवान्नमन्ते च सर्वदा भोजनं चरेत् ॥
व्यत्यये बलहानिः स्याच्छीघ्रभोजनमुत्तमम् ॥ ४९ ॥

धेनुर्यावत्पिबत्यम्भस्तावत्कालं तु भोजनम् ॥
सुखप्रदं भवेदेतदजावच्छीघ्रभोजनम् ॥ १५० ॥

होमेऽमौने श्रीनाशोऽशनेऽमौनेऽपमृत्युरसम्भवेऽपि प्राणाहुतिपर्यन्तमवश्यं धार्यम्। द्रवमधुरान्नं पूर्वं, मध्येऽम्लं, कठिणमन्ते द्रवं तिक्तं चाश्नीयात्।

भोजने [1]ग्रासमानं तु कथ्यते मुनिभिः स्मृतम् ॥
संन्यासिनो भोजने तु ग्रासा अष्टौ प्रकीर्तिताः ॥ ५१ ॥

द्वात्रिंशत्तु गृहस्थस्य वानप्रस्थस्य षोडश ॥
एषां मध्ये यथेष्टं तु ग्रासाः स्युर्ब्रह्मचारिणः ॥ ५२ ॥

ग्रसेन्मुखाविकारेण न ग्रासमधिकं ग्रसेत् ॥
पात्रे पतितमुच्छिष्टं ग्रसेदुच्छिष्टभाक्स च ॥ ५३ ॥

अर्धं ग्रासं भक्षयित्वा पात्रेऽप्यर्धं तु यो न्यसेत् ॥
ततो भक्षति पात्रस्थं स तु चान्द्रायणं चरेत् ॥ ५४ ॥

नैकपात्रे सहेष्टैश्च भुञ्जीताऽहुस्तु केचन ॥
न दोषोऽनुपनीतेन नाविवाहितकन्यया ॥ ५५ ॥

सर्वं सशेषमश्नीयान्निःशेषं घृतपायसम् ॥
न शेषयेच्च लवणं घृतं नैव च शेषयेत् ॥ ५६ ॥

व्यत्यये बलहानिर्यावद्वौर्जलं पिबति तावद्भोजनं सुखम्। यतेरष्टग्रासाः ॥४२-५१॥ द्वात्रिंशद्गृहिणः। षोडश वनिनो। यथेष्टं ब्रह्मचारिणः। मुखाविकारतो ग्रसेत्। उच्छिष्टं पात्रे पतितं चेत्तद्दुष्टम्। ग्रासार्धं भुक्त्वा भूयोऽवशिष्टाशने चान्द्रायणम्। नैकपात्रेऽन्यैः सहाश्नीयाद्बालानां न दोषः।

---

[1] शिख्यंडमानं, कुक्कुटांडमानं, आर्द्रामलकमानं वैषामन्यतममानं मुखाविकारेण.

पूर्वं भोजनपात्रं तु वामहस्तेन यद्धृतम् ॥
भुक्तेः समाप्तिपर्यन्तं त्यजेन्नैव कदाचन ॥ ५७ ॥

धृत्वा जहाति चेत्पात्रं न भुञ्जीत ततः परम् ॥
अथवा प्रथमं नैव धार्यं दोषो न तस्य च ॥ ५८ ॥

शीर्षं वस्त्रेण चाऽवेष्ट्य नाद्यान्नोपानहोः पुरः ॥
न वामपादहस्तश्च यतोऽन्नं राक्षसोऽत्ति तत् ॥ ५९ ॥

धृत्वा वामपदे हस्तं योऽश्नाति स तु रोगवान् ॥
भवेत्प्रसार्याङ्गुलीश्च यो भुंक्ते सोऽपि तादृशः ॥१६०॥

प्रसृताङ्गुलिहस्तो यो भुनक्ति स तु दोषभाक् ॥
मांसभक्षणवत्तस्य दोष उक्तो मनीषिभिः ॥ ६१ ॥

अश्वारूढो गजारूढो नाद्याद्देवालये तथा ॥
श्मशाने शयनस्थाने नैव भुञ्जीत कर्हिचित् ॥ ६२ ॥

नाद्यात्करेऽन्नमादाय नाऽर्द्रवस्त्रस्तथैव च ॥
बहिर्जानुकरो नाद्यादिति शास्त्रविदो विदुः ॥ ६३ ॥

लवणपायसाज्यैर्विना सर्वं सशेषमश्नीयात्। भुक्तिपात्रं धृत्वोत्सर्गे दोषः। उपानहोः पुरो नाश्नीयात्। वेष्टितशिरा वामपादहस्तोऽश्नीयाच्चेद्रोगी तदन्नरसं रक्षोऽत्ति च। प्रसृतांगुलिभोजी मांसाशनदोषभाक् ॥९२-६१॥ गजाश्वरूढो नाश्नीयात्। देवालये श्मशाने सुप्तिस्थाने नाद्यात्। नार्द्र-

उपवीति तु भुञ्जीत नान्यथेति मुनीरितम् ॥
पादुके सम्मुखे धृत्वा नैव भुञ्जीत कर्हिचित् ॥ ६४ ॥

ग्रासो जलं कन्दमूलमिक्षुदण्डादिसर्वशः ॥
खादित्वाऽर्धं न्यसेत्पात्रे स उच्छिष्टभुगुच्यते ॥ ६५ ॥

अस्नात्वा नैव भुञ्जीत न हुनेच्च तथाविधः ॥
अस्नातो यो नरोऽश्नाति कीटानश्नाति चेदरुक् ॥६६॥

पर्णपृष्ठे न चाश्नीयाद्दीपं प्रज्वाल्य नैव यः ॥
अन्धकारे समश्नाति कीटानश्नाति चेदरुक् ॥ ६७ ॥

शान्तो दीपो भवेद्भुक्तौ तदा स्मृत्वा दिवाकरम् ॥
प्रज्वाल्याथ पुनर्दीपं भुञ्जीत स ततः परम् ॥ ६८ ॥

यदन्नमस्ति पात्रे तद्भोज्यमेव न चेतरत् ॥
अन्यदादाय योऽश्नाति दोषयुक्तो भवेत्स च ॥ ६९ ॥

केशस्पर्शे तदन्नं तु त्याज्यं न कथयेत्कथाम् ॥
न वीक्षेत दिशो व्योम ध्वान्ते नैव च भोजयेत् १७०

वस्त्रो, न बहिर्जानुकरः, करेऽन्नं धृत्वा च नाद्यात् उपवीती भुञ्जीत। ग्रासमूलादिकमर्धं खादित्वाऽर्धं पात्रे न त्यजेत्। अस्नात्वाऽशनं कीटाशनम्। पर्णपृष्ठे नाश्नीयात्। दीपं प्रज्वाल्याश्नीयान्नान्धकारे। शान्ते दीपे पुनर्दीपमानीय पात्रस्थमश्नीयान्नान्यत् ॥६२-६९॥ केशस्पृष्टान्नं त्याज्यम्। भुक्तौ कथां न वदेन्नेतस्ततः पश्येत् ॥ ७० ॥ स्त्रिया अन्नेऽनवशिष्टे

नावशेषः स्त्रिया अन्नं भोजने दोष ईरितः ॥
स महापातकी ज्ञेयः स्त्रिया अन्नं न राति यः ॥७१॥

देवस्य पुरतो नाद्यान्नैव शून्यगृहे तथा ॥
तथा जलसमीपे च सन्ध्यासमय एव च ॥ ७२ ॥

निधाय पात्रं पाषाणे नैव भुञ्जीत कर्हिचित् ॥
मुखं नेक्षेत च परिवेषयन्त्याः स्त्रियो भुजि ॥ ७३ ॥

एकालये चैककाले स्त्रिया सह तु यो नरः ॥
भुनक्ति पात्रान्तरेऽपि स तदुच्छिष्टदोषभाक् ॥ ७४ ॥

अर्धं पीत्वा तु सलिलं योऽवशिष्टं पिबेत्पुनः ॥
तस्य दोषो भवेन्मद्यपानवन्नात्र संशयः ॥ ७५ ॥

वस्त्रेणाम्भः पिबति यस्तस्य दोषो भवेद्ध्रुवम् ॥
भुक्त्वा च नरकान्घोरान्श्वयोनिं स च गच्छति ॥७६॥

सशब्दं यः पिबेदम्बु यः फूत्कारेण संयुतम् ॥
पायसादि समश्नाति सुरापानसमं च तत् ॥ ७७ ॥

दोषः ॥ ७१ ॥ देवपुरतः शून्यगृहेऽम्बुसमीपे च नाश्नीयात्। स्त्रियो मुखं नेक्षेत्। पत्न्या सहैककाले नाश्नीयाद्विवाहादन्यत्र। पीतावशिष्टपानं मद्यवत्तथा वस्त्राम्बुपाने च नरकः श्वयोनिश्च। सशब्दपानं पायसादेः

स्थित्वा पिबति यस्तोयं प्रविश्यापि जलं जलम् ॥
पिबत्यास्येन तस्यापि पानं तदपि मद्यवत् ॥ ७८ ॥

तथैवाञ्जलिना तोयपानं मद्यसमं तु तत् ॥
वामहस्तस्थपात्रेण पानं तदपि मद्यवत् ॥ ७९ ॥

एकासने सभायां च शयने चोपविश्य यः ॥
जलं पिबति तस्यापि पानं तदपि मद्यवत् ॥ १८० ॥

नान्नं दद्याद्भिन्नपात्रैर्न वीक्षेत रजस्वलाम् ॥
श्वानं भुक्तौ न वीक्षेत चण्डालं हीनजातिकम् ॥ ८१ ॥

एतान्पश्यति यो भुक्तौ शब्दं चैषां शृणोति च ॥
त्यक्त्वा मुखान्नमुत्तिष्ठेद्भोजनाद्दोष एव हि ॥ ८२ ॥

मुसलोलूखलघरट्टादेर्यावद्भवेद्ध्वनिः ॥
कलहो वाऽपशब्दो वा न तावद्भोजनं चरेत् ॥ ८३ ॥

पंक्तावादाय चाज्ञातः नैव भुञ्जीत कर्हिचित् ॥
अज्ञातदोषनाशाय पंक्तिं भिन्द्याच्च भस्मना ॥ ८४ ॥

फूत्कारपानं च मद्यवत्। तथा स्थित्वा पाने, जलमध्ये पाने च दोषः। वामहस्तधृतपात्रेण पानेऽञ्जलिना पाने, एकासने, सभायां च पानेऽपि दोषः ॥७२-८०॥ भिन्नपात्रैर्नान्नं देयं। रजस्वलाश्वचण्डालदर्शने तच्छब्दश्रवणे च अन्नत्यागः। कलहमुसलादेर्यावद्ध्वानि नाश्नीयात्।

अथवा द्वारमार्गेण स्तम्भेनोदकधारया ॥
पंक्तिभेदे कृते त्वेवं ततो दोषो न विद्यते ॥ ८५ ॥

ददाति चेत्कृष्णवस्त्रा तदन्नं दोषकारकम् ॥
ततोऽप्युच्छिष्टवज्ज्ञेयं कच्छहीना ददाति यत् ॥ ८६ ॥

एवं विचार्य विदुषा कार्यं भोजनमुत्तमम् ॥
अभिमन्त्र्य च रौद्रेणं मन्त्रेणोच्छिष्टशेषकम् ॥ ८७ ॥

सर्वेषामपि मन्त्राणामृषिं छन्दस्य देवताम् ॥
विनियोगं च संस्मृत्य कर्तव्यं कर्म कोविदैः ॥ ८८ ॥

मन्त्रेण मन्त्रितं चान्नं तच्च पात्राद्बहिर्भुवि ॥
उच्छिष्टभाग्भ्यो दत्वाऽथ उत्तरापोशनं पिबेत् ॥ ८९ ॥

उत्तरापोशनार्धाम्भ उच्छिष्टान्नोपरि क्षिपेत् ॥
रौरवे पूयनिलय इति मन्त्रेण मन्त्रवित् ॥ १९० ॥

बहिर्गत्वा च गण्डूषान्कृत्वा प्रक्षालयेत्करम् ॥
प्रागकृत्वा तु गण्डूषान्करक्षालन आत्महा ॥ ९१ ॥

पंक्तौ अज्ञातोपवेशे द्वारमार्गभस्मादिना पंक्तिभेदे न दोषः। धृतकृष्ण-
वस्त्रया विकच्छया च दत्तान्नं निंद्यं। उच्छिष्टं विकिरिदेत्यनेनाभिमन्त्र्यो-
च्छिष्टभाग्भ्यो भूमौ त्यक्त्वा पीतापोशनार्धं तत्र क्षिपेद्रौरव इत्यनेन
॥८१-९०॥ बहिर्गत्वा षड्गण्डूषोत्तरं करं मुखं च क्षालयेत्पूर्वं कर-

१ विकिरिदविलोहित.

मुखप्रक्षालने विप्रस्तर्जन्याऽऽस्यं न शोधयेत् ॥
मध्याभिः शोधयेद्यायादन्यथा रौरवं खलु ॥ ९२ ॥

सम्यक्प्रक्षाल्य हस्तौ च दन्तानपि च शोधयेत् ॥
करात्पवित्रं विसृज्य नैर्ऋत्यां दिशि निक्षिपेत् ॥ ९३ ॥

अथो शुद्धांघ्रिराचम्य हस्तोद्घृष्टं जलं तु तत् ॥
अंगुष्ठेति मनुं जप्त्वा चिक्षिपेन्नेत्रयोर्द्वयोः ॥ ९४ ॥

एवं यो नैव कुरुते चक्षूरोगी स जायते ॥
हस्तोदकं नेत्रयोर्यश्चिक्षिपेत्स सुदर्शनः ॥ ९५ ॥

द्विराचम्य जपेदायङ्गौरित्यादि यथोक्तवत् ॥
द्रुपदादीति च प्राणानां ग्रन्थिरिति चापि हि ॥ ९६ ॥

एतान्मन्त्रान्जपित्वा स उपविश्य द्विजोत्तमः ॥
नाभेरालम्भनं कुर्याद्द्विराचम्य ततः परम् ॥ ९७ ॥

अगस्त्यं संस्मरेत्कुम्भकर्णं च वडवानलम् ॥
आतापिं चापि शर्यातिमित्यादि च जपेद्द्विजः ॥ ९८ ॥

क्षालने दोषस्तर्जन्या मुखशोधने नरकः। सम्यक्शुद्धः पवित्रं नैर्ऋत्यां त्यक्त्वाऽऽचम्यांगुष्ठेति जपित्वा नेत्रयोर्जलं क्षिपेदन्यथाऽक्षिरोगः। आयङ्गौर्द्रुपदादीत्यादि जप्त्वा नाभिमालभ्याऽचम्यागस्त्यादीन्स्मृत्वा शर्याति-

प्रतापयेत्करौ वह्नौ पिता यस्य भवेत्तथा ॥
ज्येष्ठभ्राताऽथवा सोऽपि वाससा शोषयेत्करौ ॥ ९९ ॥

ततश्च श्रीगुरुं स्मृत्वा कुलदेवं स्मरेन्निजम् ॥
भोजनस्य विधिस्त्वेवं ब्राह्मणानामुदाहृतः ॥ २०० ॥

श्रीगुरुं स द्विजः प्राह भोजनस्य विधिः श्रुतः ॥
निषिद्धान्नमपि स्वामिन्कृपया कथयाद्य नः ॥ १ ॥

इति तस्य वचः श्रुत्वा श्रीगुरुस्तुष्ट आह तम् ॥
शृणु ब्राह्मण वक्ष्यामि प्रेम्णैव कथयामि ते ॥ २ ॥

सरस्वत्यभिधो गङ्गाधराख्यतनयोऽपि तत् ॥
कथयत्यपि शृण्वन्तु श्रोतारः सावधानतः ॥ ३ ॥

वैश्वदेवं विनाऽन्नं यद्यद्बहुक्षारसैन्धवम् ॥
यदेकत्र गणान्नं च तदन्नं परिवर्जयेत् ॥ ४ ॥

श्वेतवृन्ताकलशुनपलाण्डुं गृञ्जनं तथा ॥
छत्राकं कुत्सितोत्थान्नं तदन्नं परिवर्जयेत् ॥ ५ ॥

मिति जप्त्वा करौ प्रतापयेत्। न ज्येष्ठभ्राता सवाससा करौ शोषयेत्। गुरुं कुलदेवं च स्मरेत् ॥९९-२००॥ विप्र आह। निषिद्धान्नं कथय। श्रीगुरुराह। अवैश्वदेवान्नं, बहुक्षारलवणयुक् गणान्नं, श्वेतवृन्ताकलशुन-पलाण्डुछत्राकं, त्र्यहं नवोदकं, गवादेः सूतौ दशाहं क्षीरादि। दग्धान्नं

त्र्यहं नवोदकं वर्ज्यमजागोमहिषीपयः ॥
सूतौ दशाहं यद्दुग्धं तदन्नं परिवर्जयेत् ॥ ६ ॥

नखकेशयुतं पक्वं चिल्लकुक्कुटवायसैः ॥
मार्जारेणापि यत्स्पृष्टं तदन्नं परिवर्जयेत् ॥ ७ ॥

गोमूषकमुखस्पृष्टमधःकेशयुतं च यत् ॥
उच्छिष्टेनापि यत्स्पृष्टं तदन्नं परिवर्जयेत् ॥ ८ ॥

एकहस्तेन यद्दत्तं दर्व्या देयं करेण यत् ॥
करदेयं च दर्व्याऽपि तदन्नं परिवर्जयेत् ॥ ९ ॥

घृतमिश्रं तैलदुग्धघृतपाचितवर्जितम् ॥
रात्रिपर्युषितान्नं यत्तदन्नं परिवर्जयेत् ॥ २१० ॥

गोरसान्विप्रविक्रीतान्प्रयत्नेनैव वर्जयेत् ॥
यत्साक्षाद्वह्निपक्वान्नं तदन्नं परिवर्जयेत् ॥ ११ ॥

लड्डुमाषान्नवटकास्ते न पर्युषिता मताः ॥
सक्तुलाजा इवान्यं यत्तदन्नं परिवर्जयेत् ॥ १२ ॥

नखकेशादियुक्पक्वं, मार्जारकुक्कुटस्पृष्टं, गोमूषकमुखस्पृष्टं, उच्छिष्टेन स्पृष्टं, हस्तेन देयम् दर्व्या दत्तं, चैकहस्तदत्तं, तैलगोरसपाचितवर्ज्यं, रात्रिपर्युषितमन्नं निन्द्यम् ॥ १-१० ॥ विप्रक्रीतं गोरसं, साक्षाद्वह्निपक्वं च निन्द्यम्। लड्डुवटकसक्तुलाजकन्दानि न पर्युषितम्। तिलमिश्रं

कन्दमूलादिकं पक्वं परमान्नं गुडादियुक् ॥
न यातयामं यदन्यत्तदन्नं परिवर्जयेत् ॥ १३ ॥

यत्पर्युषितदोषेण न दुष्येत्तच्च गोपयेत् ॥
यच्चाप्यशुचिना स्पृष्टं तदन्नं परिवर्जयेत् ॥ १४ ॥

तिलमिश्रितभक्ष्यादि भक्षणीयं दिवैव हि ॥
रात्रौ तिलैर्विमिश्रं यत्तदन्नं परिवर्जयेत् ॥ १५ ॥

धात्रीफलं च कूष्माण्डं पटोलं बिल्वमेव च ॥
मूलं चापि च नैवाद्यात्प्रतिपद्यां कदाचन ॥ १६ ॥

त्यजेत्स्वर्गापवर्गेच्छुरष्टम्यामप्युदुम्बरम् ॥
रात्रौ धात्रीफलं चापि सप्तम्यां भानुवासरे ॥ १७ ॥

शुक्रवारे त्यजेद्बिल्वं मन्दवारे शमीफलम् ॥
भक्षितं येन तस्य श्रीर्दूरतो यात्यसंशयम् ॥ १८ ॥

रात्रौ धात्रीफलाहारात्प्रज्ञानाशो भविष्यति ॥
सप्तम्यादित्ययोर्वीर्यनाशो धात्रीफलाशनात् ॥ १९ ॥

दिवैव भक्ष्यम्। धात्रीकूष्माण्डपटोलमूलबिल्वानि प्रतिपदि नाद्यात्। स्वर्गापवर्गेच्छुरष्टम्यामुदुम्बरं, रात्रौ धात्रीं सप्तम्यां रविवारे च वर्जयेत्। शुक्रे बिल्वं, मन्दे शमी भक्षिता चेच्छ्रीनाशः। भोजनोत्तरं विप्राय

एवं ज्ञात्वा चरेद्भुक्तिं ततः पूर्वं द्विजातये ॥
दद्याद्दद्याच्च ताम्बूलं पूगचूर्णादियुक्स्वयम् ॥ २० ॥

एकक्रमुकदानेन सुखं द्वौ निष्फलौ मतौ ॥
त्रयो महाभाग्यदाश्च चत्वारो दुःखदायकाः ॥ २१ ॥

देयाश्च क्रमुकाः पञ्च प्रज्ञायुष्याभिवर्धनाः ॥
क्रमुकाः षण्नैव देया यतस्ते मृत्युदा मताः ॥ २२ ॥

त्यक्तं न चेत्पर्णमूलं भवेद्व्याधिकरं तु तत् ॥
अग्राशनाद्भवेत्पापं पर्णचूर्णं तु हानिदम् ॥ २३ ॥

पर्णपृष्ठाशनाद्बुद्धिनाशो मुनिभिरीरितः ॥
ऐश्वर्यनाशस्ताम्बूलीवल्लीपर्णद्वयाशनात् ॥ २४ ॥

पर्णं विना मुखे पूगं यो निक्षिपति सोऽसुखी ॥
सप्तजन्मसु दारिद्र्यमन्तेऽज्ञानं च तस्य तु ॥ २५ ॥

यतिश्च ब्रह्मचारी च विधवा च रजस्वला ॥
ताम्बूलाशनतो मांसमदिराशनदोषभाक् ॥ २६ ॥

ताम्बूलं दत्वा स्वयं भक्षेत् ॥११-२०॥ एकपूगदाने सुखं, द्वौ निष्फलौ, त्रयो भाग्यदाः, चत्वारो दुःखदाः, पञ्च प्रज्ञाऽऽयुर्दाः, षण्मृत्युदाः ॥२२॥ पर्णमूले व्याधिरग्रे पापं, पर्णचूर्णं हानिदं। पर्णपृष्ठाशनाद्धीनाशः। पर्णद्वयाशनादैश्वर्यनाशः। पर्णं विना पूगाशने दुःखं दारिद्र्यमज्ञानं च। यतिब्रह्मचारिविधवारजस्वलानां ताम्बूलाशनं मद्यमांसाशनदोषदम्। ततः

ततः श्रुत्वा पुराणादि सन्ध्यावन्दनमाचरेत् ॥
सायमस्तात्पुराऽर्घ्याणि प्रदेयानि च पूर्ववत् ॥ २७ ॥

उपविष्टोऽर्पयेत्त्रीणि कालेऽतीते चतुर्थकम् ॥
देवीं जपित्वोपतिष्ठेत्तन्मन्त्रैर्वरुणं द्विजः ॥ २८ ॥

अभिवाद्य गुरून्प्राग्वद्धोमं कृत्वा यथाविधि ॥
अद्याद्रात्रावपेक्षा चेत्क्षीरमिश्रान्नमुत्तमम् ॥ २९ ॥

ऋतं त्वेति च मन्त्रेण परिशिष्य च पूर्ववत् ॥
पूर्वोक्तेन विधानेन भुञ्जीत ब्राह्मणो निशि ॥ २३० ॥

रात्रौ प्रहरपर्यन्तं वेदाभ्यासं चरेद्द्विजः ॥
ततः शयीत विधिना समर्प्य हरयेऽखिलम् ॥ ३१ ॥

विधानं शयनस्यापि कथयामि मुनीरितम् ॥
पराशरेणापि पुरा मुनिभ्य उदितं च यत् ॥ ३२ ॥

पर्यङ्को निर्मलो ग्राह्यस्त्रिपाद्भिन्नश्च दूषितः ॥
पिप्पलोदुम्बरप्लक्षकाष्ठखट्वा विदूषिता ॥ ३३ ॥

पुराणादिश्रवणादिना दिनं नीत्वोक्तवत्सायंसन्ध्यामुपास्यौपासनं हुत्वाऽपेक्षा चेत्क्षीरमिश्रान्नं निशीथात्प्रागश्नीयात् ॥२३-३०॥ रात्रौ प्रहरपर्यन्तं वेदमभ्यस्य कृतं कर्मेश्वरार्पणं कृत्वा शयीत। पिप्पलोदुम्बरप्लक्षजम्बूकाष्ठगजदन्ता-

खट्वा कार्या दृढेध्मेन जम्बूकाष्ठस्य निन्दिता ॥
गजदन्तास्थिजा जीर्णकाष्ठखट्वा विदूषिता ॥ ३४ ॥

सुमुहूर्ते शुभे काले खट्वा कार्या प्रयत्नतः ॥
कदापि नैव कर्तव्या धनिष्ठाभरणीमृगैः ॥ ३५ ॥

रविवारे महालाभश्चन्द्रवारे महासुखम् ॥
भौमवारे महादुःखं महापीडा ज्ञवासरे ॥ ३६ ॥

षट्पुत्रलाभः कथितो गुरुवारे महर्षिभिः ॥
शुक्रवारे विशेषेण मन्दवारे मृतिः स्मृता ॥ ३७ ॥

शयीत प्राक्शिरा गेह उदक्पाच्छ्वशुरालये ॥
प्रवासे पश्चिमशिराः शयीत विधिपूर्वकम् ॥ ३८ ॥

कदापि दक्षिणपदो न शयीत द्विजोत्तम ॥
न स्वपेच्च विदिक्पाद ऋषिसन्मार्गकोविदः ॥ ३९ ॥

जलपात्रं शिरोदेशे मङ्गलद्रव्ययुङ्न्यसेत् ॥
रात्रिसूक्तं पठित्वा च स्मरेद्विष्णुं भवापहम् ॥ २४० ॥

स्थिनिर्मिता जीर्णा त्रिपदा खट्वा निन्द्या। धनिष्ठाभरणीमृगेतरशुभर्क्षकृता दृढोत्तमा। रविवारे कृता पुत्रदा, चन्द्रे सुखदा, भौमे ज्ञे च दुःखदा, गुरौ शुक्रे च पुत्रदा, शनौ मृतिदा। गेहे प्राक्शिराः शयीत। श्वशुरालये उदक्पादः। प्रवासे प्राक्पादश्च ॥३१-४०॥ जलपात्रं शिरोदेशे स्थाप्य

स्मृत्वाऽगस्त्यं माधवं च मुचकुन्दं तथैव च ॥
आस्तिकं कपिलं चापि कुर्यात्सर्पस्तुतिं ततः ॥ ४१ ॥

सुप्तौ निषिद्धस्थानानि शृणु जीर्णालये तरौ ॥
जीर्णे देवालये चापि न शयीत द्विजोत्तम ॥ ४२ ॥

देवाग्रतश्चतुर्मार्गे तथा मातुः पितुर्गुरोः ॥
एतेषां शयनस्थाने न शयीत द्विजोत्तम ॥ ४३ ॥

वल्मीकसन्निधौ तोयसन्निधौ च सरोऽग्रतः ॥
नद्यां घोरस्थले चापि न शयीत द्विजोत्तम ॥ ४४ ॥

स्वादुवस्त्वन्तिके धान्ये भग्नगेहे तथैव च ॥
गुरोः समीपे खट्वायां न शयीत द्विजोत्तम ॥ ४५ ॥

नग्नो वा वेष्टितशिरा आर्द्रवस्त्रावृतोऽपि वा ॥
व्योमाधः सति दीपे च न शयीत द्विजोत्तम ॥ ४६ ॥

प्राग्भागे परभागे च यस्यास्तु रजसो भवेत् ॥
चतुर्थाहस्तदग्रे च न शयीत द्विजोत्तम ॥ ४७ ॥

रात्रिसूक्तं पठित्वाऽगस्त्यहरिमुचकुन्दास्तिककपिलान्स्मृत्वा सर्पान्स्तुत्वा निवीती स्वपेत्। जीर्णे गृहे, तरौ च देवालये, मार्गे, मातृपितृगुरुशयन-स्थाने, वल्मीकसरोनदीस्वादुवस्तुघोरस्थलसमीपे, गुर्वादिसमीपे, खट्वायां, नग्नो वेष्टितशिरा, आर्द्रवस्त्रो, व्योमाधो रात्रेः पूर्वान्त्ययामयोः आरजस-

उपवीती स्वपेदायुःक्षयः स्त्रीभगवीक्षणात् ॥
अतो दीपः प्रयत्नेन शयने वर्जयेद्द्विजः ॥ ४८ ॥

नीलवस्त्रावृतायास्तु सङ्गाद्यः पिण्ड उद्भवेत् ॥
स चण्डालसमस्तस्माद्गौरवस्त्रं प्रशस्यते ॥ ४९ ॥

तावत्सङ्गं न कुर्वीत यावद्दृष्टरजा न हि ॥
पूर्वं संस्कारतो भार्यागमनाद्दोष ईरितः ॥ २५० ॥

रजस्वलात्वं कन्याया दशवर्षोर्ध्वमीरितम् ॥
कन्योद्वाहस्ततः पूर्वं कार्यः सर्वर्षिसम्मतः ॥ ५१ ॥

ऋतुकालं स्त्रियोऽतीत्य यस्तु ग्रामान्तरं व्रजेत् ॥
पतिः स लिप्यते भ्रूणहत्यादोषेण निश्चितम् ॥ ५२ ॥

वन्ध्याया बहुपुत्राया वृद्धाया अपि च स्त्रियः ॥
ऋत्वतिक्रमदोषो न विरक्तस्यापि तादृशः ॥ ५३ ॥

सङ्गाच्चतुर्थदिवसे स्वल्पायुः पुत्र उद्भवेत् ॥
पञ्चमे दिवसे कन्या षष्ठे पुत्र उदाहृतः ॥ ५४ ॥

चतुर्थाहे स्त्रीनिकटे च न स्वपेत्। भगवीक्षणादायुःक्षयोऽतो रते दीपो वर्ज्यः। नीलवस्त्रायाः सङ्गाज्जातश्चण्डालो भवेत्। अतो गौरवस्त्रं धार्यम् ॥४१-४९॥ रजोदर्शनं विना सङ्गो न कार्यः। वन्ध्यां वृद्धां बहुपुत्रां विना ऋत्वतिक्रमे भ्रूणहत्यादोषः चतुर्थाहे सङ्गादल्पायुः पुत्रः षोडशाहमृतुर्विषमेऽन्हि कन्या, समेऽन्हि पुत्रः। तत्र चन्द्रबलं ग्राह्यं।

विषमे दिवसे कन्या समे च दिवसे सुतः ॥
षोडशाहमृतुः स्त्रीणां ग्राह्यं चन्द्रबलं त्विह ॥ ५५ ॥

मूले मघायां रेवत्यां स्त्रीसङ्गं वर्जयेद्बुधः ॥
कोपो न कार्यस्तूभाभ्यां तयोस्तोषो महाफलः ॥५६॥

भवेन्निषेकसमये यादृक्चित्तविकल्पना ॥
भ्रूणस्तद्वद्तस्ताभ्यां सत्वं धार्यं हिताप्तये ॥ ५७ ॥

एवं हि ब्राह्मणाचारः पराशरमुनीरितः ॥
समस्तैर्ऋषिभिश्चापि गृहीतः परमादरात् ॥ ५८ ॥

श्रीगुरुः प्राह तं विप्रमाचारस्ते मयोदितः ॥
य आचारं चरत्येनं तस्य दैन्यं कुतो भवेत् ॥ ५९ ॥

देवानामपि वन्द्योऽसौ कामधुक्तद्गृहे वसेत् ॥
लक्ष्म्याऽप्यखण्डया पुत्रैः पौत्रैश्चापि स नन्दते॥२६०॥

आचारतः शतायुः स्याद्दोषा नश्यन्त्यशेषतः ॥
कलिकालभयं न स्यात्स तु ज्ञानी भवेत्क्रमात् ॥६१॥

दिवा मूलमघारेवतीपर्वसु सङ्गो वर्ज्यः। तदोभाभ्यां कोपो न कार्यस्तोषे महाफलम्। निषेके यादृक्सत्त्वं तादृक्पिण्डः। एवं पराशराद्युक्तमाचारं चरेत्तस्य क दैन्यं, तद्गृहे कामधुक्श्रीश्च ॥५०-५९॥ स देववंद्यः पुत्रादियुतः शतायुः कलिकालवंद्यो ज्ञानी सन्नन्दते। कुतोऽस्य भयम्। त्वमप्येव-

कालमृत्युश्चलेदस्य ह्यपमृत्युः कुतः पुनः ॥
अत एव सदाचारं द्विजश्रेष्ठ समाचर ॥ ६२ ॥

इति श्रुत्वा गुरोर्वाक्यं पदलग्नोऽभवद्द्विजः ॥
प्राहोपदेशो मे जातः कृपाब्धे सद्गुरो तव ॥ ६३ ॥

उद्धर्तुं निजभक्तांस्त्वमवतीर्णोऽसि भूतले ॥
हृषीकेशाज्ञानतमो हृत्वा ज्ञानं प्रकाशितम् ॥ ६४ ॥

इत्युक्त्वा ब्राह्मणो भूयः पदलग्नोऽभवद्गुरोः ॥
सन्तुष्टः श्रीगुरुर्भूत्वा प्रसन्नः प्राह तं द्विजम् ॥ ६५ ॥

आचारः कथितस्तुभ्यं विस्तरेण मया द्विज ॥
त्यक्त्वा परान्नमाचारं कुरु तेन सुखी भव ॥ ६६ ॥

यं यं चिन्तयसे कामं तं तं प्राप्नोषि निश्चितम् ॥
कन्यापुत्रादिसुखयुक्चान्ते मुक्तिमवाप्स्यसि ॥ ६७ ॥

इति लब्धवरो विप्रः सन्तुष्टः स्वगृहं ययौ ॥
स तथैवाचरन्कर्म सकलाभीष्टभागभूत् ॥ ६८ ॥

माचरेत्युक्तो विप्र आह । कृपाब्धे गुरो ते उपदेशो जातः । स्वभक्ततारणायावतीर्य ते ज्ञानं प्रकाशितम् । श्रीगुरुराह । त्वमेवमाचरन्सुखी भव कामं पुत्रांश्च लब्ध्वा मुच्यसे । इत्युक्तः स गतो गुरूक्तवज्जातः ॥६०-

श्रीगुरोश्चरितं त्वेवं पवित्रं नामधारक ॥
मूढोऽपि यच्छ्रवणतो ब्रह्मज्ञानी भवेद्द्रुतम् ॥ ६९ ॥

सुरसेयं कथाऽज्ञानतमोन्धानां प्रकाशदा ॥
अस्याः श्रवणमात्रेण यदिच्छेत्तदवाप्नुयात् ॥ २७० ॥

गङ्गाधरविप्रसुतः सरस्वतीसंज्ञितो गुरोश्चरितम् ॥
कल्पद्रुमसममवदत्सकलाभीष्टं ददाति यच्चरितम् ॥७१॥

(इति) श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्यगङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञितमहाराष्ट्रभाषान्वित-गुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वतीयतिविरचितायां श्रीगुरुसंहितायां कर्मकाण्डे सप्तत्रिंशः (अध्यायः) ॥

॥ आदितः श्लोकाः ॥ ४८०० ॥

६८॥ हे नामधारकैवं गुरोश्चरित्रं मूढो यतो ज्ञानी भवेत्। सुरसेयं कथाऽभीष्टार्थं ज्ञानं च दत्ते ॥६९-७०॥ गङ्गाधरविप्रसुतः सरस्वतीसंज्ञितो गुरोश्चरितम्। कल्पद्रुमसममवदत्सकलाभीष्टं ददाति यच्चरितम् ॥२७१॥ सप्तत्रिंशोऽध्यायः ॥

॥ इति सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

---

 

## ॥ अथ अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

॥ श्रीगणेशाय नमः ॥

अथ उपासनाकाण्डप्रारम्भः ॥

विनयावनतः सिद्धं प्राब्रवीन्नामधारकः ॥
विस्तरेणाग्रतो ब्रूहि चरणौ तेऽभिवादये ॥ १ ॥

अतृप्तोऽस्मि श्रवणतः पायया‌ऽलं कथामृतम् ॥
गुरुमाहात्म्यमाख्याहि येन शाम्यति मे मनः ॥ २ ॥

इत्युक्तः सिद्ध आहामुं यत्त्वं मां परिपृच्छसि ॥
तेन तोषोऽभवन्मेऽद्य तत्कथा सुरसा स्मृता ॥ ३ ॥

त्वन्निमित्तादयं लाभो ममाप्यासीदनुत्तमः ॥
कञ्चित्कालं विस्मृताऽपि स्मृता चित्रं वदाम्यतः ॥४॥

॥ श्रीगणेशाय नमः ॥ ॥ श्रीदत्तात्रेयाय नमः ॥

अथ सारसंग्रहश्लोकोऽयम्—

त्रिलोकपर्याप्तकृतौदनेन सम्भोजिता विप्रमुखा अनेन ॥
अष्टत्रियुक्ते ह्युपजातयोऽपि भक्ताय दत्तो गुरुणा वरोऽपि ॥३८॥

नामधारको विनत आहाग्रतः कथां वदेतोऽतृप्तोऽस्मि । कथामृतमलम्पाययातो मे मनः शाम्येत् ॥ १-२ ॥ सिद्ध आह । तुष्टोऽस्मि । सुरसा कथा कञ्चित्कालं विस्मृताऽप्यद्य स्मृता त्वन्निमित्तादयं मे लाभश्चित्रं

गन्धर्वनगरे भक्ता भक्तिमन्तो धनं बहु ॥
आदाय श्रीगुरुप्रीत्यै चक्रुर्ब्राह्मणभोजनम् ॥ ५ ॥

ब्राह्मणाराधनं नित्यं भक्ताश्चक्रुरनेकशः ॥
नैकोऽपि दिवसो यातो विना ब्राह्मणभोजनम् ॥ ६ ॥

एवं सत्येकदिवसे दुर्बलो द्विज आगतः ॥
आख्यया भास्करो दीनो भक्तः काश्यपगोत्रजः ॥७॥

श्रीगुरोर्दर्शनार्थं स दरिद्रो विप्र एत्य तम् ॥
गुरुं ननाम साष्टाङ्गं भक्तिपूतेन चेतसा ॥ ८ ॥

तस्मिन्दिने गुरुप्रीत्यै कृतं ब्राह्मणभोजनम् ॥
भक्तैर्निमन्त्रितस्तैः स तत्र भोक्तुं गतो द्विजः ॥ ९ ॥

भिक्षां दास्यामि गुरव इति सङ्कल्प्य भास्करः ॥
सोपस्करानुपादाय गन्धर्वपुरमागतः ॥ १० ॥

तण्डुलादित्रिपुरुषभुक्तिपर्याप्तमेव सः ॥
आमान्नं परिगृह्याप्तोऽन्यच्च तावन्मितं द्विजः ॥ ११ ॥

श्रृणु। तत्र भाविका विप्रभोजनं चक्रुः। एकदा काश्यपगोत्रजो दीनो भास्कराख्यभक्तः श्रीगुरवे भिक्षां दातुं त्रिपुरुषभुक्तिपर्याप्तं तण्डुलादिकमानीय भक्त्या गुरुं ननाम। तद्दिने भोक्तुं भक्तैराहूतः स वस्त्रबद्धां सामग्रीं मठे संस्थाप्य भोक्तुं ययौ ॥ ३-८ ॥ भुक्त्वा च रात्रावेत्य सामग्रीमुपधाने धृत्वा सुष्वापैवं प्रत्यहमभूत्। लोक आह। भिक्षां

वस्त्रेणावेष्ट्य तत्सर्वं निधाय स मठे द्विजः ॥
आहूतश्च पुनर्भक्तैर्भुक्तो भोक्तुं जगाम सः ॥ १२ ॥

सायङ्कालोऽभवत्तत्र मठं प्राप कृताह्निकः ॥
तण्डुलाद्युपधाने स धृत्वा सुष्वाप भास्करः ॥ १३ ॥

भोक्तुं तथैव चाऽहूतो द्वितीयदिवसे पुनः ॥
आराधनार्थमायान्ति भक्ता नित्यं हि नेति न ॥ १४ ॥

इत्यन्वहं तं भुंजानं भास्करं वीक्ष्य चापरे ॥
गुरुं भोजयितुं प्राप्य पुष्णात्यात्मानमेष तु ॥ १५ ॥

अन्नं नास्यैकपर्याप्तं गुरुशिष्यास्त्वनेकशः ॥
करिष्यति कथं त्वेष समाराधनमत्र तु ॥ १६ ॥

वक्तुं समाराधनेति नापि ह्रीणाऽसि भो द्विज ॥
अद्य कृत्वा स्वयं पाकं देहि माधुकरीं हि नः ॥ १७ ॥

एवं नानाप्रकारैस्ते विप्राः स्मोपहसन्ति तम् ॥
तदश्रुत्वैव तस्थौ स त्रिमासं तत्र भास्करः ॥ १८ ॥

दातुमेत्याऽत्मानं पुष्णात्ययम्। बहवो गुरुशिष्याः। हे द्विज किं करिष्यसि। नापि ह्रीणात्यद्य माधुकरीं देहीत्युपहासं श्रुत्वाऽपि स

१ उशाशी.

तत्र यात्यन्वहं भोक्तुं यत्राभूद्विप्रभोजनम् ॥
भिक्षाद्रव्यं समादाय निद्राति स्मान्वहं मठे ॥ १९ ॥

मासत्रये त्वतीते तु समस्ता द्विजजातयः ॥
चक्रुस्तस्योपहासं तं शुश्राव श्रीगुरुः स्वयम् ॥ २० ॥

भास्करं तं समाहूय कृपाब्धिः प्राह सद्गुरुः ॥
अद्य कृत्वा स्वयं पाकं मह्यं भिक्षां समर्पय ॥ २१ ॥

इति श्रुत्वा गुरोर्वाक्यं सन्तुष्टो भास्करो द्विजः ॥
पदयोः शिर आधाय प्रययौ पण्यवीथिकाम् ॥ २२ ॥

चत्वारिंशत्पलं चाज्यं शाके द्वेऽपि प्रगृह्य सः ॥
एत्य स्नात्वा शुचिर्भूत्वा पाकं कर्तुं समारभत् ॥२३॥

भक्तोऽन्यः श्रीगुरुं प्राप्य प्राह मेऽद्यैव निश्चितम् ॥
आराधनदिनं यावनालान्नं सिद्धमद्य मे ॥ २४ ॥

[१]प्रत्युक्ते गुरुणा तस्मिन्विप्रा ऊचुरहोऽद्य तु ॥
न लभ्यं नित्यवन्मिष्टं कोऽयमद्याधनो गतः ॥ २५ ॥

तूष्णीं तस्थौ ॥९-१९॥ एवं मासत्रये त्वतीते तथैव द्विजैः कृतमुपहासं श्रुत्वा कृपाब्धिः श्रीगुरुर्भास्करमाहाद्य स्वयम्पाकं कृत्वा भिक्षां देहीति श्रुत्वा स तुष्टो नत्वाऽऽज्यं शाके चाऽनीय स्नात्वा शुचिः पाकं चक्रे। तदाऽन्यो भक्तो यावनालान्नभिक्षार्थं गुरुं प्रार्थयत्। नेति गुरुणा प्रत्याख्याते द्विजा आहुरहो कोऽयं निर्धनोऽद्यागतः। नाद्य मिष्टान्नम्। गृहं

१ अद्यभास्करो ददाति त्वं श्वो देहीति प्रत्याख्याते.

गेहं याम इति श्रुत्वा तान्द्विजान्प्राह सद्गुरुः ॥
मा यातात्रैव भोक्तव्यं भवद्भिः सकुटुम्बकैः ॥ २६ ॥

द्विजा विचारयामासुः सामग्री विद्यते मठे ॥
कारयित्वाऽद्य पाकं नो भोजयिष्यति सद्गुरुः ॥ २७ ॥

विचार्यैवं तथेत्युक्त्वा सर्वे स्नातुं ययुर्गुरुः ॥
भास्करं प्राह पाकं द्राक्कुर्वाहूता बहु द्विजाः ॥ २८ ॥

तथेत्युक्त्वाऽऽशु पाकं स कृत्वा तस्मै न्यवेदयत् ॥
पाको जात इति प्राह गुरुर्विप्रान्समाह्वय ॥ २९ ॥

स च गङ्गातटगतान्ब्राह्मणान्प्राप्य चाब्रवीत् ॥
मया पाकः कृतः स्वामी समाह्वयति वो द्रुतम् ॥ ३० ॥

त ऊचुः पर्याप्तिपाकनिर्माणे निड्भविष्यति ॥
नायास्यामो वयं गच्छ त्वं भिक्षां गुरवेऽर्पय ॥ ३१ ॥

याम इति श्रुत्वा श्रीगुरुराह । मा प्रतियातात्रैव कुटुम्बैः सह भोक्तव्यमिति श्रुत्वा द्विजा ऊचुः । सामग्री मठे विद्यते पाकं कारयिष्यतीत्युक्त्वा ते स्नातुं ययुः । श्रीगुरुर्भास्करमाहानेके आहूताः शीघ्रं पाकं कुरु ॥२०-२८॥ स तथेत्युक्त्वा पक्त्वा न्यवेदयत् । द्विजानाह्वयेति प्रेषितः स गत्वा तानाह । पाको जातो गुरुर्व आह्वयति । त ऊचुः पर्याप्तिपाकनिर्माणे

१ स्वगृहान्प्रतियात.

प्रत्युक्त इति तैर्विप्रो गुरुं प्राप्य तदब्रवीत् ॥
नायास्यन्ति द्विजास्ते तु भोक्ष्यन्ते स्वगृहे निशि॥ ३२॥

श्रीगुरुः प्राह चाद्यैव ब्राह्मणैस्तैः सहैव तु ॥
भोक्ष्यामि पंक्तिमध्येऽदो मतं मम सुनिश्चितम् ॥३३॥

ब्राह्मणैः सह मह्यं चेद्भिक्षां दास्यसि भास्कर ॥
अङ्गीकरिष्यामि नो चेन्न यास्यामि गृहं तव ॥ ३४ ॥

ब्राह्मणः श्रीगुरुं प्राह यदाज्ञापयसि प्रभो ॥
शिरसा मे धृतं तत्ते भिक्षां विप्रैः सहार्पये ॥ ३५ ॥

इत्युक्त्वा स्वगतं प्राह सोऽवतीर्णोऽयमीश्वरः ॥
को वेत्ति तद्वचो हार्दं स्वोक्तं सत्यं करिष्यति ॥ ३६ ॥

विचार्यैवं पुनः प्राह बद्धहस्तो नतोऽग्रतः ॥
मदुक्तैरुपहासं ते कुर्वन्तो नात्रजन्ति हि ॥ ३७ ॥

तच्छ्रुत्वाऽन्यं गुरुः प्राह त्वं गत्वैव मदाज्ञया ॥
भोक्तुमत्रैव तान्सर्वान् समाहूय लघु द्विज ॥ ३८ ॥

रात्रिर्भविष्यति। त्वं गुरवे भिक्षां देहि। स एत्य गुरुमाह। ते नायास्यन्ति उतोपहसंति च। श्रीगुरुराह। ब्राह्मणैः सह भिक्षां दत्से चेद्भोक्ष्ये। स आज्ञा शिरसा धृतेत्युक्त्वा स्वगतमाह। अवतीर्ण ईशोऽयं स्वोक्तं सत्यं करिष्यतीति निश्चित्याऽह। त उपहसन्ति नायान्ति। गुरुः शिष्यं प्रेषयित्वा स्नातान्तानानीयाह ॥२९-३८॥ चतुःसहस्रपत्रावलीः कृत्वा

तथेति धावन्गत्वा स गुरुवाक्यं न्यवेदयत् ॥
तेऽपि स्नात्वाऽऽययुर्विप्रा मठं श्रीगुरुसन्निधौ ॥ ३९ ॥

गुरुस्तानागतान्प्राह कृत्वा पत्रावलीर्द्विजाः ॥
सकुटुम्बैर्भवद्भिश्च भोक्तव्यमिह चाद्य तु ॥ ४० ॥

चतुःसहस्रपात्राणि सर्वैः कार्याणि सत्वरम् ॥
इत्युक्त्वा तं स्थितं दृष्ट्वा भास्करं प्राह सद्गुरुः ॥४१॥

आराधनं करिष्येऽद्य भवन्तः सकुटुम्बकाः ॥
भोक्तुमत्रागच्छतेति प्रार्थयेमान्द्विजान्द्विज ॥ ४२ ॥

इति श्रीगुरुणाऽऽदिष्टः स तथैवार्थयद्द्विजान् ॥
ते हसन्तोऽब्रुवन्भोक्तुं कुत आह्वयसि द्विज ॥ ४३ ॥

एकैकाय न चैकैकं सिक्थं दातुमपि प्रभुः[1] ॥
भो त्वं न आमन्त्रयितुं न व्हीणासि कथं द्विज ॥४४॥

वृद्धास्त्वोचुर्नैव कार्या निन्दा यद्यद्द्विजाय तु ॥
गुरुः शंसति तत्तस्म ब्रूते दोषोऽत्र नैव हि ॥ ४५ ॥

कुटुम्बैः सहात्र भवद्भिर्भोक्तव्यम्। ततो भास्करमाहैनं प्रार्थयेति स तथा प्रार्थयत्। ते हसन्त आहुः। कुत आह्वयासि। एकैकसिक्थमपि नो नालम्। न लज्जसे किम् ॥३९-४४॥ वृद्धा ऊचुर्निंदां मा कुरुतायं

१ न समर्थोऽसि.

ततः सर्वे तथेत्युक्त्वा चक्रुः पत्रावलीस्तदा ॥
भास्करोऽप्युपचारैस्तं पूजयामास सद्गुरुम् ॥ ४६ ॥

भक्तिपूर्वं समभ्यर्च्य चक्रे नीराजनादिकम् ॥
श्रीगुरुर्भास्करं प्राह पात्राण्यासादय द्रुतम् ॥ ४७ ॥

पाकं मत्सन्निधौ विप्र स्थापयेतीरितो द्विजः ॥
स पाकं स्थापयामास सर्वं श्रीगुरुसन्निधौ ॥ ४८ ॥

वस्त्रं दत्वा गुरुः प्राह भास्करानेन वाससा ॥
आच्छादय मदीयेन सर्वं पाकं प्रयत्नतः ॥ ४९ ॥

स तथाऽऽच्छादयामास कमण्डलुजलेन तु ॥
मन्त्रितेनाखिलं पाकं प्रोक्षयामास सद्गुरुः ॥ ५० ॥

गुरुर्भास्करमाहूय प्राह पात्रांतरेण तु ॥
प्रच्छन्नान्नाद्गृहीत्वैव सत्वरं परिवेषय ॥ ५१ ॥

तथैवाज्यं घटस्थं च नीत्वा पात्रान्तरेण तु ॥
यथेष्टं सर्वविप्रेभ्यः प्रदेहीत्यादिशद्गुरुः ॥ ५२ ॥

गुरूक्तवद्ब्रूते नास्य दोष इति । ततस्ते पत्रावलीश्चक्रुः । भास्करो भक्त्या गुरुमापूज्य नीराज्य पात्राण्यासाद्य गुर्वाज्ञया तत्समीपे पाकं संस्थाप्य ॥४६-४८॥ गुरुदत्तवस्त्रेणाऽच्छादयामास । श्रीगुरुर्मंत्रितकमण्डलुजलेन पाकं प्रोक्ष्य भास्करमाह । पात्रान्तरेणान्नमाज्यादि च नीत्वा परिवेषय ।

आसाद्य बहु पात्राणि चक्रे स परिवेषणम् ॥
दृष्ट्वा तन्महदाश्चर्यं सर्वे जाताः सुविस्मिताः ॥ ५३ ॥

परिवेष्टुं तथाऽन्यांश्च श्रीगुरुः स्वयमादिशत् ॥
उत्थिता बहवो विप्राश्चक्रुस्ते परिवेषणम् ॥ ५४ ॥

बहून्यापूर्य पात्राणि निन्युस्तेऽन्नं पुनः पुनः ॥
तथा पात्रान्तरेणापि निन्युर्घृतघटाद्घृतम् ॥ ५५ ॥

परिविष्टं गुरोः पात्रे सर्वास्वपि च पंक्तिषु ॥
सर्वे ते गुरुणा सार्धं भोक्तुमारेभिरे तदा ॥ ५६ ॥

प्रार्थयामास तान्विप्रो याचितव्यमपेक्षितम् ॥
श्रान्ताः क्षमध्वमातृप्ति भोक्तव्यं स्वस्थमानसैः ॥५७॥

इति प्रार्थ्य स्वयं चाज्यं ददौ विप्रास्तमूचिरे ॥
आकण्ठमद्य भुक्ताः स्म आज्येनालं द्विजोत्तम ॥ ५८ ॥

भक्ष्यं च पत्रशाकादि परमान्नं च शर्करा ॥
दध्यादि च यथेष्टं स भोक्तृभ्यः प्रददौ द्विजः ॥५९॥

तथेति स च गुरुणाऽऽदिष्टा अन्ये च बहूनि पात्राणि पुनः पुनश्चापूर्य श्रीगुरूक्तवत् परिवेषणं चक्रुः। तदाश्चर्यं दृष्ट्वा सर्वे विस्मिताः। ततः श्रीगुरुणा सह ते सर्वे भोक्तुमारेभिरे। क्षमध्वं यूयं श्रान्ता अपेक्षितं याचित्वा स्वस्थतया भक्षतेत्याज्यादि यथेष्टं ददौ ॥४९-५८॥ त ऊचुरल-

तृप्ता जाता द्विजाः सर्वे आचान्ता विस्मितास्तदा ॥
उच्चालयामासुरुच्छिष्टपात्राणि द्विजातयः ॥ ६० ॥

ताम्बूलानि ददौ तेभ्यः श्रीगुरुः प्राह सत्वरम् ॥
अवशिष्टांस्त्रीसुतादीन्त्सर्वान्भोक्तुं समाह्वय ॥ ६१ ॥

एत्य विप्रकुलं सर्वं सदनं बुभुजेऽमृतम् ॥
गुरुः प्राह द्विजं शूद्रान्ग्रामस्थानपि चाह्वय ॥ ६२ ॥

आहूतास्तेऽपि बुभुजुर्गुरुः प्राहात्र के स्थिताः ॥
अवशिष्टा अन्त्यजाताः स्वामिन्निति च तेऽब्रुवन्॥६३॥

तानाहूय यथाकाममन्नं दातव्यमेव हि ॥
यावत्कांक्षन्ति ये तावत्तेभ्योऽन्नं दीयतामिति ॥ ६४ ॥

तत्स्त्रीभ्योऽपि सुतेभ्यश्च समाहूयान्नमर्पय ॥
इत्युक्तस्तान्समाहूय काममन्नं ददौ द्विजः ॥ ६५ ॥

सकला अपि सन्तृप्ताः केऽपि नैव बुभुक्षिताः ॥
ततो गुरुर्द्विजं प्राह ग्राम आघोषयोच्चकैः ॥ ६६ ॥

माकंठं भुक्ताः स्मः । भक्ष्यशाकादि परमान्नशर्करादि यथेष्टं ददौ । ते तृप्ता आचान्ता विस्मिता भुक्तिपात्राण्युच्चालयामासुः । द्विजस्तेभ्यस्ताम्बूलादि ददौ । ततो गुर्वाज्ञया तेऽवशिष्टस्त्रीसुतादीनाह्वयन् तेऽपि तथा बुभुजुः । तत आहूताः शूद्रा अपि बुभुजुः । केऽवशिष्टा इति गुरुणोक्तास्तेंऽत्यजा अवशिष्टा इत्यूचुः । सस्त्रीपुत्रान्तानप्याहूय यथेष्टमन्नं देयमिति गुरुणोक्तास्ते तथा दत्वा केऽपि न बुभुक्षिता इत्यूचुः । ततः क्षुधिता

ये केचित्क्षुधिताः सन्ति भोक्तुमायान्तु तेऽपि हि ॥
इति श्रीगुरुणाऽऽज्ञप्तस्तथैवाघोषयद्द्विजः ॥ ६७ ॥

नोपवासि प्राणिमात्रं भुक्ताः सर्वे यथेप्सितम् ॥
ततो गुरुर्द्विजं प्राह कुरु भास्कर भोजनम् ॥ ६८ ॥

तथेति बुभुजे सोऽपि गुरुः प्राहावलोकय ॥
कियदन्नं चावशिष्टं स ऊचे यत्तथैव तत् ॥ ६९ ॥

गुरुः प्राहावशिष्टं यत्तत्सर्वं देहि सत्वरम् ॥
जले जलचरेभ्योऽपि कामं तृप्यन्तु तेऽपि च ॥ ७० ॥

ततस्तथाकृतं तेन मनुष्याणां तु तद्दिने ॥
चतुःसहस्रसंख्याऽभूद्भुक्तानां विस्मिता जनाः ॥ ७१ ॥

अहो आश्चर्यमल्पान्नैर्भुक्ता अत्रामिता इति ॥
गुरुः प्राह द्विजं पुत्रपौत्रलक्ष्मीयुतो भव ॥ ७२ ॥

तच्छ्रुत्वा चकिताः सर्वे प्राहुः किं कौतुकं त्विदम् ॥
नृणां चतुःसहस्राणि भुक्तानि स्वल्पपाकतः ॥ ७३ ॥

भोक्तुमायांत्विति गुर्वाज्ञयाऽऽघोषयामासुः ॥५९-६७॥ कोऽपि नोपवासीति श्रुत्वा गुर्वाज्ञया भास्करो भुक्त्वा गुर्वाज्ञयाऽन्नं विलोक्य पूर्वं यावत्कृतं तावन्मात्रमवशिष्टमिति गुरवेऽकथयत्। श्रीगुरुराह। तज्जलचरेभ्यो देहि ते कामं तृप्यंत्वित्युक्तः स तथाऽकरोत्। तद्दिने भुक्तानां चतुःसहस्रसंख्या जाता लोका विस्मिता ऊचुरहो आश्चर्यमल्पान्नैरमिता

अन्ये प्राहुस्त्वन्नपूर्णां सस्मार श्रीगुरुः किमु ॥
अवतीर्णोऽत्र पुरुषः श्रीनृसिंहसरस्वती ॥ ७४ ॥

प्राहुरन्येऽपूर्वमिदं दृष्टं पूर्वकथा श्रुता ॥
दुर्वासा ऋषिभिः सार्धं पार्थानां गृहमागतः ॥ ७५ ॥

सत्वभङ्गभिया कृष्णो द्रौपद्या प्रार्थितोऽभ्यगात् ॥
अन्नं सोऽपूरयदिति श्रुतं दृष्टमिदं त्विह ॥ ७६ ॥

त्रिमूर्तेरवतारोऽयं भाति दण्डधरो नरः ॥
नायं नरोऽस्य माहात्म्यं को जानाति यथार्थतः ॥७७॥

नरोऽयमिति यो ब्रूयादेतं सोऽधो गतिं व्रजेत् ॥
न मतिस्तद्गुणाख्याने गुरुर्ब्रह्मैव केवलम् ॥ ७८ ॥

अयमीशो न चेत्तर्हि त्रिपुम्भुक्तिमितान्नतः ॥
नृणां चतुःसहस्राणि भोजितानि कथं न्वहो ॥ ७९ ॥

चित्रमेकं तथैवात्र सर्वैरस्माभिरीक्षितम् ॥
जीवितोऽपि गतप्राणः शुष्ककाष्ठेऽपि पल्लवाः ॥ ८० ॥

भुक्ताः। अन्ये ऊचुरत्रावतीर्णः परपुरुषो नृसिंहसरस्वती अन्नपूर्णां सस्मार। अन्ये ऊचुः। पूर्वं निशीथे ऋषिभिः सह दुर्वासाः पार्थाश्रमं ययौ। तदा भिया द्रौपद्याऽर्थितः कृष्ण एत्यान्नं पूरयामासेति श्रुतमिदं त्वत्र दृष्टं ॥६८-७६॥ दंडधृङ्नरोऽप्ययं त्रिमूर्त्यवतारोऽस्य माहात्म्यं को वेद। नरोऽयमित्यमुं ब्रूयात्स दुर्गतिं व्रजेत्। ईशोऽयं न चेत्कथमन्नं पूरितम्। तथाऽन्यच्च दृष्टम्। मृतोऽप्युत्थापितः। शुष्ककाष्टं पल्लवितं

अन्यदस्यापि माहात्म्यं कथं केनोपमीयते ॥
त्रिविक्रमायापि विश्वरूपमेतेन दर्शितम् ॥ ८१ ॥

वन्ध्याऽपि महिषी दुग्धा भिक्षार्थं ग्राममध्यतः ॥
हीनास्येनाभिमंत्र्यैव वेदा अप्यत्र वाचिताः ॥ ८२ ॥

दृष्टं चित्रं तथाऽन्यच्च कुष्ठी विप्रः समागतः ॥
निर्मलोऽभूद्गुरोर्दृष्ट्या सर्वैर्दृष्टं त्विहैव तु ॥ ८३ ॥

अनीनयत्क्षणाद्भक्तं तन्तुकं श्रीगिरिं द्रुतम् ॥
काशीक्षेत्रं क्षणार्धेन भक्तायादर्शयत्तथा ॥ ८४ ॥

अन्यान्यप्यमितान्यस्य चरित्राणि महीतले ॥
तथा कर्तुं समर्थो न कोऽपीह गुरुणा समः ॥ ८५ ॥

आराधिता अपि सुरा भविष्यन्तीह सालसाः ॥
दृष्ट्यैव गुरुनाथोऽयं कामान्पूरयति द्रुतम् ॥ ८६ ॥

एवं परस्परं प्रोचुः कौतुकं मेनिरेऽखिलाः ॥
श्रीगुरोश्चरितस्याभूत्ख्यातिस्त्रिभुवनेऽमला ॥ ८७ ॥

त्रिविक्रमाय विश्वरूपं दर्शितं, वन्ध्यामहिषी दुग्धा, हीनमुखाद्वेदो वाचितः, दर्शनात्कुष्ठी निर्मलीकृतः, तन्तुकः क्षणाच्छ्रीगिरिं नीतोऽन्यः काशीं च। अन्यान्यप्यमितान्यस्य चरितानि वक्तुं क ईशः। आराधिता अपि देवाः सालसा भवन्ति। गुरुस्तु दृष्ट्यैव कामान्पूरयति ॥७७-८६॥ एवं ते कौतुकं मेनिरे। श्रीगुरुर्भास्करमाह। त्वं पुत्रश्रीयुतो भवेति। नामधारकैवं

श्रीगुरोश्चरितं त्वीदृग्विचित्रं नामधारक ॥
अत एवास्य बहवः शिष्या जाता महात्मनः ॥ ८८ ॥

नानाराष्ट्रत आयान्ति सेवां कुर्वन्ति सद्गुरोः ॥
तस्मै प्रसन्नो भवति यस्यान्तःकरणं दृढम् ॥ ८९ ॥

गङ्गाधरस्य तनयोऽप्यत एव भक्त्या
सम्प्रार्थयत्यखिललोकसमस्तकामान् ॥
श्रीसद्गुरुः खलु ददाति कलौ युगेऽपि
क्षिप्रं ततो भज भजानिशमार्तबन्धुं ॥ ९० ॥

(इति)श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्यगङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञितमहाराष्ट्रभाषान्वितगुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वतीयतिविरचितायां श्रीगुरुसंहितायां भक्तिकाण्डे अष्टत्रिंशः (अध्यायः) ॥

॥ आदितः श्लोकाः ॥ ४८९० ॥

गुरोश्चरितं । ततोऽनेके शिष्या जाताः । दूरादेत्य गुरुं भेजुः । दृढभक्तिं ज्ञात्वा गुरुः प्रसीदति ॥८७-८९॥ गङ्गाधरस्य तन० ॥ इति चू० अष्टत्रिंशः ॥ ३८ ॥

॥ इति अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

---

## ॥ अथ एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

॥ श्रीगुरुदेवदत्त ॥

सिद्धः प्राहाग्रतो वक्ष्ये शृणु त्वं नामधारक ॥
षष्ट्यब्दायास्तु वन्ध्यायाः पुत्रौ जातौ प्रसादतः ॥१॥

य आपस्तम्बशाखीयो द्विजः शौनकगोत्रजः ॥
सोमनाथ इति ख्यातो वेदशास्त्रपरायणः ॥ २ ॥

वेदशास्त्रप्रमाणेन नियतं कर्म योऽकरोत् ॥
पतिव्रताशिरोरत्नं गङ्गाख्याऽस्याभवद्वधूः ॥ ३ ॥

वयसा षष्टिवर्षा सा न लेभे तनयं ततः ॥
लोके वन्ध्येति विख्याता गन्धर्वनगरे स्थिता ॥ ४ ॥

॥ श्रीगणेशाय नमः ॥ ॥ श्रीदत्तात्रेयाय नमः ॥

अथ सारसंग्रहश्लोकोऽयम्—

नवत्रिमितसर्गे व्यधात्स्थविरवन्ध्याम् ॥
कुमारललितां विप्रलार्चनत ईशः ॥ ३९ ॥

सिद्ध आह। तत्र षष्टिवत्सरवन्ध्यायाः पुत्रौ जातौ शृणु ॥ १ ॥ आपस्तंबशाखीयः काश्यपगोत्रजः सोमनाथाख्यब्राह्मणः ॥ २ ॥ वेदशास्त्रोक्तकर्मरतस्तत्पत्नी गङ्गाख्या पतिव्रता षष्टिवर्षा वन्ध्येति ख्याता

पतिसेवारता नित्यं श्रद्धाभक्त्या त्वनिन्दिता ॥
प्रत्यहं नियमेनापि चक्रे श्रीगुरुदर्शनम् ॥ ५ ॥

आरार्तिक्यं समानीय नीराज्य प्रत्यहं गुरुम् ॥
उपचारैर्मुदाऽऽनर्च काल एवं महान्गतः ॥ ६ ॥

एवं बहुतिथे काले सन्तुष्टः श्रीगुरुः स्वयम् ॥
प्रहसन्परिपप्रच्छ गङ्गाख्यां ब्राह्मणीं तु ताम् ॥ ७ ॥

ब्रूहि ब्राह्मणि मां गङ्गे नित्यं नीराजनादिकम् ॥
किमर्थमानयस्यङ्ग नाभीष्टं कथितं त्वया ॥ ८ ॥

विस्तरेण वदस्वाद्य का ते मनसि वासना ॥
गुरुप्रसादाद्गौरीशः सिद्धिं नारायणो नयेत् ॥ ९ ॥

इति श्रुत्वा गुरोर्वाक्यं प्राञ्जलिः प्रणताऽब्रवीत् ॥
अपुत्रस्य न लोकोऽस्तीत्येवं वक्ति श्रुतिः स्वयम् ॥ १० ॥

अपुत्रायाः स्त्रिया वक्त्रं नावलोक्यं वदन्त्यहो ॥
स्वामिन्ब्रूते जनो मां तु महादोषां च पापिनीम् ॥ ११ ॥

पतिसेवारताऽन्वहं श्रीगुरुं सम्पूज्य नीराज्यानमत्। एवं कालेऽतीते तुष्टः श्रीगुरुर्हसन् तामाह। किमर्थं नीराजनादिकमानयसि। किं तेऽभीष्टं वद। गौरीशो हरिः सिद्धिं नयेत्। सा नत्वाऽऽह। नापुत्रस्य लोकः। वन्ध्या महादोषा पापिनी तन्मुखं नावलोक्यमिति जनो वक्ति। यत्कुक्षौ न फलं

यस्याः कुक्षौ नैव फलं तस्या जन्म तु निष्फलम् ॥
उभयं च कुलं तस्याः पितृलोके प्रतीक्षते ॥ १२ ॥

इच्छन्ति पितरो नित्यमस्मद्वंशे सती यदि ॥
सूते चेत्तनयः सोऽस्मानुद्धरिष्यति दुर्गतः ॥ १३ ॥

विना पुत्रेण यद्गेहं तद्गेहं घोरमेव हि ॥
न दूरं तस्य चारण्यं यथाऽरण्यं तथा गृहम् ॥ १४ ॥

गङ्गास्नानाय चायान्ति कटावादाय बालकम् ॥
पुरंध्र्यः[1] प्रत्यहं प्रीत्या कौतुकात्क्रीडयन्ति च ॥१५॥

कटौ बालं समादाय नन्दन्ते सकलाः स्त्रियः ॥
तथाविधं न मे दैवं मन्दभाग्याऽहमस्म्यहो ॥ १६ ॥

धिग्भाग्यं मे यतो नास्ति कटावादातुमर्भकः ॥
निष्फलं मम जन्माभूत्सुतो नाभूत्सुताऽथवा ॥ १७ ॥

न सन्ति तनया यस्य परलोको न तस्य हि ॥
पितरोधः पतन्त्यस्य लुप्तपिण्डोदकक्रियाः ॥ १८ ॥

तज्जन्म निष्फलम् ॥३-१२॥ अस्मत्कुले सती सूते चेन्न उद्धार इति पितरः प्रतीक्षन्ते। अपुत्रं गृहं घोरवनं। कटौ बालं धृत्वा स्त्रियो नन्दन्ते। न तथा मे भाग्यं। कटावादातुं पुत्रः पुत्री वा न। मे जन्म व्यर्थं। पुत्रं विना न परलोकः। पितरोऽप्यधः पतन्ति। षष्टिवर्षाऽहं मे जन्मनालं।

---

१ सुचरित्राः स्त्रियः.

षष्टिर्वर्षाण्यतीतानि जन्मनाऽलं ममाद्य हि ॥
अतो देहि वरं मेऽग्रे शुभं जन्म भवत्विति ॥ १९ ॥

भवेयं पुत्रवत्यग्रभवे पूर्णमनोरथा ॥
एष एव वरो देय इति सा विनताऽब्रवीत् ॥ २० ॥

इति तस्या वचः श्रुत्वा प्रहसन्नब्रवीद्गुरुः ॥
को जानीयाद्भावि जन्म कुतस्ते स्मरणं भवेत् ॥ २१ ॥

नित्यमारार्तिकं भक्त्या त्वमिहैवार्पयस्यतः ॥
तुष्टोऽस्मि ते भवत्वत्र पुत्री पुत्रश्च सत्तमः ॥ २२ ॥

इह जन्मनि ते पुत्री पुत्रश्च शुभलक्षणः ॥
भविष्यतीत्यतिप्रीत्या श्रीगुरुः प्राह तां तदा ॥ २३ ॥

इत्युक्ता गुरुणा बध्वा ग्रन्थिं वस्त्राञ्चले सती ॥
नता करौ समानीय प्राह स्वामिन् दयानिधे ॥ २४ ॥

जन्मनः षष्टिवर्षाणि स्वामिन् जातानि मे खलु ॥
न रजोदर्शनं चापि कुतः पुत्रो भविष्यति ॥ २५ ॥

भवान्तरे पुत्रवती भवेति मे वरो देयः । श्रीगुरुर्हसन्नाह । क्व भावि जन्म । कुतस्ते स्मरणम् । नित्यमारार्तिकं दत्तं तेन तुष्टोऽस्मि ॥१३-२२॥ इह ते शुभौ पुत्रौ भविष्यतः । सा वस्त्रान्ते ग्रन्थिं बध्वा नत्वाऽऽह । स्वामिन्दयस्व । स्वामिन्रजोदर्शनमपि मे न कुतः पुत्रः । पुत्रार्थं नानातीर्थ-

नानाव्रतानि पुत्रार्थं तीर्थान्याचरितानि च ॥
कृता मयाऽश्वत्थपूजा भो स्वामिन्पुत्रकामया ॥ २६ ॥

सकला अपि मामूचुः कुर्वश्वत्थप्रदक्षिणाः ॥
तव कामो भवेत्पूर्णः पुत्रोऽपि च भविष्यति ॥ २७ ॥

इत्युक्ताऽहं भजेऽश्वत्थं गतं तत्रैव जन्म मे ॥
पुत्रो भविष्यतीत्येवं विश्वासो मे वृथा गतः ॥ २८ ॥

एवं मे षष्टिवर्षाणि कृतं कष्टं सुतेच्छया ॥
प्रदक्षिणादिनाऽश्वत्थः सेव्यतेऽद्यापि वै मया ॥ २९ ॥

नेह पुत्रा भविष्यन्ति सम्भवन्तु भवान्तरे ॥
इति कामनयाऽश्वत्थनारायणमहं भजे ॥ ३० ॥

स्वामिन्निह प्रसन्नोऽसि पुत्रमत्रैव दास्यसि ॥
नान्यथा तव वाक्यं हि स्वामिन् त्वं नृहरिः स्वयम् ३१

स्वामिनाऽयं वरो दत्तो निर्धारोऽपि ममान्तरे ॥
कृतं सुहास्यं भवता ग्रन्थिर्बद्धो मया दृढः ॥ ३२ ॥

व्रतानि सेवितानि । ते कामपूर्तिर्भवेदश्वत्थं भजेति लोकेनोक्तं । विश्वासेन मयाऽश्वत्थप्रदक्षिणाः कृताः । अद्यापि करोमि नेह पुत्रश्चेद्भवान्तरे भविष्यतीति भजे । स्वामिन्निह जन्मनि पुत्रं दित्से त्वं स्वयं नृहरिर्न ते वाक्यं मृषा ॥२३-३१॥ इति मे निश्चयो ग्रन्थिर्बद्धः । भवता सुहास्यं कृतं ।

भाविजन्मनि पुत्रेच्छां धृत्वाऽश्वत्थं भजाम्यहम् ॥
स्वामिन्निह प्रसन्नो मे कन्यापुत्रौ प्रदास्यसि ॥ ३३ ॥

सेवेऽश्वत्थं बहुदिनं प्रयासेनैव मे स तु ॥
किं दास्यत्यर्चितोऽश्वत्थो मौर्ख्येणैव मयाऽर्च्यते ॥३४॥

इति तस्या वचः श्रुत्वा प्रहसन्प्राह सद्गुरुः ॥
अश्वत्थसेवा विज्ञेया महापुण्या वृथा न सा ॥ ३५ ॥

मा कुर्वश्वत्थनिन्दां त्वं यत्सेवाऽनन्तपुण्यदा ॥
मया सह भजाश्वत्थं सत्यं पुत्रो भविष्यति ॥ ३६ ॥

व्रतमाचर मद्वाक्यात्प्रत्यहं सङ्गमं व्रज ॥
श्रीभीमामरजानद्योः सङ्गमे सुमनोहरे ॥ ३७ ॥

यत्राश्वत्थोऽस्त्यहं तत्रानुतिष्ठाम्यन्वहं सति ॥
मया सह तमश्वत्थं भज द्राक्कामपूरकम् ॥ ३८ ॥

अश्वत्थस्य च माहात्म्यं पुराणादिषु वर्णितम् ॥
नारायणः स चाश्वत्थो निवासो मम तत्र च ॥ ३९ ॥

किमर्थं भाविजन्मपुत्रेच्छा इहैव पुत्रीपुत्रौ दास्यसि। प्रयासान्मौर्ख्येणाश्वत्थसेवा कृता स मे किं दास्यति ॥३३-३४॥ हसन् श्रीगुरुराह। अश्वत्थसेवा महापुण्या तन्निन्दां मा कुरु। ते पुत्रो भविष्यति ॥३५-३६॥ मद्वाक्याद्भीमामरजासङ्गमस्थाश्वत्थं भज। तत्रान्वहं तिष्ठे। मया सह तं भज। तन्माहात्म्यं पुराणादिषूक्तं। यत्र मे वासः सोऽश्वत्थो नारायणः।

इति श्रुत्वा गुरोर्वाक्यं नता साऽपृच्छदङ्गना ॥
अश्वत्थवृक्षमाहात्म्यं विस्तरेण वदस्व मे ॥ ४० ॥

कीदृगश्वत्थमाहात्म्यं श्रोतुमिच्छामि तत्त्वतः ॥
स्थिरीभवेन्मनस्तेन भक्त्या सेवे ततः परम् ॥ ४१ ॥

इत्युक्तः श्रीगुरुः प्राह व्यर्थमश्वत्थनिन्दनम् ॥
अमितं तस्य माहात्म्यं तत्र देवा वसन्ति हि ॥ ४२ ॥

ब्रह्माण्डाख्ये पुराणे सन्नश्वत्थमहिमा स्मृतः ॥
नारदाय मुनीशाय ब्रह्मदेवेन वर्णितः ॥ ४३ ॥

नित्यं त्रिभुवने यस्य गमनं नारदो मुनिः ॥
ब्रह्मपुत्रः कदाचित्स ऋषीणामाश्रमं ययौ ॥ ४४ ॥

आगतं नारदं दृष्ट्वा पाद्यार्घ्यादिभिरादरात् ॥
ऋषयः पूजयित्वा तं पप्रच्छुः स्वागतं मुदा ॥ ४५ ॥

ऋषयो नारदं प्राहुर्विनयावनता मुने ॥
कथमश्वत्थमाहात्म्यं स्वामिन्नो वद विस्तरात् ॥४६॥

सा प्राह। अश्वत्थमाहात्म्यं शंस। तच्छ्रुत्वा मनः स्थिरीकृत्य तं भक्त्या भजे ॥३७-४१॥ श्रीगुरुराह। व्यर्थं तं निन्दासि। तत्र देवा वसन्ति। ब्रह्माण्डपुराणे तन्माहात्म्यं नारदेनोक्तं। त्रिभुवनं पर्यटन्नारदो ऋष्याश्रमं ययौ। तं पाद्यादिभिरापूज्यापृच्छन्नश्वत्थमाहात्म्यं वदेति। नारद आह।

इति श्रुत्वा वचस्तेषां नारदो मुनिरब्रवीत् ॥
मुनयः पर्यटन्नद्य ब्रह्मलोकं गतोऽस्म्यहम् ॥ ४७ ॥

भावेनाश्वत्थमाहात्म्यं मया पृष्टं विधे पितः ॥
विष्णुस्वरूपोऽश्वत्थोऽयमिति सर्वे वदन्ति हि ॥४८॥

ईदृशोऽश्वत्थवृक्षोऽयं सेवनीयः कथं वद ॥
कीदृगश्वत्थमाहात्म्यं स्वामिन्मे वद विस्तरात् ॥४९॥

इति पृष्टोऽवदद्ब्रह्माऽश्वत्थमूले वसाम्यहम् ॥
मध्यदेशे हृषीकेशो रुद्रो वसति चाग्रतः ॥ ५० ॥

तथा दक्षिणशाखासु शूलपाणिर्वसत्यपि ॥
विष्णुः पश्चिमशाखासु तूत्तरे निवसाम्यहम् ॥ ५१ ॥

वसन्तीन्द्रादयो देवाः पूर्वशाखासु सर्वदा ॥
वसुरुद्रादित्यदेवाः शाखासु निवसन्ति हि ॥ ५२ ॥

ब्राह्मणा ऋषयो गावो वेदा यज्ञाश्च सर्वशः ॥
एते वसन्ति सततं सदा मूलाङ्कुरादिषु ॥ ५३ ॥

अद्य ब्रह्मलोके ब्रह्माणमपृच्छं। अश्वत्थं नारायणस्वरूपमाहुः स कथं सेव्यस्तन्माहात्म्यं कीदृगिति पृष्टो ब्रह्माऽऽह। तन्मूलेऽहं, मध्ये विष्णुरग्रे शिवोऽस्ति। तथैव दक्षिणपश्चिमोत्तरशाखासु च ॥४२-५१॥ पूर्वत इन्द्रादयः। शाखासु वसुरुद्रादित्याः। विप्रर्षिवेदा अंकुरादिषु नदीतीर्था-

अखिला अपि नद्यश्च क्षीराद्याः सप्तसागराः ॥
वसन्ति पूर्वशाखासु वृक्षोऽश्वत्थोऽयमीदृशः ॥ ५४ ॥

अकारो मूलदेशस्थ उकारः स्कन्धदेशगः ॥
मकारः फलपुष्पस्थ एवमश्वत्थ उत्तमः ॥ ५५ ॥

वसवोऽष्टौ तथा रुद्राश्चाऽदित्या यत्र संस्थिताः ॥
त्रिमूर्तयो यत्र तत्र समस्ता देवताः स्थिताः ॥ ५६ ॥

एवंभूतोऽश्वत्थवृक्षस्तन्माहात्म्यं न वर्ण्यते ॥
अतोऽश्वत्थः कल्पवृक्ष इति मामब्रवीद्विधिः ॥ ५७ ॥

मुनयो यत्र तिष्ठन्ति वृक्षेऽश्वत्थे त्रिमूर्तयः ॥
को वदेत्तस्य माहात्म्यं भजतां कामदो न किम् ॥५८॥

इति श्रुत्वा मुनिगणाः पुनर्नारदमब्रुवन् ॥
अश्वत्थः केन विधिना भजनीयो वदस्व नः ॥ ५९ ॥

एकस्मिन्दिवसे पृष्टमथर्वाणमिदं पुरा ॥
तेन सामान्यतोऽश्वत्थसेवाविधिरुदाहृतः ॥ ६० ॥

ब्धयश्च । अकारो मूले, उकारः स्कन्धेषु, मकारः फलादिष्वेवंविधोऽश्वत्थस्तन्माहात्म्यं को वदेत् । ईदृशः कामदो न किम् । ऋषय ऊचुः । केन विधिनाऽयं सेव्यः पुराऽथर्वणोक्तमपि ब्रह्मर्षेस्त्वत्तः श्रोतुमिच्छामः ।

समस्तधर्मविज्ञाता ब्रह्मर्षिस्त्वं हि नारद ॥
अतो विस्तरतोऽश्वत्थसेवाविधिमुपादिश ॥ ६१ ॥

इत्युक्तो नारदः प्राह मुनीन् शृणुत विस्तरात् ॥
अश्वत्थसेवाविधानं वक्ष्ये ब्रह्मवचो यथा ॥ ६२ ॥

आषाढपौषचैत्रेषु चास्तादौ गुरुशुक्रयोः ॥
चन्द्रानुकूल्याभावे च नारम्भोऽस्य प्रशस्यते ॥ ६३ ॥

निषिद्धव्यतिरिक्तेषु मासादिषु शुभे दिने ॥
उपोषितः शुचिर्भूत्वाऽश्वत्थसेवाव्रतं चरेत् ॥ ६४ ॥

अश्वत्थं न स्पृशेद्धीमान्वासरे चन्द्रसूर्ययोः ॥
भृगुवारेऽर्कसंक्रातावश्वत्थं न स्पृशेन्नरः ॥ ६५ ॥

पर्वणि व्यतिपाते च दुर्दिने वैधृतौ निशि ॥
रिक्तातिथिषु सन्धौ च नापराण्हे स्पृशेद्बुधः ॥ ६६ ॥

निन्दापाखण्डवादादि द्यूतकर्मानृतादि च ॥
त्यक्त्वा प्रातः शुचिर्मौनी चाश्वत्थव्रतमारभेत् ॥६७॥

नारद आह । ब्रह्मणोक्तं वक्ष्ये ॥६२-६२॥ चैत्राषाढपौषगुरुशुक्रास्तादिषु चन्द्रप्रातिकूल्ये च नाऽरभेत् । शुभकाले शुचिरुपोषितो भजेत् । रविचन्द्रभृगुवारे क्रान्तौ पर्वपातदुर्दिनरात्रिरिक्तास्वपराण्हे चाश्वत्थं न भजेत् । निन्दापाखण्डवादद्यूतादि त्यक्त्वा सचैलं स्नात्वा निर्मलं वस्त्रं वसित्वा

स्नानं सचैलं कृत्वाऽऽदौ वसित्वा निर्मलाम्बरम् ॥
गाङ्गयामुनतोयाढ्यौ कलशौ कर्म[1]लोपरि ॥ ६८ ॥

संस्थाप्याभ्यर्च्य पुण्याहं वाचयित्वा यथाविधि ॥
उद्दिश्य कामनां स्वीयां सङ्कल्प्य व्रतमादरात् ॥६९॥

कलशाद्भिः सप्तवारमश्वत्थस्नपनं चरेत् ॥
भक्तिभावेन संयुक्तः पुनः स्नानं विधाय च ॥ ७० ॥

ततो देवमयं वृक्षमश्वत्थं पूजयेद्व्रती ॥
उपचारैः षोडशभिः पुंसूक्तेन विधानतः ॥ ७१ ॥

श्रीविष्णुमूर्तिमश्वत्थं ध्यायेदष्टभुजं द्विजः ॥
क्रमेण शङ्खं चक्रं च वरदानं तथैव च ॥ ७२ ॥

खड्गं च खेटकं चापि शरासनमिषुं तथा ॥
अभयं चाष्टहस्तैश्च दधानं विष्णुमव्ययम् ॥ ७३ ॥

नारायणं पीतवस्त्रं लक्ष्मीयुक्तं जनार्दनम् ॥
एवं ध्यात्वाऽश्वत्थवृक्षमूले पूजां समाचरेत् ॥ ७४ ॥

गङ्गायमुनाजलकलशौ संस्थाप्याभ्यर्च्य पुण्याहं वाचयित्वा कामं सङ्कल्प्य भक्त्याऽश्वत्थं कलशाद्भिः सप्तवारमभिषिच्य शंखचक्रवरखड्गखेटकचापेष्वभयहस्तं श्रीयुतं विष्णुरूपाश्वत्थं ध्यात्वा ॥६३-७२॥ सम्पूज्य सूत्रेण वस्त्रेण वाऽऽवेष्ट्य मनोवाक्कायैर्नियतःपुंसूक्तेन सजलकुम्भगर्भिणीवन्मन्दगत्या

---

१ रंगवल्यादिरंजितपद्मोपरि.

शिवशक्तियुतं त्वेतत्त्रिमूर्तेः स्थानमुत्तमम् ॥
आवाह्य दैवतमयमुपचारैः समर्चयेत् ॥ ७५ ॥

वस्त्रेण वाससा वाऽपि वृक्षमावेष्टय कामतः ॥
सङ्कल्प्य मन्दगत्यैव कुर्याच्छक्त्या प्रदक्षिणाः ॥७६॥

कायेन मनसा वाचा नियतो भक्तिभावतः ॥
नरः पुरुषसूक्तेन कुर्याच्छक्त्या प्रदक्षिणाः ॥ ७७ ॥

सहस्रनामभिर्यद्वाऽप्यनन्तफलदेन वा ॥
मौनेन मन्दगत्यैव कुर्याच्छक्त्या प्रदक्षिणाः ॥ ७८ ॥

पूर्णकुम्भयुता नारी यथा चलति गर्भिणी ॥
तथा च मन्दगत्यैव कुर्याच्छक्त्या प्रदक्षिणाः ॥ ७९ ॥

आदिमध्यावसानेषु नमस्कुर्यात्परिक्रमे ॥
प्रत्यङ्घ्रि मेधफलदाः कुर्याच्छक्त्या प्रदक्षिणाः ॥८०॥

दुर्धरं ब्रह्महत्याघं तद्द्विलक्षप्रदक्षिणाः ॥
वारयन्ति ततो भक्त्या कुर्याच्छक्त्या प्रदक्षिणाः ॥८१॥

पुंसूक्तेन सहस्रनामभिर्मौनेन वा प्रदक्षिणाः कुर्यात्। आदिमध्यावसानेषु नमेत्। प्रतिपदं मेधफलं। द्विलक्षप्रदक्षिणातो ब्रह्महत्यानाशः। त्रिमूर्ति-

---

१ यज्ञ.

त्रिमूर्तिवासाऽश्वत्थस्य सेवायाः कः फलं वदेत् ॥
गुरुतल्पादिपापानां यत्र संक्षालनं भवेत् ॥ ८२ ॥

व्याधिनाशो भवेत्तस्य यः करोति प्रदक्षिणाः ॥
अनृणी स भवेदाभिर्ऋणं यस्य तु कोटिशः ॥ ८३ ॥

जन्ममृत्युजराव्याधिसंसारभयतारकाः ॥
ग्रहबाधाहरा एतास्तत्सहस्रप्रदक्षिणाः ॥ ८४ ॥

पुत्रकामो भवेद्यस्य मनोवाक्कायकर्मभिः ॥
अश्वत्थं सम्भजेत्तस्य पुत्रलाभो भवेद्ध्रुवम् ॥ ८५ ॥

चतुर्विधपुमर्थांश्च दास्यत्यश्वत्थसेवनम् ॥
पुत्रप्राप्तौ तु किमुत विलम्बोऽश्वत्थसेवनात् ॥ ८६ ॥

स्पृष्ट्वाऽश्वत्थं मन्दवारे यस्तु मृत्युञ्जयं जपेत् ॥
कालमृत्युमपि क्षिप्रं स नरो जयति ध्रुवम् ॥ ८७ ॥

अपमृत्युः कुतस्तस्य पूर्णायुः स भवेन्नरः ॥
यः शनिग्रहपीडार्तः सोऽश्वत्थं प्रार्थयेन्नरः ॥ ८८ ॥

वासाश्वत्थसेवनाद्गुरुतल्पादिपापनाशः ॥७३-८२॥ व्याध्यृणग्रहबाधा-जन्मजरामृत्युभयसंसारनाशश्चतुर्विधपुरुषार्थलाभश्च । पुत्रप्राप्तौ न विलंबः । मन्दवारेऽश्वत्थं स्पृष्ट्वा मृत्युञ्जयजपे कालमृत्युपरिहारः कुतोऽपमृत्युः ।

सार्धसप्ताब्दादिपीडा यदा मन्दाद्भविष्यति ॥
तदा कोणस्थ इत्यादि जपेदश्वत्थसंनिधौ ॥ ८९ ॥

कोणस्थः पिङ्गलो बभ्रुः कृष्णो रौद्रोऽन्तको यमः ॥
सौरिः शनैश्चरो मन्दः पिप्पलादेन संस्तुतः ॥ ९० ॥

एवं दृढेन मनसा योऽश्वत्थं भजते स तु ॥
कामसिद्धिः पुत्रलाभो भवेत्तस्य न संशयः ॥ ९१ ॥

अमायां गुरुवारे वाऽश्वत्थछायाजलेषु यः ॥
स्नानं करोति स ब्रह्महत्याया अपि मुच्यते ॥ ९२ ॥

अश्वत्थाधो ददात्यन्नमेकस्मै च द्विजाय यः ॥
फलं लभेत्कोटिविप्रभोजनस्य स निश्चितम् ॥ ९३ ॥

अश्वत्थाधश्चोपविश्य जपेदेकं मनुं च यः ॥
तस्यानन्तं फलं वाऽपि वेदपाठफलं लभेत् ॥ ९४ ॥

अश्वत्थारोपणं योऽत्र करोति दिवि तेन तु ॥
स्थापिता पूर्वजातानां द्विचत्वारिंशतिर्ध्रुवम् ॥ ९५ ॥

पूर्णायुर्लभेत्। सार्धसप्तवर्षादिशनिपीडार्तः कोणस्थ इति जपेत्॥८३-९०॥ कोणस्थः पिङ्गलो बभ्रुः कृष्णो रौद्रोऽन्तको यमः। सौरिः शनैश्चरो मन्दः पिप्पलादेन संस्तुतः। एवं दृढविश्वासेन भजनात्पुत्रलाभो न संशयः॥९१॥ अमायां गुरुवारे तच्छायाजलस्नानाद्ब्रह्महत्यानाशः ॥ ९२ ॥ तत्रैकविप्रायान्नदानात्कोटिविप्रभोजनफलम्। एकमन्त्रजपाद्वेदपाठफलम्। अश्वत्थस्था-

येन छिन्नोऽश्वत्थवृक्षः स महापापवान्भवेत् ॥
नरके तिष्ठति चिरं पितृभिः सह निश्चितम् ॥ ९६ ॥

अश्वत्थाधश्चोपविश्य पञ्चयज्ञान्करोति यः ॥
अक्षय्यसुकृतं तस्य पुत्रप्राप्तिस्तु सत्वरम् ॥ ९७ ॥

एवमश्वत्थमाहात्म्यं ब्रह्मा नारदमब्रवीत् ॥
तस्माच्च नारदात्पूर्वं समस्तैर्ऋषिभिः श्रुतम् ॥ ९८ ॥

नारदः पुनरप्यूच आगमोक्तविधानतः ॥
प्रदक्षिणादशांशेन हवनं कारयेद्बुधः ॥ ९९ ॥

हवनस्य दशांशेन कुर्याद्ब्राह्मणभोजनम् ॥
ब्रह्मचर्येण सेवेत हविष्यान्नाशनेन च ॥ १०० ॥

एवं व्रतं विधायान्ते करोत्युद्यापनं तु यः ॥
दत्ते शक्त्याऽश्वत्थवृक्षं सौवर्णं ब्राह्मणाय च ॥ १ ॥

कुटुम्बिने सुशीलाय ब्राह्मणाय ददाति यः ॥
श्वेतां धेनुं सवत्सां च सालङ्कारां यथाविधि ॥ २ ॥

पनाद्द्विचत्वारिंशत्पूर्वजानां ध्रुवं स्वर्वासः। अश्वत्थच्छेदनात्पितृभिः सह चिरं नरकः। तदधः पञ्चयज्ञानुष्टानादक्षय्यपुण्यम्। अथोद्यापनं। प्रदक्षिणादशांशेन होमस्तद्दशांशेन ब्राह्मणभोजनम्। एवं ब्रह्मचर्येण हविष्याशी व्रतं कृत्वा सौवर्णाश्वत्थं सालंकृतां सवत्सां धेनुम् ॥९३-१०२॥ वस्त्राच्छ-

अश्वत्थाधो यथाशक्ति तिलराशिं विधाय च ॥
वस्त्रेणाच्छाद्य विप्राय दत्ते सोऽभीष्टभाग्भवेत् ॥ ३ ॥

एवमश्वत्थसेवाया विधानं नारदोदितम् ॥
य आचरति भक्त्या स सकलाभीष्टभाग्भवेत् ॥ ४ ॥

श्रीगुरुः प्राह तां वन्ध्यामश्वत्थमहिमैष ते ॥
कथितो भक्तिमान्यः स यथोक्तफलभाग्भवेत् ॥ ५ ॥

सर्वथा संशयं त्यक्त्वा त्वमप्येवं समाचर ॥
अत्र कल्पद्रुमोऽश्वत्थः सङ्गमे विद्यते सति ॥ ६ ॥

स्थानं तदेव चास्माकं तत्सेवां कुरु भक्तितः ॥
भवेत्ते कामनासिद्धिः कन्यापुत्रौ भविष्यतः ॥ ७ ॥

इति श्रुत्वा गुरोर्वाक्यं नमस्कृत्य द्विजाङ्गना ॥
विनयावनता हस्तौ बध्वा भक्त्याऽब्रवीद्गुरुम् ॥ ८ ॥

षष्टयब्दाऽहं जातिवन्ध्या कुतः पुत्रो भवेन्मम ॥
प्रमाणमन्ते ते वाक्यं स्वीकरोमि विनिश्चितम् ॥ ९ ॥

त्तिलराशिं च सदक्षिणं सुशीलकुटुम्बिविप्रेभ्यो दत्वाऽभीष्टं लभेत्। एवं नारदेनोक्तं यो भक्त्याऽऽचरति स सर्वाभीष्टं लभेत्। हे वन्ध्ये। अश्वत्थमहिमा कथितः संशयं त्यक्त्वा त्वमेवमाचर। सङ्गमे नः स्थानं कल्पद्रुमोऽश्वत्थः तत्सेवां कुरु। ते पुत्रौ भविष्यतः इति श्रुत्वा नमस्कृत्य साऽऽह। षष्टिवर्षा जातिवन्ध्याऽहं कुतो मे पुत्रः। अथापि ते वचनं

गुरुवाक्यं कामधेनुरिति वक्ति श्रुतिः स्वयम् ॥
अतोऽहं भवतो वाक्यं मत्वा स्वामिन्भजाम्यहम् ११०

किमश्वत्थस्य मेऽपेक्षा भवद्वाक्यं हि कामधुक् ॥
निश्चयेन भवत्पादसेवां कुर्वे यथोक्तवत् ॥ ११ ॥

इत्युक्त्वा तदनुज्ञाता गत्वा स्नात्वा च सङ्गमे ॥
षट्कूलतीर्थे साऽश्वत्थं सेवयामास भक्तितः ॥ १२ ॥

यथा श्रीगुरुणा प्रोक्ता तथा सेवां चकार सा ॥
एवमाराधयामास साऽश्वत्थं त्रिदिनं सती ॥ १३ ॥

अश्वत्थेन समं भक्त्या सिषेवे श्रीगुरुं सती ॥
तृतीयदिवसे रात्रौ साध्वी स्वप्नं ददर्श सा ॥ १४ ॥

स्वप्न एको द्विजः प्राप्य करं दत्त्वाऽब्रवीत्स ताम् ॥
जाता ते कामनासिद्धिर्यद्वक्ष्यामि कुरुष्व तत् ॥ १५ ॥

गत्वा गन्धर्वनगरं गुरुनाथं त्वमादरात् ॥
भक्त्या प्रदक्षिणीकृत्य प्रणामं कुरु सुन्दरि ॥ १६ ॥

स्वीकुर्वे गुरुवाक्यं कामधेनुं मत्वा भक्त्या भजे । किमश्वत्थेन यथोक्तवद्भवत्पादसेवां कुर्वे इत्युक्त्वा षट्कूलतीर्थे स्नात्वा गुरूक्तवदश्वत्थं भेजे सा ॥३-१२॥ तृतीयरात्रौ स्वप्ने कश्चिद्विप्र एत्य हस्तं दत्वाऽऽह । 'ते कामसिद्धिर्जाता । गन्धर्वपुरे श्रीगुरुं भक्त्या प्रदक्षिणीकृत्य नमस्कुरु । यद्दास्याति

यद्दास्यति गुरुस्तुभ्यं कुरु त्वं तस्य भक्षणम् ॥
त्वरितं ते भवेत्कार्यं मनसा निश्चयं कुरु ॥ १७ ॥

इति स्वप्ने विलोक्याथ प्रबुद्धा साऽभवत्सती ॥
साक्षात्कल्पद्रुमो यत्र कल्पितं तत्र निश्चितम् ॥ १८ ॥

सेवां कृत्वा चतुर्थेऽह्नि मठे श्रीगुरुमाययौ ॥
साध्वी प्रदक्षिणीकृत्य हर्षेण प्रणनाम ह ॥ १९ ॥

प्रहसन्श्रीगुरुर्दत्वा फले द्वे प्राह तां सति ॥
अभवत्कामसिद्धिस्ते नूनं भक्ष फले इमे ॥ १२० ॥

पारणां कुरु ते कामसिद्धिर्जाता न संशयः ॥
पुत्रीपुत्रौ प्रदत्तौ ते मयाऽद्य सति निश्चितम् ॥ २१ ॥

विधिना पारणां कृत्वा ब्राह्मणाय गुरूक्तवत् ॥
दानं दत्वाऽथ बुभुजे गुरुदत्ते फले सती ॥ २२ ॥

समापितं व्रतं यस्मिन्दिने तस्मिन्दिने सती ॥
जाता ऋतुमती साऽपि निष्कला तत्प्रसादतः ॥ २३ ॥

तद्भुंक्ष्व । शीघ्रं ते कार्यं सिध्येदिति दृष्ट्वोत्थाय चतुर्थेऽन्हि कल्पद्रुमाश्वत्थसेवां कृत्वा श्रीगुरुमेत्य प्रदक्षिणीकृत्य मुदा ननाम । गुरुः प्रहसन्द्वे फले दत्वाऽऽह । फले भक्ष, पारणां कुरु, ते कामसिद्धिर्जाता, पुत्रीपुत्रौ प्रदत्तौ न संशयः । इत्युक्ता सा गुरूक्तवद्दानानि दत्वा विधिना पारणां कृत्वा फले बुभुजे ॥१३-२२॥ तद्दिने गुरुप्रसादान्निष्कलाऽपि सा

त्रिदिनं मौनमास्थाय हविष्यान्नाशना सती ॥
परिधायाम्बरं श्वेतं सा नापश्यदितस्ततः ॥ २४ ॥

दिनत्रये व्यतीते तु सुस्नाता सा पतिव्रता ॥
श्रीगुरोर्दर्शनं चक्रे चतुर्थदिवसे मुदा ॥ २५ ॥

पञ्चमेऽह्नि समं पत्या समागत्याथ सद्गुरुम् ॥
आनर्च श्रीगुरुः प्राह सति पुत्रवती भव ॥ २६ ॥

इत्युक्ता सह पत्या सा स्वमन्दिरमथाऽगता ॥
पञ्चमे दिवसे नारी कन्यागर्भं दधौ धवात् ॥ २७ ॥

तां गर्भिणीं समालोक्य विस्मिता अभवञ्जनाः ॥
सर्वे परस्परं प्रोचुः कुतूहलमहो इदम् ॥ २८ ॥

अहो अभिनवं त्वत्र चित्रं पश्यत निष्कला ॥
वन्ध्याऽपि गर्भिणी जाता सोमनाथस्तु भाग्यवान् २९

ततस्तस्याः पतिस्तुष्टः सोमनाथाभिधो द्विजः ॥
श्रीगुरोराज्ञया चक्रे क्रियाः पुंसवनादिकाः ॥ १३० ॥

रजस्वला जाता । त्रिदिनं श्वेतवस्त्रा हविष्याशना सा मौनेनास्थाय चतुर्थेऽन्हि सुस्नाता सा मुदा गुरुं दृष्ट्वा पञ्चमेऽन्हि पत्या सह श्रीगुरुमानर्च । स तामाह । 'पुत्रवती भवेति' तथेति सा पत्या सह गृहमेत्य पतिसङ्गात्तद्दिने गर्भं दधौ । अतः कन्या जाता । तां गर्भिणीं दृष्ट्वा सर्वेऽन्योन्यमूचुः अहो नवं चित्रम् । निष्कला गर्भिणी जाता, सोमनाथो भाग्यवान् ॥२३-२९॥ तुष्टस्तत्पतिर्गुर्वाज्ञया पुंसवनादि चक्रे ॥ ३० ॥

तथा च सोऽष्टमे मासे सीमन्तोन्नयनं सती ॥
सन्तुष्टा गुरुणाऽऽदिष्टा द्विजेभ्यो वायनान्यदात् ॥ ३१ ॥

मेने जनो नवाश्चर्यं वन्ध्याया गर्भधारणम् ॥
पलिक्न्याः[1] कौतुकेनैव वायनादिप्रदापनम् ॥ ३२ ॥

ऊचुरन्ये प्रसन्नोऽभूच्छ्रीनृसिंहसरस्वती ॥
वरदोऽस्यार्चनात्सद्यः पुमर्थाः सुलभा नृणाम् ॥ ३३ ॥

त्रिमूर्तेरवतारोऽयं श्रीनृसिंहसरस्वती ॥
प्रादुरास भुवि त्रातुं स्वभक्तान्सुमनोहरः ॥ ३४ ॥

एवं नानाप्रकारैस्ते तुष्टुवुः श्रीगुरुं जनाः ॥
गङ्गाऽतिहृष्टचित्ता सा वायनानि ददौ मुदा ॥ ३५ ॥

दत्त्वैवं वायनानीशं गुरुं प्राप्य ननाम सा ॥
आशिषोऽपि ददौ तस्यै सन्तुष्टो भक्तवत्सलः ॥ ३६ ॥

संहृष्टा विप्रवनिता साष्टाङ्गं प्रणिपत्य सा ॥
नानाप्रकारैस्तुष्टाव विनयावनता सती ॥ ३७ ॥

अष्टमे मासि सीमन्तोन्नयनं च। तुष्टा सा गुर्वाज्ञया वायनानि ददौ ॥ ३१ ॥ वन्ध्यायाः पलिक्न्या गर्भधारणं वायनदानादि च दृष्ट्वा साश्चर्या लोका ऊचुः। सद्यो वरदः श्रीनृसिंहसरस्वती प्रसन्नश्चेत्पुरुषार्थाः सुलभाः। भुवि भक्तान्त्रातुं त्रिमूर्त्यवतारोऽयं प्रादुरासेति। गर्भिणी वायनानि दत्वा

---

१ शुक्लकेशायाः.

जयजयाद्य विभो परपूरुष द्रुहिणविष्णुहरात्मक मारिष[1] ॥
तव वचोऽप्यभवन्मदनुग्रहं सदकरोदमृतं मम विग्रहम् ॥ ३८ ॥

त्वं विश्वरक्षार्थमजोऽव्ययोऽपि प्रभोऽवतीर्णोऽसि महीतलेऽपि ॥
त्रिमूर्तिरेव त्वमनन्यनाथ स्वामिन्निदं सत्यमनाथनाथ ॥ ३९ ॥

कर्तुं स्तुतिं तेऽमितविक्रमात्र कः शक्नुयात्ते सुगुणा[2]तिमात्रे[3] ॥
यतोऽस्त्यनन्तो महिमा तवाद्य स्वामिन्कृपाब्धेऽस्तु नमोऽनवद्य ॥ १४० ॥

इति सा ब्राह्मणी स्तुत्वा ववन्दे चरणौ गुरोः ॥
प्रीता श्रीगुरुणाऽऽज्ञाता वनिता सा गृहं गता ॥ ४१ ॥

नवमासेष्वतीतेषु प्रसूताऽभूच्छुभे दिने ॥
तदा ज्योतिषिका एत्य ददृशुर्जातकं मुदा ॥ ४२ ॥

ऊचुर्ज्योतिषिका विप्र कन्येयं शुभलक्षणा ॥
भविष्यत्यष्टपुत्रास्याः कुलवृद्धिर्भविष्यति ॥ ४३ ॥

गुरुमेत्यानमत्। तुष्टो भक्तवत्सल आशिषं ददौ। सा नत्वा विनयेनाह त्रिमूर्ते जय। प्रसादान्मे देहः पावितः। भक्तरक्षार्थं त्रिमूर्तिस्त्वमवतीर्णोऽसि सत्यं ॥ ३१-४० ॥ कृपाब्धेऽनन्तमहिमन्स्वामिंस्त्वां स्तोतुं कः शक्त इति स्तुत्वा गुरुणाऽऽज्ञता गृहं गता। काले शुभेऽन्हि कन्यामसूत। दैवज्ञा

---

[1] हे आर्य [2] हे अदृशत्वादिगुण [3] अतिक्रांता मात्रा येन

इति ज्योतिषिका ऊचुः कन्याया जातकं तदा ॥
आनन्दितः सोमनाथो द्विजादिभ्यो धनं ददौ ॥४४॥

जातके सूतकेऽतीते सुस्नाता सा पतिव्रता ॥
सुतान्विता धवयुता गुरुदृष्ट्यर्थमागता ॥ ४५ ॥

निधाय पुत्रिकां भक्त्या श्रीगुरोः पदसन्निधौ ॥
एकभावेन साष्टाङ्गं प्रणनाम गुरुं सती ॥ ४६ ॥

उत्तिष्ठोत्तिष्ठ धन्यासि बाले पुत्रवतीति ताम् ॥
हार्देनाश्वासयामास श्रीगुरुर्बहुहर्षितः ॥ ४७ ॥

साऽप्युत्थाय गुरुं प्राह मत्कुक्षि नागतः सुतः ॥
सरस्वतीयं सम्प्राप्ता मा विस्मर निजं वचः ॥ ४८ ॥

इति तस्या वचः श्रुत्वा प्रहसन्नब्रवीद्गुरुः ॥
संशयं मा कुरु प्राज्ञि पुत्रस्तव भविष्यति ॥ ४९ ॥

इत्युक्त्वा श्रीगुरुः कन्यां तां समादाय सस्मितम् ॥
कथयामास सर्वेभ्यः कन्याया भावि लक्षणम् ॥१५०॥

जातकं दृष्ट्वोचुः। कन्येयं शुभलक्षणाऽस्याः कुलवृद्धिर्भविष्यतीति। हृष्टः सोमनाथस्तेभ्यो धनं ददौ। सूतकेऽतीते सुस्नाता सधवा ससुता सा गुरुमेत्याग्रे पुत्रीं निधाय भक्त्या साष्टाङ्गं ननाम। पुत्रवति उत्तिष्ठेति प्रेम्णोत्थापिता सा श्रीगुरुमाह। सरस्वतीयं लब्धा न पुत्रः। स्ववाक्यं स्मर। श्रीगुरुर्हसन्नाह। संशयं मा कुरु। पुत्रो भविष्यतीति ॥४१-४९॥ इत्युक्त्वा कन्यामादायाऽह। इयं पूर्णायुः सौभाग्यवती सती धर्मरता

अस्याः शतायुषः पुत्राः पौत्राश्च बहुशः शुभाः ॥
भविष्यन्ति स्वयमियं पूर्णसौभाग्यवत्यपि ॥ ५१ ॥

भवेदस्याः पतिर्ज्ञानी चतुर्वेदपरायणः ॥
भूमण्डले नन्दतेऽस्या अष्टैश्वर्ययुतं कुलम् ॥ ५२ ॥

पतिव्रताधर्मरता पुण्यशीला त्वियं सुता ॥
भूमौ भविष्यति ख्याता समस्तजनवन्दिता ॥ ५३ ॥

राजा दक्षिणदेशीयो दर्शनायागमिष्यति ॥
अस्या भो दम्पती पुत्रो युवयोर्द्राग्भविष्यति ॥ ५४ ॥

इति श्रीगुरुमूर्तिस्तत्कन्यायाया लक्षणं जगौ ॥
नताऽऽह विप्रवनिता पुत्रो भवतु मे गुरो ॥ ५५ ॥

श्रीगुरुः प्राह कीदृक्के तनयोऽपेक्षितो वद ॥
योग्योऽल्पायुः शतायुर्वा मूर्खो वद यथार्थतः ॥ ५६ ॥

इत्युक्ता गुरुणा प्राह भगवन्तनयो मम ॥
विद्वान्योग्यः पञ्चपुत्रजनकोऽपेक्षितो गुरो ॥ ५७ ॥

सुशीला ख्याता बहुपुत्रपौत्रा भविष्यति। अस्या दर्शनाय दक्षिणदेशीयो राजाऽऽगमिष्यति। अस्याः पतिर्ज्ञानी वेदपारगश्च भविष्यति। अस्याः कुले ऐश्वर्यं स्थास्यति। पुत्रो वां कीदृगपेक्षितः शतायुर्मूर्खोऽल्पायुर्विद्वान्वा। गङ्गाऽऽह। विद्वान्योग्यः पञ्चपुत्रोऽपेक्षितः। वरदो गुरुस्तथेति

तथेति श्रीगुरुः प्राह वरदो भक्तवत्सलः ॥
दम्पती तु ततस्तुष्टावानन्देनापतुर्गृहम् ॥ ५८ ॥

ततस्तस्याः सुतो जज्ञे वेदशास्त्रपरायणः ॥
तस्याभवन् पञ्च पुत्राः श्रीगुरोः सम्प्रसादतः ॥ ५९ ॥

कन्यायाया लक्षणं तूक्तं यथा श्रीगुरुणा तथा ॥
प्रसिद्धमभवद्धृष्टा सानन्दा सा सरस्वती ॥ १६० ॥

दीक्षितोऽभूत्पतिस्तस्याः स राष्ट्रेषु चतुर्ष्वपि ॥
प्रसिद्धोऽभूत्सुकृपया श्रीगुरोर्नामधारक ॥ ६१ ॥

एवं षष्ट्यब्दवन्ध्याया जातौ कन्यासुतौ मतौ ॥
नामधारक शिष्येयमीदृशी श्रीगुरोः कृपा ॥ ६२ ॥

निश्चयो यस्य मनसि तस्य सिद्धिस्तु तत्क्षणम् ॥
सद्गुरुः सेवनीयोऽतो निर्व्याजं चैकभक्तितः ॥ ६३ ॥

इति गङ्गाधरसुतः सरस्वत्यभिधोऽवदत् ॥
गुरोश्चरित्रं भो लोकाभीष्टदं सद्गुरुं भज ॥ ६४ ॥

तावभिनन्द्य गमयामास ॥५०-५८॥ ततस्तस्याः वेदज्ञः पुत्रो जातः। स गुरुप्रसादात्पञ्चपुत्रान् लेभे। यथा श्रीगुरुणा कन्याभविष्यमुक्तं तथैव जातं। सरस्वती सदा हृष्टाऽभूत्। तत्पतिर्दीक्षितो भूत्वा प्रख्यातोऽभूत्। नामधारकैवं श्रीगुरोः कृपा षष्टिवर्षवन्ध्यायाः पुत्रीपुत्रौ जातौ ईदृशी-

भजेद्यः श्रीगुरुं भक्त्या तस्य दैन्यं कुतो भवेत् ॥
यो यं चिन्तयते कामं तस्मै तं राति सद्गुरुः ॥ ६५ ॥

श्रीगुरुमूर्तिः कामधुगेनामाश्रयतीहोत्तमचिदद्दीनः ॥
तस्य समस्ताभीप्सितकामान्पूरयतीशो मङ्गलधामा ६६

(इति)श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्यगङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञितमहाराष्ट्रभाषान्वितगुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वतीयतिविरचितायां श्रीगुरुसंहितायां भक्तिकाण्डे एकोनचत्वारिंशः ( अध्यायः ) ॥

॥ आदितः श्लोकाः ॥ ५०५६ ॥

गुरुकृपा। यस्य निश्चयस्तस्य तत्क्षणं गुरुप्रसादोऽतो निष्कपटं भक्त्या सेव्यः गङ्गाधरपुत्र आह। हे लोकाभीष्टदं गुरुचरित्रं भज। भजतां कुतो दैन्यं गुरुरिष्टं दत्ते॥ श्रीगुरुमूर्तिः का० ॥ १६६ ॥ इति चूर्णिकायां एकोनचत्वारिंशः ॥ ३९ ॥

॥ इति एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

## ॥ अथ चत्वारिंशोऽध्यायः ॥ ४० ॥

श्रीगणे० ॥ सिद्ध ऊचेऽपूर्वकथां वक्ष्ये ते नामधारक ॥
शुष्ककाष्ठस्य वृक्षोऽभूद्विचित्रां शृणु तां कथाम् ॥ १ ॥

गुरौ गन्धर्वनगरे स्थिते कुष्ठार्दितो द्विजः ॥
याजुषो नरहर्याख्य आगतो गार्ग्यगोत्रजः ॥ २ ॥

स एत्य भक्तिभावेन प्रणनाम गुरोः पदे ॥
तुष्टाव बहुभिः स्तोत्रैः समानीय करद्वयम् ॥ ३ ॥

गुरुमूर्ते जय जय श्रुता ते ख्यातिरुत्तमा ॥
परः पुमान्परञ्ज्योतिर्गुरुस्त्वं भक्तवत्सलः ॥ ४ ॥

सम्भूयास्मिन्हि संसारे भावो मेऽभवदश्मवत् ॥
अयं कुष्ठीति मां स्वामिन्सर्वे निन्दन्ति वै द्विजाः ॥५॥

अथ अध्यायसारसंग्रहश्लोकोऽयम्–

खयुगमितेऽत्र कुष्ठविनिवृत्त्यै नरहरयेऽवदत्स समिदर्चाम् ।
तदु विटपी द्विजश्च शुचिरासीदियमजकीर्तिरिन्निवमालिनी ॥ १ ॥

॥ श्रीगणेशाय नमः ॥ सिद्ध आह । अपूर्वकथां वक्ष्ये शुष्ककाष्ठस्य वृक्षोऽभूच्छृणु । तत्र कुष्ठार्तो याजुषो गार्ग्यगोत्रो नरहरिविप्रो भक्त्याऽऽगत्य गुरुपदे नत्वा करौ सन्धाय बहुस्तोत्रैस्तुष्टाव ॥ १-३ ॥ गुरुमूर्ते, जय । ते ख्यातिः श्रुता । त्वं परंज्योतिर्भक्तवत्सलः ॥४॥ अहं जनित्वाऽश्मप्रायोऽस्मि ।

अभ्यस्तापस्तम्बशाखमपि निन्दन्ति मां द्विजाः ॥
अङ्गहीनोऽयमिति मां भोजनायाह्वयन्ति नो ॥ ६ ॥

प्रातरुत्थाय मे वक्त्रं केऽपि नेक्षन्ति कुष्ठिनः ॥
तन्मेऽतिदुःखं भवति किमतो जीवितेन मे ॥ ७ ॥

जन्मान्तरेऽप्यसंख्यातं पातकं हि मया कृतम् ॥
तस्येदृक्परिपाकोऽयमतः सोढुं न शक्यते ॥ ८ ॥

व्रतानि नानातीर्थानि सेवितानि मया प्रभो ॥
पूजिता देवताः सर्वा न शान्तो मे गदस्ततः ॥ ९ ॥

निश्चयेनागतोऽस्म्यद्य न करोषि कृपां मयि ॥
यदि तर्हि तवाग्रेऽद्य प्राणांस्त्यक्ष्यामि सद्गुरो ॥१०॥

इति निश्चयमाभाष्य विनयावनतो द्विजः ॥
दयस्व श्रीहर इति प्रार्थयामास सादरम् ॥ ११ ॥

भूयोऽपि च नमस्कृत्य स्तुत्वा नानाविधैः स्तवैः ॥
दर्शनं ते भवतु मे लोहस्पर्शवदीश्वर ॥ १२ ॥

कुष्ठिनं मां निन्दन्ति। यजुःशाखाऽधीता। कुष्ठिनं मां भोजनार्थं नाह्वयन्ति। मुखमपि नेक्षन्ति। इतोऽतीव दुःखं। किं जीवितेन, जन्मान्तरेऽसंख्या दोषाः कृताः। तत्फलमेतत्सोढुं न क्षमः ॥ ५-८ ॥ व्रततीर्थदेवार्चनादिनाऽस्य शांतिर्नाभूत्। यदि ते कृपा न चेत्तर्हि प्राणांस्त्यक्ष्य इति निश्चित्यागतोऽस्मि हरे। दयस्व। पुनर्नत्वाऽऽह। लोहस्पर्शवत्ते दर्शनं

इति तस्य वचः श्रुत्वा करुणं भक्तवत्सलः ॥
श्रीगुरुः कृपया प्राह शृणु तं नामधारक ॥ १३ ॥

श्रीगुरुः प्राह तं पूर्वं महादोषाः कृतास्त्वया ॥
तेनैव कुष्ठरोगेण पीडितोऽसि बहु द्विज ॥ १४ ॥

अद्य ते कथयाम्येकमुपायं दोषनाशनम् ॥
तेन शुद्धो दिव्यदेहो भविष्यस्यचिराद्द्विज ॥ १५ ॥

अत्रान्तरे चतुर्वर्षं शुष्ककाष्ठं प्रगृह्य तु ॥
उदुम्बरस्य सम्प्राप दार्वर्थं कोऽपि मानवः ॥ १६ ॥

तद्दृष्ट्वा श्रीगुरुः प्राह विप्र काष्ठमिदं द्रुतम् ॥
निश्चयेन गृहाण त्वं यथा वक्ष्ये तथा कुरु ॥ १७ ॥

काष्ठं नीत्वा जवेन त्वमिदमारोपय द्विज ॥
भीमातटे सङ्गमस्य पूर्वभागे तु वृक्षवत् ॥ १८ ॥

ततश्च सङ्गमं गत्वा स्नात्वाऽऽगत्यार्चय द्विज ॥
अश्वत्थवृक्षं च पुनः सङ्गमे स्नानमाचर ॥ १९ ॥

मेऽस्त्विवति करुणं श्रुत्वा भक्तवत्सलः कृपयाऽऽह। पूर्वं ते महादोषाः कृतास्ततः कुष्ठपीडितोऽसि। तन्नाशोपायं वक्ष्ये। तेन शुद्धो दिव्यदेहश्च भविष्यसि। अत्रान्तरे शुष्कमौदुम्बरकाष्ठं गृहीत्वा कश्चिदागतस्तद्दृष्ट्वा गुरुराह। निश्चयेनेदं काष्ठं नीत्वा भीमातटे सङ्गमेशपूर्वभागे आरोप्य ॥ ९-१८ ॥ स्नात्वाऽश्वत्थं सङ्गमेशञ्चाभ्यर्च्य पुनः सङ्गमे स्नात्वा

जलपूर्णौ च कलशौ द्वौ समानीय भूसुर ॥
त्रिकालं शुष्ककाष्ठं तदभिषिञ्च मदुक्तितः ॥ २० ॥

यस्मिन्दिने तु काष्ठेऽस्मिन्नागमिष्यन्ति पल्लवाः ॥
तव पापं तदा नश्येच्छोभनाङ्गो भविष्यसि ॥ २१ ॥

इति श्रीगुरुनाथस्तमादिदेश यथा तथा ॥
विश्वासेनैव स तदा विप्रः काष्ठमुपागतः ॥ २२ ॥

काष्ठं मूर्ध्नि समादाय नीत्वा भीमातटं स च ॥
सङ्गमेशाग्रतो गर्तं खात्वाऽऽरोप्य च तत्र तत् ॥ २३ ॥

इति श्रीगुरुणा प्रोक्तं तस्मै विप्राय तत्तथा ॥
स भक्त्याऽव्यभिचारिण्या चकार ब्राह्मणो मुदा ।२४।

एवं सप्तदिनं चक्र उपोषणपरो द्विजः ॥
घटाभ्यां जलपूर्णाभ्यां श्रद्धयाऽभिषिषेच सः ॥ २५ ॥

अवेक्ष्य कर्म तद्घोरं तमाहूयेतरे द्विजाः ॥
अनुज्ञाया गुरोस्तत्त्वं ख्यापयन्त इवाब्रुवन् ॥ २६ ॥

किमेतत्कुरुषे विप्र शुष्ककाष्ठस्य सेवनम् ॥
किं भविष्यत्यजीवस्य किं भविष्यति तेन ते ॥ २७ ॥

जलपूर्णघटद्वयमानीय काष्ठमभिषिञ्च । यद्दिने पल्लवितं भवेत्तदा ते पापनाशोऽङ्गशुद्धिश्च भविष्यतीत्याज्ञप्तः स विश्वासेन काष्ठं मूर्ध्नि धृत्वा नीत्वा गुरूक्तवदारोप्योपोष्य भक्त्या सप्ताहमभिषिषेच । तद्घोरं कर्म वीक्ष्य तं द्विजा ऊचुः । किमेतत्सेचनाच्छुष्कं काष्ठं जीविष्यति किं । वरदस्य गुरोः

गुरुमूर्तिः कृपासिन्धुर्भक्तानां वरदोऽस्ति हि ॥
सर्वेषु दृयते तस्य सद्य एव कृपाऽस्ति हि ॥ २८ ॥

न निष्कृतिस्तत्राघस्य ततः काष्ठं समर्पितम् ॥
व्यर्थं कष्टं करोषीदं विश्वस्य श्रीगुरोर्वचः ॥ २९ ॥

इति श्रुत्वा वचस्तेषां प्रणतो ब्राह्मणोऽब्रवीत् ॥
कामधेनुर्गुरोर्वाक्यं भविष्यत्यन्यथा कथम् ॥ ३० ॥

श्रीगुरुः सत्यसङ्कल्पस्तस्य वाक्यं कथं मृषा ॥
काष्ठस्य वृक्षो भविता सत्यं धैर्यं मयि स्थितम् ॥३१॥

निर्धारो मनसोऽयं मे महावाक्यं न चान्यथा ॥
प्राणान्दत्वाऽप्यहं नूनं करिष्ये सद्गुरोर्वचः ॥ ३२ ॥

एवं सर्वान्समाभाष्य शुष्ककाष्ठं स भक्तितः ॥
ब्राह्मणः सेवयामास परैरपि निवारितः ॥ ३३ ॥

एकस्मिन्दिवसे शिष्या गुरुं प्राप्याब्रुवन्निदम् ॥
स्वामिन्द्विजाय किं प्रोक्तं शुष्ककाष्ठस्य सेवनम् ॥३४॥

सद्य एव कृपा ॥ १९-२८ ॥ ते शुद्धिर्न भविष्यतीत्यतः काष्ठं दत्तं। व्यर्थकष्टमिदमिति चालितोऽपि स आह। सत्यसङ्कल्पो गुरुस्तद्वचोऽसत्यं भवेत्किं। काष्ठस्यापि वृक्षो भविष्यतीति मे धैर्यमस्ति। महावाक्यं न मोघं। तदर्थं प्राणान्दास्ये इत्याभाष्य वारितोऽपि काष्ठं भेजे। शिष्या गुरुमेत्याहुः। स्वामिन्किं द्विजायोक्तं। स सप्ताहमुपोषितः काष्ठं भजति।

उपोषितः स सप्ताहं काष्ठं भजति सन्ततम् ॥
गुरुवाक्यस्य निर्धारं स चकारैकभावतः ॥ ३५ ॥

व्यर्थं कष्टं करोषीदं मौर्ख्येणेति च बोधितः ॥
तथा निवारितोऽस्माभिरपि न स्वीचकार सः ॥ ३६ ॥

स विप्रो वक्ति चास्मान्मे न काष्ठस्य प्रयोजनम् ॥
गुरूक्तेरेव मेऽपेक्षा स स्वोक्तं सत्करिष्यति ॥ ३७ ॥

इति निश्चित्य मनसा काष्ठं भजति स द्विजः ॥
दिनानीतानि सप्तैवमम्भोऽपि न पिबत्यसौ ॥ ३८ ॥

इति शिष्यवचः श्रुत्वा श्रीगुरुस्तानथाब्रवीत् ॥
यस्य भावो यथा तस्य तथा सिद्धिर्भविष्यति ॥ ३९ ॥

कारणं गुरुवाक्यं तु शिष्याणां सिद्धिकारकम् ॥
यस्य भावो यथा तस्य तथा सिद्धिर्भविष्यति ॥ ४० ॥

एतदर्थमिमं पुण्यमितिहासं वदामि वः ॥
सूतेन कथितं स्कन्दपुराणे दृढभक्तिदम् ॥ ४१ ॥

'व्यर्थं कष्टं करोषीति' वारितो बोधितोऽपि सोऽस्मान्ब्रूते । किं काष्ठेन । मे गुरुवचनापेक्षा । स स्वोक्तं सत्यं करिष्यतीति निर्धार्य सप्ताहं जलमप्यपीत्वा काष्ठं भजति ॥ २९-३८ ॥ इति श्रुत्वा श्रीगुरुराह । यस्य यादृग्भावस्तादृक्सिद्धिः । शिष्याणां गुरुवाक्यं तारणम् । एतदर्थं स्कान्दोक्त-

पप्रच्छुर्ऋषयः सूतं पौराणिकममुं पुरा ॥
गुरुभक्तिप्रकारं यं तं ते वक्ष्यामि विस्तरात् ॥ ४२ ॥

सूतोऽब्रवीदृषिश्रेष्ठान्गुरुभक्तिर्विशेषतः ॥
संसारतारिणी त्वीदृङ्नान्यत्सुगमसाधनम् ॥ ४३ ॥

गुरुर्योग्योऽथवाऽयोग्य इत्यादि न विचारयेत् ॥
गुरुं ब्रह्ममयं ध्यात्वा सेवां कुर्वीत भक्तिमान् ॥ ४४ ॥

दृढभक्तिर्यस्य तस्य सर्वसिद्धिः क्षणेन हि ॥
अतो विहाय सन्देहं सावधानो भजेद्गुरुम् ॥ ४५ ॥

गुरोर्न्यूनं न वीक्षेत भावयेदीश्वरं गुरुम् ॥
नरदृष्ट्या न वीक्षेत त्रिमूर्तिं भावयेद्गुरुम् ॥ ४६ ॥

एवं निश्चित्य मनसा यो भजेच्छ्रीगुरोः पदे ॥
शूलपाणिर्भवेत्तस्य प्रसन्नो नात्र संशयः ॥ ४७ ॥

मन्त्रे तीर्थे द्विजे देवे दैवज्ञे भिषजे गुरौ ॥
यादृशी भावना यस्य सिद्धिर्भवति तादृशी ॥ ४८ ॥

मितिहासं वच्मि । ऋषिभिः पृष्टः सूतो गुरुभक्तिप्रकारमाह । भवतारिणी गुरुभक्तिरतः सुलभसाधनं न । योग्योऽयोग्य इति गुरुर्न मन्तव्यः । तं ब्रह्मबुद्ध्या भजेत् । यस्य दृढभक्तिस्तस्याशु सिद्धिरतोऽसन्देहं गुरुं भजेत् ॥ ३९-४५ ॥ गुरुमीश्वरं मत्वा तन्न्यूनं न वीक्ष्यं । स नृदृष्ट्याऽपि न वीक्ष्यः । एवं यो भजेत्तस्मै शिवः प्रसीदति । मन्त्रे तीर्थे द्विजे देवे दैवज्ञे भिषजे गुरौ यादृशी भावना तादृशं फलम् ॥ ४६-४८ ॥ गुरुं शिवं

मन्त्रादिषु यथा भक्तिर्भविष्यति तथा फलम् ॥
तथा गुरुं शिवं पश्येद्यस्तस्येशः प्रसीदति ॥ ४९ ॥

ईदृशी फलदा सद्यो गुरुभक्तिरृषीश्वराः ॥
दृढभक्तिप्रदं त्वत्र कथयिष्ये निदर्शनम् ॥ ५० ॥

पुरा पाञ्चालनगरे सिंहकेतुरिति श्रुतः ॥
राजाऽभूत्तस्य तनयो धार्मिकोऽभूद्धनञ्जयः ॥ ५१ ॥

एकदा राजपुत्रोऽसौ मृगयायै वनं ययौ ॥
मनुष्यवर्जितेऽरण्ये निर्जलेऽपि चचार सः ॥ ५२ ॥

राजपुत्रस्तृषाक्रान्तो दूतेन शबरेण च ॥
पर्यटन्नटवीं श्रान्तः सुतरां दाहपीडितः ॥ ५३ ॥

श्रान्तः शबरदूतेन सहितः पर्यटन्स च ॥
दूराददर्श सहसा जीर्णमेकं शिवालयम् ॥ ५४ ॥

लिङ्गानि तत्र मेदिन्यां पतितानि बहूनि च ॥
दूतो गृहीत्वैकलिङ्गं प्राहेदं सुमनोहरम् ॥ ५५ ॥

वीक्षेदीदृग्भक्तिः सद्यः फलदाऽत्र निदर्शनं वच्मि। पाञ्चाले धार्मिको धनञ्जयः सिंहकेतुपुत्र एकदा निर्जले वने मृगयार्थं गत्वा तृषितः शबरेण सहैकं देवालयं दृष्ट्वैत्य तत्रैकं पतितं चारु लिङ्गं शबरो जग्राह। राजपुत्रस्तमाह। अनेन किं करिष्यसीह बहूनि लिङ्गानि। स आह। पूजयिष्ये।

इत्युक्त्वा लिङ्गमादाय करे स शबरस्तदा ॥
राजपुत्रः स्थितो यत्र तत्र तं समुपागतः ॥ ५६ ॥

राजपुत्रस्तदा प्रेक्ष्य शबरं दूतमब्रवीत् ॥
किं करिष्यसि लिङ्गेन लिङ्गान्यत्र बहूनि हि ॥ ५७ ॥

दूतो राजसुतं प्राह लालसा मम मानसे ॥
पूजनीयं लिङ्गमित्थं गृहीतमत एव मे ॥ ५८ ॥

इति दूतवचः श्रुत्वा राजपुत्रः स्मिताननः ॥
प्राह सम्यगिदं लिङ्गमेकभक्त्या समर्चय ॥ ५९ ॥

इति तस्य वचः श्रुत्वा नत्वा दूतोऽब्रवीन्नृपम् ॥
लिङ्गं केन विधानेन पूज्यं कथय मे प्रभो ॥ ६० ॥

जात्याऽहं शबरोऽप्यज्ञो न जानेऽर्चनविस्तृतिम् ॥
विस्तरेण वदाशेषं प्रभो त्वं मे गुरुर्भव ॥ ६१ ॥

राजपुत्र उवाचामुं लिङ्गमेतद्गृहं नय ॥
स्थापयित्वा शुचिस्थाने गन्धपुष्पादिनाऽर्चय ॥ ६२ ॥

सस्मितो राजपुत्र आह। भक्त्याऽर्चयोत्तममिदम् ॥ ४९-५९ ॥ स आह। जात्या शबरोऽहं। न जानेऽर्चनविधिं तं वद। त्वं मे गुरुः। राजपुत्र आह। लिङ्गं नीत्वा गृहे शुचिस्थाने संस्थाप्य शिवं मत्वा भार्यया सह सावधानेन गन्धपुष्पाद्युपचारैर्भक्त्याऽभ्यर्च्य, नित्यं चिताभस्म समर्प्य,

सावधानेन मनसा स्त्रिया सह समर्चय ॥
गिरिजारमणं मत्वा लिङ्गमेतत्सदैव हि ॥ ६३ ॥

नानापुष्पाणि गन्धांश्च पूजनार्थं समानय ॥
धूपदीपादिनाऽऽपूज्य भक्त्या भस्म निवेदय ॥ ६४ ॥

श्मशाने यच्चिताभस्म प्रत्यहं तत्समानय ॥
तन्निवेदय लिङ्गाय प्रसादं भक्ष भार्यया ॥ ६५ ॥

यद्यदश्नासि तत्सर्वं पूर्वमस्मै निवेदय ॥
एवं पूजाविधानं ते कथितं दूत सर्वशः ॥ ६६ ॥

इति राजकुमारोऽस्य गुरुर्भूत्वाऽवदद्विधिम् ॥
शबरो मनसा सम्यङ्निर्धारं कृतवान्धिया ॥ ६७ ॥

सन्तुष्टः शबरो लिङ्गं गृहीत्वैकं गृहं ययौ ॥
प्रसन्नं मेऽभवल्लिङ्गमिति नार्यै शशंस सः ॥ ६८ ॥

गुरूपदिष्टवल्लिङ्गं पूजयामास सोऽन्वहम् ॥
नित्यं निवेदयामास चिताभस्मातिभक्तितः ॥ ६९ ॥

शबरी शबरश्चापि भक्त्या लिङ्गं समार्चयत् ॥
नैकस्मिन्दिवसे लेभे चिताभस्म कुहापि सः ॥ ७० ॥

यदश्नासि तत्सर्वं निवेद्य प्रसादं भार्यया सह भक्षेति श्रुत्वा तुष्टः शबरो लिङ्गं गृहमानीय शिवः प्रसन्न इति भार्यामुक्त्वा भक्त्योपदिष्टवत्स-भार्योऽपूजयत्। एकस्मिन्दिवसे सप्तग्रामान्व्रजञ्छ्रान्तोऽपि भस्म न लेभे ॥ ६०-७० ॥ स खिन्नःस्त्रियमाह। लिङ्गपूजा न जाता। यथा गुरुणोक्तं

चिताभस्म न लेभे स ग्रामाद्ग्रामं व्रजन्नपि ॥
एवं स पर्यटन्सप्तग्रामाञ्श्रान्तो गृहं गतः ॥ ७१ ॥

चिन्तयामास बहुशः खिन्नः पप्रच्छ स स्त्रियम् ॥
किं करोमि त्यजिष्यामि प्राणान्प्राणप्रियेऽधुना ॥७२॥

लिङ्गपूजा न हि भवेच्चिताभस्म विना प्रिये ॥
चिताभस्म न लब्धं मे दिक्षु सर्वासु चाधुना ॥ ७३ ॥

यथैव गुरुणाऽऽदिष्टं निवेद्यं तत्तथैव हि ॥
अन्यथा तु वृथा पूजा शिवलिङ्गस्य भामिनि ॥ ७४ ॥

गुरुवाक्यं न यः कुर्याद्रौरवं नरकं व्रजेत् ॥
न दूरं पातकं तस्य सदा दारिद्र्यभाक्स च ॥ ७५ ॥

अधोगतिर्भवेत्तस्य नरकोऽखण्डितोऽस्य च ॥
गुरुभक्तिं तु यः कुर्यात्स निस्तीर्णो भवार्णवात् ॥७६॥

वेदाः सर्वाणि शास्त्राणि वदन्त्येवमिति श्रुतम् ॥
अतः शबरि लिङ्गार्थं प्राणांस्त्यक्ष्यामि निश्चयात् ॥७७॥

इति पत्युर्वचः श्रुत्वा शबरी प्राह सस्मिता ॥
किमर्थं क्रियते चिन्ता चिताभस्म ददाम्यहम् ॥ ७८ ॥

तथाऽऽचरणीयमन्यथा वृथा पूजा। गुरुवाक्याकरणे पापं नरको दारिद्र्यं च। गुरुवाक्याचरणाद्भवाब्धेर्मोक्ष इति शास्त्रं। सर्वदिक्ष्वद्यान्विष्टमपि भस्म न लब्धमतः प्राणान्दास्ये। शबरी आह। किमर्थं चिन्ता। गृहे बहु-

नाथ मां सदने रुद्ध्वा वन्हिं प्रज्वालय द्रुतम् ॥
सन्त्यत्र बहु काष्ठानि देहो दग्धो भविष्यति ॥ ७९ ॥

तत आदाय तद्भस्म शङ्कराय समर्पय ॥
व्रतभङ्गं न कुरु भो हर्षेणैव वदामि ते ॥ ८० ॥

उत्पन्नस्यास्य देहस्य ध्रुवो नाशः कदापि हि ॥
अतोऽद्य शिवकार्यार्थं मम देहं समर्पये ॥ ८१ ॥

इति स्त्रिया वचः श्रुत्वा स खिन्नः शबरोऽवदत् ॥
प्राणप्रिये तव प्राणान्हरिष्यामि कथं वद ॥ ८२ ॥

प्राग्वयस्काऽसि रूपेणाप्रतिमाऽसि न वीक्षितम् ॥
सन्तानसौख्यमद्यापि संसारेऽस्मिंस्त्वयाऽनघे ॥ ८३ ॥

नाद्यापि ते मनस्तृप्तं गृहसौख्यं न वीक्षितम् ॥
माता ते त्वां ददौ मह्यं रक्षार्थं प्राणवल्लभे ॥ ८४ ॥

त्वामहं वृतवानस्मि साक्षिणोश्चन्द्रसूर्ययोः ॥
रक्षामि प्राणवदिति त्वामानीता मया गृहम् ॥ ८५ ॥

काष्ठानि सन्ति। तत्र मां दग्ध्वा तद्भस्म शिवायार्पय। व्रतभङ्गं मा कुरु। मुदा वच्मि ॥ ७२-८० ॥ देहस्य कदापि नाशोऽतः शिवकार्यार्थे समर्पयेति श्रुत्वा खिन्नः शबर आह। प्राणप्रिये, त्वं प्राग्वयस्का रूपेणा-प्रतिमाऽदृष्टसंसारसुखाऽजातापत्याऽतृप्ताऽसि। ते पितृभ्यां मे दत्ता। रक्षामीतीन्दुसूर्यसाक्षितो वृतां त्वां कथं हन्मि। ते हननात्पापं भवेन्मां

अतस्ते दहनात्पापान्यमितानि भवन्ति मे ।।
स्त्रीहन्तेति वदिष्यन्ति मां हनिष्याम्यतः कथम् ।८६।

मया त्वयि हतायां च प्राणेश्वरि कथञ्चन ।।
त्रिपुरारिः कथं तुष्येत्पुण्यं यायादघं स्पृशेत् ।। ८७ ।।

माता ते दुःखिता स्त्रीघ्नं पिता ते च शपिष्यति ।।
अद्यापि तव लावण्यं नूत्नवद्भाति मे प्रिये ।। ८८ ।।

शरीरेणैव लोकोऽत्र व्रतादीनि करोति च ।।
दग्धुमर्हति तत्किं मे स्याज्जीवदेहदाहतः ।। ८९ ।।

इति पत्युर्वचः श्रुत्वा विनता प्राह साऽङ्गना ।।
किमिदं भवतोऽज्ञानं मोहाद्भक्ति मृषा भवान् ।। ९० ।।

स्वप्नदृष्टोपमो देहो नश्वरो जलफेनवत् ।।
स्थैर्यं कदाऽपि नास्त्यस्य जातस्य मरणं ध्रुवम् ।।९१।।

पितृभ्यां मेऽर्पिता तुभ्यमहमर्धांगमेव ते ।।
प्राणनाथ भवत्तो मे भिन्नभावः कुतो वद ।। ९२ ।।

स्त्रीहन्तेति वदिष्यन्ति । ततः शिवः कथं तुष्येत् । ते पितरौ मां शपिष्यतः । ते लावण्यं नूत्नं भाति । देहेन व्रतादि कुर्वन्ति स जीवदेहः कथं दग्धुमर्हति । साऽऽह । किमिदं भवतोऽज्ञानं । मृषा मोहोऽयम् ।। ८१-९० ।। स्वप्नदृष्टवज्जलफेनवच्छरीरस्य क्व स्थैर्यम् । जातस्य मृत्युर्ध्रुवः । पितृभ्यां दत्ताऽहं तेऽर्धाङ्गभागिनी । क्व भिन्नभावः । शिवार्थं

अहमेव तवात्मा त्वं ममेति च विचार्य हि ॥
कुतोऽस्य दहनाद्दोषः स्वार्धदेहं विजानतः ॥ ९३ ॥

क्षितावुत्पद्यते यः स नश्वरो निश्चितो बुधैः ॥
अतो मे देहसाफल्यं कुर्वीशोऽपि प्रसीदति ॥ ९४ ॥

एवं नानाप्रकारैः सा बोधयित्वाऽपि च स्वयम् ॥
गृहं गत्वाऽब्रवीन्नाथ दीपयाग्निमिति प्रिया ॥ ९५ ॥

शबरोऽपि च सन्तुष्टो गृहद्वारं पिधाय च ॥
अग्निं प्रदीपयामास भस्मसादभवद्गृहम् ॥ ९६ ॥

दग्धाऽपि शबरी तत्र तद्भस्मादाय शम्भवे ॥
भक्त्या निवेदयामास शबरो नित्यवन्मुदा ॥ ९७ ॥

ईश्वरे पूजिते तस्य महानन्दोऽभवत्तदा ॥
दग्धा भार्येति शबरो न सस्मार मुदान्वितः ॥ ९८ ॥

श्रद्धाभक्त्या महेशस्य पूजां कृत्वा स नित्यवत् ॥
करे प्रसादमादाय प्रेम्णा भार्यामुपाह्वयत् ॥ ९९ ॥

स्वार्धदेहदाहात्कुतो दोषः। क्षितौ जातं नश्वरमतो मे देहसाफल्यं कुरु। शिवः प्रसीदेत् ॥ ९१-९४ ॥ एवं बोधयित्वा सा स्वयं गृहं गत्वाऽऽह। अग्निं दीपयेति। शबरोऽपि तुष्टो गृहद्वारं बद्ध्वा गृहं दग्ध्वा भार्याभस्मादाय भक्त्या शम्भवे निवेद्य मुदितो दग्धा भार्येति विस्मृत्य नित्यवत्प्रसादमादाय प्रेम्णा स्त्रियमाह्वयत् ॥ ९५-९९ ॥ तदा शिवप्रसादात्साऽऽगत्य प्रसाद-

यथा प्रत्यहमभ्यर्च्य शिवमाहूय स स्त्रियम् ॥
दत्त्वा प्रसादं स्नेहेन तया सह भुनक्ति सः ॥ १०० ॥

तथैव तस्मिन्दिवसे विस्मृत्या स्त्रियमाह्वयत् ॥
तदैव सुप्रसन्नोऽभूत्त्रिपुरारिः कृपाकरः ॥ १०१ ॥

उपस्थिता तदा सैव शबरी सुस्मितानना ॥
करे प्रसादमादाय निजगेहं ययौ मुदा ॥ २ ॥

पूर्ववच्च गृहं दृष्ट्वा शबरो विस्मितोऽभवत् ॥
उवाचेदं किमाश्चर्यं पूर्ववद्दृश्यते गृहम् ॥ ३ ॥

शबरः स्त्रियमाहूय पप्रच्छ कथयाङ्गने ॥
कथं[1] दग्धाऽपि भूयस्त्वमागताऽसि सुमध्यमे ॥ ४ ॥

शबरी सा पतिं प्राह स्मरामीदं यथार्थतः ॥
गृहं यदाऽग्निना दग्धं तदाऽहं निद्रिताऽभवम् ॥ ५ ॥

महाशीतार्दिता गाढं सदने निद्रिताऽभवम् ॥
भवदाह्वानमाकर्ण्य विनिद्राऽभवमद्य तु ॥ ६ ॥

मादाय गृहं गता । पूर्ववत्तां गृहं च दृष्ट्वा विस्मितः शबरस्तामाहूयाऽह । सुमध्यमे, दग्धापि त्वं पुनः कथमागताऽसि । साऽऽह । गृहदाहकालेऽहं शीतार्ता गाढनिद्रिताऽभवं आह्वानं श्रुत्वोत्थिताऽस्मि । अहो ! ईश-

---

१ मया इति क्वचित्पुस्तके पाठः.

अहो देवस्य लीलेयं प्रसन्नोऽभूत्स शूलधृक् ॥
इत्युक्ते तत्क्षणं शम्भुः स्वरूपेण स्थितोऽभवत् ॥ ७ ॥

दधतुस्तत्पदौ प्रीत्या लोलदङ्गौ च दम्पती ॥
शूलपाणिः प्रसन्नोऽभूत्तौ प्राह वृणुतं वरम् ॥ ८ ॥

स्वयमेव वरं ताभ्यां ददौ सौख्यमतीव हि ॥
इहामुत्र च कोटयब्दं स्वर्गवास इतीश्वरः ॥ ९ ॥

एवं मुनिभ्यः सूतेन विस्तरेण कथोदिता ॥
गुरूक्तौ यस्य विश्वासः स फलं लभते द्रुतम् ॥११०॥

एवमुक्त्वा गुरुः शिष्यान्भूयोऽप्याह स च द्विजः ॥
विश्वस्य मनसा भक्त्या शुष्ककाष्ठं भजत्यहो ॥ ११ ॥

यस्य यादृग्भवेद्भावस्तस्य सिद्धिस्तु तादृशी ॥
एवमुक्त्वा कृपासिन्धुः श्रीगुरुः सङ्गमं ययौ ॥ १२ ॥

अनुष्ठायाह्निकं कर्म द्रष्टुं तं चापि कुष्ठिनम् ॥
आगत्य तादृशं दृष्ट्वा प्रसन्नोऽभूत्तदा प्रभुः ॥ १३ ॥

लीलेयं। शिवः प्रसन्नोऽभूदिति शबरेणोक्ते शिवः स्वरूपेण प्रादुरास। तौ तत्पदे दधतुः ॥ १००-१०८ ॥ इहाखंडसुखं परत्र च कोटिवर्षं स्वर्वास इति वरं दत्त्वा शिवोऽन्तरधादिति सूतेनोक्तं। यस्य विश्वासस्तस्य द्रुतं फलमित्यतो द्विजो भक्त्या साधु करोति। यादृग्भावस्तादृक्सिद्धिरित्युक्त्वा गुरुः सङ्गमं गत्वाऽनुष्ठाय कुष्ठिनमुपेत्य तादृशं दृष्ट्वा प्रसन्नः

करेणादाय भगवाञ्जलपूर्णात्कमण्डलोः ॥
जलं तेन च तत्काष्ठमभ्युक्ष्य स ददर्श हि ॥ १४ ॥

तत्क्षणादेव तत्काष्ठे पल्लवा बहवोऽभवन् ॥
उदुंबरद्रुमः साक्षात्समस्तैरपि वीक्षितः ॥ १५ ॥

यथा चिन्तामणिस्पर्शादयो याति सुवर्णताम् ॥
तथा गुरुसुधादृष्ट्या काष्ठस्योदुंबरोऽभवत् ॥ १६ ॥

पूर्वं यच्छुष्ककाष्ठं तु तदेवोदुंबरोऽभवत् ॥
विकुष्ठोऽपि सुवर्णाङ्गो द्विजोऽभूत्तत्क्षणं सुधीः ॥ १७ ॥

ततः प्रीतो द्विजवरः साष्टाङ्गं प्रणिपत्य च ॥
तुष्टाव श्रीगुरुं प्रेम्णा तदा हर्षाश्रुसम्प्लुतः ॥ १८ ॥

कोटयर्कभं कोटिसुचन्द्रशान्तं
विश्वाश्रयं देवगणार्चितांघ्रिम् ॥
भक्तप्रियं त्वात्रिसुतं वरेण्यं
वन्दे नृसिंहेश्वर पाहि मां त्वम् ॥ १९ ॥

कमण्डलोर्जलमादाय काष्टं प्रोक्ष्य ददर्श। तत्क्षणं पल्लवा उद्भूताः। यच्छुष्कं काष्टं स एवोदुंबरोऽभूत् ॥ ९-१७ ॥ विप्रोऽपि सुवर्णांगो भूत्वा नत्वा प्रेम्णा हर्षाश्रुक्लिन्नः श्रीगुरुमस्तौत्। हे कोटिचंद्राभ, विश्वाश्रय,

मायातमोर्कं विगुणं गुणाढ्यं
श्रीवल्लभं स्वीकृतभिक्षुवेषम् ॥
सद्भक्तसेव्यं वरदं वरिष्ठं
वन्दे नृसिंहेश्वर पाहि मां त्वम् ॥ १२० ॥

कामादिषण्मत्तगजाङ्कुशं त्वा-
मानन्दकन्दं परतत्त्वरूपम् ॥
सद्धर्मगुप्त्यै विधृतावतारं
वन्दे नृसिंहेश्वर पाहि मां त्वम् ॥ २१ ॥

सूर्येन्दुगुं सज्जनकामधेनुं
मृषोद्यपञ्चात्मकभूतमस्मात् ॥
उदेति यस्मिन्नमतेऽस्तमेति
वन्दे नृसिंहेश्वर पाहि मां त्वम् ॥ २२ ॥

रक्ताब्जपत्रायतकान्तनेत्रं
सद्दण्डकुण्डीपरिहापिताघम् ॥
श्रितास्मितज्योत्स्नमुखेन्दुशोभं
वन्दे नृसिंहेश्वर पाहि मां त्वम् ॥ २३ ॥

देवपूज्य, त्वां वन्दे। नृसिंहसरस्वतीश, मां पाहि। हे मायातमोर्क, गुणात्मन्यतिरूप, श्रीश, भक्तसेव्य, वरद, वन्दे। नृसिंहसरस्वतीश, मां पाहि। हे कामादिहन्तरानन्दकन्द, भक्तोद्धारार्थं गृहीतावतार, वन्दे। नृसिंहसरस्वतीश, मां पाहि। हे चन्द्रार्कनेत्र, सत्कामधेनो, जगद्बीज, त्वां वन्दे। नृसिंहसरस्वतीश, मां पाहि। हे रक्ताब्जपत्रनेत्र, दण्डकमण्डलुधर, प्रसन्नमुख, त्वां वन्दे।

नित्यं त्रयीमृग्यपदाब्जधूलिं
निनादसद्बिन्दुकलास्वरूपम् ॥
त्रितापतप्ताश्रितकल्पवृक्षं
वन्दे नृसिंहेश्वर पाहि मां त्वम् ॥ २४ ॥

दैन्याधिभीकष्टदवाग्निमीड्यं योगाष्टकज्ञानसमर्पणोत्कम् ।
कृष्णानदीपञ्चसरिद्युतिस्थं वन्दे० ॥ २५ ॥

अनादिमध्यान्तमनन्तशक्तिमतर्क्यभावं परमात्मसंज्ञम् ॥
व्यतीतवाग्दृक्पथमद्वितीयं वन्दे० ॥ २६ ॥

यो नृसिंहसरस्वत्या अष्टकं पठतीह सः ॥
दीर्घायुः संसृतिं तीर्त्वाऽभीष्टं लब्ध्वाऽमृतं व्रजेत् ।२७।

इति स्तुत्वा नरहरिः श्रीगुरुं पुनरब्रवीत् ॥
भगवन्नृहरे देव स्वामिन्मयि कृपा कृता ॥ २८ ॥

इत्युक्त्वा नृहरिर्विप्रो भूयोऽपि श्रीगुरुं मुदा ॥
कृपया परयाऽऽश्लिष्टो हृष्टः प्रणिपपात ह ॥ २९ ॥

नृसिंहसरस्वतीश, मां पाहि । हे वेदमृग्य, नादबिंदुकलातीत, त्रितापहारिन्, त्वां वन्दे । नृसिंहसरस्वतीश, मां पाहि ॥ १८-२४ ॥ हे दैन्याधिभय-कष्टाङ्गहराष्टयोगज्ञ, कृष्णापञ्चनदीसङ्गमस्थ, त्वां वन्दे । नृसिंहसरस्वतीश, मां पाहि । हे अनादिमध्यान्तानन्तशक्तेऽतर्क्य परमात्मन्मनोवागगोचर, त्वां वन्दे । नृसिंहसरस्वतीश, मां पाहि ॥ २५-२६ ॥ एतत्स्तोत्रपाठाद्दीर्घायुर्मोक्षश्च इति स्तुत्वा स आह । भगवन्कृपा कृतेति ननाम । भगवांस्तद्भक्त्युद्रेकं

गुरुनाथोऽपि भगवान्वीक्ष्य विप्रं तथाविधम् ॥
भक्त्युद्रेकं वितन्वानं निदधावभयं करम् ॥ १३० ॥
स्वयं कृपातिरेकेण पादयोः पतितं चिरम् ॥
ज्ञानराशे त्वमुत्तिष्ठेत्युत्थाप्याश्वासयत्प्रभुः ॥ ३१ ॥
काष्ठं पल्लवितं दृष्ट्वा निर्मलं चापि तं द्विजम् ॥
निरीक्ष्य लोकाः सर्वेऽपि विस्मयं परमं ययुः ॥ ३२ ॥
गुरुनाथं नमस्कृत्य लोकाः सर्वेऽपि चादरात् ॥
संयुक्ता भक्तिभावेन तुष्टुवुर्विविधैः स्तवैः ॥ ३३ ॥
ततस्तं कुष्ठरहितं समादाय द्विजं गुरुः ॥
ब्राह्मणैः सहितो ग्रामे प्रययौ निर्गुणं मठम् ॥ ३४ ॥
एतं वृत्तान्तमाकर्ण्य ग्रामस्था ब्राह्मणादयः ॥
नीराजनान्युपादाय सम्मुखं प्रापुरादरात् ॥ ३५ ॥
ततस्तैर्ब्राह्मणैः शिष्यैः सर्वैः सह स सद्गुरुः ॥
प्रविवेश मठं हृष्टः पूजितो भक्तवत्सलः ॥ ३६ ॥
तस्मिन्नेव दिने विप्रो नृहरिः प्रीतमानसः ॥
ब्राह्मणान्भोजयामास सस्त्रीकानमितान्मुदा ॥ ३७ ॥

दृष्ट्वाऽभयकरं ददौ। चिरं पदयोः पतितं तं ज्ञानराशे, उत्तिष्ठेत्युत्थाप्याश्वासयत्। पल्लवितं काष्ठं विमलं च विप्रं दृष्ट्वा विस्मिताः सर्वे श्रीगुरुं नत्वा भक्त्याऽस्तुवन्। ततस्तं द्विजमादाय शिष्यैः सह श्रीगुरुर्मठं प्राप ॥ १२७-१३४ ॥ वृत्तं श्रुत्वा ग्रामस्थाः श्रीगुरुं नीराजयामासुः। ततो भक्तवत्सलः सर्वैः सह मठान्तः प्रविवेश ॥ ३५-३६ ॥ तद्दिने शुद्धो

ततो नरहरिं विप्रमुपाहूय जगद्गुरुः ॥
भक्त्युद्रेकेण सन्तोषादिदं वचनमब्रवीत् ॥ ३८ ॥

त्वं मद्भक्तोऽसि ते दत्तमैहिकामुष्मिकं सुखम् ॥
कन्यापुत्रगवाश्वाढ्या सन्ततिर्विस्तृता भवेत् ॥ ३९ ॥

इत्युक्त्वा योगमादिश्य स्फुटं साङ्गमुवाच तम् ॥
योगेश्वर इतीहाद्य नाम ते दत्तमुत्तमम् ॥ १४० ॥

एषामपि च सर्वेषां शिष्याणां मध्य एव हि ॥
श्रेष्ठस्त्वमेव मेऽतीव प्रियो भक्तोऽसि मे मतः ॥ ४१ ॥

सर्वे वेदाश्च शास्त्राणि सम्पूर्णानि च ते कुले ॥
अध्येतारो भविष्यन्ति मत्प्रसादान्न संशयः ॥ ४२ ॥

इतः परं मत्प्रसादाच्चिन्तां मा कुरु कामपि ॥
कथयाम्यद्य ते यत्तच्छीघ्रं कुरु मदाज्ञया ॥ ४३ ॥

नृहरिः सस्त्रीकान्ब्राह्मणान्भोजयामास ॥ १३७ ॥ श्रीगुरुस्तं प्रीत्याऽऽह । त्वं मद्भक्तोऽसि । स्त्रीपुत्रादिसुखं गवाश्वादिसंपत्तिस्ते दत्ता । ते वंशवृद्धिर्भवेत् । सर्वेषां मध्ये त्वं मे प्रियः भक्तोऽसीति योगमादिश्याह । योगीश इति ते नाम प्रतिष्ठापितं । मत्प्रसादात्ते कुले सर्वे वेदशास्त्राध्येतारो भविष्यंति । न संशयश्चिंतां त्यक्त्वा मदाज्ञया ॥ १३८-१४३ ॥ कलत्रपुत्रा-

त्वं कुष्ठरोगात्पूतोऽसि ततः शीघ्रं गृहं व्रज ॥
पुत्रं कलत्रं चादाय शीघ्रमागच्छ सुव्रत ॥ ४४ ॥

कलत्रेण च पुत्रैश्च ग्रामेऽस्मिन्मम सन्निधौ ॥
मुदा नरहरे तिष्ठ तव श्रेयो भविष्यति ॥ ४५ ॥

त्रयः पुत्रा भविष्यन्ति योगिसंज्ञा मदर्चकाः ॥
तव वंशे भविष्यन्ति ये ते भक्ता ममैव हि ॥ ४६ ॥

इत्युक्त्वा श्रीगुरुर्हृष्टः प्रीत्या तस्मा उपादिशत् ॥
विद्यासरस्वतीसंज्ञं मन्त्रराजं यथाविधि ॥ ४७ ॥

यथा श्रीगुरुणा प्रोक्तं तथा तस्याभवत्किल ॥
एवं श्रीगुरुनाथस्य प्रसादो नामधारक ॥ ४८ ॥

अतो हि गङ्गाधरसूरिपुत्रो
मित्रोपमोऽज्ञानतमोहृदत्र ॥
विस्तारयत्येव गुरोश्चरित्रं
मित्रं तितीर्षोर्भवतः[1] पवित्रम् ॥ १४९ ॥

नानीयात्र तिष्ठ । ते श्रेयो भविष्यति ॥१४४-१४५॥ त्रयः पुत्रा मत्पूजका योगिसंज्ञिता भवितारः त्वत्कुलजा मद्भक्ता इत्युक्त्वा विधिवद्विद्यासरस्वती-मंत्रं ददौ ॥ १४६-१४७॥ हे नामधारक ! यथा श्रीगुरुणोक्तं तथैव जातमेवं तत्प्रसादः ॥ १४८ ॥ अतो हि गङ्गाधर० ॥ इति चूर्णिकायां चत्वारिंशः ॥

---

१ संसारात्.

(इति)श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्यगङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञितमहाराष्ट्रभाषान्वितगुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वतीयतिविरचितायां श्रीगुरुसंहितायां भक्तिकाण्डे चत्वारिंशः (अध्यायः) ॥

॥ आदितः श्लोकाः ॥ ५२०५ ॥

॥ इति चत्वारिंशोऽध्यायः ॥ ४० ॥



## ।। अथ एकचत्वारिंशोऽध्यायः ।। ४१ ।।

।। श्रीदत्तात्रेयाय नमः ।।

नामधारकशिष्योऽग्र्यः स्थित्वा सम्मुखमादरात् ।।
समानीय करौ सिद्धं साष्टाङ्गं प्रणनाम सः ।। १ ।।

जय सिद्ध महायोगिंस्त्वं भवार्णवतारकः ।।
नानाधर्मान्वितन्तन्मे चरित्रं कथितं गुरोः ।। २ ।।

तेन धन्योऽभवं सद्यो विद्योतितमभून्महः ।।
प्रकाशिताऽद्य भवता [1]रसकल्पा गुरुस्मृतिः ।। ३ ।।

अद्यैकं परिपृच्छामि तन्मे कथय सर्ववित् ।।
पूर्वं मत्पूर्वजेनेह सेवितः श्रीगुरुः कथम् ।। ४ ।।

।। श्रीगणेशाय नमः ।।

।। सारसंग्रहश्लोकोऽयम् ।।

अवददिह परीक्ष्य सायंदेवं कुयुगमिते भगवान्गुरुरुक्तलब्ध्यै ।।
विधिजमुपगतः सुपुष्पिताग्रागमवन आर्य उवाच काशियात्राम् ।।

नामधारकः साष्टाङ्गं नत्वा सिद्धमाह । हे योगिन्भवतारक जय नाना-
धर्माढ्यं गुरुचरित्रमुक्तं तेन धन्योऽभवं ज्ञानप्रकाशोऽभूत् । मत्पूर्वजेन गुरुः



१ आनंदब्रह्मकल्पा.

त्वं सिद्धोऽसि महाज्ञानी स्थितिस्ते गुरुसन्निधौ ॥
श्रीगुरोः स कथं शिष्यो बभूव श्रावयाद्य तत् ॥ ५ ॥

इति शिष्यवचः श्रुत्वा सिद्धः प्राह सविस्तरम् ॥
नामधारक शिष्येदं सावधानतया शृणु ॥ ६ ॥

पूर्वं कथा प्रकथिता श्रीगुरुं गौतमीतटे ॥
यः सम्प्राप्तः स एवाऽर्यः पूर्वजस्तव सुव्रत ॥ ७ ॥

सायन्देव इति ख्यातो य आनर्च जगद्गुरुम् ॥
प्रीतिस्तस्मिन्नतीवासीदस्माकं श्रीगुरोर्द्विज ॥ ८ ॥

ततो दक्षिणभागात्तु गन्धर्वनगरं गुरुः ॥
सम्प्राप्तो विमलं व्याप्तं यशो यस्य दिशो दश ॥ ९ ॥

प्रसृतं यश आकर्ण्य श्रीगुरोर्दर्शनाय हि ॥
सकामा अपि चायान्ति पूर्णकामा भवन्ति ते ॥१०॥

एवं सर्वश्रुतख्यातिः श्रीनृसिंहसरस्वती ॥
गन्धर्वनगरेऽस्तीति ख्यातोऽभूद्भक्तवत्सलः ॥ ११ ॥

कथं सेवितः त्वं ज्ञानी समीपस्थगुरुशिष्योऽसि। सिद्ध आह। सावधानेन शृणु। पूर्वं गौतमीतटे सायंदेवाख्यस्ते पूर्वजः श्रीगुरुमानर्च। तस्मिन्श्रीगुरोरतीव प्रीतिः ॥ १-९ ॥ स गन्धर्वस्थगुरोर्विस्तृतं यशो लोकमुखात् श्रुत्वा हृष्टो भक्त्या गन्धर्वपुरमुपागतः। दूरात्पुरं दृष्ट्वा पदे पदे शश्वन्नम-

यः पूर्वजो हि युष्माकं सायन्देव इति श्रुतः ॥
सोऽश्रौषीत्सद्गुरोरेवं माहात्म्यं लोकविश्रुतम् ॥ १२ ॥

श्रुत्वैवाऽनन्दयुक्तोऽभूद्धर्षनिर्भरमानसः ॥
भक्तियोगेन संयुक्तो गन्धर्वपुरमागतः ॥ १३ ॥

दूराद्गन्धर्वनगरं दृष्ट्वा स च पदे पदे ॥
साष्टाङ्गं प्रणिपत्यैव सायन्देवः समाययौ ॥ १४ ॥

भूयो भूयः प्रणम्यैव प्रणम्यैवाययौ मठम् ॥
ददर्श श्रीगुरुं साक्षात्स ब्रह्मैव परात्परम् ॥ १५ ॥

साष्टाङ्गं प्रणिपत्यासौ निपपात च पादयोः ॥
स्वकेशैः क्षालयामास भक्त्या तत्पादधूलयः ॥ १६ ॥

हस्तौ सन्धाय तं ध्यात्वा तुष्टावैकाग्रमानसः ॥
एकस्त्वं श्रीगुरो स्वामिन्त्रिमूर्तिर्भगवान्मुनिः ॥ १७ ॥

मम जन्माभवद्धन्यं कृतार्थाः पितरो मम ॥
कोटिजन्मार्जितं पापं नष्टं त्वत्पदसङ्ग्रहात् ॥ १८ ॥

न्मठमेत्य साक्षाद्ब्रह्मेव गुरुं दृष्ट्वा साष्टाङ्गं प्रणम्य पादयोः पतित्वा स्वकेशैर्धूलिं प्रक्षाल्य नत्वैकाग्र्येण तुष्टाव। हे त्रिमूर्ते स्वामिन्त्वं भगवान्मुनिः। मम जन्म धन्यं। पितरः कृतार्थाः। सर्वं पापं नष्टं ॥ १०-१८ ॥ परमा-

परमात्मन्जगज्ज्योतिः श्रीनृसिंहसरस्वति ॥
स्वामिन्जय जय त्राहि त्राहि विश्वगते गुरो ॥ १९ ॥

न शक्तिर्मे भवत्पादमहिम्नो वर्णने विभो ॥
परमात्मा त्वमेवासि भो स्वामिन्भक्तवत्सल ॥ २० ॥

चरणं ते महद्यत्र सन्ति तीर्थानि कोटिशः ॥
वक्ति श्रुतिर्हि चरणं पवित्रं विततं त्विति ॥ २१ ॥

त्रिमूर्तेरवतारस्त्वमिति भाति मम प्रभो ॥
साक्षाद्भाति स्वरूपं ते त्रिमूर्त्यात्मकमेव मे ॥ २२ ॥

त्वमेव ब्रह्मदेवोऽसि सुधापूर्णकमण्डलुम् ॥
करे धत्से यदमृतस्पर्शाज्जीवति वै मृतः ॥ २३ ॥

त्वं हि दण्डधरो विष्णुः शरणागतरक्षणः ॥
निवार्य दैन्यदुरिते पासि स्वान्भक्तवत्सल ॥ २४ ॥

शिवस्त्वं भस्मरुद्राक्षव्याघ्रचर्मधरस्त्रिदृक् ॥
दहसि क्रूरदृष्ट्याऽघं जीवयस्यमृतेक्षणात् ॥ २५ ॥

त्मन्नृसिंहसरस्वतिस्वामिन्जय विश्वगते गुरो त्राहि। विभो ते महिमाख्याने ऽशक्तोऽस्मि। त्वं परमात्मा भक्तवत्सलः। "चरणं पवित्रम्" इति श्रुत्या ते पदेऽनेकतीर्थानि। प्रभो त्वं त्रिमूर्त्यवतारः। त्वं सुधापर्णकमण्डलुधरो ब्रह्माऽसि। यज्जलस्पर्शान्मृतोऽपि जीवितः ईदृक्कमण्डलुं धत्से। त्वं दण्डधरो विष्णुः शरणागतत्राता। दैन्यपापे निवार्य भक्तान्पासि शिवस्त्वं भस्मरुद्राक्षव्याघ्राम्बरधृक्क्रूरदृष्ट्याऽघं हरसि। चतुर्विधपुमर्थदस्त्वं

चतुर्विधपुमर्थांस्त्वं रासि भक्तजनाय हि ॥
जगद्गुरो नृसिंह त्वं रुद्रोऽसि भवरोगहृत् ॥ २६ ॥
पीताम्बरोऽसि विष्णुस्त्वं क्षमाशान्त्यादिभूषितः ॥
त्वत्पदे सर्वतीर्थानि त्वं प्रभुर्भक्तकामधुक् ॥ २७ ॥
शुष्ककाष्ठं पल्लवितं दुग्धा वन्ध्या महिष्यपि ॥
पुत्रौ दत्तौ च वन्ध्याया अन्नपूर्णा तवान्तिके ॥ २८ ॥
त्वमेव श्रीगुरो विष्णुस्वरूपज्ञापनाय हि ॥
त्रिविक्रमाय मुनये विश्वरूपं प्रदर्शितम् ॥ २९ ॥
अन्त्यजास्येन वेदाश्च वाचिता महिमा तव ॥
अपारोऽतस्त्रिमूर्तिस्त्वमवतीर्णोऽसि भक्तपः ॥ ३० ॥
इति स्तुत्वा गुरुं भूयो भूयो नत्वा सगद्गदम् ॥
रोमाञ्चिततनुर्जातः सायन्देवोऽतिभक्तितः ॥ ३१ ॥
आनन्दजाश्रुधाराभिः स्तिमिताङ्गो[1]ऽतिहर्षितः ॥
भक्त्या नवरसापूर्णां स्तुतिं चक्रे स सद्गुरोः ॥ ३२ ॥

रुद्रो भवरोगहृत् पीताम्बरस्त्वं विष्णुः क्षमाशान्त्यादिभूषितस्त्वत्पदे सर्वतीर्थानि त्वं प्रभुर्भक्तकामधुक् ॥ १९-२७ ॥ शुष्ककाष्ठं पल्लवितं। वन्ध्या महिषी दुग्धा। वन्ध्यायै पुत्रौ दत्तौ। तेऽन्तिकेऽन्नपूर्णा ॥ २८ ॥ विष्णुरूपोहामिति ज्ञापनार्थं त्रिविक्रमाय विश्वरूपं दर्शितं। हीनमुखेन वेदा वाचिताः। तेऽपारमहिमा। त्वं त्रिमूर्तिरवतीर्णोऽसि। इति सगद्गदं सरोमाञ्चं स्तुत्वा नत्वाऽऽनन्दाश्रुक्लिन्नः नवरसाढ्यां स्तुतिं चक्रे। तेन

१ आर्द्रदेहः.

सन्तुष्टः श्रीगुरुर्विप्रं तमाश्वास्य दयानिधिः ॥
त्वं मेऽसि परमो भक्त इति तन्मूर्ध्न्यधात्करम् ॥ ३३ ॥

श्रीगुरुः प्राह तुष्टोऽस्मि स्तोत्रेणानेन तेऽधुना ॥
वरं दास्यामि ते वंशो भविष्यति मदर्चकः ॥ ३४ ॥

इति दत्वा वरं हृष्टः पुनश्च श्रीगुरुः करम् ॥
दत्वा तन्मूर्ध्नि तं प्राह त्वं मे भक्तोऽस्यतिप्रियः ॥३५॥

गच्छाद्य सङ्गमे स्नात्वा सम्पूज्याश्वत्थमादरात् ॥
मठेऽस्मिन्भोक्तुमागच्छ सायन्देवाविलम्बितम् ॥ ३६ ॥

इत्यादिष्टः स गुरुणा सायन्देवो द्विजस्ततः ॥
गत्वा सङ्गममाप्लुत्याश्वत्थमभ्यर्च्य चाऽगतः ॥ ३७ ॥

उपचारैः षोडशभिर्भक्त्याऽभ्यर्च्य जगद्गुरुम् ॥
पक्वान्नैः षड्रसान्नैश्च भोजयामास सद्गुरुम् ॥ ३८ ॥

समस्तेभ्योऽपि शिष्येभ्यः सत्कार्यापि स्वसन्निधौ ॥
उपवेश्याथ बुभुजे श्रीगुरुर्भक्तवत्सलः ॥ ३९ ॥

तुष्टः श्रीगुरुस्तमाश्वास्य तन्मूर्ध्नि करं दत्वाऽऽह। त्वं मे परमभक्तस्ते वंशो मदर्चको भविष्यति। सङ्गमेऽद्य स्नात्वाऽश्वत्थं सम्पूज्य मठे भोक्तुं शीघ्रमेहि ॥ २९-३६ ॥ इत्युक्तः स तथा कृत्वागत्य गुरुं सम्पूज्य षड्रसान्नपक्वान्नैः श्रीगुरुं भोजयामास। भक्तवत्सलस्तं सत्कृत्य स्वाग्रे भोजयामास। ततो हृष्टैः शिष्यैः सह मठे श्रीगुरुरुपविश्य सायन्देवमाहू-

सर्वैः शिष्यैः सह गुरुर्भुक्त्वा सन्तोषसंयुतः ॥
उपाविशन्मठे भक्तैः सहानन्दितमानसैः ॥ ४० ॥

सायन्देवमुपाहूय प्रीत्या श्रीगुरुरब्रवीत् ॥
कस्मिन्देशे स्थितिस्तेऽस्ति क्व ते पुत्रकलत्रकम् ॥४१॥

वर्तमाना स्थितिः कीदृक्सर्वेषां क्षेममस्ति किम् ॥
कृपया परयैवं तं पप्रच्छ भगवान्प्रभुः ॥ ४२ ॥

एवं श्रीगुरुणा पृष्टः सायन्देवः सविस्तरम् ॥
प्राहास्ति पुत्रीपुत्रादेः सर्वेषां क्षेममेव नः ॥ ४३ ॥

सर्वज्ञोत्तरकाश्चीति ख्याता या तत्र नः स्थितिः ॥
कृपया ते समस्तानां क्षेममस्ति दयानिधे ॥ ४४ ॥

पुत्रा मे बन्धवश्चापि गृहे व्यवहृतिं प्रभो ॥
कुर्वन्ति मे मनस्येतत्सेवा कार्या भवत्पदोः ॥ ४५ ॥

स्थित्वाऽत्र भगवन्भक्त्या निषेव्यौ चरणौ तव ॥
इति मे निश्चितं दास्यं तव देवाऽद्य देहि मे ॥ ४६ ॥

याह । क्व ते कथं स्थितिः । कलत्रादिकं क्व । सर्वेषां क्षेममस्ति किमिति कृपया पृष्टः सायन्देव आह । हे सर्वज्ञ सर्वेषां क्षेममस्ति । भ्रातरः पुत्राश्च गृहस्थितिं पश्यन्ति । भवन्निकटे स्थित्वा भक्त्या ते चरणौ सेव्याविति मे निश्चयो मे दास्यं देहि ॥ ३७-४६ ॥ श्रीगुरुर्हसन्नाह । मे सेवा

इति तस्य वचः श्रुत्वा प्रहसन्नब्रवीद्गुरुः ॥
मम सेवाऽस्ति कठिणा विभोर्नैकत्र मे स्थितिः ॥४७॥

वसामि चैकदाऽरण्ये गृहे वा यस्य कस्यचित् ॥
मत्समागमतः कष्टमसह्यं ते भविष्यति ॥ ४८ ॥

इति श्रीगुरुणोक्तोऽपि प्रणतः सोऽब्रवीत्पुनः ॥
अङ्गीकारं कुरु स्वामिन्ममास्मि शरणं गतः ॥ ४९ ॥

यः करोति गुरोः सेवां स परम्पारमेष्यति ॥
घोरदुःखं कुतस्तस्य स एव सुखभाक्सदा ॥ ५० ॥

चतुर्विधपुमर्थांश्च गुरुरेव प्रदास्यति ॥
यममार्गः कुतस्तस्य गुरुभक्तिर्वरा ततः ॥ ५१ ॥

एवं स प्रार्थयामास सायन्देवोऽतिभक्तितः ॥
विनयावनतं दृष्ट्वा तुतोष श्रीगुरुस्तदा ॥ ५२ ॥

श्रीगुरुः प्राह ते चित्ते यथा भक्तिस्तथा कुरु ॥
अङ्गीकुरुष्व मे दास्यं भक्तिश्चेत्सुदृढा मयि ॥ ५३ ॥

कठिणा। मे नैकत्र स्थितिर्ग्रामेऽरण्ये वा वसामि। मत्सहवासात्कष्टं भवेत्। सायन्देव आह। शरणागतं मामङ्गीकुरु। गुरुसेवकः परम्पारमेति। कुतोऽस्य दुःखं। कुतो यमभीः गुरुश्चतुर्विधपुमर्थदोऽतस्तद्भक्तिः कार्येति प्रार्थितस्तुष्टो गुरुराह। मयि सुदृढा भक्तिश्चेदङ्गीकुरु। स तथेति मनः

तथेति स मनःस्थैर्यं कृत्वा भेजे सदा गुरुम् ॥
मासास्त्रयो व्यतीताश्च भजतो नामधारक ॥ ५४ ॥

एवं सत्येकदिवसे शिष्यान्सर्वान्निवार्य तम् ॥
सायन्देवमुपादाय श्रीगुरुः सङ्गमं ययौ ॥ ५५ ॥

श्रीगुरुस्तस्य भक्तस्य मनोनिष्ठां परीक्षितुम् ॥
उद्युक्तस्तत्र पूर्वोऽपि भाविको गुरुमन्वगात् ॥ ५६ ॥

तेन भक्तेन सहितः सायमागत्य सङ्गमम् ॥
उपविश्याश्वत्थमूले सुखवार्तां चकार ह ॥ ५७ ॥

अस्तं गतस्ततः सूर्यः श्रीगुरुर्भक्तवत्सलः ॥
भक्तेर्दार्ढ्यं परिज्ञातुमुपायं व्यकरोदिमम् ॥ ५८ ॥

ववौ वातः खरो[1]ऽकस्माद्वृक्षाश्च पतितास्ततः ॥
मुसलोपमधाराभिः पर्जन्योऽपि ववर्ष ह ॥ ५९ ॥

सेवमानो गुरुः सायं[2] सायन्देवोऽपि वाससा ॥
कृत्वाऽऽश्रयं चाश्रयदं सिषेवे श्रीगुरुं परम् ॥ ६० ॥

स्थिरीकृत्य भेजे। एवं मासत्रयेऽतीते सर्वशिष्यान्निवार्य सायन्देवं गृहीत्वा गुरुः सङ्गमं गत्वा ॥ ४७-५५ ॥ तन्निष्ठां परीक्षितुं सुखवार्तां कुर्वन्नश्वत्थमूले तिष्ठन्सायं वायुमुत्थापयामास। तेन वृक्षाः पतिताः। मुसलोपमधाराभिर्मेघो ववर्ष। स च वृष्टिं वातं च स्वयं सोढ्वा सम्मुखस्थो वस्त्रेणा-

---

१ तीक्ष्णः २ सायंकाले.

पर्जन्यं शीतवातं च सहित्वा स्वयमेव सः ॥
श्रीगुरोः सम्मुखे स्थित्वा सेवयामास वाससा ॥ ६१ ॥

एवं यामद्वयं तत्र महान्पर्जन्य आगतः ॥
पुनश्चातितरां शीतो झंझावातोऽभितो ववौ ॥ ६२ ॥

सायन्देवं गुरुः प्राह शीतमत्यन्तमुत्थितम् ॥
गत्वा ग्रामं मठादग्निं सेकार्थं द्रुतमानय ॥ ६३ ॥

इत्युक्तो निर्ययौ शिष्यस्तत्क्षणं भावितान्तरः ॥
वैश्वानरं समानेतुं शिरस्याधाय तद्वचः ॥ ६४ ॥

आज्ञया निर्गतं शिष्यमवलोक्य हसन्गुरुः ॥
पार्श्वयोरुभयोर्नैव निरीक्ष्य व्रज सत्वरम् ॥ ६५ ॥

तथेत्याज्ञां स सत्कृत्य सत्वरं स प्रचक्रमे ॥
तमसा नेक्ष्यते मार्गः सोऽभिज्ञानेन निर्ययौ ॥ ६६ ॥

पतमानेऽपि पर्जन्ये नैव मार्गः[1] प्रदृश्यते ॥
अन्धकारे महाघोरे ज्ञात्वा ज्ञात्वाऽयनं ययौ ॥ ६७ ॥

च्छाद्य गुरुं सेवयामास । एवं द्वियामा वृष्टिः पतिता । ततः शीतो वातो ववौ । श्रीगुरुः सायन्देवमाह । ग्रामं गत्वा सेकार्थं शीघ्रं वह्निमानय । तथेति प्रस्थितं तं पुनराह । उभयोः पार्श्वयोर्न वीक्षस्वेति ॥ ६१-६५ ॥ तथेति सोऽन्धकारे पर्जन्ये पतमानेऽपि गुरुं ध्यात्वा विद्युत्तेजसा वीक्ष्य वीक्ष्य च

१ मार्ग.

मनसा श्रीगुरुं ध्यायन्दृष्ट्वा दृष्ट्वा वनं द्विजः ॥
क्षणप्रभातेजसैव तिष्ठन्तिष्ठन्ययौ द्विजः ॥ ६८ ॥

एवं गन्धर्वनगरपुरद्वारं समेत्य सः ॥
आहूयोच्चैर्द्वारपालान्तेभ्यः सर्वं न्यवेदयत् ॥ ६९ ॥

ततस्ते ज्ञातवृत्तान्ता भाण्डे संस्थाप्य चानलम् ॥
ददुस्तं द्विज आदाय परावृत्यागमत्पुनः ॥ ७० ॥

अदृष्ट्वा तमसा मार्गं तिष्ठन्तिष्ठन्स पूर्ववत् ॥
विद्युतस्तेजसा मार्गं दृष्ट्वा ध्यायन्गुरुं ययौ ॥ ७१ ॥

मनसा चिन्तयामास न प्रेक्षोभयपार्श्वयोः ॥
इति यद्गुरुणा प्रोक्तं किं तत्कारणमीक्ष्यताम् ॥ ७२ ॥

विचार्यैवं दक्षभागे ददर्शाहिं महाफणम् ॥
भीतो धावन्तथा वामे महानागं द्विजोऽद्भुतम् ॥ ७३ ॥

उभौ पञ्चफणौ नागौ धावन्तमनुधावतः ॥
भीतभीतो द्रुतं विप्रः पलायनपरोऽभवत् ॥ ७४ ॥

गन्धर्वनगरद्वारमेत्य, द्वारपालेभ्यो वृत्तान्तं निवेद्य, तैर्दत्तं भाण्डस्थमग्निमादाय, गुरुं ध्यायन्तिष्ठन्तिष्ठन्विद्युत्तेजसा मार्गं पश्यन्निर्गतः। उभयपार्श्वयोर्न वीक्षेति कुत उक्तमिति विचार्य दक्षभागमपश्यत्तत्र महाफणं सर्पं दृष्ट्वा भिया मार्गं हित्वा गच्छन्वामभागे तथाऽहिं दृष्ट्वा भीतः। उभौ

मार्गं हित्वा वनं प्राप तावप्यनुगतावुभौ ॥
भीतभीतस्ततः सायंदेवो देवं स्मरन्ययौ ॥ ७५ ॥

धैर्यं धृत्वा स मनसा ध्यायञ्छ्रीसद्गुरोः पदे ॥
सङ्गमस्य समीपे तु सायन्देवः समागतः ॥ ७६ ॥

दूरतः श्रीगुरुं दृष्ट्वा दीपानपि सहस्रशः ॥
बहूनामपि विप्राणां शुश्रावोच्चैः श्रुतिध्वनिं ॥ ७७ ॥

गुरोः समीपमागत्य तत्रैकं दृष्टवान्गुरुम् ॥
अभ्रापायेऽपि पूर्णेन्दुं ददर्शापि गतं पुनः ॥ ७८ ॥

अग्निं प्रज्वालयामास श्रीगुरोः सन्निधौ द्विजः ॥
भीतभीतो ददर्शेशं सायन्देवो जगद्गुरुम् ॥ ७९ ॥

तावत्सर्पौ समागत्य नत्वा द्वावपि सद्गुरुम् ॥
यथागतं जग्मतुस्तौ भीतः प्रागेव स द्विजः ॥ ८० ॥

पप्रच्छ श्रीगुरुर्विप्रं कुतस्ते भयमीदृशम् ॥
तव संरक्षणार्थाय भुजंगौ प्रेरितौ मया ॥ ८१ ॥

॥ ६६-७५ ॥
पञ्चफणौ धावन्तमनुधावतः मार्गं मुक्त्वा शीघ्रं वनं ययौ । तत्रापि तौ प्राप्तौ दृष्ट्वा भीतो गुरुं ध्यायन्सङ्गमसमीपमेत्य दूराच्छ्रीगुरुं, सहस्रशो दीपानुच्चैर्वेदध्वनिं च श्रुत्वा समीपमेत्याभ्रमुक्तेन्दुमिवैकं श्रीगुरुं दृष्ट्वा चकितो भूत्वा अग्निं प्रज्वालयामास । तदा सर्पौ गुरुं नत्वा जग्मतुः । भीतं तं श्रीगुरुराह । ते रक्षार्थं सर्पौ प्रेरितौ । मा भीर्नः

मा भीः सेवनमस्माकं कठिनं हीदृशं द्विज ॥
मनसैव विचार्यादौ स्वीकार्यं मुनिसेवनम् ॥ ८२ ॥

गुरुभक्तिं सुकठिनां दृढधृत्या तु यः सुधीः ॥
स्वीकरोति कुतस्तस्य भयं कालात्कलेरपि ॥ ८३ ॥

सायंदेवस्तदा भूयो भक्तियुक्तो गुरोः पदे ॥
उपसंगृह्य संप्राह कृपां कुरु ममोपरि ॥ ८४ ॥

गुरुभक्तेः प्रकारं मे विस्तरात्कथय प्रभो ॥
मनसा सुस्थिरीभूय यतः स्थास्यामि तेंऽतिके ॥ ८५ ॥

श्रीगुरुः प्राह सुरसां कथां प्रकथयामि ते ॥
कालक्षेपोऽपि चाब्राह्ममुहूर्तान्मे भविष्यति ॥ ८६ ॥

पुरा कैलासशिखरे व्योमकेशो रहः स्थितः ॥
अर्धांगीकृतशीताद्रितनयो लोकमंगलः ॥ ८७ ॥

पप्रच्छ गिरिजा शम्भुमीश्वरं प्रणतार्तिहम् ॥
स्वामिन्विस्तरतो ब्रूहि गुरुभक्तिं दयस्व मे ॥ ८८ ॥

सेवेदृशी कठिना। यो विचार्य धृत्या स्वीकरोति तस्य कुतः कलिकालभयं सायन्देवः पदे धृत्वाऽऽह। कृपां कुरु। गुरुभक्तिप्रकारं विस्तराच्छंस। ततो मनः स्थिरीकृत्य तेऽग्रे स्थास्ये ॥ ७६-८९ ॥ श्रीगुरुराह। सुरसां कथां शृणु। आब्राह्ममुहूर्तं कालक्षेपोऽपि भविष्यति। पुरा कैलासेऽर्धाङ्गस्था पार्वती शिवमाह। दयस्व गुरुभक्तिं कथय। शिव आह।

शंकरो गिरिजां प्राह सर्वसिद्धिप्रदा च सा ॥
स्वीकार्या सैव भावेन यो गुरुः स शिवो मतः ॥८९॥

एतदर्थं पुरावृत्तमाख्यानं वच्मि विस्तरात् ॥
एकाग्रहृदया भूत्वा गिरिजे शृणु सादरम् ॥ ९० ॥

गुरुभक्तिस्तु सुलभा तत्कालफलदा मता ॥
विलम्बेनैव सिद्धिस्तु तपोनुष्ठानतो नृणाम् ॥ ९१ ॥

अनुष्ठानं व्रतादीनां दानं यज्ञश्च दुष्करः ॥
तत्सिद्धिर्दुर्लभा लोके यत्र विघ्ना अनुक्षणम् ॥ ९२ ॥

कुर्याद्यः सद्गुरोर्भक्तिं स शीघ्रं फलमाप्नुयात् ॥
यज्ञादीनां फलं चापि तदन्तर्गतमेव हि ॥ ९३ ॥

अनायासाच्च सुलभं गुरुभक्तेः फलं नृणाम् ॥
भक्त्या गुरुकुलावासं कृत्वा सेव्यो गुरुस्ततः ॥ ९४ ॥

उमे निदर्शनं त्वत्र विचित्रं कथयामि ते ॥
ब्रह्मवंशसमुद्भूतस्त्वष्टा लोकेऽतिविश्रुतः ॥ ९५ ॥

गुरुरीशस्तद्भक्तिः सर्वसिद्धिदा। तदर्थं कथां वच्मि। सादरं शृणु। तपोनुष्ठानादेर्विलंबात्फलं। सुलभगुरुभक्तेस्तु शीघ्रं फलम्। अनुष्ठानव्रतादि दुष्करं, तत्सिद्धिर्दुर्लभा, यत्रानुपदं विघ्नाः। यज्ञादिफलं गुरुभक्त्यन्तर्गतं भवेत्। यतोऽनायासात्सुलभं गुरुभक्तिफलं। ततो गुरुकुलवासं कृत्वा गुरुः सेव्यः। पुरा सुभगः कुशलो ब्राह्मस्त्वष्टा ॥ ८६-९५ ॥ जातव्रतबंधो,

रूपलावण्यसम्पन्नः कुशलः सर्वकर्मसु ॥
स जातो व्रतबन्धार्हस्तत्पिता संस्कृतीर्व्यधात् ॥ ९६ ॥

व्रतबंधं विधायैव स्थापितः स गुरोः कुले ॥
विद्याभ्यासं तदा कर्तुं सोऽपि प्रीत्या तथाऽवसत् ॥९७॥

सेवयामास भक्त्यैव गुरुं गुरुकुले वसन् ॥
ब्रह्मचारी कदाचित्तु विचित्रं तत्र चाभवत् ॥ ९८ ॥

एकस्मिन्दिवसे तत्र महापर्जन्य आगतः ॥
सर्वतः पर्णशालायां जीर्णायां जलमागतम् ॥ ९९ ॥

तदा शिष्यं समाहूय दर्शयामास सद्गुरुः ॥
प्राहालयं विरचय सुदृढं सुमनोहरम् ॥ १०० ॥

प्रत्यब्दं पर्णशालेयं जीर्णा भवति पुत्रक ॥
रचयातो दृढं गेहं यद्भायान्नूत्नवत्सदा ॥ १ ॥

कदाऽपि नैव यद्भंग ईदृग्रम्यं मनोहरम् ॥
सर्वोपस्करसंयुक्तं सुस्थिरं द्राग्गृहं कुरु ॥ २ ॥

विद्याभ्यासं कर्तुं ब्रह्मचर्येण गुरुकुले वसन्भक्त्या गुरुं भेजे। एकदा पर्जन्ये आगते जीर्णपर्णशालाया अंतर्जलं पपात। तदा गुरुः शिष्यमाह। हे शिष्य! प्रत्यब्दं पर्णशाला जीर्यतेऽतो दृढं रम्यं गृहं रचय। यत्सदा नवमिव भायात्। कदापि न यद्भङ्ग ईदृशं स्थिरं, सर्वसोस्पकरयुक्तं गृहं

आदिदेश गुरुस्त्वेवं गुरुपत्नी तदाऽब्रवीत् ॥
प्रीत्या शंसामि ते शिष्य कंचुकीं मां समानय ॥ ३ ॥

न रंजिता न ग्रथिता सुविचित्रा मनोहरा ॥
अंगप्रमाणाऽऽनेतव्या न न्यूना नापि चाधिका ॥ ४ ॥

गुरुपुत्रोऽपि तं प्राह पादुके मे समानय ॥
ये निमज्जयतो नैव गच्छंतमुदकोपरि ॥ ५ ॥

पादतो नाधिके न्यूने कर्दमो न स्पृशेत्तु ये ॥
यं देशं गन्तुमिच्छामि तत्राशु प्रापके सुखे ॥ ६ ॥

अत्रान्तरेऽपि च प्राप्ता गुरुपुत्री तमब्रवीत् ॥
आकृष्य तस्य वसनं बन्धो मां किञ्चिदानय ॥ ७ ॥

द्वे कर्णभूषणे रम्ये मदर्थं त्वं समानय ॥
क्रीडार्थमपि मे गेहं देहि भो सुमनोहरम् ॥ ८ ॥

तच्च कुञ्जरदन्तोत्थमेकस्तम्भं सुशोभनम् ॥
कदापि न भवेद्भग्नं यन्न जीर्णं कदाचन ॥ ९ ॥

कुरु। गुरुपत्नी आह। अरंजितमग्रथितं, सुविचित्रं, मनोहरं, अङ्गप्रमाणतो नाधिकं, न न्यूनं च कंचुकं आनय। गुरुपुत्र आह। गत्या जले न मज्जत ॥ ९६-१०५ ॥ ईदृशे शीघ्रमभीष्टदेशप्रापके, पादतो न न्यूने, नाधिके च, ययोः कर्दमो न स्पृशेदीदृशे पादुके म आनय। तद्वस्त्राञ्चलं धृत्वा कन्याऽऽह। द्वे कुण्डले। क्रीडार्थं हस्तिदंतजमेकस्तभं, रम्यं, यत्र

---

१ मनुष्यं.

क्रीडेच्छा यत्र तत्रापि स्थापनार्हं समानय ॥
क्रीडार्थं यच्च सहितं पीठादिभिरुपस्करैः ॥ ११० ॥

नित्यं नूतनवद्भाति यत्तादृग्गृहमाहर ॥
मणिकादीनि भाण्डानि पाकार्थमपि चाऽनय ॥ ११ ॥

अन्यच्च कथयिष्यामि येषु पाकः कृतः स च ॥
यातयामो न च भवेच्छीत उष्णस्तु सर्वदा ॥ १२ ॥

निक्षिप्तान्यपि पाकार्थं भाण्डानि यदि चानले ॥
कज्जलं न स्पृशेदेवं भाजनानि समानय ॥ १३ ॥

एवं चतुर्भिरप्युक्तः शिष्यः स्वीकृत्य चाखिलम् ॥
तदैव गुरुकार्यार्थं महारण्यं ययौ स च ॥ १४ ॥

मनसा चिन्तयामास बालोऽहं ब्रह्मचर्यवान् ॥
एवं कर्तुं कुतः शक्तिस्तत्किं कार्यमतःपरम् ॥ १५ ॥

पत्रावलीविरचनां नैव जाने कदाचन ॥
कथमीदृक्करिष्येऽहमित्युक्त्वा सोऽस्मरद्गुरुम् ॥ १६ ॥

यत्र क्रीडेच्छा तत्र तत्र स्थापनार्हं, पीठोपस्करयुतं गृहं, यज्जीर्णं भग्नं च न भवेन्नूतनवच्चाभाति यदीदृङ्मे देहि। पाकार्थं मणिकभांडादि च। यत्र कृतः पाक उष्ण एव तिष्ठेत्। येषु पाककाले कज्जलं न स्पृशेत्। ईदृग्भांडान्यानयेति चतुर्भिरुक्तः शिष्यः तथेति तत्कार्यार्थं वनं गत्वा चिंतयन्नाह ॥ ६-१५ ॥ अहं ब्रह्मचारी बाल एवं कर्तुं कथं क्षमः।

स प्राह कोऽन्य आधारो ममैकं सद्गुरुं विना ॥
तेनोक्तं न कृतं चेद्द्राग्गुरुः कोपं करिष्यति ॥ १७ ॥

अतः कं शरणं यास्ये कः प्राणान्रक्षयिष्यति ॥
न चान्यं शरणं वीक्षे कृपाब्धिं सद्गुरुं विना ॥ १८ ॥

न श्रोष्ये यदि तद्वाक्यं शापं दास्यति तत्क्षणम् ॥
बालोऽहं ब्रह्मचारी तद्वाक्यं न शृणुयां कथम् ॥ १९ ॥

कामधुग्गुरुवाक्यं मे तत्कर्तुं सर्वथोत्सहे ॥
प्राणान्दत्वाऽपि गुर्वाज्ञां यत्नान्नेष्यामि सत्यताम् १२०

इतःपरं गतिः का मे गंतव्यं कस्य चान्तिकम् ॥
एतत्कर्तुं न मे शक्तिस्तथाप्यंगीकृतं मया ॥ २१ ॥

एवं महावने शिष्यः स चिन्ताविष्टमानसः ॥
गच्छन्श्रान्तोऽतिनिर्विण्णः क्षणं तत्र स्थितोऽभवत् २२

ततोऽग्रतो व्रजन्नेकमवधूतं ददर्श सः ॥
स ब्रह्मचारिणं दृष्ट्वा चिन्ताविष्टमुवाच तम् ॥ २३ ॥

पत्रावलीरचनाऽपि न ज्ञाता। गुरुं विना कोऽन्यो ममाधारः उक्तं न कृतं चेद्गुरुः क्रुद्धो भविष्यति। कं शरणं यास्ये। कृपाब्धिं गुरुं विना को मे प्राणरक्षकः। यदि तद्वाक्यं न श्रोष्ये तर्हि शापं दास्यति। तद्वाक्यं कथं न श्राव्यं। कामधुक्तद्वाक्यं कर्तुं सर्वथोत्सहे। प्राणान्दत्वाऽपि गुरुकार्यं यत्नात्सम्पादयिष्यामि। इतःपरं का मे गतिः। क गन्तव्यं। एतत्कर्तुं न मे शक्तिस्तथाऽप्यङ्गीकृतं। एवं चिंतान्वितो वनं गच्छन्श्रांतो निर्विण्णः। क्षणं तत्र स्थित्वाऽग्रतो व्रजन्नवधूतं ददर्श। स च तं दृष्ट्वाऽपृच्छत्। कस्त्वं

कस्मात्त्वं कुत आयातश्चिन्ताव्याकुलमानसः ॥
विस्तरेणैव सर्वं मे कथयस्वाऽदितो बटो ॥ २४ ॥

इत्युक्तो ब्रह्मचारी स तं नमस्कृत्य चाब्रवीत् ॥
चिन्तासिन्धौ निमग्नोऽस्मि स्वामिन्तारय तारक ॥२५॥

निधिरेव भवाँल्लब्धो वत्सं धेनुरिवाद्य माम् ॥
वात्सल्यादागतोऽसि त्वं दुःखितोऽप्यभवं सुखी २६

चन्द्रस्य चन्द्रिकां दृष्ट्वा चकोरश्चन्दतीह हि ॥
यथा तथा भवद्दृष्ट्या स्वामिन्हर्षो ममाभवत् ॥ २७ ॥

मम पूर्वार्जितं यत्तत्पुण्यमद्योदितं खलु ॥
ततो निधिर्भवाँल्लब्धः कृपाब्धिः पुरुषः परः ॥ २८ ॥

कथयाद्याऽगतः कस्मात्किं ते नाम महावने ॥
निर्मनुष्येऽपि सहसा दुःखितं मामुपागतः ॥ २९ ॥

त्वमेव मे गुरुर्भासि प्राप्तोऽसि कृपया गुरो ॥
ईशं त्वां वीक्ष्य चित्तं मे स्थिरीभूतं क्षणेन तु ॥१३०॥

कुत आगतोऽसि कुतस्ते चिंता वद ॥ १६-२४ ॥ बटुराह । चिंताब्धौ मग्नं मां तारय । भवान्निधिरेव धेनुर्वत्समिव वात्सल्यान्मामागतोऽसि । दुःखितोऽप्यभवं सुखी । चंद्रिकां चकोर इव त्वां दृष्ट्वा हृष्टोऽस्मि । पूर्वपुण्योदयात्कृपाब्धिर्भवाँल्लब्धः । निर्जने वने कुतस्तवागमः । किं ते नाम । त्वं गुरुरिव भासि । ईशं त्वां वीक्ष्य चित्तं शांतं । हे भक्तवत्सल !

त्वमेव मे गुरुर्भासि कृपालुर्भक्तवत्सलः ॥
बालकस्तव दासोऽहमित्युक्त्वा तत्पदेऽग्रहीत् ॥ ३१ ॥

एवं वदन्तं तं बालं नमन्तमपि चाऽदरात् ॥
उत्थाप्याऽलिंग्य हर्षेण समाश्वास्य ह्युपाविशत् ॥३२॥

तं पप्रच्छादितः सर्वं ब्रह्मचारी स बालकः ॥
कथयामास तत्सर्वं गुर्वाद्यैर्यच्च याचितम् ॥ ३३ ॥

ब्रह्मचारी त्वहं बालः स्वीकृत्येदं सुदुष्करम् ॥
चिन्ताम्बुधौ निमग्नोऽस्मि स्वामिन्नस्मात्समुद्धर ॥३४॥

ततोऽवधूतस्तं बालं प्रदायाभयमब्रवीत् ॥
हितं ते कथयाम्येकं तेन सिध्येत्तवाखिलम् ॥ ३५ ॥

काशीपुरं महास्थानं सकलाभीष्टसाधकम् ॥
गत्वा तत्रैव विश्वेशाराधनं विधिना कुरु ॥ ३६ ॥

ख्याता क्षितिः पंचशतकोटियोजनविस्तृता ॥
काशी ततो विशेषाऽत्र ब्रह्माद्या लेभिरे वरान् ॥ ३७ ॥

बालस्ते दासोऽहमिति तत्पदे दधौ। ततः स तमुत्थाप्याश्वास्य मुदोपविश्य सर्वं पप्रच्छ। बटुः सर्वं कथयित्वाऽऽह। इदं दुष्करं स्वीकृत्य चिंताब्धौ मग्नं मामुद्धरेति ॥ २९-३४ ॥ ततोऽवधूतस्तमभयं दत्वाऽऽह। हितं वक्ष्ये। तेनाखिलं सिध्येत्। काशीविश्वेशाराधनं कुरु। पञ्चशत-

जगत्स्रष्टुं विधिर्यत्र लब्धवान्वरमुत्तमम् ॥
आराध्य विष्णुरप्यस्य पालनायाप्तवान्वरम् ॥ ३८ ॥

काशीपुरं महाक्षेत्रं दर्शनादेव सिद्धिदम् ॥
तत्र ते कामसिद्धिः स्याद्द्रुतं मा कुरु संशयम् ॥३९॥

तां काशीं सत्वरं गच्छ यद्यत्ते मनसि स्थितम् ॥
तत्तत्प्राप्नोषि लोके त्वं विश्वकर्मा भविष्यसि ॥१४०॥

चतुर्विधपुमर्थाश्च यत्र सिध्यन्ति सत्वरम् ॥
विशेषं किं वदाम्यस्मान्नाधिकं सर्वसाधकम् ॥ ४१ ॥

देवश्चित्रचरित्रोऽत्र दयालुर्यश्च दत्तवान् ॥
चमसक्षीरकामाय क्षीराब्धिमुपमन्यवे ॥ ४२ ॥

आनन्दकाननं नाम यत्र स्थानं सुमङ्गलम् ॥
समस्तकामना यत्र सिद्धिं यान्ति न संशयः ॥ ४३ ॥

काशी समस्तधर्माणां राशिराशीःप्रपूरका ॥
लोकानामपि सर्वेषां मोक्षस्थानमिदं खलु ॥ ४४ ॥

कोटियोजनभूमितो विशेषा काशी। यत्र ब्रह्माद्या वरान्लेभिरे। जगत्स्रष्टुं ब्रह्मा, पालने विष्णुश्चात्र वरं लेभे। यद्दर्शनात् सर्वसिद्धिस्तत्र तवाशुकामः सिध्येत्त्वं गच्छ। लोके विश्वकर्मा भविष्यसि। यत्र चतुःपुरुषार्थसिद्धिस्ततोऽधिकं किं। स्वल्पक्षीरेच्छवे क्षीराब्धिं योऽदात्स दयालुस्तत्र जागर्ति। यत्रानंदकाननं सर्वसिद्धिदं धर्मराशिः काशी सर्वक्षेमस्थानं

काशीवासी तु यः कश्चित्तस्य वीक्षणतोऽपि हि ॥
सर्वे दोषाः प्रणश्यन्ति किं पुनस्तन्निवासिनः ॥ ४५ ॥

काशीपुरे विद्यमाने चिन्ताऽनन्ता कुतस्तव ॥
नैवास्ति शक्तिरस्माकं काशीमाहात्म्यवर्णने ॥ ४६ ॥

ये तु तीर्थमयीं काशीं पर्यटन्ति पदे पदे ॥
अश्वमेधफलं पुण्यं तेषामेव न संशयः ॥ ४७ ॥

धर्मार्थकाममोक्षाणां मध्ये यं त्वमिहेच्छसि ॥
गमनादेव तत्सिद्धिं प्राप्नोषीह न संशयः ॥ ४८ ॥

इति श्रुत्वा ब्रह्मचारी साष्टाङ्गं प्रणिपत्य तम् ॥
प्राह काशीपुरी क्वाऽस्ते स्थितोऽद्याहं महावने ॥ ४९ ॥

आनन्दकाननं चापि पाताले वा महीतले ॥
स्वर्गे वा नैव जानामि कुत्रास्ते वद तत्तु मे ॥ १५० ॥

संसारसागरादस्मात्तारकोऽसि त्वमेव हि ॥
आदेश्य ज्ञानमेवापि स्वामिन्मां तारयाधुना ॥ ५१ ॥

॥ ३९-४४ ॥ तद्वासिवीक्षणादपि सर्वदोषनाशः किं पुनस्तद्वासात्। ततः कुतस्ते चिंता। यन्माहात्म्यं वक्तुं कः क्षमः। तीर्थमयीकाशीपर्यटनात्पदे पदेऽश्वमेधफलं। तद्गमनादेवाभीष्टार्थसिद्धिर्न संशयः। बटुर्नत्वाऽऽह। काशी क्वास्ते आनंदकाननं च। पाताले भुवि स्वर्गे वा। वनस्थोऽहं न जाने। त्वं भवाब्धितारको ज्ञानं दत्वा मां त्राहि। त्वां प्रार्थये।

कोऽद्य मामीदृशीं काशीं नयेत्त्वत्तो विनाऽपरः ॥
मां नयेति कथं स्वामिन्त्वामेव प्रार्थयेऽधुना ॥ ५२ ॥

भवतस्तत्र कार्यं चेत्तर्हि मां बालकं नय ॥
यथा दत्से धियं कुर्वे तथेति प्रपदेऽग्रहीत् ॥ ५३ ॥

इति तं नाथमानं सोऽनाथनाथो मुदाऽवदत् ॥
त्वां नेष्ये तव योगेन यात्रालाभो भवेन्मम ॥ ५४ ॥

इतोऽन्यः को महालाभो ब्रह्मचारिन्नृणामिह ॥
मानवानां वृथा जन्म काशीवासं विना खलु ॥ ५५ ॥

त्वद्योगात्काशिकायास्तु दर्शनं मे भविष्यति ॥
गच्छ साकं मयेत्युक्त्वा प्रतस्थे सह तेन सः ॥ ५६ ॥

मनोवेगेन तत्कालं योगी विश्वेशमागतः ॥
तापसः प्राह तं बालं काशीयात्रां समाचर ॥ ५७ ॥

बालकः प्राह भो स्वामिन्न जानामि कथंचन ॥
काशीयात्रा प्रकर्तव्या विधिना केन मे वद ॥ ५८ ॥

त्वत्तोऽन्यः को मां नयेत् । यथा बुद्धिं रासि तथा करिष्यामीति पदे दधौ । स आह । त्वां नेष्यामि । इतः कोऽन्यो महालाभस्त्वद्योगान्मेऽपि दर्शनं भवेत् ॥४९-५४॥ काशीवासं विना नृणां वृथा जन्म । मया सहागच्छेति स बटुना सह प्रतस्थे । स मनोवेगस्तं ;काशीमानीयाह । हे बाल ! यात्रां कुरु । बाल आह । स्वामिन्न जानेऽज्ञो बालोऽहं ततः काशीयात्रा-

अज्ञोऽहं ब्रह्मचारीह बालको भगवन्खलु ॥
अतो विस्तरतो ब्रूहि काशीयात्रां विधानतः ॥ ५९ ॥

तापसः प्राह तं बालं काशीयात्राविधिं क्रमात् ॥
निशामयेति तं सोऽपि यथायथमुपादिशत् ॥ १६० ॥

इति तं श्रीगुरुः प्राह चरित्रं यस्य हर्षदम् ॥
चत्वारः पुरुषार्थाश्च सुखसाध्या भवंत्यतः ॥ ६१ ॥
अत एव सरस्वतीद्विजो निजगादास्य चरित्रमुत्तमम् ॥
सकलप्रियदं शृणोति यः स कृतार्थो भवतीह चाभयः ६२

विधिं वद। स आह। काशीयात्राविधिं शृणु। यथायथं वक्ष्ये। तच्छ्री-गुरुर्वक्ष्यति। यच्चरित्रं हर्षदं यतः पुरुषार्थाः सुसाध्याः अत एव सर०॥५९-१६२॥ इति एकचत्वारिंशः ४१ ॥

(इति) श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्य-गङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञि-तमहाराष्ट्रभाषान्वितगुरुचरित्रसमानार्थायां वासु-देवानन्दसरस्वतीयतिविरचितायां श्रीगुरु-संहितायां भक्तिकाण्डे
एकचत्वारिंशः (अध्यायः) ॥
॥ आदितः श्लोकाः ॥ ५३६८ ॥
॥ इति एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

## ॥ अथ द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

श्री० ॥ नामधारकशिष्याग्र्यः संलग्नः सिद्धपादयोः ॥
प्राह किं गुरुणा प्रोक्तं तन्मे कथय विस्तरात् ॥ १ ॥

इत्युक्तः प्राह तं सिद्धो वक्ष्ये ते नामधारक ॥
सायंदेवाय गुरुणा प्रोक्तं यत्तापसोदितम् ॥ २ ॥

विश्वेशदर्शनं चान्तर्गृहयात्रां यथायथम् ॥
दक्षिणोदङ्मानसाख्यां पञ्चक्रोशीं च विस्तरात् ॥ ३ ॥

स्नानदानार्चनश्राद्धयुक्तां यात्रां च पाक्षिकीम् ॥
भवानीशो हरिर्ढुंढिर्दण्डपाणिश्च भैरवः ॥ ४ ॥

॥ श्रीगणेशाय नमः ॥

अथ सारसंग्रहश्लोकोऽयं—

बातोर्मीतिर्द्वियुगाढ्ये ससर्गं शिष्टां यात्रां कथयन्दर्शयित्वा ॥
काशीं दारादिनुतश्चाऽनयित्वा सायंदेवं गुरुराह व्रतं सत् ॥

नामधारकः सिद्धपदलग्न आह। गुरुणा प्रोक्तं तद्विस्तराद्वद। सिद्ध ऊचे। यत्तापसोक्तं तच्छ्रीगुरुराह। विश्वेशदर्शनं, अंतर्गृहयात्रां, दक्षिणोत्तरमानसयात्रां, पंचक्रोशीं; एवं स्नानदानार्चनश्राद्धयुक्तां सर्वयात्रां शुक्लकृष्णपक्षयात्रां, अन्नपूर्णाविश्वेश्वरबिंदुमाधवढुंढिराजदंडपाणिभैरवगुहकाशी-

गुहः काशी च गङ्गाद्या देवा लिङ्गानि भूरिशः ॥
इत्यादीनां पूजनं च निवेद्य स्थापनं तथा ॥ ५ ॥

स्वनामाङ्कितलिङ्गस्य प्राह कुर्वन्वहं बटो ॥
त्वमन्तर्गृहयात्रां तां काशीखण्डे सुविस्तृताम् ॥ ६ ॥

एवं विश्वेशयात्रायाः प्रकारस्ते मयोदितः ॥
कृत्वैवं स्वाख्यया लिङ्गप्रतिष्ठां कुरु पुत्रक ॥ ७ ॥

ब्रह्मचारिन्निमां काशीयात्रां कुरु विधानतः ॥
भवेत्ते वासना पूर्णा नात्र कार्या विचारणा ॥ ८ ॥

प्रसीदेच्छंकरस्ते यत्त्वोपरि गुरोः कृपा ॥
मनसा निश्चयं कृत्वा स्वगुरोः स्मरणं कुरु ॥ ९ ॥

एवमाभाष्य तं सिद्धः स चादृश्योऽभवत्तदा ॥
विस्मितोऽभूद्ब्रह्मचारी प्राहायं मे गुरुः खलु ॥ १० ॥

यद्वेश्वरोऽयमायातो गुरुणा मे कृपा कृता ॥
निश्चयो मेऽभवत्कार्यं मम सिद्धमसंशयम् ॥ ११ ॥

गङ्गामणिकर्णिकासर्वदेवसर्वलिङ्गदर्शनं पूजनं च निवेद्य तापस आह । हे बटो ! काशीखंडे विस्तृतां मेर्वयात्रां कृत्वा स्वनामाङ्कितलिङ्गप्रतिष्ठां कुरु । विधिना काशीयात्राचरणात्ते वासना पूर्णा भवेन्नात्र संशयः ॥ १-८ ॥ ईशः प्रसीदेत्त्वोपरि गुरुकृपाऽस्ति । मनसा निश्चयं कृत्वा गुरुं स्मरेत्युक्त्वा सोंऽतर्दधे । बालो विस्मित आह । यो मे खलु गुरुर्यद्वा विश्वेश्वरोऽयं गुरुकृपयाऽऽगतः । निश्चयेन मे कार्यं सिद्धं न संशयः । आराधनं विनेशः

आराधनं विनाऽप्येष पिनाकी मामुपागतः ॥
सर्वदाया गुरोर्भक्तेः फलमेतन्न संशयः ॥ १२ ॥

समस्ता देवता यास्ता गृहीत्वा ददतेऽर्थितम् ॥
गुरुप्रसादादीशोयं विना दानादुपागतः ॥ १३ ॥

यज्ञदानतपोभिर्यः सहसा नैव लभ्यते ॥
गुरुप्रसादादीशोऽयं विना यत्नादुपस्थितः ॥ १४ ॥

इति संस्मृत्य संस्मृत्य ब्रह्मचारी गुरुं तदा ॥
गुरूक्तेन विधानेन काशीयात्रां चकार ह ॥ १५ ॥

स भक्त्याऽऽनर्च विश्वेशं प्रसन्नोऽभूत्स तत्क्षणम् ॥
प्रादुरासीत्स्वरूपेण व्योमकेशः स शङ्करः ॥ १६ ॥

प्रसन्नोऽस्मि वृणीष्वेष्टमित्युक्तः शङ्करेण सः ॥
ब्राह्मस्त्वष्टाऽतिहृष्टोऽभूत्स्ववृत्तान्तमथाब्रवीत् ॥ १७ ॥

गुरुणा गुरुपत्न्या च सुताभ्यां याचितं च यत् ॥
तच्छशंस शिवः प्राह सर्वविद्यापटुर्भव ॥ १८ ॥

प्राप्तो गुरुभक्तेरेतत्फलं। सर्वे देवाः किमप्यादायार्थितं ददते। दानं विनेशोऽयमागतो गुरुप्रसादात् यज्ञतपोदानादिभिः सहसाऽलभ्योऽपि यत्नं विना गुरुप्रसादादीश उपागतः। इति स्मृत्वोक्तप्रकारेण स काशीयात्रां कृत्वा भक्त्येश्वरमानर्च। स प्रसन्नस्तत्क्षणं प्रादुर्भूय शङ्करो वरं वृणीष्वेत्याह। स हृष्टस्त्वष्टा ॥ ९-१७ ॥ गुरुणा तत्पत्न्या पुत्राभ्यां च याचितं

सन्तुष्टोऽस्मि समस्तं ते दास्यामि मम बालक ॥
वरप्रभावान्मे शीघ्रं सर्वविद्यापटुर्भव ॥ १९ ॥

गुरुभक्तिः कृता तेन तुष्टो दास्यामि तेऽखिलम् ॥
भूत्वेह विश्वकर्मा त्वं सर्वविद्यापटुर्भव ॥ २० ॥

चतुर्विधाः पुमर्थास्ते लब्धा एव भविष्यसि ॥
सृष्टिकर्ता विधिरिव त्वष्टरत्र न संशयः ॥ २१ ॥

एवं लब्धवरो हृष्टस्त्वष्टा स्रष्टाऽपरो यथा ॥
विधिना स्थापयामास स्वनाम्ना लिङ्गमुत्तमम् ॥ २२ ॥

गुरुभिर्याचितं यद्यत्तत्त्वष्टा स निर्ममे ॥
शूलपाणिः प्रसन्नोऽस्य तस्य किं कुत्र दुर्लभम् ॥२३॥

गुरुगेहमथागत्य तैर्यद्यद्याचितं पुरा ॥
सत्वरं तत्तदानीय नत्वा तत्सन्निधौ दधौ ॥ २४ ॥

दत्वा तद्याचितं सर्वं स शिष्योऽनुक्रमेण च ॥
गुरुतत्स्त्रीकुमाराणामकरोत्पादवन्दनम् ॥ २५ ॥

शशंस । शिवः आह । बालक ! तुष्टोऽस्मि ते सर्वं दास्ये । सर्वविद्यापटुर्भव । त्वया गुरुभक्तिः कृताऽनेन तुष्टोऽस्मि । त्वं विश्वकर्मा भव । चतुःपुरुषार्थास्ते लब्धास्त्वं ब्रह्मवत्सृष्टिकर्ता भविष्यसि । एवं लब्धवरो हृष्टः स विधिना स्वनाम्ना लिङ्गं प्रतिष्ठाप्य गुर्वादिभिर्याचितं सर्वं निर्ममे । ईशे प्रसन्ने किं दुर्लभं । स गुरुगेहमेत्य याचितं सर्वमानीयानुक्रमेण गुरुतत्स्त्रीपुत्रेभ्यो दत्वा तत्पादवन्दनं चक्रे । गुरुस्तमालिंग्याऽह ते भक्त्या

गुरुः सोऽपि प्रमुदितः शिष्यमालिंग्य चाब्रवीत् ॥
शिष्य तुष्टोऽस्मि ते भक्त्या ज्ञानराशिस्त्वमेव हि २६

गृहं च निर्मितं सम्यग्दत्तानि सुबहूनि च ॥
वस्तूनि त्वं चिरंजीवी भवाचन्द्रार्कमेव हि ॥ २७ ॥

स्वर्गे मर्त्ये च पाताले स्वचातुर्यं प्रसारय ॥
सृष्टिं रचय भो वेत्सि सर्वा विद्याः कला अपि ॥२८॥

सिद्धयोऽष्टौ तवाधीना निधयोऽपि तथा नव ॥
चिन्ताकष्टादि ते नैव कदापि च भविष्यति ॥ २९ ॥

एवं गुरोर्वरं लब्ध्वा स ज्ञानी स्वाश्रमं ययौ ॥
गुरुशिष्यकथामेतां पार्वत्या ईश्वरोऽब्रवीत् ॥ ३० ॥

ईश्वरो गिरिजां प्राह गुरुभक्तिः किलेदृशी ॥
गुरुं य एकभावेन भजेत्सोऽभीष्टभाग्भवेत् ॥ ३१ ॥

नेतुं भवनिधेः पारं शक्त एको गुरुर्भुवि ॥
गुरुं भजति यो भक्त्या तस्याधीनास्त्रिमूर्तयः ॥ ३२ ॥

तुष्टोऽस्मि त्वं ज्ञानराशिः ॥ १८-२६ ॥ गृहं सम्यङ्निर्मितं बहुवस्तूनि च दत्तानि । त्वमाचंद्रार्कं जीव ॥ २७ ॥ त्रिभुवने चातुर्यं प्रसारय । त्वं सर्वा विद्याः, कलाश्च वेत्सि । सिद्धयो, निधयश्च तेऽधीनाः । कदाऽपि चिंताकष्टादि ते न । एवं लब्धवरः स तथाऽभूत् । एवं गुरुभक्तिः य एकभावेन गुरुं भजेत्सोऽभीष्टार्थभाग्भवेत् । भवाब्धितारणाय गुरुः शक्तः ।

स्वयं त्रिमूर्तयोऽपीह गच्छन्ति श्रीगुरोः पदम् ॥
गुरुं विना गतिर्नेति वक्ति श्रुतिरपि स्मृतिः ॥ ३३ ॥

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ॥
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ ३४ ॥

इतीशः पार्वतीं प्राह गुरुभक्तिं सविस्तराम् ॥
सायन्देवमपि प्राह श्रीगुरुर्भक्तवत्सलः ॥ ३५ ॥

अत्रान्तरे निशाऽतीता सविताऽभ्युदितोऽपि च ॥
नष्टं गुरुकृपाज्योतिःप्रकाशाद्भक्तहृत्तमः ॥ ३६ ॥

सुप्रसन्नमना विप्रो नमस्कृत्वाऽब्रवीद्गुरो ॥
स्वामिन्धीप्रेरकोऽसि त्वं दीननाथ कृपानिधे ॥ ३७ ॥

इत्युक्त्वा श्रीगुरुं नत्वा विनयावनतोऽब्रवीत् ॥
कथाश्रवणकालेऽद्य मयापूर्वं विलोकितम् ॥ ३८ ॥

काशीयात्रा यथा प्रोक्ता तथाऽद्य भवता सह ॥
अपूर्वमेव तत्सर्वं काशीक्षेत्रं विलोकितम् ॥ ३९ ॥

तद्भक्ताधीनास्त्रिमर्तयः ब्रह्मादयोऽपि गुरुपदं भजंति। गुरुं विना न तारकः। इति यस्य देव इति श्रुतिर्वक्ति। इतीशः पार्वतीं जगौ। तच्छ्रीगुरुः सायन्देवं प्राह ॥ २७-३५ ॥ तदा सूर्य उदितः। गुरुप्रसादाद्भक्तचित्त-ध्वांतं नष्टं। हे धीप्रेरक! कृपाब्धे! इति श्रीगुरुं नत्वा सायंदेव आह। कथाश्रवणकालेऽपूर्वं दृष्टं। भवता सह काश्यां स्थित एव। या काशी-

सहाहं भवता काश्यां स्थित एवेति वीक्षितम् ॥
किंवाऽयं जाग्रति स्वप्नो विचित्रो नैव वेद्म्यहम् ४०

इत्युक्त्वा श्रीगुरुपदे प्रणम्य विनयान्वितः ॥
भक्तियुक्तः सकरुणमस्तौषीद्गद्गदाक्षरः ॥ ४१ ॥

परात्परोऽसि पुरुषः स्वामिन्परमहंस भोः ॥
भक्तमानसवासोऽसि श्रीनृसिंहसरस्वति ॥ ४२ ॥

एवं स्तुत्वा पुनर्नत्वा पूर्वस्ते नामधारकः ॥
हर्षगद्गदया वाचा स्तोत्रं चक्रे शृणुष्व तत् ॥ ४३ ॥

प्राग्ब्रह्मत्वमजोऽक्रियोऽपि बहुलं स्यामित्यभूद्धीस्तया
सृष्ट्वैवाण्डभुवं ततो जगदिदं सृष्टं सधर्मं गुणैः ॥
स्वैः स्वं भो रमयन्विहंसि सदरीनत्रावतीर्यानिशं
वन्दे श्रीनृहरे सरस्वति वरं ते श्रीपदाब्जद्वयम् ॥ ४४ ॥

यात्रोक्ता तां सर्वशोऽद्राक्षं। जाग्रद्वा स्वप्नो वोऽयमेतच्चित्रं न जाने। इति गुरुपदे नत्वा विनतः स सगद्गदमस्तौषीत्। स्वामिन्त्वं परात्परः पुरुषो भक्तमानसवासी परमहंसः श्रीनृसिंहसरस्वतीति पुनर्नत्वा हर्षगद्गदवाचाऽस्तौत्तच्छृणु ॥ ३६-४३ ॥ पुरा त्वमेकोऽपि बहु स्यामिति संकल्प्य ब्रह्माणं सृष्ट्वा तद्द्वारा सगुणं सधर्मं विश्वं सृष्ट्वा तत्रावतीर्याऽत्मानं रमयन्दुष्टान् हंसि। हे नृसिंहसरस्वति! ते श्रीपादपद्मद्वयं वंदे ॥ ४४ ॥ कलिदोषा-

कल्याकृष्टहृदुज्झितक्रतुनरत्रस्ताध्वराशीर्मुदे
प्रातः सूर्य इवोदितोऽस्यज महामोहान्धकारं ग्रसन् ॥
सद्धर्माश्रमसेतुमत्र शिथिलप्रायं सुदाढ्र्यं नयन्
वन्दे श्रीनृहरे सरस्वति वरं ते श्रीपदाब्जद्वयम् ॥ ४५ ॥

सर्वानन्दनिधानरूपममलं सत्वं सुखं मूर्तिमत्
प्रादुष्कृत्य जनत्रयान्तरमृगक्रीडावनं पावनम् ॥
संसारावटमग्नमुद्धरसि भो स्वीकृत्य तुर्याश्रमं
वन्दे श्रीनृहरे सरस्वति वरं ते श्रीपदाब्जद्वयम् ॥ ४६ ॥

मूके गां दृशमन्धके सुतनयं वन्ध्यासु चासून् मृते
सौभाग्यं विधवासु पल्लवमहो दत्तं सुशुष्केन्धने ॥
एवंभूत इयान् तवैष महिमा त्रैलोक्यसंस्थाक्षमो
वन्दे श्रीनृहरे सरस्वति वरं ते श्रीपदाब्जद्वयम् ॥ ४७ ॥

ज्जनः कर्मोत्सृजत्ततो देवा अप्युपोषितास्तदा त्वमवतीर्य सूर्यो ध्वांतमिव महामोहांधकारं ग्रसन् शिथिलप्रायं धर्मसेतुं दार्ढ्यं नीतवानसि। हे नृसिंहसरस्वति ! ते श्रीपादपद्मद्वयं वंदे। हे सर्वानंदनिधान ! सत्वं रूपं प्रादुष्कृत्य तुर्याश्रमं पावनं च स्वीकृत्य भवगर्तमग्नमुद्धरसि हे नृसिंहसरस्वति ते श्रीपादपद्मद्वयं वंदे ॥ ४५-४६ ॥ मूकाय ते वाग्दत्ता, अंधाय दृष्टी, वंध्यायै सुपुत्रौ, मृताय पुनः प्राणाः, विधवायै सौभाग्यं, शुष्ककाष्ठाय पल्लवाश्च दत्ताः। एवंभूतस्ते महिमा। हे नृसिंहसरस्वति श्रीपादपद्मद्वयं वंदे ॥ ४७ ॥ त्वं मुक्तमुमुक्षुकामिलोकाल्हादकः। दारिद्र्यहारि,

मुक्तावास मुमुक्षुकल्पविटपिन् भो कामिनां कामधुक्
दारिद्र्यानलमेघ दुष्कृतदवाग्ने तापिताराम ते ।।
श्रुत्यन्विष्टरजः पदं श्रुतविवादातीततत्वं महद्-
वन्दे श्रीनृहरे सरस्वति वरं ते श्रीपदाब्जद्वयम् ।। ४८ ।।

भो योगीश्वर भावितं तव पदं तीर्थाश्रयं सज्जना-
जीवं कामिसुदैवतं च कमलालीलास्थलं निर्मलम् ।।
विद्वद्वादकरण्डकं सुकृतसंस्थानं महत्पावनं
वन्दे श्रीनृहरे सरस्वति वरं ते श्रीपदाब्जद्वयम् ।। ४९ ।।

वेदागोचर ते चरित्रममलं शक्तोऽत्र कः कृत्स्नशो
वक्तुं वन्ह्यविनेंदुभूखपवनात्मेतीह मूर्त्यष्टकम् ।।
एतद्विश्वमयं न चान्यदिह वा ओङ्काररूपेशित-
र्वन्दे श्रीनृहरे सरस्वति वरं ते श्रीपदाब्जद्वयम् ।। ५० ।।

त्रिविधतापशामकश्च श्रुतिगत्यतीततत्त्वश्चासि । हे नृसिंहसरस्वति ते श्रीपादपद्मद्वयं वंदे ।। ४८ ।। हे योगिध्येय ! ते पदं तीर्थाश्रयं सज्जीवनं, कामिप्रार्थ्यं, श्रीविहारास्पदं, नानावादाश्रयं पुण्यक्षेत्रं, पावनं चास्ति । हे नृसिंहसरस्वति ते श्रीपादपद्मद्वयं वंदे ।। ४९ ।। हे वेदगोचर ! ते चरित्रं वक्तुं कः क्षमः । हे ॐकाररूपेश्वराष्टमूर्तीभिस्त्वया सर्वं व्याप्तं ।। ५० ।।

कुण्डीदण्डधरं प्रशान्तममलं संन्यासिरूपं तव
श्रीभीमामरजायुतिस्थितमज ध्येयं शरण्यं मयि ॥
ज्ञानं तारकमीश सत्यमनिशं ब्रह्मन् स्थिरीकुर्वदो
वन्दे श्रीनृहरे सरस्वति वरं ते श्रीपदाब्जद्वयम् ॥ ५१ ॥

एवं श्रीगुरुनायकाष्टकमिदं स्तोत्रं पठेन्नित्यशः
स प्राप्नोति बलं श्रियं च सुधियं तेजो वपुःपाटवम् ॥
वर्चः पुत्रकलत्रमित्रजसुखं दीर्घायुरारोग्यतां
संप्राप्यैहिकसौख्यमेवमनिशं चान्ते स मुक्तिं व्रजेत् ।५२।

एवं स श्रीगुरुं स्तुत्वा दण्डवत्प्रणिपत्य च ॥
सगद्गदाक्षरो हृष्टरोमा प्रेमान्वितोऽब्रवीत् ॥ ५३ ॥

त्रिमूर्तेरवतारोऽसि देवदेव जगद्गुरो ॥
मूढदृष्ट्या नृवद्भासि स्वामिन्नस्त्वं कृपानिधे ॥ ५४ ॥

दर्शितः परमार्थो मे पुरुषार्थाश्च मेऽर्पिताः ॥
त्वं सत्यं विश्वनाथोऽसि काशी ते सन्निधौ स्थिता ५५

दंडकमंडलुधर ! शांतं, भीमातीरस्थं, शरण्यं, ध्येयं, सच्चिदानंदं, ते यतिरूपं मयि स्थिरीकुरु। हे नृसिंहसरस्वति ते श्रीपादपद्मद्वयं वंदे ॥ ५१ ॥ नित्यमेतदष्टकपाठाद्बलश्रीसुधीतेजोवर्चोऽङ्गपाटवस्त्र्यादिसुखारोग्य-दीर्घायुरन्ते मोक्षश्च ॥ ५२ ॥ एवं स्तुत्वा दण्डवन्नत्वा सगद्गदवाग्हृष्टरोमा प्रेमान्वितः स आह। हे त्रिमूर्त्यवतार ! देव ! जगद्गुरो ! त्वं मूढदृष्ट्या नृवद्भासि। त्वं सत्यं विश्वेश्वरोसि। तेंऽतिके काशी मे परमपुरुषार्था

इति स श्रीगुरुं भक्त्या तुष्टाव श्रीगुरुश्च सः ॥
हर्षेण महता युक्तः प्रेम्णा तं भक्तमब्रवीत् ॥ ५६ ॥

सायंदेवाद्य ते काशीक्षेत्रं सम्यक्प्रदर्शितम् ॥
त्वदेकविंशः पुरुषः सम्यक्तत्फलमाप्नुयात् ॥ ५७ ॥

त्वमस्माकं परो भक्तो दृष्टांतस्तेऽद्य दर्शितः ॥
निकामं कुरु मे सेवां स्थित्वा मे सन्निधौ सदा ॥ ५८ ॥

यदि मत्सेवनेच्छा ते म्लेच्छसेवां ततस्त्यज ॥
पुत्रान्कलत्रं चानीय दर्शनं मम कारय ॥ ५९ ॥

इति भक्तमनुज्ञाप्य श्रीगुरुर्मठमाययौ ॥
भक्त आनन्दमग्नोऽभूच्छ्रीगुरोः सहवासतः ॥ ६० ॥

नामधारक ते पूर्वो गत्वा गुर्वाज्ञया गृहम् ॥
कलत्रपुत्रानादाय पुनः श्रीगुरुमाययौ ॥ ६१ ॥

भाद्रे मासि सिते पक्षे चतुर्दश्यां स भाविकः ॥
भक्त्या परमया युक्तः सकुटुंबः समागतः ॥ ६२ ॥

दत्ता इति भक्त्या तुष्टाव। तुष्टः श्रीगुरुः प्रेम्णा तमाह। काशीक्षेत्रं ते सम्यग्दर्शितं। त्वदेकविंशः पुरुषः सम्यक्फलं लभेत्। त्वं परो भक्तः सेवां कृत्वा मे सन्निधौ तिष्ठ। अतःपरं म्लेच्छसेवां मा कुरु। मे दर्शनार्थं स्त्रीपुत्रादीनानय ॥ ५३-५९ ॥ इत्याज्ञप्तः स गत्वा, स्त्रीपुत्रादीनादाय, भाद्रशुद्धचतुर्दश्यां गुरुमेत्य, नत्वा, पादौ गृहीत्वा, प्रेम्णा सगद्गदवाक्तु-

दण्डवत्प्रणिपत्यैव सायन्देवः पदेपदे ॥
एवमागत्य तत्पादौ गृहीत्वाऽभूत्सगद्गदः ॥ ६३ ॥

स करौ द्वौ समानीय प्रेम्णा तुष्टाव सद्गुरुं ॥
ॐनमश्चन्द्रमौले ते त्रिमूर्तिस्त्वमसि प्रभो ॥ ६४ ॥

त्रिमूर्तिरवतीर्य त्वं जातः सर्वगुरुर्भुवि ॥
स्वामिंस्त्वं नो नृवद्भासि पारो न ज्ञायते तव ॥ ६५ ॥

वर्णितुं तव माहात्म्यं कुतो मे शक्तिरीदृशी ॥
त्वमादिपुरुषः स्वामिन्देवाद्दृष्टं पदं तव ॥ ६६ ॥

चन्द्रोदये सुधालुब्धश्चकोरो नन्दते यथा ॥
तथाऽस्माकमभूत्तोषो भवच्चरणवीक्षणात् ॥ ६७ ॥

पूर्वजन्मार्जिताः पापराशयः सद्य एव मे ॥
दर्शनेनैव ते नष्टाः पुनीताः सर्व एव हि ॥ ६८ ॥

यथा चिन्तामणिस्पर्शाल्लोहमप्येति हेमताम् ॥
जम्बुनद्यां यथा वा मृत्पतिता स्वर्णतां व्रजेत् ॥ ६९ ॥

ष्टाव । ॐ नमश्चन्द्रमौलये प्रभो । त्वं त्रिमूर्त्यवतारः सर्वगुरुर्नृवद्भासि । अथापि ते माहात्म्यं वक्तुं कः क्षमः । हे आदिपुरुष ! दैवात्ते पदं दृष्टं । चंद्रं दृष्ट्वा चकोर इव पदं दृष्ट्वा हृष्टोऽस्मि । पूर्वार्जितपापं नष्टं पूतोऽस्मि स्पर्श-स्पर्शादयो हेममिव, जंबुनदीपतिता मृज्जांबूनदमिव ॥ ६०-६९ ॥ वायसो

वायसो मानसं प्राप्य राजहंसो यथा भवेत् ॥
तथा ते दर्शनात्सद्यः पुनीताः स्मो वयं प्रभो ॥ ७० ॥

गङ्गा पापं शशी तापं दैन्यं कल्पतरुस्तथा ॥
पापं तापं च दैन्यं च हरेच्छ्रीगुरुदर्शनम् ॥ ७१ ॥

गङ्गास्नानात्पापनाशस्तापान्तश्चंद्रदर्शनात् ॥
छायायाङ्कल्पवृक्षस्य कल्पितं फलमाप्नुयात् ॥ ७२ ॥

एक एको गुणो लक्ष्य एकैकात्तु पृथक्पृथक् ॥
भवद्दर्शनतः सद्यो लब्धमेव फलत्रयम् ॥ ७३ ॥

पापं मेऽशेषतो नष्टं नष्टं तापत्रयं तथा ॥
दग्धं दैन्यवनं सद्यः श्रीगुरो तेंऽघ्रिदर्शनात् ॥ ७४ ॥

चतुर्विधपुमर्थानां दाता त्वं गुरुनायकः ॥
एवं वेदान्तसिद्धान्तोऽनुभूतोऽयं मयाऽधुना ॥ ७५ ॥

इत्युक्त्वाऽऽनन्दभरितो जगौ श्रीगुरुसत्कथाम् ॥
कलं नानाविधै रागैः कारनाटकभाषया ॥ ७६ ॥

मानसं गत्वा राजहंस इव ते दर्शनाद्वयं सद्यः पूताः । गङ्गा पापं, शशी तापं, कल्पद्रुर्दैन्यं, च हरति । भवद्दर्शनं त्रयमपि । हे श्रीगुरो ! अद्य तेंऽघ्रिदर्शनात्सर्वं पापं, त्रयस्तापा, दैन्यं च सद्यो नष्टं । त्वं चतुःपुमर्थदातेति वेदसिद्धांतोऽद्य मेनुभूत इत्युक्त्वा, कारनाटकभाषया, नानारागैः कलं

भक्तसुभाग्योदयाकारः । महीतले यतीश्वरः ॥
दृष्टो मया विश्वतारः । नृसिंहसरस्वतीयतीश्वरः ॥७७॥

दृष्टो दृक्कमलयुगेन । तत्पदकमलद्वंद्वमनेन ।
नष्टं स्मरतोऽघं क्षणेन । सुखदोऽसौ नो जगत्पाता ७८

स दीनबन्धुः पूरयतीष्टं । भोगिजनानां दयाब्धिरिष्टं ।
योगिजनानां वंदे शिष्टं । नृसिंहसरस्वतीगरिष्ठं ॥ ७९ ॥

लक्ष्यो वाक्यैरात्मा जगति दण्डकमण्डलुधृक्त्वं स यतिः।
सगुणब्रह्म त्वं सत्प्रीतिः । न्यासिश्रेष्ठो वै गुरुमूर्तिः ८०

हरिदासप्रिय करुणानिलय स्वभक्तपालक प्रेमातिशय ॥
चरणस्पर्शात्ते गुरुवर्य कैलासोऽभूद्गन्धर्वपुरम् ॥ ८१ ॥

भक्तसुभाग्योदयाकारः महीतले यतीश्वरः ॥
दृष्टो मया विश्वतारः नृसिंहसरस्वतीयतीश्वरः ॥ ८२ ॥

जय जय भूमन्सद्गुरुमूर्ते जगद्धेतो धृतनरमूर्ते ॥
कृपाघन त्वं भ्राजत्कीर्ते दयानिधे नः पाहि विजूर्ते ८३

जगौ । भक्तभाग्याद्भूतलेऽवतीर्णो यतीशो नृसिंहसरस्वती मे दृष्टः स्मर्तृसुखदस्य जगत्पातुः पदपद्मद्वयं दृष्टं । स भोगीच्छापूरको योगीष्टदः ॥ ७०-७९ ॥ कृपाब्धिर्नृसिंहसरस्वती गुरुमूर्तिर्वाक्यलक्ष्योऽपि दण्डकमंडलुधृक्सगुणं ब्रह्म हे दासप्रिय ! करुणालय ! भक्तत्रातस्ते पदस्पर्शाद्गंधर्वपुरं कैलासोऽभूत् । हे सद्गुरो ! जगद्धेतो ! सुकीर्ते ! भूमन्दयाब्धे ! जय

सच्चित्पूर्णानंदो जगत्यमेयो व्याप्तोऽधिपते ॥
अत्रिसुतोऽभूस्त्वं सम्मूर्ते ॥ भक्तहितार्थं सुखदापूर्ते ८४

त्वत्कथितेयं स्वकीयमाया दैवी लोके दुरत्यया ।
तथाऽनुभूतं प्रभो मया । आवृतमेतद्देवाप्यनया ॥८५॥

भजन्ति ये मां तेऽप्यनपायां तरन्ति सद्यो दुर्गां मायाम् ।
इत्युक्तं ते कृत्वेह दयां तं त्वां वंदे वारय मायाम् ॥८६॥

भक्तिसुखं मे देहि तदर्थं भूयः सत्सङ्गं च तदर्थम् ।
जन्म भवेन्नो विश्वप सार्थं पालं वंदे त्वां हि समर्थम् ॥८७॥

जय जय भूमन्सद्गुरुमूर्ते जगद्धेतो धृतनरमूर्ते ॥
कृपाघन त्वं भ्राजत्कीर्ते दयानिधे नः पाहि विजूर्ते ॥८८॥

इति सायन्देवभक्तः कारनाटकभाषया ॥
प्रेमलक्षणभक्त्याऽस्तौत्संगृहीतोऽर्थ एव सः ॥ ८९ ॥

एवं स श्रीगुरोर्भक्त्या स्तुतिं चक्रे महामनाः ॥
प्रभुराश्वासयामास सन्तुष्टस्तेन सद्गुरुः ॥ ९० ॥

नः पाहि । हे सच्चिदानन्दामेयात्मन्भक्तहितार्थं त्वमत्रिसुतोऽभूः । मे माया दुरत्ययेति त्वयोक्तं मेऽनुभूतं ये मां भजंति ते तरंतीति ते वचसा त्वां भजे । मायां वारय । भक्तिसुखं, तदर्थं सत्सङ्गं च देहि त्वां वन्दे ॥ ८०-८८ ॥ इति कारनाटकभाषया प्रेमलक्षणभक्त्या सोऽस्तौत्तत्सारोयं ॥ ८९ ॥ तुष्टः श्रीगुरुस्तमाश्वास्य, स्वाग्रे सर्वान्प्रेम्णोपवेश्य, माता प्रेम्णा

प्रेमभावेन तान्सर्वानुपवेश्य निजाग्रतः ॥
वात्सल्येन यथा माता कुरुते स्नेहमात्मजे ॥ ९१ ॥

तथैव तेषु सर्वेषु स्नेहं चक्रे स सद्गुरुः ॥
स एव दिवसो धन्यो नामधारक किं ब्रुवे ॥ ९२ ॥

सायन्देवं च तत्पुत्रं तत्कलत्रं च सद्गुरुः ॥
सर्वान्पप्रच्छ वात्सल्यान्मातृवत्क्षेममादरात् ॥ ९३ ॥

सर्वक्षेमं समाधानं गृहवार्तां च सर्वशः ॥
सायन्देवं स पप्रच्छ भगवान्भक्तवत्सलः ॥ ९४ ॥

योगक्षेमं स पुत्रादेः समाधानं च सर्वशः ॥
विज्ञाप्य स्थापयामास पुत्रौ द्वौ गुरुपादयोः ॥ ९५ ॥

ज्येष्ठपुत्रो नागनाथस्तत्रातीव कृपा गुरोः ॥
गुरुनाथो दयाब्धिस्तु तस्य मूर्ध्नि करौ दधौ ॥ ९६ ॥

सायन्देवं गुरुः प्राह ज्येष्ठोऽयं ते सुतो मतः ॥
भविष्यति सुपूर्णायुर्वंशवृद्धिर्भवेदपि ॥ ९७ ॥

पुत्रानिव, तान्वात्सल्येनापृच्छत्। तद्दिनं धन्यं। भक्तवत्सलः सर्वक्षेमं, गृहवार्तां, पुत्रादेर्योगक्षेमं, समाधानं च सायंदेवो निवेद्य, पुत्रौ तत्पादयोर्निदधौ। श्रीगुरुर्दयाब्धिर्ज्येष्ठपुत्रमस्तकेऽतीव कृपया करं धृत्वाऽऽह। हे सायंदेव! अयं नागनाथो मे भक्तः पूर्णायुः श्रीयुक्तो भविष्यत्यस्य वंश-

अयमेव हि मद्भक्तः श्रिया युक्तो भविष्यति ॥
इतःपरं म्लेच्छसेवा त्वया कार्या न कर्हिचित् ॥ ९८ ॥

भार्या पतिव्रतेयं ते सुभगास्या इतः सुताः ॥
सम्भविष्यन्ति चत्वारः कुलं ते नन्दते श्रिया ॥ ९९ ॥

यद्दिने भजसि म्लेच्छं तस्मिन्नेव दिने तव ॥
हानिर्भविष्यति ततो ममैव कुरु सेवनम् ॥ १०० ॥

सायन्देव तव ज्येष्ठसुतोऽयं सेवको मम ॥
मत्प्रसादाच्च सर्वत्र यशोऽस्य प्रसरिष्यति ॥ १ ॥

इत्युक्त्वा तं पुनः प्राह गच्छ त्वं सङ्गमं द्रुतम् ॥
स्नानं कृत्वा विधानेन पुनरेहि ममाग्रतः ॥ २ ॥

तथेत्युक्त्वा कलत्रेण स पुत्रेण समन्वितः ॥
गत्वा स्नात्वा द्विजोऽश्वत्थमभ्यर्च्य पुनरागतः ॥ ३ ॥

तस्मिन्दिने ग्रामलोकाः कृत्वाऽनन्तव्रतं मुदा ॥
आगत्य श्रीगुरुं भक्त्या पूजयामासुरादरात् ॥ ४ ॥

वृद्धिश्च इतःपरं म्लेच्छसेवां त्यज ॥ ९०-९८ ॥ सुभगाऽसौ ते भार्या साध्वी। अस्याश्चत्वारः पुत्रा भविष्यंति। म्लेच्छं भजसि चेत्ते हानिर्भविष्यति। मे सेवां कुरु। मद्भक्तोऽयं ते ज्येष्ठसुतः। मत्प्रसादाद्यशोऽस्य प्रसरिष्यति। सकुटुंबस्त्वं सङ्गमं गत्वा विधिना स्नात्वा अश्वत्थमभ्यर्च्यागच्छेत्युक्तः स तथा कृत्वाऽऽगतः। तद्दिने लोकोऽनंतं संपूज्याऽदराच्छ्री-

सायन्देवं गुरुः प्राह ह्यनन्तव्रतमद्य तु ॥
अनन्तं पूजयन्त्येते समस्ता अद्य वासरे ॥ ५ ॥

पूजय त्वमपीत्युक्तः स नत्वा प्राह सद्गुरुं ॥
देव त्वमेव नोऽनन्तो व्रतं त्वत्पदसेवनम् ॥ ६ ॥

श्रीगुरुस्तं पुनः प्राह कौण्डिण्याख्यऋषिः पुरा ॥
अनन्तव्रतमेतत्तु कृतवान्सर्वकामदम् ॥ ७ ॥

सायन्देवः पुनः प्राह नमस्कृत्य स सद्गुरुम् ॥
कथमेतद्व्रतं तेन पुरा कृतमनुत्तमम् ॥ ८ ॥

व्रतं कथय मे स्वामिन्प्रख्यातं यदनन्तकम् ॥
आद्यन्ततः कथामस्य कथयस्व दयां कुरु ॥ ९ ॥

एतेन किंविधं पुण्यं को लाभोऽनेन वा भवेत् ॥
विस्तरात्तद्वदेत्येवं पृष्टवान्नामधारक ॥ १० ॥

इति तस्य वचः श्रुत्वा सन्तुष्टः श्रीगुरुस्तदा ॥
विस्तरात्कथयामास तद्व्रतं नामधारक ॥ ११ ॥

गुरुं चानर्च। श्रीगुरुः सायंदेवमाह। अद्यानंतव्रतं त्वमपि कुरु। स आह। त्वमेव नोऽनंतस्ते पदसेवाऽनंतव्रतं श्रीगुरुराह। पुरा कौंडिण्यऋषिः सर्वकामदानंतव्रतं चक्रे ॥ ९९-१०७ ॥ सायंदेव आह। कथमेतद्व्रतं तेन कृतं, साद्यंतं वद। दयां कुरु, किं पुण्यं, को लाभ, इति तेन पृष्टः

तदग्रतो वक्ष्यति वै सरस्वती
गुरोश्चरित्रं प्रददाति सद्गतिम् ॥
यदत्र यस्य श्रवणेन सद्यः
प्रयाति तीर्त्वा भवमाप्तविद्यः ॥ ११२ ॥

श्रीगुरुर्विस्तरात्कथयामास । तदग्रतो वक्ष्यति० ॥ १०८-११२ ॥ इति चूर्णिकायां द्विचत्वारिंशः ॥ ४२ ॥

(इति) श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्यगङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञितमहाराष्ट्रभाषान्वितगुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वतीयतिविरचितायां श्रीगुरुसंहितायां भक्तिकाण्डे द्विचत्वारिंशः ( अध्यायः )

आदितः श्लोकाः ॥ ५४८० ॥

श्रीगुरुदत्तात्रेयार्पणमस्तु ॥

———

## ।। अथ त्रिचत्वारिंशोऽध्यायः ।। ४३ ।।

श्रीगणेशाय नमः ।।

श्रीगुरुः प्राह तं विप्रं शृण्वनन्तव्रतं महत् ।।
बहुभिर्विहितं पूर्वं कथयिष्ये तदेव ते ।। १ ।।

युधिष्ठिरः पाण्डुपुत्रः कृत्वाऽनन्तव्रतं महत् ।।
गतं राज्यमपि प्राप व्रतमीदृगनुत्तमम् ।। २ ।।

इति श्रुत्वा गुरोर्वाक्यं सायन्देवः प्रणम्य तम् ।।
प्राह राज्यं कथं प्राप्तं गतं को वा युधिष्ठिरः ।। ३ ।।

इत्युक्तः श्रीगुरुः प्राह कपटद्यूततः पुरा ।।
कौरवैः पाण्डुपुत्राणां सर्वं राज्यं हृतं खलु ।। ४ ।।

।। अथ सारसंग्रहश्लोकोऽयम् ।।

सायंदेवाय त्रियुगपरिमितेऽध्याये
प्राहेशोऽनंतव्रतमिह च परत्रेष्टम् ।।
यस्याऽचीर्णेन व्यपगतदुरितो यायात्कौंडिण्यः
पार्थश्च सुगतिमितोऽसंबाधाम् ।। १ ।।

श्रीगुरुराह । इदं बहुभिः कृतं तद्वक्ष्ये ।। १ ।। धर्मः पार्थ एतत्कृत्वा गतं राज्यं प्रापेदृगुत्तमं व्रतं । सायंदेव आह । को धर्मः, कथं राज्यं गतं प्राप्तं च । श्रीगुरुराह । पांडुपुत्रो धर्मस्तद्राज्यं कपटद्यूतात्कौरवैर्हृतं । स

सभ्रातृकः स सस्त्रीको धर्मराजो वनं ययौ ॥
वनेऽवसद्द्वादशाब्दं भ्रष्टराज्यो युधिष्ठिरः ॥ ५ ॥

घोरेऽरण्येऽवसन्धर्मो भ्रातृभिः सह दुःखितः ॥
सर्वदा श्रीहरिं दध्यौ चिन्ताव्याकुलमानसः ॥ ६ ॥

हृत्वाऽपि राज्यं सकलं कापटयेनैव कौरवैः ॥
नानाविघ्नैः पराभूता वनस्था अपि पाण्डवाः ॥ ७ ॥

प्रेषयामास तत्सत्वं हर्तुं दुर्वाससं मुनिम् ॥
तत्सहायी हृषीकेशः सदाऽरक्षत्स पाण्डवान् ॥ ८ ॥

नानाव्रतानि तीर्थानि सेवितानि च पाण्डवैः ॥
कष्टमेवानुभूतं तैर्वने वनचरप्रियैः ॥ ९ ॥

कृष्णो नारायणो ज्ञात्वा तत्कष्टं भक्तवत्सलः ॥
स्वयमेवागमत्प्रीत्या यत्र पाण्डुसुताः स्थिताः ॥ १० ॥

कृष्णमागतमालोक्य धर्मराजो मुदान्वितः ॥
जगाम सम्मुखं तस्य प्रीत्या परमया युतः ॥ ११ ॥

धर्मो राज्यभ्रष्टः, सोदरैः पत्न्या च घोरं वनं गत्वा सदा दुःखितः कृष्णं दध्यौ । कौरवै राज्यं हृत्वाऽपि ते वनस्थाः पीडिताः तत्सत्त्वं हर्तुं दुर्वासाश्च प्रेषितः । कृष्णः सदा पांडवान् ररक्ष पांडवैर्नानाव्रततीर्थसेवाभिः कष्टं भुक्तं । तज्ज्ञात्वा भक्तवत्सलः कृष्णः स्वयं प्राप ॥ २-११ ॥ धर्मस्तं मुदा संमुखं

स्वकेशैः क्षालयामास कृष्णपादरजोऽनघः ॥
परं ब्रह्मेव साकारं श्रीकृष्णं समपूजयत् ॥ १२ ॥

पाद्यार्घ्यादिभिरापूज्य गन्धपुष्पाक्षतादिभिः ॥
धर्मः पुनीतमात्मानं मन्वानः कृष्णदर्शनात् ॥ १३ ॥

भक्त्या सम्पूज्य विनतस्तं तुष्टाव युधिष्ठिरः ॥
जय कृष्ण हृषीकेश कृष्ण भो भक्तवत्सल ॥ १४ ॥

जय नारायणानन्त भवसागरतारक ॥
क्षीराब्धिवास लक्ष्मीश श्रीपते भक्तवत्सल ॥ १५ ॥

परमात्मन्परंज्योतिस्त्रिमूर्तिस्त्वं न संशयः ॥
त्वमेव भगवन्विश्वं सृजस्यवसि हंसि च ॥ १६ ॥

भूत्वा विश्वस्य जीवस्त्वं सर्वं रक्षसि सर्वदा ॥
निवासस्ते तृणे काष्ठे स्थूलसूक्ष्मेष्वणुष्वपि ॥ १७ ॥

त्रिगुणात्मन्हृषीकेश पादाब्जाय नमोऽस्तु ते ॥
रजसा सृजसीदं त्वं तमसा हंसि चाखिलम् ॥ १८ ॥

गत्वा केशैः पादधूलिः क्षालयित्वा तं साकारं ब्रह्म पाद्यादिभिः संपूज्य तद्दर्शनादात्मानं पूतं मेने। ततस्तुष्टाव। श्रीकृष्ण! भक्तवत्सल! जय। नारायण, अनंत, भवतारक, क्षीराब्धिवास, श्रीश, परमात्मन्त्वं परंज्योतिर्विश्वं सृजसि, पासि, हांसि च। हे विश्वजीव! स्थूलसूक्ष्मतृणकाष्ठादिष्वपि ते वासः। हे त्रिगुणात्मन्हृषीकेश! ते नमः, प्रसीद। त्वं रजस्तमोभ्यां

दुष्टानां निग्रहाय त्वं साधूनां रक्षणाय च ॥
अवतीर्णोऽसि सत्वेन त्वं श्रुतिस्मृतिवर्णितः ॥ १९ ॥

भूमिभारापनुत्यर्थमवतीर्णस्त्वमेव चेत् ॥
किमर्थं रक्षितस्त्वेष भारभूतो युधिष्ठिरः ॥ २० ॥

पाण्डवास्तु मम प्राणा इति प्रख्यापयन्निह ॥
वने प्रक्षिप्य नः कष्टं ददासि कुत ईदृशम् ॥ २१ ॥

दया चेद्यदि तेऽस्मासु कष्टमीदृक्कुतो वद ॥
अस्मानुपेक्ष्य चारण्ये कुतः स्थापयसीश्वर ॥ २२ ॥

त्वां विहाय कथं कस्मै कथनीयमिदं वद ॥
अस्मानुपेक्षसे चेत्त्वं ततः किं जीवितेन नः ॥ २३ ॥

भीमसेनोऽपि चागत्य पदे धृत्वाऽवदद्धरिम् ॥
प्रभो स्वामिन्दयाब्धे नः कुतो भक्तानुपेक्षसे ॥ २४ ॥

धनञ्जयोऽपि तं श्रेष्ठमाधाय पदयोः शिरः ॥
बद्धाञ्जलिरुवाचेदं मुरवैरे कृपानिधे ॥ २५ ॥

सृजसि, हंसि च। दुष्टनिग्रहाय, साधुत्राणाय चावतीर्णोऽसि। भूभारनाशाय, तेऽवतारश्चेत्किमर्थं भूभारभूतान्नो न हंसि ॥ १९-२० ॥ पांडवा मे प्राणा इति ख्यापयन्नपि वने प्रक्षिप्य कुत ईदृक्कष्टं ददासि। ते दया चेत्कुत ईदृक्कष्टं। नः उपेक्ष्य कुतो वने स्थापयसि। त्वां विना ईदृक्कष्टं कस्मै कथनीयं। उपेक्षसे चेज्जीवितेन किं। भीम आह। प्रभो! स्वामिन्दयाब्धे! न उपेक्षसे।किं! अर्जुनः पादयोः शिरो विन्यस्याह। हे कृपाब्धे!

श्रीकृष्ण यदि तेऽस्मासु कृपादृष्टिर्भविष्यति ॥
वनवासादिकष्टं न आयासश्च ततः कुतः ॥ २६ ॥

पार्थाः प्राणप्रिया एवं बिरुदावलयस्तव ॥
सत्या भवन्तु नः कष्टं हरेत्याह धनञ्जयः ॥ २७ ॥

तदैत्य माद्रीतनयौ विनयौ नेमतुर्हरिम् ॥
द्रौपद्या सहिता एवं प्रणेमुः पञ्च पाण्डवाः ॥ २८ ॥

वनेऽस्मत्पक्षपाती नः कुतः स्थापयसि प्रभो ॥
राज्यं करोति नो वैरी किं कर्तव्यं वदाद्य नः ॥ २९ ॥

मित्रं नस्त्वादृशं छत्रं कुतो मित्रादभूदिदम् ॥
ईदृशं कष्टमस्माकं राज्यप्राप्तिः कुतो भवेत् ॥ ३० ॥

क उपायो विधेयोऽत्र साम्राज्यप्राप्तयेऽधुना ॥
वद स्वामिन्हृषीकेशेत्युक्तोऽभूत्सान्द्रहृद्धरिः ॥ ३१ ॥

श्रीकृष्णः पाण्डवानाह व्रतमेकं वदामि वः ॥
तत्कालं यत्प्रसादेन राज्यप्राप्तिर्भविष्यति ॥ ३२ ॥

मुरारे ! नास्मासु ते कृपादृष्टिः । नो वनवासादि कष्टं, आयासश्च किमर्थं ? पार्थाः प्राणप्रिया इति बिरुदालयः सत्या भवंतु । नः कष्टं हर । नकुलसहदेवौ द्रौपदी च नत्वोचुः । त्वं नः पक्षपाती वनेऽस्मान्स्थापयासि, वैरी राज्यं करोति, त्वादृशे मित्रे छत्रे च सतीदृक्कष्टं कथं ? ॥ २१-३० ॥ नः साम्राज्यप्राप्तये क उपाय इत्युक्तः सार्द्रहृदयः कृष्ण आह । अनंतव्रतं कुरु । यत आशु राज्यप्राप्तिर्भविष्यति । यद्व्रतानामुत्तमं व्रतं । वासुदे-

अनन्तनामकं पार्थ व्रतानामुत्तमं व्रतम् ॥
यदाचरणतः शीघ्रं राज्यप्राप्तिर्भविष्यति ॥ ३३ ॥

अनन्तस्त्वहमेवैकः पूर्णः सर्वत्र सर्वदा ॥
मद्व्रतं कुर्वनन्ताख्यं राज्यप्राप्तिर्भविष्यति ॥ ३४ ॥

कलाकाष्ठामुहूर्तादौ दिवसेषु च रात्रिषु ॥
पक्षमासायनाब्देषु व्याप्तोऽहं युगकल्पयोः ॥ ३५ ॥

भूतं भव्यं भवच्चापि व्याप्तं नारायणेन मे ॥
दुष्टान्हन्तुं भुवस्त्रातुं जातः सोऽहं यदोः कुले ॥ ३६ ॥

स वासुदेवोऽनन्तोऽस्मि धर्म मा कुरु संशयम् ॥
ममैव मूर्तयस्तिस्रो ब्रह्मविष्णुहरा इति ॥ ३७ ॥

राशयश्च ग्रहाश्चापि भुवनानि चतुर्दश ॥
वसवोऽष्टौ द्वादशार्का अहमेव न संशयः ॥ ३८ ॥

रुद्रा एकादशाहं च समुद्राः सप्त चाप्यहम् ॥
पातालानि च सप्ताहं पर्वता अहमेव च ॥ ३९ ॥

तृणवृक्षलतागुल्ममृक्षाण्याकाश एव च ॥
दिशश्च विदिशश्चाहं सर्वं व्याप्य बिभर्म्यजः ॥ ४० ॥

वोऽहं । मे ब्रह्माद्यास्तिस्रो मूर्तयः, राशिग्रहभुवनपातालभूरादिलोकाणुकलाकाष्ठामुहूर्तदिनाहोरात्रिपक्षमासाब्दयुगकल्पादि भूतं भव्यं भवच्च मया व्याप्तं । वसुरुद्रादित्याब्धिपर्वततृणवृक्षलतातारकादिशोऽहं बिभर्मि

पातालानि च भूरादिलोका अण्वादयोऽप्यहम् ॥
मत्तो विश्वात्मनो नान्यन्निर्विकारोऽव्ययोऽस्म्यजः ४१

अतो युधिष्ठिरानन्तं विद्धि मामेव शाश्वतम् ॥
मां पूजय विधानेन व्रतमेतद्वरं मम ॥ ४२ ॥

इति कृष्णवचः श्रुत्वा स पार्थो विनतोऽब्रवीत् ॥
स्वामिन्व्रतविधिं ब्रूहि किं दानं कथमर्चनम् ॥ ४३ ॥

कस्मिन्दिने व्रतमिदं कार्यं केन कृतं पुरा ॥
स्वामिन्कथय चास्मभ्यं सर्वमेतत्सविस्तरम् ॥ ४४ ॥

इत्युक्तः प्राह तं कृष्णः सम्यक्पृष्टं युधिष्ठिरम् ॥
भाद्रशुद्धचतुर्दश्यां मध्यान्हे व्रतमाचर ॥ ४५ ॥

श्रद्धयाऽऽराधयानन्तं शीघ्रं राज्यमवाप्स्यसि ॥
इदं व्रतं पुरा चीर्णमृषिणा कथयामि ते ॥ ४६ ॥

आसीत्पुरा कृतयुगे सुमन्तुर्विप्रसत्तमः ॥
वसिष्ठगोत्रसम्भूतो धर्मख्यातो महामुनिः ॥ ४७ ॥

॥ ३१-४० ॥ मत्तो विश्वात्माऽन्यो न। अजो निर्विकारोऽव्ययोऽस्मि। सर्वात्मकं मामनंतं विद्धि। विधिना मद्व्रतं कुरु। धर्म आह। व्रतविधिं ब्रूहि। किं दानं, कथं पूजनं, कदा कार्यं, पुरा केन कृतं, तत्सर्वं विस्तराद्वद। कृष्ण आह। भाद्रशुद्धचतुर्दश्यां मध्यान्हे भक्त्या व्रतं कुरु। शीघ्रं राज्यमवाप्स्यसि। पुरा कृतयुगे वासिष्ठः सुमंतुर्ऋषिस्तत्पत्नी भार्गवी

तत्पत्नी भार्गवी दीक्षासंज्ञिताऽभूत्पतिव्रता ॥
तस्या एकाऽभवत्पुत्री सुशीलेति च विश्रुता ॥ ४८ ॥

स्वल्पेनैव तु कालेन सुमन्तोः सा पतिव्रता ॥
पत्नी पञ्चत्वमगमद्दैवयोगेन पाण्डव ॥ ४९ ॥

कन्या त्वथ सुशीला सा ववृधे पितृवेश्मनि ॥
व्यरचत्सा सदाचारा स्वस्तिकादीनि वास्तुनि ॥५०॥

सा गृहं पञ्चवर्णाभी रङ्गवल्लीभिरन्वहम् ॥
शोभयामास बहुधा विचित्रैस्तोरणैरपि ॥ ५१ ॥

लिलेख शङ्खपद्मादि सद्मादिपरिमार्जने ॥
पद्वी प्रेम्णा समानर्च नमस्कारादिभिः सुरम् ॥ ५२ ॥

भार्याहीनः सुमंतुः स लुप्तगृह्यक्रियस्तदा ॥
चक्रे द्वितीयमुद्वाहं यज्ञसेवनहेतुना ॥ ५३ ॥

सा कर्कशाऽतिदुःशीला नित्यं कलहकारिणी ॥
दैवाल्लब्धा दुराचारा पुत्र्या पत्या च वैरकृत् ॥ ५४ ॥

साध्वी दीक्षाख्या सुशीलां कन्यां प्रसूय स्वल्पकालेन मृता। कन्या पितृगृहे ववृधे। सदाचारा सा वास्तुनि रंगवल्लीस्वस्तिकादीनि व्यरचत् ॥ ४१-५० ॥ विचित्रतोरणैर्गृहं शोभयित्वा सम्मार्जनादि कृत्वा पद्मादीन्यलिखत्। प्रेम्णा च नमस्कारादिना देवमानर्च। लुप्तगृह्यकर्मा भार्याहीनो मुनिर्द्वितीयमुद्वाहं चक्रे। कर्कशा, दुःशीला, नित्यं कलहकर्त्री

सुशीलाऽभूद्विवाहार्हा चिन्तयामास तत्पिता ॥
कस्मै कन्या मया देया कन्यादानक्षणस्त्वयम् ॥५५॥

एवं चिन्तयति प्राप्तः कौण्डिण्यर्षिर्यदृच्छया ॥
विद्यास्नातो गृहं तस्य स कन्यां स्वीचकार ताम् ॥५६॥

गृह्योक्तेन विधानेन कौण्डिण्याय ददौ सुताम् ॥
द्वौ मासौ वार्षिकौ गेहे स्थापयामास तौ मुनिः ॥५७॥

पुत्रीमात्रोरभूद्वैरं सापत्न्याच्छ्वशुरं तु सः ॥
प्राहान्यत्र करिष्याव आश्रमं सुखहेतवे ॥ ५८ ॥

सुमन्तुः प्राह दुःखार्तो नेयं स्त्रीर्मम वैरिणी ॥
पापिनीयं वृता मेऽद्य भवेद्विरह एतयोः ॥ ५९ ॥

शान्ता पत्नी न यद्गेहे तद्गेहं वनमेव हि ॥
त्रिपुरारे शृणु स्वामिन्निमग्नोऽस्मि भवाम्बुधौ ॥ ६० ॥

नेयं कर्मतपोर्हा मे कर्कशा न शृणोति च ॥
पुत्र्यां सत्यां सदा तोषो जामातुरपि दर्शनम् ॥ ६१ ॥

पत्या पुत्र्या च वैरकर्त्रीदृशी पत्नी दैवाल्लब्धा। विवाहार्हा कन्या कस्मै देयेति ऋषिरचिंतयत्। तावद्विद्वान् कौण्डिण्यः प्राप्तस्तस्मै विधिना तां कन्यां दत्वा जामातरं वार्षिककाले गृहे स्थापयामास। पुत्रीमात्रोस्सुतरां विरोधोऽभूत्तदा जामाता श्वशुरमाह। समीपेन्यत्राश्रमं कृत्वा स्थास्ये। सुमन्तुः खिन्न आह। केयं पापा वैरिणी वृता ॥ ९१-९९ ॥ यत्र शान्त-पत्नी न तद्गृहं वनं। हे पुरारे! भवाब्धौ मग्नोऽस्मि। नेयं कर्मतपोऽर्हा

---

१ सर्वविद्यापारंगतः स्नातको वा.

एवं सुमन्तुं चिन्तार्तं कौण्डिण्यः प्राह वारयन् ॥
नैकत्र तापसौ शस्तौ योगहानिर्यतो द्वयोः ॥ ६२ ॥

गत्वाऽन्यत्राश्रमं कृत्वाऽनुतिष्ठामि तपः सुखात् ॥
किञ्चिद्विदूरे स्थास्यामि शश्वन्मे दर्शनं भवेत् ॥ ६३ ॥

सुमन्तुः प्राह कौण्डिण्यं द्वादशाहं वसाऽत्र तु ॥
सर्वसिद्धित्रयोदश्यां प्रस्थानं कुरु सुव्रत ॥ ६४ ॥

सुमन्तोर्वचनं श्रुत्वा द्वादशाहमुवास सः ॥
कौण्डिण्यः सुमुहूर्ते स प्रतस्थे भार्ययाऽन्वितः ॥ ६५ ॥

सुमन्तुः कर्कशां प्राह याति भर्त्रा सहात्मजा ॥
पाथेयं व्रीहिगोधूममयं पुत्र्यै समर्पय ॥ ६६ ॥

इत्युक्ता सा गृहं गत्वा द्वारं बद्ध्वाऽश्मभिर्दृढम् ॥
कीलयामास यत्नेन न दास्य इति चाब्रवीत् ॥ ६७ ॥

कपाटं न जहौ शीर्षं ताडयामास तत्पतिः ॥
तं निवार्य सुशीलाऽऽह यास्ये मा देहि किञ्चन ॥६८॥

न शृणोति च । अद्य पुत्रीजामात्रोरदर्शनं भवेत् । कौण्डिण्य आह । नैकत्र तापसौ शस्तौ । तपोहानिः स्यादतोऽन्यत्राश्रमं कृत्वा किञ्चित् दूरे स्थित्वा तप्स्यामि । शश्वद्दर्शनं भविष्यति । सुमन्तुराह । द्वादशाहं स्थित्वा भाद्रे शुद्धे सर्वसिद्धत्रयोदश्यां प्रस्थानं कुर्विति प्रार्थितः स स्थित्वा सुमुहूर्ते सभार्यः स प्रतस्थे । सुमन्तुः कर्कशामाह । पुत्र्यै व्रीहिगोधूमादि पाथेयं देहीति सा गृहं गत्वाऽश्मभिर्दृढं द्वारं बध्वाऽऽह । न दास्य इति । सुमन्तुः शिरस्ताडयामास । कन्या तं निवार्याऽह । तथैव यास्य इति

पाकालयमृषिर्गत्वा गोधूमस्य पुलाकक[1]म् ॥
लब्धं दत्वा सुतायै स गमयामास तौ मुनिः ॥ ६९ ॥

उपविश्य रथे द्वौ तौ जग्मतुश्च ततो मुनिः ॥
नदीमागत्य मध्यान्हे चक्रे कौण्डिण्य आन्हिकम् ७०

उपाविशदनुष्ठातुं मुनिस्तत्र नदीतटे ॥
स्त्रीसमूहं विलोक्यैव सुशीला तमुपागता ॥ ७१ ॥

रक्ताम्बराश्चतुर्दश्यां कुर्वतीर्व्रतमादरात् ॥
पृथक्पृथक्च कलशान्पूजयन्तीर्ददर्श सा ॥ ७२ ॥

शनैस्तदग्रतो गत्वा पप्रच्छ मृदुभाषिणी ॥
भवतीभिरतिप्रीत्या किमिदं क्रियते व्रतम् ॥ ७३ ॥

स्त्रिय ऊचः सुशीलां तामनन्तव्रतमुत्तमम् ॥
अस्माभिः क्रियते नूनं सकलाभीष्टसिद्धिदम् ॥ ७४ ॥

सुशीला पुनरप्याह भवन्त्यः कथयन्तु माम् ॥
व्रतस्यास्य विधानं च कृपया विस्तरेण मे ॥ ७५ ॥

॥ ६०-६८ ॥ ऋषिः पाकालयस्थं लब्धं गोधूमपुलाकं ददौ । ततस्तौ रथारूढौ निर्गतौ । मध्याह्निकं कर्तुमृषिरुपाविशत् । सुशीला नदीतीरे स्त्रीसमूहं वीक्ष्योपागता । तत्र रक्ताम्बरधराः पृथक्पृथक्कलशान्पूजयन्तीर्नारीर्मृदुवाक्येनापृच्छत् । भवतीभिरिदं किं क्रियत इति । ता ऊचुः । सर्वासिद्धिदमनन्तव्रतं क्रियते । सुशीलाऽऽह । व्रतस्य को विधिः कृपया

१ तुच्छधान्य.

इत्युक्तास्ताः समस्ताश्च प्राहुः शीले शृणुष्व भोः ॥
उपविश्याग्रतोऽस्माकं कथयामस्त आदितः ॥ ७६ ॥

भाद्रे मासि सिते पक्षे चतुर्दश्यामिदं व्रतम् ॥
अनन्तसंज्ञकं श्रेष्ठं सर्वकामफलप्रदम् ॥ ७७ ॥

चतुर्दशग्रन्थियुतं रक्तोर्णासूत्रदोरकम् ॥
सम्पाद्य विधिवत्स्नात्वा नद्यादौ नित्यमाचरेत् ॥ ७८ ॥

परिधायारक्तवस्त्रं हरिद्राकुङ्कुमादिभिः ॥
भूषयित्वा वपुः पूर्णावानीय कलशौ शुभौ ॥ ७९ ॥

जलपूर्णे तु कलशे पञ्चपल्लवसंयुते ॥
शक्त्या रत्नादि निक्षिप्य सूपचारैः प्रपूजय ॥ ८० ॥

नीराज्य तदुपर्येव पूर्णपात्रं निधाय च ॥
स्थापयित्वा दर्भमयं शेषं पूजय भक्तितः ॥ ८१ ॥

पूर्णपात्रे नूत्नवस्त्रे विलिख्याष्टदलं शुभम् ॥
सकेसरं शुभं पद्मं तत्रानन्तं प्रपूजय ॥ ८२ ॥

विस्तराद्ब्रूत । ता ऊचुरुपविश्य शृणु । सर्वं ते कथयामः । भाद्रमासि सिते पक्षे चतुर्दश्यां चतुर्दशग्रन्थियुतं रक्तोर्णासूत्रदोरकं सम्पाद्य विधिवत्स्नात्वा रक्तवस्त्रं परिधाय कुंकुमादिना देहं भूषयित्वा ॥ ६९-७८ ॥ पञ्चपल्लवयुतजलपूर्णकलशं संस्थाप्य, तत्र रत्नादि निक्षिप्य, सम्पूज्य, तदुपरि पूर्णपात्रे नववस्त्रेऽष्टदलं विलिख्य, कलशाग्रतः पञ्चरङ्गैः पद्मादि

कलशस्याग्रतः पञ्चस्वस्तिकादीन्यनेकधा ॥
पञ्चरङ्गैः शुभैश्चूर्णै रचय त्वं सुशोभनम् ॥ ॥ ८३ ॥

तत्र पूर्वं षोडशोपचारैः शेषं प्रपूजय ॥
ततस्तत्रैव चानन्तं त्वं ध्यानादिभिरर्चय ॥ ८४ ॥

सर्वपापप्रशमनमनन्तं शेषशायिनम् ॥
एकाग्रेणैव मनसा त्वं चिन्तय परात्परम् ॥ ८५ ॥

ध्यायेच्चतुर्भुजं शंखपद्मचक्रगदाधरम् ॥
अनन्तं पिङ्गलदृशं विश्वात्मानं घनप्रभम् ॥ ८६ ॥

इति ध्यात्वा षोडशोपचारैर्नूत्नं सुदोरकम् ॥
विधाय द्वादशाक्षर्या[1] भक्त्या विधिवदर्चय ॥ ८७ ॥

यद्वा पुरुषसूक्तेन[2] विष्णुसूक्तेन[2] चाथवा ॥
अनुसृत्य स्वाधिकारं पूजां कुरु समाहिता ॥ ८८ ॥

एवमापूज्य संसारगव्हरेति च मन्त्रतः ॥
बध्द्वा करे नम इति जीर्णदोरं विसर्जय ॥ ८९ ॥

विलिख्य, पूर्णपात्रे दर्भमयशेषं सम्पूज्य, तत्र सर्वपापशमनं शेषशायिनं परात्परं चतुर्भुजं शङ्खपद्मचक्रगदाधरं पिङ्गाक्षं घनश्यामं श्रीमदनंतं द्वादशाक्षर्या पुंसूक्तेन विष्णुसूक्तेन भक्त्या स्वाधिकारतः सम्पूज्य, संसारगव्हरेति मंत्रेण दक्षिणकरे बध्वा जीर्णदोरकं विसृज्य ॥ ७९-८९ ॥ तं सफल-

---

१ ॐनमो भगवते वासुदेवाय २ भर्त्रासह पूजने पक्षांतरं.

दाता चेति ततः प्रस्थगोधूमापूपवायनम् ॥
दक्षिणासहितं देहि फलैरपि च संयुतम् ॥ ९० ॥

सापूपपायसं दत्वा ब्राह्मणेभ्यो यथाविधि ॥
ततः स्वेष्टजनैः सार्धं कर्तव्यं भोजनं सुखम् ॥ ९१ ॥

एवं चतुर्दशसमा व्रतं कार्यं प्रयत्नतः ॥
उद्यापनं चरेद्दद्याच्चतुर्दश घटानपि ॥ ९२ ॥

ब्राह्मणान्भोजयेद्भक्त्या चतुर्वर्गोऽपि सिध्यति ॥
सुशीले व्रतमस्त्येवं भक्त्याऽद्य त्वं समाचर ॥ ९३ ॥

अनन्तं पूजयास्माभिः सहाद्यास्ति चतुर्दशी ॥
इत्युक्त्वैकैकतन्तुं ता दोरकार्थं ददुर्मुदा ॥ ९४ ॥

पूजयामास साऽनन्तं बध्द्वा ग्रन्थीन्चतुर्दश ॥
यथोपदिष्टं नारीभिस्तथा भक्त्या समाचरत् ॥ ९५ ॥

सा गोधूमपुलाकार्धं वायनार्थं द्विजाय हि ॥
दत्वाऽऽज्ञां तत आदाय गन्तुमैच्छत्सुशीलका ॥ ९६ ॥

दक्षिणं प्रस्थगोधूमापूपपायससहितं विप्राय दत्वा, विप्रान्भोजयित्वेष्टैः सह भुंजीयात् । एवं चतुर्दशवर्षं व्रतं कृत्वोद्यापनं ततः कृत्वा, चतुर्दशघटान्विप्रेभ्यो भोजनं च दद्यादतश्चतुर्वर्गोऽपि सिध्यति । त्वमेवं भक्त्या चरेति तास्तस्यै दोरकार्थं तन्तून्दत्वाऽद्य चतुर्दश्यामस्माभिः सहानंतं पूजयेत्युक्ता सुशीला यथोपदिष्टं भक्त्याऽनंतं पूजयित्वा, गोधूमपुलाकार्धं विप्राय

सर्वाः स्त्रियो नमस्कृत्य साऽऽययौ रथसन्निधिम् ॥
तावत्समाप्यानुष्ठानं कौण्डिण्योऽपि समाययौ ॥ ९७ ॥

पत्न्या सह स कौण्डिण्य उपविश्य रथेऽग्रतः ॥
गच्छन्नेवामरावत्या समानां दृष्टवान्पुरीम् ॥ ९८ ॥

तत्र नागरिका लोकाः सम्मुखं प्राप्य तं मुनिम् ॥
स्वामिन्तपोनिधेऽत्रैव स्थितिं कुर्विति चार्थयन् ॥ ९९ ॥

ततः सत्कारपूर्वं तौ दम्पती नगरं गतौ ॥
श्रीदानन्तप्रसादेन सर्वैश्वर्ययुतौ तु तौ ॥ १०० ॥

तस्थौ तत्रैव कौण्डिण्यः कञ्चित्कालं सुखेन हि ॥
स एकदा सुशीलायाः करेऽनन्तं ददर्श ह ॥ १ ॥

ऋषिः पप्रच्छ बद्धं किं करमूले त्वया प्रिये ॥
वशीकरणमेतत्किं रक्तसूत्रेण वा कृतम् ॥ २ ॥

सुशीला सा पतिं प्राह बद्धो मेऽनन्तदोरकः ॥
यत्प्रसादात्त ऐश्वर्यमिदं प्राप्तं न संशयः ॥ ३ ॥

चायनार्थं दत्वा, स्त्रियो नत्वाऽऽज्ञां गृहीत्वा रथमुपागता। तावदनुष्ठानं समाप्य कौण्डिण्योऽप्येत्य तया सह रथमारुह्याग्रतो गच्छन्नमरावतीसमां पुरीं ददर्श ॥ ९०-९८ ॥ ततो नागरिकाः सम्मुखमेत्य, स्वामिन्तपोनिधेऽत्रैव तिष्ठेति सत्कारपूर्वं निन्युस्तत्रानन्तप्रसादात्तौ सर्वैश्वर्ययुतौ सुखं तस्थतुः। एकदा कौण्डिण्यः पत्न्याः करेऽनंतं दृष्ट्वाऽऽह। किमेतद्रक्तसूत्रं वशीकरणं बद्धं। शीलाऽऽह। अनंतदोरकोऽयं बद्धः। यत्प्रसादादैश्वर्यं

यस्मिन्दिने व्रतं त्वेतत्कृतं तद्दिनतः खलु ॥
प्रसन्नोऽभूदनन्तस्ते लब्धमैश्वर्यमीदृशम् ॥ ४ ॥

इति तद्वचनं श्रुत्वा कौण्डिण्यः कुपितस्ततः ॥
बलादनन्तमादाय वह्निकुण्डे जुहाव सः ॥ ५ ॥

क्वानन्तो मे तपस्तप्तं सुकृतेनैव तेन मे ॥
ऐश्वर्यमीदृशं लब्धं सत्यमेतन्न संशयः ॥ ६ ॥

मद्वशीकरणायैव बद्धोऽयं दोरकस्त्वया ॥
क्रोधेनैव मया त्यक्तः प्रदीप्तेऽग्नौ विलोकय ॥ ७ ॥

हन्तानन्तः कुतस्त्यक्तस्त्वयाऽग्नाविति सा सती ॥
उक्त्वा दोरं प्रयत्नेनादाय चिक्षेप गोरसे ॥ ८ ॥

ऐश्वर्यं तत्क्षणं नष्टं दारिद्र्यं च समागतम् ॥
अनन्तदोरकत्यागात्कौण्डिण्यो दीनतां गतः ॥ ९ ॥

गोधनाभरणाद्यं च तस्करैर्मुषितं पुरे ॥
हिता अप्यहिता जाताः कौण्डिण्यो दीनतां गतः ११०

लब्धं। यद्दिने व्रतं कृतं ततोऽनन्तः प्रसन्नोऽभूत। क्रुद्धः कौण्डिण्यो बलाद्दोरं गृहीत्वाऽग्नौ हुत्वाऽऽह। क्वानन्तो मे तपस्तप्तं तत ऐश्वर्यं लब्धं न संशयः। मद्वशीकरणाय बद्धोऽयं ते दोरकः स मेऽग्नौ क्षिप्त इति ॥ ९९-१०७ ॥ हन्तानन्तः कुतोऽग्नौ त्यक्त इत्युक्त्वा शीला यत्नाद्दोरं गृहीत्वा दुग्धे चिक्षेप। तत्क्षणमैश्वर्यं नष्टं। कौण्डिण्यो दैन्यं गतः।

गृहं दग्धमनन्तावमानतो वसनादिकम् ॥
सर्वस्वं तत्क्षणं नष्टं कौण्डिण्यो दीनतां गतः ॥ ११ ॥

विचारयामास ततः क्रुद्धो मेऽनन्त एव हि ॥
मदान्धेन मया व्यर्थं निक्षिप्तो दोरकोऽनले ॥ १२ ॥

अत एव यदा श्रीमदनन्तः कमलापतिः ॥
दर्शनं दास्यति तदा भोक्ष्येऽन्नादि न चान्यथा ॥१३॥

अनन्तानन्तेत्युक्त्वा स प्रययौ गहनं वनम् ॥
फलपुष्पान्वितं तत्र चूतवृक्षं ददर्श सः ॥ १४ ॥

पक्षिणः कीटकाश्चापि केऽपि नैव स्पृशन्ति यम् ॥
आम्रं पप्रच्छ कौण्डिण्यो दृष्टोऽनन्तस्त्वया वद ॥ १५ ॥

चूतः कौण्डिण्यमाहाङ्ग दृष्टोऽनन्तो न मे द्विज ॥
त्वं यदीक्षसि तस्मै मद्दशामेतां निवेदय ॥ १६ ॥

इत्युक्तः सोऽग्रतो गत्वा धेनुं वत्सान्वितां तृणे ॥
ददर्श या तृणं जग्धुं न शशाकातिदुःखिता ॥ १७ ॥

गोधनाभरणादि चोरैर्मुषितं। तत्रत्याः सर्वेऽहिता जाताः। गृहं दग्धं। सर्वस्वं नष्टं। कौण्डिण्योऽनुतप्त आह। अनंतो मे क्रुद्धः। मदेन मे व्यर्थमग्नौ क्षिप्तः। श्रीशोऽनन्तो यावद्दर्शनं न दास्यति तावन्न भोक्ष्य इति निश्चित्य वनंव्रजन्ननंतानंतेत्युक्त्वा फलपुष्पाढ्यमाम्रं पक्ष्यादिभिरसंस्पृष्टं दृष्ट्वा, तमपृच्छदनंतो दृष्टः किमिति। स तमाह। मे न दृष्टो यदीक्षासि तस्मै एतां मे दशां शंस ॥ ८-१६ ॥ ततोऽग्रतो गच्छन्मुनि-

तां कौण्डिण्योऽवदद्धेनो दृष्टोऽनन्तस्त्वया वद ॥
ममोपरि कृपां कृत्वा धेनुके वद सत्वरम् ॥ १८ ॥

धेनुः कौण्डिण्यमाहाङ्ग दृष्टोऽनन्तो न मे द्विज ॥
त्वं यदीक्षसि तस्मै मद्दशामेतां निवेदय ॥ १९ ॥

इत्युक्तः सोऽग्रतो गत्वा ददर्श स महावृषम् ॥
तं कौण्डिण्योऽवदद्भद्र दृष्टोऽनन्तस्त्वया वद ॥१२०॥

वृषः कौण्डिण्यमाहाङ्ग दृष्टोऽनन्तो न मे द्विज ॥
त्वं यदीक्षसि तस्मै मद्दशामेतां निवेदय ॥ २१ ॥

इत्युक्तः सोऽग्रतो गत्वा ददर्श सरसी उभे ॥
अन्योन्योदकसंमिश्रे हंसपक्ष्यादिवर्जिते ॥ २२ ॥

कुमुदोत्पलकल्हारैर्युते स्वादूदके उभे ॥
तयोर्द्वन्द्वं स पप्रच्छ दृष्टोऽनन्तस्त्वया वद ॥ २३ ॥

द्वंद्वं कौण्डिण्यमाहाङ्ग दृष्टोऽनन्तो न मे द्विज ॥
त्वं यदीक्षसि तस्मै मद्दशामेतां निवेदय ॥ २४ ॥

स्तृणेऽटन्तीं सवत्सां धेनुं तृणं जग्धुमशक्तां दृष्ट्वाऽऽह। अनंतो दृष्टः किमिति साऽऽम्रवदुवाच। स ततोऽग्रतो गत्वा धेनुवच्चरंतं महावृषं दृष्ट्वाऽऽह। अनंतो दृष्टः किमिति। सोऽपि धेनुवदुवाच। स ततोऽग्रेऽन्योऽन्योदकसंमिश्रे कुमुदादियुते स्वादूदके हंसादिवर्जिते सरस्यौ दृष्ट्वाऽपृच्छदनंतो दृष्टः किमिति ते पूर्ववदूचतुः।

इत्युक्तः सोऽग्रतो गत्वा गर्दभं चापि कुञ्जरम् ॥
दृष्ट्वा पप्रच्छ चानन्तं तथैवाप्यूचतुश्च तौ ॥ २५ ॥

निर्विण्णो ब्राह्मणः प्राणांस्त्यक्तुमैच्छद्यदा तदा ॥
अनन्तानन्तेति चोक्त्वा मूर्छितो निपपात कौ ॥ २६ ॥

अत्रान्तरे वृद्धविप्रवेषधारी समेत्य तम् ॥
उत्तिष्ठोत्तिष्ठ विप्रेति प्रावदद्भक्तवत्सलः ॥ २७ ॥

क्वानन्त इति विप्र त्वं परिपृच्छसि तर्हि भोः ॥
एह्यनन्तं दर्शयामीत्युक्त्वा जग्राह तत्करम् ॥ २८ ॥

तत उत्थाप्य कौण्डिण्यं द्विजोऽरण्यमनीनयत् ॥
महाश्चर्यकरं तत्र नगरं दृष्टवान्मुनिः ॥ २९ ॥

तं प्रवेश्य पुरे विप्रो रत्नसिंहासने शुभे ॥
उपविश्य स्वयं रूपं दर्शयामास सुन्दरम् ॥ १३० ॥

कौण्डिण्यो वीक्ष्य तद्रूपमाधाय पदयोः शिरः ॥
विनयावनतो भूत्वा तं स्तोतुमुपचक्रमे ॥ ३१ ॥

ततोऽग्रे गर्दभं कुञ्जरं च दृष्ट्वाऽनंतो दृष्टः किमित्यपृच्छत्तौ पूर्ववदूचतुस्ततो निर्विण्णः कौंडिण्यः प्राणान्दातुमिच्छन्मूर्छितो भुव्यपतत् ॥ १७-२६ ॥ तदाऽनंतो वृद्धविप्रवेषेणागत्योत्तिष्ठानंतं दर्शयामीति करं धृत्वोत्थाप्य, वने महाश्चर्यं पुरं दर्शयित्वा शुभे रत्नसिंहासने उपविश्य सुंदरं स्वरूपं दर्शयामास। कौण्डिण्यस्तद्वीक्ष्य पादयोः शिरो निधाय विनयेनास्तौत्। हे सच्चिदानंद! गोविंद! श्रीवत्साङ्क! ते

सच्चिदानन्द गोविन्द श्रीवत्साङ्कित ते नमः ॥
तव दर्शनमात्रेण दुःखं पापं च मे गतम् ॥ ३२ ॥

त्वं ब्रह्मविष्णुरुद्रात्मा सद्यो यत्स्मरणेन हि ॥
सर्वे दोषाः प्रणश्यन्ति त्वामस्मि शरणं गतः ॥ ३३ ॥

नारायण श्रीनिवास जगद्व्यापक ते नमः ॥
त्राता वैकुंठवासी यस्त्वामस्मि शरणं गतः ॥ ३४ ॥

अनन्तब्रह्मांडनाथ पापोऽहं भक्तिवर्जितः ॥
परमात्मन्क्षमस्वैनस्त्वामस्मि शरणं गतः ॥ ३५ ॥

त्वां विनाऽन्यन्न जानामि दैवतं ते पदे धृते ॥
शरणागतदीनेश त्वामस्मि शरणं गतः ॥ ३६ ॥

भृंगवत्तेंऽघ्रिलीनोऽस्मि सफलं जन्म मेऽभवत् ॥
धन्यं मे जीवितं यस्मात्त्वामस्मि शरणं गतः ॥ ३७ ॥

इति स्तुतः स मुनिना प्रसन्नोऽभूत्स तत्क्षणम् ॥
भक्तचिन्तामणिर्देवो ददौ तस्मै वरत्रयम् ॥ ३८ ॥

नमः । ते दर्शनान्मे दुःखं पापं च गतं । यस्त्रिमूर्तिर्यत्स्मरणात्सर्वे दोषा नश्यंति तं त्वां शरणं गतोऽस्मि । हे नारायण, श्रीश, व्यापक, वैकुंठवासिन्ननंतब्रह्मांडनाथ ! परमात्मन् पापोऽहं ते भक्तिहीनः । क्षमस्व त्वां विनाऽन्यदैवतं न जाने । शरणागतदीनेश ! ते पदे धृते ॥ २७-३६ ॥ भृङ्गवत्तेंघ्रिलीनोऽस्मि । मे जन्म सफलं । धन्यं मे जीवितं । इति प्रार्थितो

दारिद्र्यनाशं धर्माप्तिं वैकुंठे वसतिं ध्रुवाम् ॥
इत्यनन्तो ददौ तस्मै त्रीन्वरान्भो युधिष्ठिर ॥ ३९ ॥

कौंडिण्यः प्राह मार्गे यद्दृष्टं चित्रं वदामि ते ॥
दृष्टो वने मया चूतो युतोऽमृतमयैः फलैः ॥ १४० ॥

अंडजोऽपि न पस्पर्श फलं यस्य ततोऽग्रतः ॥
वत्सेन सहिता धेनुर्दुःखिता मे विलोकिता ॥ ४१ ॥

तस्या मुखं न चैकोऽपि ग्रासो विशति कर्हिचित् ॥
ततोऽग्रतो निर्मलोदे सरसी द्वे निरीक्षिते ॥ ४२ ॥

तयोरन्योन्यमुदकं मिश्रितं जीववर्जितम् ॥
ततोऽग्रतोऽपि वृषभो मया देव विलोकितः ॥ ४३ ॥

तस्यापि न मुखं ग्रासो विशतीतस्ततोऽग्रतः ॥
निरीक्षितो मदोन्मत्तः कुञ्जरश्च महान्विभो ॥ ४४ ॥

ततोऽग्रतो गर्दभोऽपि स्वामिन्नग्रे मयेक्षितः ॥
ततोऽग्रतो मया देव वृद्धब्राह्मण ईक्षितः ॥ ४५ ॥

भक्तचिंतामणिस्तुष्टः प्रसन्नो दारिद्र्यनाशं, धर्माप्तिं, शाश्वतवैकुंठवासं चेति त्रीन्वरान्ददौ । कौंडिण्य आह । मार्गे दृष्टं चित्रं वच्मि । प्राणिमात्रास्पृष्टः सुफल आम्रवृक्षो दृष्टः । ततो धेनुः सवत्सा यन्मुखे कदाचिदपि ग्रासो न विशति । ततो द्वे सरसी अन्योऽन्योदकमिश्रिते जीववर्जिते । ततो वृषभो यन्मुखे ग्रासो न विशति । ततो मत्तो महागजः । ततो गर्दभस्ततो

कुत ईदृक्स्थितिस्तेषामभिप्रायं न वेद्म्यहम् ॥
तत्केशव जगन्नाथ कथयेति पदेऽग्रहीत् ॥ ४६ ॥

इत्युक्तः प्राह तं भक्तं विस्तरेण कृपानिधिः ॥
कौण्डिण्य यस्त्वया दृष्टः फलितश्चूतपादपः ॥ ४७ ॥

स पूर्णवेदशास्त्रज्ञो मत्तो विद्याभिमानतः ॥
शिष्येभ्यो न ददौ विद्यां स्वल्पामपि स गर्वतः ॥४८॥

तेन पापेन वृक्षोऽभून्नाग्रहीत्कोऽपि यत्फलम् ॥
धेनुश्च सा पुरा याऽदा[1]न्निष्फलां ब्राह्मणाय गां[2]म् ॥४९॥

वृषभो यस्त्वया दृष्टः स पूर्वं धनवानपि ॥
न किञ्चित्प्रददौ तेन पापेनेदृग्गतिं गतः ॥ १५० ॥

सरसी ये च दृष्टे ते भगिन्यौ द्वे परस्परम् ॥
दानादाने च चक्राते ते तेनेदृग्गतिं गते ॥ ५१ ॥

क्रोधयोगात्खरो जातो मदान्धः कुञ्जरस्तथा ॥
जातं तव मनः शुद्धं द्विजरूपोऽहमागमम् ॥ ५२ ॥

वृद्धविप्रश्च। कुत एषामीदृक्स्थितिः। हे जगन्नाथ कथयेति पदे दधौ ॥ ३७-४६ ॥ श्रीमदनंत आह। पुरा वेदशास्त्रज्ञो मत्तो विप्रो गर्वाच्छिष्येभ्योऽल्पामपि विद्यां नादात्तत ईदृग्वृक्षोऽभूद्यत्फलं कोऽपि नास्पृशत्। निष्फलभूदानादीदृशी गौः। अदाता धनी स वृषः। द्वे भगिन्यौ परस्परं दानं दत्वेदृशी सरसी स्तः। क्रोधी खरो, मदी गजो, अनुतापात्ते चित्तं

१ ददौ २ भूमिं.

ये ये दृष्टास्त्वयाऽऽर्तास्ते ते सर्वे मोचिता मया ॥
ऐश्वर्यमिह भुक्त्वांऽते सद्गतिं यास्यसि ध्रुवम् ॥ ५३ ॥

कुरु वासं त्वमृक्षेषु मुने भूत्वा पुनर्वसुः ॥
इति प्रीतान्तरोऽनन्तः कौंडिण्याय वरं ददौ ॥ ५४ ॥

इति लब्ध्वा वरमृषिर्भुक्त्वेह सुखमुत्तमम् ॥
कौंडिण्योंऽते ययौ स्वर्गं व्रतेनानेन पांडव ॥ ५५ ॥

इत्यनन्तकथां कृष्णो धर्माय प्राह सोऽपि तत् ॥
व्रतं कृत्वा रिपून्हत्वा नष्टं राज्यं च लब्धवान् ॥ ५६ ॥

पृथिव्यामत्र चान्येऽपि मुनयो व्रतमाचरन् ॥
य आचरेदिदं कोऽपि पुरुषार्थान्स विन्दति ॥ ५७ ॥

अनन्तनामकमिदं व्रतानामुत्तमं व्रतम् ॥
त्वं देहि नागनाथाय ज्येष्ठपुत्राय सद्व्रतम् ॥ ५८ ॥

कौंडिण्येन यदाचीर्णं लब्धं सौख्यमनुत्तमम् ॥
अनन्तपुण्यदं त्वेतदनन्तव्रतमाचर ॥ ५९ ॥

शुद्धं द्विजरूपेणाहमागमं । ये दृष्टास्ते सर्वेऽपि मोचिता इहैश्वर्यमंते सद्गतिं च यास्यसि । त्वं पुनर्वसुर्भूत्वा नक्षत्रमंडले वसेति वरं लब्ध्वेहोत्तमसुखं भुक्त्वांऽते स्वर्गं गतः । इति कृष्णेन धर्मायोक्तं । स तथा व्रतं कृत्वाऽरीन्हत्वा नष्टं राज्यं लेभे ॥ ४७-५६ ॥ अत्राप्यनेके चक्रुः । कोऽपीदमाचरेत्स चतुर्वर्गं लभेत । त्वं व्रतानामुत्तमं व्रतमेतत्त्वं नागनाथाय देहि । कौंडिण्येन इदं पुरा चीर्णं त्वं कौंडिण्यगोत्रजोऽतो बहुपुण्यदमिदमाचरे-

कौंडिण्यगोत्रजोऽसि त्वं कौंडिण्याचरितव्रतम् ॥
बहुपुण्यप्रदं चैतत्सायन्देव समाचर ॥ १६० ॥

सायन्देव व्रतमिदं प्रतिवर्षं मदाज्ञया ॥
मनसा निश्चयं कृत्वा व्रतमेतत्समाचर ॥ ६१ ॥

इति श्रीगुरुणाऽऽज्ञप्तः सायन्देवोऽकरोद्व्रतम् ॥
श्रीगुरोः पूजनं चापि चक्रे नानोपचारतः ॥ ६२ ॥

नीराज्य श्रीगुरुं भक्त्या गीतवाद्यपुरःसरम् ॥
श्रीगुरुं पूजयामास भक्तियुक्तेन चेतसा ॥ ६३ ॥

ब्राह्मणान्भोजयामास श्रीगुरुं च मुदान्वितः ॥
भगवान्श्रीगुरुस्तेन सन्तोषं परमं ययौ ॥ ६४ ॥

एवं श्रीगुरुमाराध्य सायन्देवो मुदान्वितः ॥
गच्छेति गुरुणाज्ञप्तो ययौ ग्रामं कुटुम्बयुक् ॥ ६५ ॥

स्थापयित्वा गृहे पुत्रान्कलत्रं च निवर्त्य सः ॥
सायन्देवः स्वयं भूयः सेवार्थी श्रीगुरुं ययौ ॥६६ ॥

त्युक्तः सायंदेवोऽनंतव्रतं कृत्वा, श्रीगुरुं च पूज्य, भक्त्या गीतवाद्यपुरःसरं नीराज्य, मुदा श्रीगुरुं ब्राह्मणांश्च भोजयामास। तेन गुरुस्तुष्टो गच्छेति तमादिशत्। सायंदेवः कलत्रादीन्नीत्वा ग्रामे स्थापयित्वा, स्वयं सेवार्थी श्रीगुरुमेत्य ॥ ५७-६६ ॥ समीपे स्थित्वाऽन्वहं भेजे। एवं ते पूर्वजाय

स्थित्वा गुरुसमीपे स सेवयामास चान्वहम् ॥
एवं ते पूर्वजायाञ्च प्रसन्नो भगवानभूत् ॥ ६७ ॥

नामधारक शिष्येदं भवद्भिः समुपार्जितम् ॥
निधानं परमं दिव्यं यो नृसिंहसरस्वती ॥ ६८ ॥

गङ्गाधरस्य तनयो विनयोपपन्नः
श्रोतॄनिदं चरितमाह गुरूपसन्नः ॥
यस्याशु संश्रवणतोऽवहितो मनुष्यः
स्वेष्टं लभेत न पुनर्जननं त्वमुष्य ॥ १६९ ॥

श्रीगुरुः प्रसन्नः । भवाद्भिः परमं दिव्यं निधानं संपादितं नृसिंहसरस्वत्याख्यं । गङ्गाधरस्य तन० । ॥ ६७-१६९ ॥ इति चूर्णिकायां त्रिचत्वारिंशः ॥ ४३ ॥

(इति)श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्यगङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञितमहाराष्ट्रभाषान्वितगुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वतीयतिविरचितायां श्रीगुरुसंहितायां भक्तिकाण्डे त्रिचत्वारिंशः (अध्यायः) ॥

॥ आदितः श्लोकाः ॥ ५६४९ ॥

॥ इति त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

॥ श्रीगुरुदत्तात्रेयार्पणमस्तु ॥

## ॥ अथ चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

श्रीग० ॥ नामधारकशिष्योऽथ सिद्धं प्राहाग्रतः कथाम् ॥
सिद्ध विस्तरतो ब्रूहि कृपां कृत्वा ममोपरि ॥ १ ॥

सिद्धोऽवददभूदेकः सेवकोऽस्य कुविन्दकः ॥
तन्तुकाख्योऽन्वहं प्राप्य ननाम श्रीगुरुं मुदा ॥ २ ॥

संसारयात्रां निस्तीर्य त्रियामं प्राप्य सद्गुरुम् ॥
कृत्वाऽङ्गणप्रोक्षणादि प्रणनाम स दूरतः ॥ ३ ॥

एवं कालेन कियता शिवरात्रिरुपस्थिता ॥
तदा श्रीशैलयात्रायै प्रस्थितास्तस्य बान्धवाः ॥ ४ ॥

॥ श्रीगणेशाय नमः ॥

अथ सारसंग्रहश्लोकोऽयम्—

क्षणतः श्रुतिवेदसंमितेऽस्मिन्ननयद्यतिराज एकरूपः ॥
श्र्यगमात्मरतं स तंतुकं चानयदाशु निवेद्य राट्चरित्रम् ॥ १ ॥

नामधारकः सिद्धं आहाग्रतः कथां कथय कृपां कुरु। सिद्ध आह। तंतुकाख्य[1] एकः सेवकस्त्रियामं गृहकृत्यं निर्वर्त्य गुरुमेत्याङ्गणप्रोक्षणादि कृत्वा दूरान्ननाम। कदाचिच्छिवरात्र्यां शैलयात्रार्थं प्रस्थिता बांधवाः

---

[1] तंतुवायः.

ते तमप्याव्हयामासुर्हसन्तान्प्राह तन्तुकः ॥
व्यर्थं शैलं गमिष्यन्ति भवन्तो मूढबुद्धयः ॥ ५ ॥

श्रीशैलः श्रीगुरुस्थानं श्रीगुरुर्मल्लिकार्जुनः ॥
मतो मम ततो नाहं न गमिष्ये कुतोऽप्यतः ॥ ६ ॥

तच्छ्रुत्वा प्रहसन्तस्ते मूर्खोऽयमिति तन्तुकम् ॥
मत्वा विहाय तं सर्वे श्रीशैलं प्रययुर्मुदा ॥ ७ ॥

अन्ये नागरिकाश्चापि जग्मुः श्रीशैलमेष तु ॥
नित्यवत्सङ्गमं प्राप्य ववन्दे तन्तुको गुरुम् ॥ ८ ॥

श्रीगुरुस्तन्तुकं प्राह शैलं ते बान्धवा ययुः ॥
त्वं कुतो न गतोऽसीति स प्राहात्रैव मेऽखिलम् ॥ ९ ॥

नानाक्षेत्राणि तीर्थानि भवच्चरण एव हि ॥
व्यर्थं मूर्खा गमिष्यन्ति द्रष्टुं पाषाणमेव ते ॥ १० ॥

इत्युक्त्वा श्रीगुरुं नत्वा नित्यवत्स गृहं ययौ ॥
शिवरात्रिरथ प्राप्ता माघवद्यचतुर्दशी ॥ ११ ॥

॥ १-४ ॥ तंतुकमाव्हयन् स तानाह । मूढा व्यर्थं शैलं गच्छंति । ते श्रीशैलः श्रीगुरुस्थानं, श्रीगुरुर्मल्लिकार्जुन इतः क्वापि न गमिष्ये । ते मूर्खोऽयमित्युपहसंतः श्रीशैलं ययुः । अन्येऽपि नागरिका गताः । तद्दिने उपागतं तंतुकं श्रीगुरुराह । ते बंधवः शैलं गतास्त्वं कुतो न गतोऽसि । तंतुक आह । भवच्चरणे नानाक्षेत्रतीर्थानि । मूर्खाः पाषाणं द्रष्टुं गता इति

मध्याह्ने तन्तुको भक्तः सङ्गमे श्रीगुरुं ययौ ॥
व्रताङ्गत्वेन चोपोष्य संस्नातुं सङ्गमं ययौ ॥ १२ ॥

स्नात्वा स सङ्गमं प्राप्य श्रीगुरुं प्रणिपत्य च ॥
बद्ध्वाऽञ्जलिपुटं भक्त्या तन्तुकः पुरतः स्थितः ॥१३॥

श्रीगुरुस्तन्तुकं प्राह सर्वे शैलं गतास्तव ॥
एक एव स्थितोऽसि त्वं श्रीशैलोंऽतरितोऽद्य ते ॥१४॥

त्वया कदाऽपि श्रीशैलो वीक्षितो वा न वा वद ॥
स प्राहाहं न जानेऽन्यत्सर्वयात्रा भवत्पदे ॥ १५ ॥

इति तस्य वचः श्रुत्वा ज्ञात्वा तद्भावमीश्वरः ॥
तमुपाहूय कृपया प्राह ते दर्शयाम्यगम् ॥ १६ ॥

दृष्टी पिधाय हस्ताभ्यां पादुके मे दृढं वह ॥
इत्युक्त्वा तं तथाभूतं स निन्ये श्रीनगं क्षणात् ॥१७॥

क्षणात्तं श्रीगिरिं नीत्वा पातालाख्यनदीतटे ॥
उन्मील्य नयने पश्य श्रीशैलमिति चाब्रवीत् ॥ १८ ॥

नत्वा गृहं गतः। ततो व्रतदिने उपोष्य मध्याह्ने स्नातुं संगममेत्य गुरुं ननाम। श्रीगुरुराह। ते सर्वे शैलं गताः। एकाकी त्वं स्थितोऽसि ॥ ९-१४ ॥ त्वया शैलो दृष्टो न वा। स आह। अहं नान्यं जाने। भवत्पदे सर्वयात्रा। इति तद्भावं ज्ञात्वा तमुपाहूय श्रीगुरुराह। श्रीशैलं

क्षणं निद्रितवद्भूत्वा बोधितोऽक्षीणि तन्तुकः ॥
उन्मील्याद्रिं निरीक्ष्याऽह स्वप्नः किं मे विलोकितः १९
श्रीगुरुः प्राह तं भक्तं भ्रान्तवत्किं नु पश्यसि ॥
कुरु क्षौरादि कृत्वाऽऽशु मल्लिकार्जुनदर्शनम् ॥ २० ॥
इति श्रीगुरुणोक्तः स तथा कर्तुं ययौ तदा ॥
ददर्श तत्र स स्वीयान्ग्रामस्थानपि तन्तुकः ॥ २१ ॥
तन्तुकं तेऽपि पप्रच्छुरस्माननुगतोऽस्यहो ॥
कुतो योगं न कुरुषे को धर्मोऽयं तवेदृशः ॥ २२ ॥
स तान्प्राहाद्य मध्यान्हे सङ्गमान्निर्गतोऽस्म्यहम् ॥
आगतोऽस्मि घटीमात्रादिह श्रीगुरुणा समम् ॥ २३ ॥
केचिन्मिथ्येति तं प्रोचुः केचिदूचुर्विलीय नः ॥
अन्वागतोऽयमिति ते मिथ्या वक्तीति चाब्रुवन् ॥२४॥
तन्तुकस्तानभाष्याथ कृत्वा क्षौरादि सत्वरम् ॥
गन्धपुष्पादि चादाय लिङ्गपूजार्थमभ्यगात् ॥ २५ ॥

ते दर्शयामि। हस्ताभ्यां पादुके दृढं धृत्वा, दृष्टी निमीलयेति। तथेति स तथाऽकरोत्तं क्षणाच्छ्रीगिरिं नीत्वा पातालगंगातीरे स्थापयित्वाऽऽह। नेत्रे उन्मील्यामुं शैलं पश्य। स क्षणं निद्रितवद्भूत्वा बोधितोऽक्षिणी उन्मील्यागं दृष्ट्वा चकितोऽभूत्। श्रीगुरुराह। भ्रान्तवत्किं पश्यसि। क्षौरादि कृत्वा मल्लिकार्जुनदर्शनं कुरु। स तथेति क्षौरं कर्तुं गतः। तत्र बंधून्ददर्श। ते तमूचुः। कुतोऽनुयातोऽपि दर्शनं न कुरुषे? कोऽयं ते धर्मः? स तानाह। अधुनैव श्रीगुरुणा सहागतोऽस्मि ॥ १९-२३ ॥ केचिदूचुर्मृषा वक्ति। विलीयान्वागतः। स तूष्णीं क्षौरादि कृत्वा पुष्पाद्यादाय लिंगार्चनाय गत्वा लिंगस्थाने श्रीगुरुं सर्वैरपि पूजितं दृष्ट्वा चकित

देवालये गुरोरन्यं देवं नैव निरीक्ष्य सः ॥
दृष्ट्वैव श्रीगुरुं भक्तो जातो विस्मितमानसः ॥ २६ ॥

तमेवार्चन्ति सर्वेऽपि पूजां गृह्णाति सद्गुरुः ॥
इति वीक्ष्य हृदा मेने श्रीगुरुं शङ्करं परम् ॥ २७ ॥

इति मत्वाऽभ्यर्च्य गुरुं प्रसादं च प्रगृह्य सः ॥
तन्तुकोऽतीव संहृष्टो ययौ श्रीगुरुसन्निधिम् ॥ २८ ॥

गुरुः प्राहायास्यसि किं यदि वाऽत्राद्य तिष्ठसि ॥
तन्तुकः प्राह देवात्र चित्रं दृष्टं वदामि ते ॥ २९ ॥

स्वामिन्देवालये लिङ्गं न दृष्टं सर्व एव हि ॥
देवालये सूपविष्टं त्वामर्चन्तीति वीक्षितम् ॥ ३० ॥

समीपस्थं विहाय त्वां कुतः कष्टेन दूरतः ॥
लोकाः किमर्थमायान्ति न जाने कारणं परम् ॥ ३१ ॥

परमेश्वर एव त्वं नरवद्भासि दुर्दशाम् ॥
न ज्ञायते ते महिमा नटवच्छन्नरूपिणः ॥ ३२ ॥

आह। श्रीगुरुरेव शङ्कर इति। तमभ्यर्च्य प्रसादं गृहीत्वा मुदा श्रीगुरुं प्राप। श्रीगुरुस्तमाह। अद्यात्र तिष्ठस्यागच्छसि वा। तंतुक आह। चित्रं दृष्टं। देवालये लिंगं न दृष्टं त्वामेव सर्वेऽर्चंतीति दृष्टं। समीपस्थं त्वां त्यक्त्वा दूरं कष्टेन किमर्थं लोका आगच्छंति तन्न जाने ॥ २४-३१ ॥ त्वं परमेश्वरो नृवद्भासि। छन्नरूपिणस्ते महिमा न ज्ञायते ॥ ३२ ॥

मूढा भूत्वा जनाः प्रायो माहात्म्यं न विदुस्तव ॥
कुतोऽद्रिं यान्ति हित्वा त्वां विस्तरात्कथयस्व मे ॥३३॥

श्रीगुरुः प्राह तं भक्तं सर्वत्रैकोऽपि चेश्वरः ॥
तथाऽपि स्थानमाहात्म्यविशेषो भुवि गम्यते ॥ ३४ ॥

तन्तुकः प्राह पूर्णस्त्वं स्वामिन्ब्रह्मैव निर्मलम् ॥
स्थानमाहात्म्यवैशिष्टयं कीदृङ्मां ब्रूहि विस्तरात् ॥३५॥

गुरुः प्राहास्य माहात्म्यं त्वं श्रीशैलस्य पृच्छसि ॥
कथां स्कन्दपुराणोक्तां वच्मि विस्तरतः शृणु ॥ ३६ ॥

माघवद्यचतुर्दश्यां श्रीशैलस्योत्सवो महान् ॥
अपारमस्य माहात्म्यं पुरावृत्तं वदामि ते ॥ ३७ ॥

पुरा किरातविषये पराक्रमविराजितः ॥
विमर्षणाभिधो राजा शूरोऽभून्निर्जिताहितः ॥ ३८ ॥

बुद्धिमान्मृगयासक्तो बलाढ्यो नीतिमानपि ॥
परस्त्रियमपि प्रेक्ष्य जायते चञ्चलं मनः ॥ ३९ ॥

मूढास्ते माहात्म्यं न विदुः । त्वां हित्वा कुतोऽद्रिं यांति तद्वद । श्रीगुरुराह । सर्वत्रैक ईशोऽपि स्थानमहिमाविशेषः । तंतुक आह । त्वं पूर्ण ब्रह्म । स्थानमाहात्म्यं वद । श्रीगुरुराह । स्कांदोक्तां कथां शृणु । मावे शिवरात्र्यां शैलेऽपारमाहात्म्यं. पुरा किरातदेशे पराक्रमी शूरो धीमान्नीतिमान्विमर्षणो राजेशभक्तोऽपि ग्राह्याग्राह्यभक्ष्यादिविवेकशून्यः परस्त्रीलंपटश्चाथापि सक्त्येशं

१ देशे

ग्राह्याग्राह्येऽबुधः[1] सोऽपि विविनेक्ति[2] न मांसभुक् ॥
स दुराचारवद्भाति तथापीश्वरपूजकः ॥ ४० ॥

नित्यं भक्त्याऽर्चति शिवं शिवरात्र्यां विशेषतः ॥
गीतवादित्रनृत्यैश्च भक्त्यातोषयदीश्वरम् ॥ ४१ ॥

दुराचारोऽपि स बहिरन्तर्भक्तिरतीव हि ॥
शिवेऽस्य महिषी साध्वी शुभा नाम्ना कुमुद्वती ॥४२॥

पतिव्रता सुशीला सा मनस्येतदचिन्तयत् ॥
परदाररतस्यापि पत्युर्भक्तिः कथं शिवे ॥ ४३ ॥

एकस्मिन्दिवसे राज्ञी विनयावनता पतिम् ॥
पप्रच्छ प्राणनाथाद्य पृच्छाम्येकं वदस्व मे ॥ ४४ ॥

विस्तराद्वद याथार्थ्यं दौरात्म्यं मे क्षमस्व भोः ॥
सर्वभक्षो दुराचारः परदाररतो भवान् ॥ ४५ ॥

तथाऽप्यतीव सद्भक्तिः शिवे जाता कथं तव ॥
माऽकार्षीर्मारिषामर्षं[3] प्राणेश ब्रूह्यसंशयम् ॥ ४६ ॥

संपूज्य गीतादिभिरतोषयत्। शिवरात्र्यां विशेषतः ॥ ३३-४१ ॥ तत्स्त्री सुशीला साध्वी कुमुद्वतीशभक्तमपि परदाररतं तं प्राह। मे दौरात्म्यं सोढ्वा वद। सर्वभक्षकस्य दुराचारस्य ते कथं शिवेऽतीव सद्भक्तिः। स आह। हेऽनघे सम्यक्पृष्टं। मे प्राग्जन्म शृणु। पुराऽऽभीर-

१ अविवेकी २ न विचारयति. ३ हे साधो! कोपं मा कार्षीः.

इत्युक्तः स नृपः प्राह सम्यक्पृष्टं त्वयाऽनघे ॥
पूर्वस्मृतिरभूदद्य वक्ष्ये प्राग्जन्म मे शृणु ॥ ४७ ॥

पुराऽऽभीरगृहे सुभ्रु श्वाऽभवं कर्मयोगतः ॥
तत्र मे वर्तमानस्य शिवरात्रिरुपागता ॥ ४८ ॥

शिवालयमभूत्तत्र नगरे बहवो जनाः ॥
शिवार्चनाय सम्प्राप्ता अहं च क्षुधितोऽगमम् ॥ ४९ ॥

शिवमानर्चुरव्यग्राः सर्वे गीतादिभिस्तदा ॥
सारार्तिककराः सर्वे भक्त्या चक्रुः प्रदक्षिणाः ॥ ५० ॥

तदाऽहं चागमं द्वारं विनोदं द्रष्टुमादरात् ॥
अन्तर्गतं मां वीक्ष्याहुः श्वानं हन हनेति ते ॥ ५१ ॥

श्रुत्वाऽधावं घातभिया द्वारमावेष्ट्य ते जनाः ॥
क्रुद्धा मामनुधावंतः सर्वे घातयितुं हि माम् ॥ ५२ ॥

बहिर्यातुं न मे लब्धो मार्गः स्वल्पोऽपि भीतितः ॥
देवालयान्तरे तत्र भूयो भूयः परिक्रमन् ॥ ५३ ॥

गृहेऽहं श्वाऽऽसं। कदाचिच्छिवरात्र्यां शिवालयेऽर्चनाय बहुलोका आगतास्तत्रोपोषितोऽहमगमं। सर्वे गीतादिभिरारार्तिकं कृत्वा प्रदक्षिणाश्चक्रुः। तेंऽतर्गतं मां वीक्ष्य क्रुधा ॥ ४२-५१ ॥ धावंतो द्वारमावेष्ट्य पृष्ठलग्ना मां हन्तुं प्रवृत्ताः। बहिर्गंतुं मेऽल्पोऽपि मार्गो न लब्धः।

बहिर्गन्तुं प्रवृत्तस्य न लब्धं क्वापि मेऽयनम्[1] ॥
प्रदक्षिणं व्रजन्भूयो द्वारदेशमथागमम् ॥ ५४ ॥

विलीयापि स्थितो नैव लब्धं तत्र स्थलं मम ॥
धावन्तः पृष्ठतो लोकाश्चुक्रुशुर्हन्तुमुत्सुकाः ॥ ५५ ॥

लभेदुच्छिष्टमत्तुं स इति देवस्य चाग्रतः ॥
एत्यापश्यं शिवं प्राणान्त्रातुमिच्छंश्च सर्वतः ॥ ५६ ॥

एवं प्रदक्षिणं देवं त्रिः परिक्रम्य भामिनि ॥
भीतोऽन्तर्गृहमाविश्य मुदाऽदर्शं शिवार्चनम् ॥ ५७ ॥

द्वारं रुद्ध्वा तदा लोका हन्युः शस्त्रेण मां रुषा ॥
शिवालयात्तु निष्काश्य जहुस्ते बहिरेव माम् ॥ ५८ ॥

लब्धं प्रदक्षिणापुण्यं शिवपूजा मयेक्षिता ॥
तेन पुण्येन राजाऽत्र जातोऽस्मि प्राणवल्लभे ॥ ५९ ॥

न लब्धं भोक्तुमुच्छिष्टमुपोष्यासन्व्रतात्यजम् ॥
श्वयोन्यामपि मे पूर्वं पुण्यं लब्धमिदं प्रिये ॥ ६० ॥

प्रदक्षिणं गत्वा विलीय स्थितं मां हन्तुं तेऽनुयाताः। उच्छिष्टमुपलभ्येदित्याशयाऽग्रतो गच्छन् त्रिः परिक्रम्य शिवमद्राक्षम्। मुदा शिवार्चनं च। द्वारं बध्वा ते मां जघ्नुर्बहिर्जहुश्च। प्रदक्षिणापुण्येन शिवपूजाविलोकनाच्च भक्षणालब्ध्योपवासाच्च राजाऽभवं। श्वजन्मन्यपीदृक्पुण्यं लब्धं। सोज्वलाः

१ मार्गः.

लब्धं पुण्यं तथाऽन्यच्च दीपमालाऽपि सोज्वला ॥
विलोकिता मया त्यक्ताः प्राणा द्वारे शिवस्य हि ।६१।
शिवरात्रेस्तु माहात्म्यात्तत्पुण्याच्चाभवं नृपः ॥
ज्ञानवांश्चाथ वक्ष्ये ते दुराचारस्य कारणम् ॥ ६२ ॥
शुनः प्रकृतितो नैव भक्ष्याभक्ष्यविचारणा ॥
स्त्रीलम्पटत्वं च ततः पूर्वप्रकृतितो[1] मम ॥ ६३ ॥
इति पत्युर्वचः श्रुत्वा राज्ञी पप्रच्छ सा पुनः ॥
स्वामिन्विस्तरतः प्रोक्तं भवतः पूर्वजन्म मे ॥ ६४ ॥
त्वं सर्वज्ञोऽसि शवोसि प्राणेश्वर कृपां कुरु ॥
ममापि पूर्वजन्म त्वं कथयेति पदेऽग्रहीत् ॥ ६५ ॥
राजाऽवदच्छृणुष्वाऽर्ये पुराऽऽसीस्त्वं कपोतिका ॥
गतास्युदरपूर्त्यर्थमेकस्मिन्दिवसे वनम् ॥ ६६ ॥
तत्राप्तं मांसकवलं चंच्वा धृत्वा खे[2]मार्गतः ॥
गच्छन्तीं त्वां विलोक्याप्तां[3] चिल्ली त्वां हन्तुमुद्यता ।६७।

दीपमालाश्च वीक्ष्य शिवरात्र्यां शिवद्वारि प्राणास्त्यक्ताः ॥ ९२-६१ ॥
तेन ज्ञानी राजाऽभवं। दुराचरणकारणं तु शुनः प्रकृतितो नैव भक्ष्याभक्ष्यादिविचारणा स्त्रीलम्पटत्वं च। जीवो हि पूर्वसंस्कारानुसारीति श्रुत्वा राज्ञी प्राह। भवतः पूर्वजन्मोक्तं। त्वं सर्वज्ञः शैवोऽसि। कृपां कृत्वा ममापि पर्वजन्म कथयेति पदेग्रहीत्। राजाऽऽह। शृणु। पुरा त्वं कपोती आसीः। कदाचिदुदरपूर्त्यर्थं वने प्राप्तं मांसग्रासं चंच्वा धृत्वा गच्छन्तीं

१ पूर्वजन्मसंस्कारतः २ आकाश ३ प्राप्ता.

चिल्ली त्वामन्वधावत्सा कवलं हर्तुमुद्यता ॥
त्वं गताऽसि महारण्यं वेगात्प्राणरिरक्षया ॥ ६८ ॥

चिल्लीं वीक्ष्यानुगच्छन्तीं भीतभीता त्वमागता ॥
श्रीशैलशिखरं रम्यं यत्रास्ते मल्लिकार्जुनः ॥ ६९ ॥

सहैव चिल्ली चायाता भ्रमन्ती त्वं प्रदक्षिणम् ॥
देवालयं समन्ताच्च श्रान्ता जाताऽसि वल्लभे ॥ ७० ॥

श्रांतां कण्ठगतप्राणां दूराद्वेगेन चागमात् ॥
शिखरस्थां बलाच्चिचल्ली त्वां जघानामिषेच्छया ॥ ७१ ॥

मांसं ग्रासं गृहीत्वा सा गता त्वं पञ्चतामिता ॥
प्रदक्षिणापुण्यवशाज्जाताऽसि त्वं नृपाङ्गना ॥ ७२ ॥

इत्युक्ता सा पुनः प्राह त्वं शैवोऽसि त्वदाज्ञया ॥
इतः परं करिष्यामि श्रद्धाभक्त्या शिवार्चनम् ॥ ७३ ॥

इतोऽग्रतः क्व यास्यामि भवानपि तथैव च ॥
तत्सर्वं भावि राजेन्द्र मह्यं कथय सुव्रत ॥ ७४ ॥

त्वां दृष्ट्वा कवलं हर्तुं चिल्ली अन्वधावत्। त्वां प्राणरिरक्षया भिया श्रीशैले मल्लिकार्जुनालयशिखरे प्रदक्षिणं भ्रमन्तीं ॥ ६२-७० ॥ श्रान्तां कंठगतप्राणां हत्वा मांसं गृहीत्वा गता। ततस्त्वं प्रदक्षिणापुण्याद्राजमहिषी जाताऽसि ॥ ७१-७२ ॥ राज्ञी आह। अहं त्वदाज्ञया भक्त्या शिवार्चनं करिष्ये। इतोऽग्रतो भवतो मम च क्व जन्म भविष्यति तत्कथय। राजा

राजा प्राह शृणुष्वार्ये सिन्धुदेशेऽग्रतो मम ॥
जन्म राजकुले नूनं भविष्यति वराङ्गने ॥ ७५ ॥

त्वं चापि सञ्जये देशे राजपुत्री भविष्यसि ॥
ममैव भार्या भविता पवित्रा त्वं च सुव्रता ॥ ७६ ॥

तृतीये जन्मनि प्राज्ञि सौराष्ट्रेऽहं नृपोत्तमः ॥
भविष्यामि तदा मत्स्त्री त्वं कलिङ्गकुलोद्भवा ॥ ७७ ॥

गन्धारदेशराजोऽहं तुर्ये जन्मनि भामिनि ॥
त्वं मागधकुलोत्पन्ना भविष्यसि मदङ्गना ॥ ७८ ॥

अवन्तिदेशराजोऽहं पञ्चमे जन्मनि प्रिये ॥
दशार्णराजसम्भूता दयिता त्वं च मे मता ॥ ७९ ॥

भविष्यामि ततोऽनन्तः षष्ठे जन्मनि विश्रुतः ॥
ययातिवंशसम्भूता कान्ता त्वं दयिता मम ॥ ८० ॥

पाण्ड्यदेशीयराजोऽहं सप्तमे जन्मनि प्रिये ॥
रूपलावण्यसम्पन्नो भविष्यामि तदोत्तमः ॥ ८१ ॥

आह। सिन्धुदेशे राजकुले भविष्यामि त्वं च संजयदेशराजपुत्री भूत्वा सुव्रता मद्भार्या भविष्यसि ॥ ७३-७६ ॥ तृतीये जन्मनि सौराष्ट्रराजोऽहं त्वं कलिङ्गजा मत्पत्नी च। चतुर्थे गन्धारजोऽहं मागधी त्वं मे पत्नी च। पञ्चमेऽवंतिराजोऽहं दशार्णजा त्वं मत्पत्नी च ॥ ७७-७९ ॥ षष्ठेऽनंताख्यो राजाऽहं त्वं ययातिकुलजा मे कान्ता च। सप्तमे मदनोपमः पांड्यदेश-

प्रसन्नवदनो ज्ञानसम्पन्नो मदनोपमः ॥
पञ्चवर्ण इति ख्यातो दीप्तिमान्भास्करोपमः ॥ ८२ ॥

त्वं वैदर्भकुले कान्ते चन्द्रकान्तिर्भविष्यसि ॥
स्वर्णमूर्त्युपमा रामा रूपसौन्दर्यशेवधिः ॥ ८३ ॥

सुदती सुमतिः ख्याता सती त्वाऽहं स्वयंवरे ॥
वरिष्यामि स्वधर्मेण दमयन्तीं नलो यथा ॥ ८४ ॥

चिरं राज्यं करिष्यामि प्रवीणो वेदशास्त्रयोः ॥
यज्ञैर्यक्ष्यामि यज्ञेशं[1] विजित्वा च चतुर्दिशः ॥ ८५ ॥

देवद्विजार्चनरतो दानधर्मपरायणः ॥
एवं वार्धक्यपर्यन्तं कृत्वा दत्वा सुताय गाम्[2] ॥ ८६ ॥

चातुर्थाश्रममासाद्य समेत्यागस्त्यसद्गुरुम् ॥
ब्रह्मज्ञानं ततो लब्ध्वा परोक्षीकृत्य पूरुषम्[3] ॥ ८७ ॥

देहावसाने सम्प्राप्ते वीतोपाधिस्त्वया सह ॥
पुनरावृत्तिरहितां मुक्तिं यास्याम्यहं दिवि[4] ॥ ८८ ॥

राजाऽहं पञ्चवर्णाख्यः त्वां रूपसौंदर्यकान्तां विदर्भजां सुमत्याख्यां साध्वीं नलो दमयन्तीमिव स्वयंवरे वरिष्यामि। वेदशास्त्रज्ञः ख्यातः चिरं राज्यं कृत्वा यज्ञैर्यक्ष्ये। द्विजदेवपरो दानधर्मकर्ताऽहं वार्धक्येऽगस्त्याच्चतुर्थाश्रमदीक्षां प्राप्यात्मानमपरोक्षीकृत्य देहावसाने त्वया सह पुनरावृत्तिरहितां मुक्तिं

१ विष्णुं २ भूमिं ३ आत्मानं ४ द्योतनात्मके स्वरूपेण स्वयंप्रकाशे.

एवमीशार्चनालोकमाहात्म्यमिति भूमिपः ॥
राज्ञीमुक्त्वा तया सार्धं शैलयात्रां चकार सः ॥ ८९ ॥

श्रीगुरुस्तन्तुकं प्राह क्षेत्रमाहात्म्यमीदृशम् ॥
यत्प्रभावात्सपत्नीकः सप्तजन्माभवन्नृपः ॥ ९० ॥

मुक्तिं प्राप्तावुभावन्ते शैलमाहात्म्यमीदृशम् ॥
गुरूपदेशो जातस्ते पूजयेश्वरमादरात् ॥ ९१ ॥

गन्धर्वनगरेऽप्यस्ति यः कल्लेश्वर ईश्वरः ॥
मल्लिकार्जुनतुल्यस्तं पूजय स्थिरचेतसा ॥ ९२ ॥

सङ्गमे सङ्गमेशश्च पूजनीयस्त्वयाऽभयः ॥
सन्देहं मा कुरु स वै मल्लिकार्जुन एव हि ॥ ९३ ॥

तन्तुकः प्राह तं स्वामिन्किमिदं कथयस्यहो ॥
मल्लिकार्जुनपूजार्थं गतस्त्वामेव दृष्टवान् ॥ ९४ ॥

कल्लेशसङ्गमेशादिपूजां कस्माद्ब्रवीषि माम् ॥
सर्वत्र व्यापकोऽस्येकोऽनेकसूत्रप्रवर्तकः ॥ ९५ ॥

यास्ये ॥ ८०-८८ ॥ एवमीशार्चनालोकमाहात्म्यं इत्युक्त्वा राजा पत्न्या सह शैलयात्रां चक्रे। हे तन्तुक ईदृक्क्षेत्रमाहात्म्यं। यतः सप्तजन्मसु राजा भूत्वाऽन्ते मुक्तः। ते गुरूपदेशो जातः। ईशं पूजय। गन्धर्वपुरे मल्लिकार्जुनसमः कल्लेशोऽस्ति। तन्तुक आह। किं वाच्यं। मल्लिकार्जुनस्थाने त्वामेवाद्राक्षं। सर्वव्यापकोऽनेकसूत्रप्रवर्तकस्त्वं कुतोऽन्यपूजां शंससि। श्रीगुरुः सस्मितमाह। नेत्रे निमील्य पादुके धारयेति। ततस्तं क्षणात्सङ्ग-

ततो गुरुः स्मितमुखो धारयित्वा स्वपादुके ॥
तन्तुकं मीलिताक्षं तं क्षणात्सङ्गममानयत् ॥ ९६ ॥

ग्रामस्थास्तत्र तत्पूर्वमदृष्ट्वा श्रीगुरुं परम् ॥
खिन्नाः परस्परं प्रोचुस्त्यक्त्वाऽस्मान्क्व गतो गुरुः ॥९७॥

केऽप्यूचुरधुनाऽत्रैव स्थितो नेति च केचन ॥
सर्वे विरहिता ऊचुः क्व गतो दयितोऽद्य नः ॥ ९८ ॥

इत्युक्त्वा ते ययुर्ग्रामं पश्चाच्छ्रीगुरुरागतः ॥
तन्तुकं प्रेरयद्ग्रामं द्विजानानेतुमञ्जसा ॥ ९९ ॥

स शीघ्रं गच्छतो विप्रानेत्य प्राह गुरूदितम् ॥
क्षौरं कुतः कृतमिति पृष्टः सर्वं न्यवेदयत् ॥ १०० ॥

प्रसादपुष्पं दमनं भूतिं हारान्व्यदर्शयत् ॥
तेऽन्योऽन्यमूचुर्मध्यान्हे तन्तुकः स्वगृहे स्थितः ॥१०१॥

केचिदूचुर्मृषेत्यन्ये प्राहुः सत्यं वदाधुना ॥
तन्तुकः प्राह गुरुणा सह यातोऽस्मि पर्वतम् ॥ २ ॥

ममानयत्। ग्रामस्थाः श्रीगुरुं सङ्गमेऽदृष्ट्वा खिन्ना ऊचुः। गुरुः क्व गत इति ॥ ८९-९८ ॥ ते ग्रामं ययुस्तावच्छ्रीगुरुस्तानानेतुं तन्तुकं प्रेरयत्स च त्वरयाऽऽगत्य तानाव्हयत्। ते तमूचुः कुतः क्षौरं कृतं। स सर्वं निवेद्य प्रसादपुष्पादि सर्वं व्यदर्शयत्। केचिदूचुर्मृषा वक्ति। मध्याह्नेऽयं

मया सार्धं क्षणादेत्य सङ्गमं मां गुरुस्ततः ॥
प्रेरयद्वः समानेतुमद्य तत्रैव तिष्ठति ॥ ३ ॥
केचिदूचुरिदं सत्यं मूर्खा ऊचुर्मृषेति च ॥
ततस्ते शिष्यवर्गेभ्यस्तन्तुकोक्तिं न्यवेदयन् ॥ ४ ॥
ततो विदितवृत्तान्तः शिष्यवर्गो गुरुं ययौ ॥
आनर्चुः शिवरात्र्यां ते श्रीगुरुं नामधारक ॥ ५ ॥
मिथ्येति वक्ति यो लोकः कुम्भीपाकस्ततोऽस्य हि ॥
श्रीशैलायात्रिकाः पश्चात्स्वं स्वं गेहमुपागताः ॥ ६ ॥
तैः सर्वं कथितं ज्ञात्वा विस्मिता अभवन्जनाः ॥
एवं सिद्धोदितं प्रोक्तं गंगाधरभुवा[1] मया ॥ ७ ॥

मुदा सिद्धो बुद्धोऽवददिदमदभ्रं[2]भ्रमहरं
वरं शिष्यं हृष्यत्तदिदमहमेवापि च वदे ॥
मुदे तद्भक्तानां गुरुवरमहत्त्वामृतमिदं
विदं[3] श्रोतृभ्यो यद्वितरति रतिं प्राप्य महति[4] १०८

गृहे दृष्टः । स आह । गुरुणा सह श्रीशैलं गत्वा क्षणादागतोऽस्मि । श्रीगुरुस्तत्रैवाद्य तिष्ठति । व आव्हयति । केचित्सत्यं मेनिरे । मूर्खास्तु मिथ्येति । ततस्ते श्रीगुरुमेत्य शिवरात्र्यां तमानर्चुः । मिथ्येति वक्तुः कुंभीपाक एव । ततः पश्चाद्यात्रिका आगतास्तैः कथितं ज्ञात्वा सर्वे विस्मिताः । एवं सिद्धोक्तं गङ्गाधरज आह ॥ ९९-१०७ ॥ मुदा सिद्धो बुद्धोऽवद० ॥ १०८ ॥ इति चूर्णिकायां चतुश्चत्वारिंशोध्यायः ॥

---

१ पुत्रेण. २ बहु ३ अपरोक्षज्ञानं ४ श्रीगुरौ प्रीतिं.

( इति ) श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्य-
गङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञि-
तमहाराष्ट्रभाषान्वितगुरुचरित्रसमानार्थायां वासु-
देवानन्दसरस्वतीयतिविरचितायां श्रीगुरु-
संहितायां भक्तिकाण्डे
चतुश्चत्वारिंशः ( अध्यायः ) ॥

॥ आदितः श्लोकाः ॥ ५७५७ ॥

॥ इति चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

॥ श्रीगुरुदत्तात्रेयार्पणमस्तु ॥ श्रीगुरुदेवदत्त ॥

---

## ॥ अथ पंचचत्वारिंशोऽध्यायः ॥ ४५ ॥

॥ श्रीगुरुदेवदत्त ॥ ॥ श्रीगणेशाय नमः ॥

नामधारक आहार्य चरितं श्रीगुरोः श्रुतम् ॥
अहो धन्यं वचस्ते यद्ब्रह्म साक्षाद्व्यदर्शयत् ॥ १ ॥

प्रसादात्ते सुधापानं लब्धं मेऽमरदुर्लभम् ॥
अतः कष्टं कुतः शिष्टं लब्धं मेऽभीष्टमिष्टद ॥ २ ॥

तारकस्त्वं मया लब्धो दैन्यं दूरं गतं मम ॥
चरित्रश्रवणाल्लब्धमभीष्टेन समं सुखम् ॥ ३ ॥

सङ्गमे श्रीगुरुस्तस्थाविति प्रोक्तं त्वयाऽनघ ॥
किमग्रतस्ततो जातं चरितं कथयस्व तत् ॥ ४ ॥

सिद्ध ऊचे शृणुष्वार्य वत्स भो नामधारक ॥
पवित्रं चित्रमभवच्चरित्रमपरेऽहनि ॥ ५ ॥

यद्धीरासीद्भ्रमरविलसिता नंदंबोक्त्या कुरुगुपशमधीः ॥
प्राप्येशं द्राक्स शुचिकविरभूद्धुर्वीक्षातोऽक्षयुगमित इह ॥ ४९ ॥

नामधारक आह। गुरुचरित्रं श्रुतं, ते वचो धन्यं, साक्षाद्ब्रह्म व्यदर्शितं। मे देवदुर्लभं सुधापानं लब्धमिष्टं च। कष्टं नष्टं, दैन्यं च। त्वं तारको लब्धः अग्रतश्चरितं कथय। सिद्ध आह। अपरेऽन्हि चित्रं जातं

नन्दिशर्मा द्विजः कश्चित्कुष्ठव्याप्तकलेवरः ॥
तुलजापुरमासाद्य त्र्यब्दं देवीमपूजयत् ॥ ६ ॥

उपोषितस्त्रिवर्षं तां कष्टेनापूजयद्द्विजः ॥
देवी स्वप्नेऽवदद्गच्छ चन्दलापरमेश्वरीम् ॥ ७ ॥

जगदम्बाज्ञया प्राप्य चन्दलां परमेश्वरीम् ॥
मन्दीभूतमतिर्नन्दी सप्तमासमुपोषितः ॥ ८ ॥

चक्रे कष्टात्पुरश्चर्यां स्वप्ने देवी तमाह च ॥
गन्धर्वनगरं गच्छ सत्वरं त्वं मदाज्ञया ॥ ९ ॥

अस्ति तत्र त्रिमूर्त्यात्मा श्रीनृसिंहसरस्वती ॥
भिक्षुवेषधरो दूरो दुर्धियां त्वां पुनाति सः ॥ १० ॥

प्रबुद्धः सोऽब्रवीद्देवीमहहा कष्टमेव मे ॥
दत्तं षण्मासपर्यन्तं कथं नोक्तमिदं पुरा ॥ ११ ॥

अनुज्ञया जगन्मातुः प्राप्तोऽहं तव सन्निधिम् ॥
शक्तिभूतां देवतां त्वां मत्वा भक्त्याऽऽगतोऽस्म्यहम् १२

शृणु ॥ ९ ॥ नंदिशर्मा कुष्ठी तुलजापुरे त्र्यब्दमुपोष्य देवीं कष्टेनापूजयत्स्वप्ने साऽऽह । चन्दलापरमेश्वरीं गच्छेति । तथेति स गत्वा सप्तमासमुपोषितस्तां पुरश्चरणेनानर्च । तयोक्तं गन्धर्वपुरस्थं भिक्षुवेषं त्रिमूर्तिं नृसिंहसरस्वतीं गच्छ । प्रबुद्धः स आह । किमर्थं षण्मासं कष्टं दत्तं ।

देवत्वमद्य विज्ञातं यतो मां देवता सती ॥
भवती प्रेरयति पुंदर्शनार्थमहो विधिः ॥ १३ ॥

जगदम्बेति चात्मानममर्त्यें यदि मन्यसे ॥
कथं मर्त्यं चरेत्यात्थ धन्यं दैवं ममापि च ॥ १४ ॥

मर्त्यं गच्छेति वक्तुं ते कथं लज्जाऽपि नैव भोः ॥
दैवी शक्तिरहो ज्ञाता सप्तमासानुपोष्य च ॥ १५ ॥

पूर्वमेवेदमुक्तं चेदियत्कष्टं कुतो मम ॥
मदाशा विहता देवि त्वयेत्थं पर्यदेवयत् ॥ १६ ॥

एवं नानाप्रकारेण दुःखं कृत्वा स च द्विजः ॥
पुरश्चर्यां पुनरपि करिष्य इति चाब्रवीत् ॥ १७ ॥

यद्यारोग्यं भवेन्नैव तर्हि प्राणान्ददाम्यहम् ॥
इत्युक्त्वाऽतीव निर्विण्णश्चक्रे प्रायोपवेशनम् ॥ १८ ॥

देवी पुनरपि स्वप्ने तथैव प्राह तं द्विज ॥
भक्तांश्च कथयामास द्विजो निष्काश्य इत्यपि ॥ १९ ॥

पूर्वं कथं नोक्तं। देव्याज्ञया त्वामागमं। ज्ञातं देवत्वं। नृदर्शनाय प्रेरयसि। अहो दैवं त्वं जगदम्बाऽपि मर्त्यं गच्छेति वक्तुं न लज्जसे। सप्तमासानुपोष्य दैवी शक्तिर्ज्ञाता ॥ ६-१५ ॥ पूर्वमुक्तं चेत्कुत ईदृक्कष्टं एवं दुःखितः पुनः पुरश्चर्यां करिष्ये। आरोग्यं न चेत्प्राणांस्त्यक्ष्य इति प्रायोपविष्टं तत्स्वप्ने देवी प्राह। त्वमितो गच्छेति। अयं निष्काश्य इति भक्तान-

१ नरदर्शनार्थं २ ब्रवीषि.

ऊचुर्भक्ताः समस्तास्तमद्य स्वप्नो हि नोऽभवत् ॥
मा तिरस्कुरु देव्याज्ञामाज्ञया त्वरितं व्रज ॥ २० ॥

नो चेदितो हापयाम इत्युक्तः स द्विजोऽम्बिकाम् ॥
अभ्यर्च्य पारणां कृत्वा नत्वा देवीं स निर्गतः ॥२१॥

गन्धर्वपुरमागत्य मठे पप्रच्छ सेवकान् ॥
यतिः क्वेति च ते प्राहुः सङ्गमेऽस्ति यतीश्वरः ॥२२॥

शिवरात्र्युपवासोऽभूद्गतेऽह्नि श्रीगुरुः प्रभुः ॥
आगमिष्यत्यतः शीघ्रं पारणायै न संशयः ॥ २३ ॥

अत्रान्तरे स भगवान्साक्षाच्छ्रीगुरुरागतः ॥
ग्रामलोका द्विजं प्राहुर्दूरे तिष्ठ न सम्मुखे ॥ २४ ॥

इत्युक्तः स स्थितो दूरे श्रीगुरुः प्रययौ मठम् ॥
भक्ताः प्राहुर्गुरुं विप्रः कश्चनायमुपागतः ॥ २५ ॥

श्वेतकुष्ठं द्विजस्यास्य सर्वांगेष्वेव दृश्यते ॥
स भवद्दर्शनार्थं हि प्राप्तोऽस्मीति वदत्यपि ॥ २६ ॥

प्याह। ते तमूचुर्देव्याज्ञयाऽऽशु गच्छ। नोचेद्बहिर्निष्कासयाम इत्युक्तः स देवीमभ्यर्च्य पारणां कृत्वा ततो गन्धर्वपुरे मठमेत्य क्व यतिरित्यपृच्छत्। लोका ऊचुः। गतेऽन्हि शिवरात्र्यां मठे उपोषितोऽद्याशु सङ्गमाच्छ्रीगुरुरागमिष्यति अत्रान्तरे भगवान्प्राप तदा लोकः कुष्ठिनं दूरीचक्रे। शिष्याः श्रीगुरुमूचुः ॥१६-२५॥ कुष्ठव्याप्तसर्वांगः कश्चिद्दर्शनार्थमागतः।

इति शिष्यवचः श्रुत्वा श्रीगुरुः प्राह वेद्मि तम् ॥
आधाय संशयं चित्ते प्राप्त एष न संशयः ॥ २७ ॥

मठे तमाह्वयत चेत्युक्ता भक्तास्त्वरान्विताः ॥
द्विजं तमाह्वयामासुराहूतः सोऽपि चागमत् ॥ २८ ॥

विलोक्य श्रीगुरुं दूरान्नन्दीविप्रः पदे पदे ॥
साष्टाङ्गं प्रणिपत्यैव मुदा गुरुमुपागमत् ॥ २९ ॥

तं प्राह श्रीगुरुः पूर्वं देवतासन्निधिं गतः ॥
कुतः पुनर्मनुष्यं मां सन्देहादागतोऽसि रे ॥ ३० ॥

ततः स हृद्गतं ज्ञातमनेनात्मा ततोऽस्त्ययम् ॥
इति मत्वा क्षमस्वेति साष्टाङ्गं प्रणनाम सः ॥ ३१ ॥

प्राह स्वामिन्तमोऽन्धोऽहं शुद्धोऽहं स्वामिदर्शनात् ॥
त्वां परं ब्रह्म नो जानेऽहं मन्दोऽज्ञानवेष्टितः ॥ ३२ ॥

साक्षात्परब्रह्मवस्तु त्वां न वेद्मीश तामसः ॥
अद्य मे सुदिनं धन्यं दर्शनात्पावनोऽस्मि ते ॥ ३३ ॥

श्रीगुरुराह । संशयं मनसि धृत्वाऽऽगतस्तमाह्वयत । स आहूतो दूराद्गुरुं वीक्ष्य पदे पदे साष्टाङ्गं प्रणिपतन्गुरुं प्राप । श्रीगुरुस्तमाह । पूर्वं देवसन्निधिं गत्वा नरं ससंशयः कुत आगतोऽसि । इत्युक्तः स हृद्गतमनेन ज्ञातं आत्माऽयमिति निश्चित्य क्षमस्वेति साष्टाङ्गं नत्वाऽऽह । स्वामिन्तमोऽधे

पापकर्माऽस्मि पापात्मा मूढोऽज्ञः पापसम्भवः ॥
दैवयोगेन शरणं प्रपद्ये भगवत्पदम् ॥ ३४ ॥

त्वं हि भक्तजनाधारः शरणागतरक्षणः ॥
प्रसृता बिरुदालिस्ते श्रीनृसिंहसरस्वति ॥ ३५ ॥

दुष्कर्माद्य गतं सर्वं परंब्रह्मपदं त्विदम् ॥
दृष्टं मनोरथश्चाऽप्तः[1] कृपया ते यतीश्वर ॥ ३६ ॥

नृदेहेनावतीर्णोऽसि त्वं भक्तजनकामधुक् ॥
कस्ते वेद परम्पारं त्रिमूर्तिस्त्वं न संशयः ॥ ३७ ॥

यथा गङ्गाऽत्र सगरानुद्धर्तुं भूमिमागता ॥
तथा त्वं सेवकान्त्रातुमवतीर्णोऽसि भूतले ॥ ३८ ॥

औपपत्त्याद्यथा[2]ऽहल्या गत्वा प्रस्तरतामपि[3] ॥
दिव्याङ्गाऽभूत्पदस्पर्शादहं स्वामिन्तथाऽभवम् ॥३९॥

ऽहं। ते दृष्ट्या पूतोऽस्मि। पापकर्मा पापात्मा मूढोऽहमज्ञानवेष्टितः साक्षात्परब्रह्म त्वां न जाने। अद्य मे सुदिनं सर्वं दुष्कर्माद्य गतं। त्वं भक्ताधारः शरणागतत्राता ॥२६-३५॥ भक्तकामधुक्त्वं नृरूपेणावतीर्णोऽसि। त्वं त्रिमूर्तिः कस्ते पारं वेद। अद्य मनोरथः पूर्णः। सगरोद्धाराय गङ्गेव नस्त्रातुं भुव्यवतीर्णोऽसि। औपपत्त्यादहल्या पाषाणत्वं गताऽपि

१ प्राप्तः २ जारकर्मतः ३ पाषाणताम्.

व्रतस्नातस्त्वहं भार्यामुद्वहे तत्प्रभृत्यदः ॥
व्याप्तं कुष्ठेन गात्रं मे भार्या पितृगृहं गता ॥ ४० ॥

ऊचतुः पितरौ चापि दूरं गच्छेति मां प्रभो ॥
निर्गतोऽस्मि ततो गेहं विहायातीव दुःखितः ॥ ४१ ॥

गत्वाऽऽलयं जगन्मातुरुपवासा मया कृताः ॥
तयाऽप्युक्तं न ते पापविनाशोऽत्र भविष्यति ॥ ४२ ॥

इतो मदाज्ञया गच्छ द्विज त्वं चन्दलेश्वरीम् ॥
भवेद्रोगनिवृत्तिस्ते तत्रापापो भविष्यसि ॥ ४३ ॥

तत एत्यापि तत्रैव मया कष्टं कृतं बहु ॥
साऽपि ते निकटं गन्तुमादिदेश कृपानिधे ॥ ४४ ॥

हीनं ममेदृशं दैवं ज्ञात्वाऽपि मम निश्चयम् ॥
बहिर्हेयोऽयमित्येवं देवता साऽपि वक्त्यहो ॥ ४५ ॥

अबीभत्संत देवाश्चेत्किं पुनर्मानवा अहो ॥
क्वायं नरीनर्ति ततस्त्वामेव शरणं गतः ॥ ४६ ॥

रामपदस्पर्शाद्यथा पूता तथाऽहमभवं । उद्वाहोर्ध्वं कुष्ठेन व्याप्तं मां त्यक्त्वा भार्या पितृगृहं गता । दूरं गच्छेति पितृभ्यामपि त्यक्तोऽहं देवीं गत्वोपवासानकरवं । तयाऽप्यत्र तेऽघनाशो न, चन्दलेश्वरीं गच्छ, ते रोगनिवृत्तिर्भवेदित्युक्तोऽहं तत्रागत्य बहुकष्टमकरवं । बहिर्हेयोऽयमिति साऽपि देवी वक्ति ॥३६-४५॥ देवा अबीभत्सन्त चेत्क्वायं नरीनर्ति ।

पापीदृशोऽस्मि किं कार्यमङ्गहीनस्य कुष्ठिनः ॥
न वीक्षन्ति मुखं केऽपि ततो मे मरणं वरम् ॥ ४७ ॥

अद्यैका प्रार्थनेयं मे निष्कृतिर्वा न वा भवेत् ॥
शीघ्रं कथय नैवाशापाशैर्बद्ध्वा निधापय ॥ ४८ ॥

नापेक्षाऽस्य शरीरस्य प्राणांस्त्यक्षामि तेऽग्रतः ॥
त्वां प्राप्तोस्म्यार्तमातेति यथेच्छसि तथा कुरु ॥ ४९ ॥

इति श्रुत्वा स करुणं प्रहसन्श्रीगुरुस्तदा ॥
सोमनाथं समाहूय प्राहैनं सङ्गमं नय ॥ ५० ॥

तस्मिन्तीर्थे स्नापयामुं सम्यक्सङ्कल्पपूर्वकम् ॥
अभ्यर्च्याश्वत्थं वस्त्रं च धृतं दूरे जहात्वसौ ॥ ५१ ॥

प्रदायास्मै नवं वस्त्रं शीघ्रमेतं समानय ॥
इत्याज्ञप्तः सोमनाथस्तमादाय ययौ नदीम् ॥ ५२ ॥

स्नानमात्रेण तद्देहो विशुद्धोऽभूत्स पिप्पलम् ॥
प्रदक्षिणीकृत्य विप्रः सुवर्णाङ्गोऽभवत्क्षणात् ॥ ५३ ॥

कुष्ठिनो मे मुखमपि नेक्षंतेऽतो मरणं वरं। ततस्त्वां शरणं गतोऽस्मि। मे निष्कृतिर्भवेन्न वा। शीघ्रं वद। आशया बध्वा मा स्थापय, न मे देहापेक्षा, तेऽग्रतः प्राणांस्त्यक्ष्ये, यथेच्छसि तथा कुरु; इत्थं सकरुणं श्रुत्वा हसन्श्रीगुरुः सोमनाथमाह। एनं सङ्गमं नीत्वा, सङ्कल्पपूर्वकं स्नापयित्वाऽश्वत्थमर्चयित्वा धृतवस्त्राणि हापयित्वा, नवीनं धारयित्वाऽऽश्वानयेत्युक्तः स तथाऽकारयत्। स्नानमात्रात्तद्देहः शुद्धोऽभून्नदी अश्वत्थं

परिधायार्पितं वस्त्रं जीर्णं तत्याज दूरतः ॥
यत्र त्यक्तं च सा भूमिरभवत्क्षारमृत्तिका ॥ ५४ ॥

सोमनाथस्तमादाय मठमेत्य गुरोः पदे ॥
उपानयत्तदा लोका अभवन्बहु विस्मिताः ॥ ५५ ॥

नन्दिशर्मा द्विजस्तुष्टो हर्षेण महताऽऽप्लुतः ॥
तत्पादयोर्लोलदङ्गो धन्योऽस्मीत्यब्रवीन्मुदा ॥ ५६ ॥

श्रीगुरुः प्राह ते कामः सिद्धो जातो न किं वद ॥
सम्यक्सर्वाणि चाङ्गानि विलोक्य द्विज सत्वरम् ॥५७॥

इत्युक्तः स ददर्शाङ्गं कुष्ठं शिष्टं तु जङ्घयोः ॥
दृष्ट्वा हृष्टोऽप्यहृष्टोऽभूद्भीतः स्वामिनमब्रवीत् ॥५८॥

त्वत्कृपादृष्टितः सर्वं गतं चापीयदेव तु ॥
कुतः शिष्टं न जानामि परमात्मन्दयस्व मे ॥ ५९ ॥

श्रीगुरुः प्राह मर्त्यः किं करिष्यति ममेति यः ॥
संशयस्तेऽभवत्तेन कुष्ठं शिष्टमिदं खलु ॥ ६० ॥

प्रदक्षिणीकृत्य सुवर्णाङ्गो भूत्वा नवं वस्त्रं परिधाय, जीर्णं यत्र जहौ सा भूः क्षारमृत्तिकाऽभूत् ॥४६-५४॥ सोमनाथस्तमानीय गुरुपादयोरधात् । सर्वे विस्मिताः । धन्योऽस्मीति हृष्टं हर्षाप्लुतं नन्दिनं ते कामः सिद्धो न वा, सर्वाङ्गं विलोक्य वदेति गुरूक्तः स जंघयोरेव शिष्टं कुष्ठं दृष्ट्वा भीत आह । ते कृपादृष्ट्येदं कुतः शिष्टं न जाने । परमात्मन्दयस्व ।

अत्रोपायं वदिष्यामि कवित्वेन नवेन मे ॥
स्तुतिं कुरु सदा तेन तव शुद्धिर्भविष्यति ॥ ६१ ॥

नन्दिनामाऽवदत्स्वामिन्भगवन्मन्दधीरहम् ॥
न क्षमोऽपि लिपिं ज्ञातुं काव्यवार्ता कुतः पुनः ॥६२॥

कवित्वरीतिं नो जाने काव्यव्युत्पत्तिवर्जितः ॥
कुत एतद्भवान्वक्तीत्युक्त्वा तच्चरणेऽग्रहीत् ॥ ६३ ॥

गुरुर्विदारय मुखमित्युक्त्वाऽऽस्ये विदारिते ॥
जिह्वायां भस्म चिक्षेप सोऽभूज्ज्ञानी तदैव हि ॥६४॥

पदयोः शिर आधाय स्थित्वा तुष्टाव सद्गुरुम् ॥
स्वामिन्नज्ञतया नैव तव सेवा मया कृता ॥ ६५ ॥

भवसिन्धौ निमग्नोऽहं मायाजालसमावृतः ॥
प्रियं त्वां न स्मरे पादौ तारकौ विस्मृतौ मया ॥६६॥

श्रीगुरुराह मर्त्यः किं करिष्यतीति संशयादवशिष्टं अत्रोपायं शृणु। त्वं कवित्वेन मे स्तुतिं कुरु। ते शुद्धिर्भविष्यति। स आह। मंदधीरहं न जाने काव्यव्युत्पत्तिं लिपिमपि न जाने इति पदे दधौ। तदा गुरुस्तज्जिव्हायां भस्म चिक्षेप। स ज्ञानी भूत्वा ॥५९-६४॥ पदोः शिरो निधाय गुरुं तुष्टाव। स्वामिन्नज्ञानात्ते सेवा न कृता। भवसिन्धौ मग्नो मायाजालवेष्टितोऽहं ते पदे न स्मरामि। भवचक्रे भ्रमन्नानायोनिषु संसर-

भ्रमन्संसारचक्रेऽस्मिन्नानायोनिषु संसरन् ॥
भुञ्जे कर्म तदा पादौ तारकौ विस्मृतौ मया ॥ ६७ ॥

स्थावराद्युद्भिदस्वेदजाण्डजेषु यदाऽभवम् ॥
गवादौ च तदा पादौ तारकौ विस्मृतौ मया ॥ ६८ ॥

जारजेष्वपि मर्त्येषु यदा शूद्रादिजातिषु ॥
अभवं तर्ह्यपि पदौ तारकौ विस्मृतौ मया ॥ ६९ ॥

जातिष्वपि च सर्वासु श्रेष्ठोऽपि ब्राह्मणो गुरो ॥
मौढ्यान्न सेवे ते पादौ तारकौ विस्मृतौ मया ॥ ७० ॥

गर्भवासेऽप्यहो कष्टं मातू रक्तं पितुश्च तत् ॥
रेत एकीभूय कुक्षौ पञ्चाहाद्बुद्बुदोऽभवत् ॥ ७१ ॥

पक्षेण सुस्थिरा पेशी भूत्वैकरसगो यदा ॥
तत्त्वहीनो मातृकुक्षौ संस्थितो निरयोपमे ॥ ७२ ॥

पिण्डाकारश्च मासेन शीर्षादिश्च द्विमासतः ॥
तृतीये सावयवता तुर्ये द्वाराणि मे नव ॥ ७३ ॥

न्कर्म भुंजे। स्थावरस्वेदजाण्डजेषु ततो जारजेषु शूद्रादिजातिषु च भ्रमतो मे क्व ते स्मृतिः। श्रेष्ठब्राह्मणजातिष्वपि तथा। पितू रेतो मातू रक्तं चैकीभूय गर्भवासे पञ्चाहे बुद्बुदः, पक्षेण पेशी, मासेन पिण्डो, द्वितीये मासि शीर्षादि, तृतीये सावयवता, तुर्ये छिद्राणि, पञ्चभूतान्येकीभूयैवं पञ्चमे

१ पक्षी.

भूम्यम्बुतेजोवाताश्राण्येकीभूतानि पञ्चमे ॥
पञ्चमे चागताः प्राणास्तदा ते स्मरणं कुतः ॥७४॥

पञ्चमे त्वग्रोमनखाः श्वासाः षष्ठेऽथ सप्तमे ॥
इंद्रियाण्यष्टमे चित्त्वं तदा ते स्मरणं कुतः ॥ ७५ ॥

कष्टान्मयोषिता मासा नवमा निरयाधिके ॥
हा कष्टं जननीकुक्षौ तदा ते स्मरणं कुतः ॥ ७६ ॥

क्षारोष्णादि यदाऽश्नाति माता तर्हि सुदुःसहा ॥
वेदनाऽतीव मे दुःखं तदा ते स्मरणं कुतः ॥ ७७ ॥

माताऽश्नाति यथेष्टं मे तेनातीव व्यथाऽभवत् ॥
मातुर्गर्भे सुकष्टस्य तदा ते स्मरणं कुतः ॥ ७८ ॥

जरायुवेष्टितो यर्हि शकुन्त इव पञ्जरे ॥
तदा न दृष्टौ ते पादौ तदा ते स्मरणं कुतः ॥ ७९ ॥

कीटवत्पतितो योनिद्वारा कष्टेन यर्ह्यहम् ॥
शतायुः शीर्ष्णि लिखितमर्धं निशि वृथा गतम् ॥८०॥

प्राणावेशः ॥६९-७४॥ त्वग्रोमनखश्वासाः षष्टे, सप्तम इन्द्रियाणि, अष्टमे चित्त्वं। एवं निरयोपमे मातृकुक्षौ कष्टं दृष्टं। तदा क्व ते स्मृतिः। यथेष्टं क्षारोष्णादि माताऽश्नाति तदाऽतीव वेदना तदा क्व ते स्मरणं। जरायुवेष्टितः पञ्जरे पक्षीव कष्टान्नवमासानुषित्वा मातृयोनिद्वारा कष्टाद्बहिः पतितस्य मे शीर्ष्णि शतायुर्लिखितं, तत्रार्धं निशि वृथा गतं, शिष्टं बाल्य-

बाल्ययौवनवृद्धत्वैर्भागाः शेषायुषस्त्रयः ॥
पराधीनतया तेऽपि व्यर्था जाता न संशयः ॥ ८१ ॥

दृष्टं मे शैशवे कष्टं मलमूत्रविदूषिते ॥
पर्यङ्के मे स्थितिर्नित्यं महाकष्टं हि तद्गुरो ॥ ८२ ॥

बाल्ये भवति यत्कष्टं दुःखं वाचोऽप्यगोचरम् ॥
यत्स्मृत्वाऽतीव दुःखं मे गुरुनाथ भवत्यहो ॥ ८३ ॥

शयने मलमूत्राक्ते वासो मम निरन्तरम् ॥
अज्ञानात्तु स्वयं स्वस्य विष्ठाभक्षणमेव मे ॥ ८४ ॥

यदा जठरपीडाऽभूद्रुदन्तं मां तदैव तु ॥
स्तन्यं दातुं समाजन्हे माता कष्टमजानती ॥ ८५ ॥

यदाऽभवं क्षुधाक्रान्तो रुदते मे तदा प्रसूः ॥
मुखेऽङ्गुलिं निवेश्यादाद्बलान्निम्बादि चौषधम् ॥८६॥

अज्ञात्वा क्षुधितं माता दोलायां मां निधाय च ॥
स्वापं कुर्विति वक्ति स्म नार्तिं वेत्ति स्म सद्गुते ॥८७॥

यौवनवार्धक्यैः पराधीनतया च। मलमूत्रदूषिते पर्यंके बाल्ये यत्कष्टं तदवाच्यं। तत्र स्वयं स्वविष्ठाभक्षणं। मातोदरपीडामज्ञात्वा स्तन्यमदात् ॥७९-८४॥ क्षुधाक्रांतोऽभवं तदा बलादौषधमपाययत्। क्षुधितमज्ञात्वा दोलायां निधाय स्वपेत्याह। आर्तिं न वेद। रुदतो मुखे कांजिकं सिक्त्वा रक्षां बबन्ध। क्षुधं न वेद। पर्यंके वृश्चिकेण दष्टमज्ञात्वा दोलां चालयति

---

१ दुग्धं दातुमारेभे.

अहो रुदत्ययमिति मुखे सिञ्चति काञ्जिकम् ॥
रक्षां बध्नाति मन्त्रेण क्षुधं वेत्ति न च कचित् ॥८८॥

पर्यङ्के वृश्चिकेणापि दष्टे कष्टेन बालके ॥
रुदतीश तमज्ञात्वा दोलां चालयति प्रभो ॥ ८९ ॥

शनैस्तिष्ठेति मा शोचीरित्युक्त्वा लालयत्यहो ॥
पाययत्यपि दुग्धं च विषपीडां न वेत्त्यहो ॥ ९० ॥

स्तन्यं न पीतं दुःखाच्चेत्पुनर्वृश्चिकसंयुते ॥
शयने स्थापयत्यर्भं प्राणान्तं कष्टमप्यतः ॥ ९१ ॥

माता क्षारादि चाश्नाति स्तन्यं दुष्टं ददाति च ॥
अम्लादिजन्यदुग्धेन कासः श्वासश्च सर्वदा ॥ ९२ ॥

ददाति नानौषधानि तेनातीवाक्षिवेदना ॥
नेत्रेऽपि चाञ्जनादीनि प्रक्षिपत्याक्षिदोषकृत् ॥ ९३ ॥

एवं बाल्येऽतीव कष्टं दृष्टमज्ञानसम्भवम् ॥
पराधीनतयाऽप्यग्रे क्रीडादौ चायुषःक्षयः ॥ ९४ ॥

तूष्णीं तिष्ठेति लालयित्वा दत्तं स्तन्यमपि दुःखेन न पीतमज्ञात्वा पुनः सवृश्चिकदोलायां शाययित्वा विषार्तिं न वेद। माता क्षाराम्लाद्यश्नाति, तद्दुष्टस्तन्यपानाच्छ्वासादिपीडा, तामज्ञात्वौषधं ददाति, तेन नेत्रपीडा ततोऽञ्जनादिलेपनादतीव कष्टं। एवं बाल्येऽज्ञानात्पराधीनतयाऽऽयुःक्षयः। ततः क्रीडादिना च परतः ॥८९-९४॥ तारुण्ये कामपीडया पतङ्गोऽ-

तारुण्ये तु ततः प्राप्ते मदनेनातिपीडितः ॥
पतङ्गो ज्योतिषीवाहं पतितोऽस्म्यबलानले[1] ॥ ९५ ॥

समस्ता निन्दिता मौढ्यान्न ज्ञातौ पितरौ गुरुः ॥
देवमायां स्त्रियं प्रेक्ष्य तद्भावैरजितेन्द्रियः ॥ ९६ ॥

भोगोत्सुकः खलोऽज्ञातकार्याकार्यो दुरध्वगः[2] ॥
कांक्षे परस्त्रियं नित्यं न विचार्य कुलादिकम् ॥ ९७ ॥

निन्दिता ब्राह्मणा वृद्धा वृद्धसेवाऽपि नो कृता ॥
मत्तस्तारुण्यतो नैव स्मरामि चरणं तव ॥ ९८ ॥

मांसाशया यथा मत्स्यो म्रियतेऽयं[3] तथैव च ॥
मर्तुं भूत्वेन्द्रियाधीनोऽभवं कामार्त उन्मुखः ॥ ९९ ॥

नानावर्णस्त्रियो भुक्ताः परद्रव्यं हृतं बलात् ॥
निन्दिताः साधवोऽग्र्याश्च[4] नैव दृष्टश्च कश्चन ॥१००॥

म्नाविव वनितानले आयुःक्षयः। पितरौ गुरुं च तिरस्कृत्य, देवमायां स्त्रियं दृष्ट्वा तद्भावैरवशो भोगबुद्ध्या कार्याकार्येऽज्ञात्वा कुलाद्यविचार्य परस्त्रियं कांक्षे। सेवामकृत्वा वृद्धा निन्दिता विप्राश्चैवं मत्तस्त्वां न स्मृतवान्। मांसाशया मत्स्य इव विषयाशया मर्त्तुं प्रवृत्तोऽभवं। नानावर्णस्त्रियो भुक्ताः, परद्रव्यं हृतं, साधवो निन्दिता, एवमहं मदांधः, स्वानु-

---

१ स्त्रीरूपवन्हौ २ दुर्मार्गगामी ३ अहं ४ पूज्याः.

एवं मदेन व्याप्तोऽहमनुसन्धानवर्जितः ॥
विस्मृतिः पक्षिवद्वह्नौ पतितोऽस्मि स्मरानले ॥ १ ॥

विद्धो मदनबाणेन न शृणोमि सतां वचः ॥
चरणौ न स्मृतौ तेऽपि तावद्वार्धक्यमागतम् ॥ २ ॥

पराधीनेऽपि वार्धक्ये जहुः स्त्रीतनयादयः ॥
श्वासोच्छ्वासकफाविष्टो बीभत्सोऽभवमातुरः ॥ ३ ॥

पराधीनानीन्द्रियाणि पलितं च समागतम् ॥
दन्ताश्च्युता गता दृष्टिर्बाधिर्यं सहसाऽगमत् ॥ ४ ॥

प्रहर्तुं शत्रव इव सर्वे रोगास्तदाऽऽगताः ॥
सेवा ते न कृता स्वामिन्गुरुनाथाद्य तारय ॥ ५ ॥

शाठ्यं मा प्रेक्ष मन्दोऽपि यतस्त्वां शरणं गतः ॥
नारायणेन ते ज्ञातमवतीर्णोऽसि पावितुम् ॥ ६ ॥

सन्धानवर्जितः कामबाणविद्धः, साधुवचनं तिरस्कृत्य, त्वां विस्मृतोऽस्मि । ततो वार्धक्ये स्त्रीपुत्रादयोऽर्थं गृहीत्वा जहुः । श्वासोच्छ्वासकफाविष्टं पराधीनं बीभत्समातुरं ॥९९-३॥ पराधीनेंद्रियं, पलितमुण्डं, धृतदण्डं, च्युतदन्तं, प्रहर्तुं शत्रव इव रोगा उपस्थिताः । अथापि ते सेवा न कृता । ईदृक्शाठ्यं त्वां शरणं गतोऽस्मि । जगत्त्रातुं त्वं नारायणोऽ

५ विगता स्मृतिर्यस्य.

त्वं विश्वतारकोऽसीश देव मानुषवेषधृक् ॥
त्रिमूर्तिरेकरूपोऽसि परंब्रह्म गुरो त्वमित् ॥ ७ ॥

दिवान्धोऽर्कमिवाज्ञानी भास्वन्तं त्वां न वेत्त्यहो ॥
त्वं विश्वचालकस्तोकस्तवाहं त्राहि संसृतेः ॥ ८ ॥

स्तोत्रं चित्रं पवित्रं स कृत्वा सर्वत्र तत्र च ॥
अभिवीक्ष्य स्थितान्लोकानिदं वचनमब्रवीत् ॥ ९ ॥

समस्ताः श्रृणुताद्येदं मया पापं कृतं बहु ॥
दर्शनाच्छ्रीगुरोः साक्षाद्ब्रह्मणो नष्टमेव मे ॥ ११० ॥

यथा तृणौघोऽग्निस्पर्शाद्भस्मसाज्जायते तथा ॥
श्रीगुरोः कृपया पापं सर्वमेव लयं गतम् ॥ ११ ॥

यच्छ्रुतिर्वक्ति चरणं पवित्रं सत्यमेव तत् ॥
भजतोऽनुभजत्यस्मादन्यो देवः कुतोऽस्त्यहो ॥ १२ ॥

लिपिर्या लिखिता धात्रा याऽपि दुष्टाक्षरा यदि ॥
गुर्वंघ्रिस्पर्शनात्साऽपि भविष्यति शुभाक्षरा ॥ १३ ॥

वतीर्णोऽसि। हे गुरो! मानुषवेषधृक्त्वं परंब्रह्म दिवांधोऽर्कमिव विश्व-चालकं त्वां न वेत्ति मूढः। ते बालं मां त्राहि एवं स्तुत्वाऽभितो वीक्ष्याह। सर्वे लोकाः श्रृणुत। मया बहु पापं कृतमपि तत्सर्वमपि साक्षाद्ब्रह्मणो गुरोर्दर्शनादेव नष्टं। चरणं पवित्रमिति श्रुतिर्वक्ति। तत्सत्यं। एतं भजत कोऽन्यो देवः ॥४-११२॥ धात्रा या दुष्टलिपिर्लिखिता साऽपि श्रीगुरु-

निधाने सन्निधानेऽस्मिन्भ्रमन्त्येते कुतो वृथा ॥
भजतां कामधुक्चैषा श्रीनृसिंहसरस्वती ॥ १४ ॥

ऐहिकं चामुष्मिकं च दत्ते वैकुण्ठदोऽप्ययम् ॥
सन्देहो नात्र कर्तव्यः सत्यं सत्यं वचो मम ॥ १५ ॥

एवं तुष्टाव नन्दी स श्रीगुरुस्तुष्ट आह भोः ॥
एतं कवीश्वरं विद्धि सर्वभक्तजनाधुना ॥ १६ ॥

कवीश्वरोऽयमित्याख्या दत्ताऽस्मै निश्चयेन मे ॥
इत्युक्तो दयया तेन दधौ नन्दी गुरोः पदे ॥ १७ ॥

शिष्टं कुष्ठं तदा नष्टं विशिष्टेष्टसुतुष्टितः ॥
नन्दिनः सार्थकाख्याऽभूत्सोऽभवद्गुरुसेवकः ॥ १८ ॥

नामधारक चान्योऽपि तादृक्कविरुपागतः ॥
सङ्ग्रथ्य सत्कथा भक्त्या सेवयामासतुर्गुरुम् ॥ १९ ॥

नामधारक आहार्य सिद्धयोगिन्कविस्तथा ॥
कथं द्वितीयोऽप्यभवद्भक्तवत्सलसेवकः ॥ १२० ॥

पादस्पर्शाच्छुभा भविष्यति। निधाने समीपे कुतो लोका वृथा भ्रमन्ति। श्रीगुरुर्भजतां कामधेनुः वैकुंठदोऽयं। इह परत्र च सुखदः सत्यं नात्र संशयः। एवं तेन स्तुतः श्रीगुरुस्तमाह। त्वं कवीश्वरः। हे लोक अस्मै मे कवीश्वरेत्याख्या दत्ता। तदा नन्दी गुरोः पदं दधौ। अवशिष्टं च कुष्ठं नष्टं। ततः स गुरुसेवकोऽभूत्। तादृगन्योऽपि कवीश उपागतः।

तत्सर्वं विस्तरेणैव स्वामिन्मे कृपया वद ॥
वांच्छाऽस्ति मेऽतीव गुरोश्चरितश्रवणस्य हि ॥ २१ ॥

सिद्धेनोक्तं यत्तद्गङ्गाधरजः सरस्वती सुमतिः ॥
वक्ष्यति मनोहरं श्रीगुरुचरितं कामधुग्वरीवर्ति ॥ २२ ॥

(इति)श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्यगङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञितमहाराष्ट्रभाषान्वितगुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वतीयतिविरचितायां श्रीगुरुसंहितायां भक्तिकाण्डे पंचचत्वारिंशः (अध्यायः) ॥

॥ आदितः श्लोकाः ॥ ५८७९ ॥

नामधारक आह। द्वितीयः सेवकः कथं जातस्तत्सर्वं कृपया वद। तच्छ्रवणे मेऽतीव वांछाऽस्ति। सिद्धेनोक्तं यत्तद्गंगा० ॥१३-१२२॥ इति चूर्णिकायां पञ्चचत्वारिंशोऽध्यायः ॥

॥ इति पंचचत्वारिंशोऽध्यायः ॥ ४५ ॥

---

## ॥ अथ षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

॥ श्रीगणेशाय नमः ॥

नामधारक ऊचेऽङ्ग नन्दिशर्मकवेः कथा ॥
पुरा त्वया प्रकथिता कविः कोऽन्यस्तथाऽऽगतः ॥१॥

श्रीगुरोः स कथं शिष्यः कविर्जातस्तदादितः ॥
सर्वं कथय मे स्वामिन्कृपां कृत्वा ममोपरि ॥ २ ॥

उवाच सिद्ध आश्चर्यं शृणु त्वं नामधारक ॥
श्रीगुरोश्चरितं वक्ष्ये रम्यं कविकथान्वितम् ॥ ३ ॥

गुरौ गन्धर्वनगरे स्थिते कीर्तिरतीव हि ॥
प्रसृताऽस्य ततो भक्ता बभूवुर्बहवोऽमलाः ॥ ४ ॥

समस्तां विततां श्रुत्वा नन्दिनः कवितां हिताम् ॥
बहवो जगृहुर्भक्त्या सर्वत्रातः प्रकाशिता ॥ ५ ॥

अथ सारसंग्रहश्लोकोऽयम्—

स्वप्न उपेत्य स आदद ईशो रसकृतयुक्त इहार्चनमग्र्यम् ॥
केसरिदत्तमभूद्‌द्रुतमध्यात्मकपददस्य कविः स च शिष्यः ॥४६॥

नामधारक आह । नन्दिकवेः कथा श्रुता, को द्वितीयः कविः, कथं गुरुशिष्योऽभूत्कृपां कृत्वा तद्वद । सिद्ध आह । आश्चर्यं शृणु । कविकथान्वितं गुरुचरित्रं वक्ष्ये । तत्र गुरुकीर्तिः प्रसृता ततो बहु भक्ता जाताः ।

ततो ग्रामान्तरे कश्चिद्विप्रो भक्तो महोत्सवे ॥
अनीनयद्गुरुं प्रीत्या स्वगृहं भक्तवत्सलम् ॥ ६ ॥

महोत्सवाद्गुरं नीत्वा ग्रामं हिप्परिगाभिधम् ॥
पूजयामास विधिना स भक्तः श्रीगुरुं मुदा ॥ ७ ॥

कल्लेश्वराभिधं लिङ्गं तस्मिन्ग्रामे शिवालये ॥
प्रख्यातमभवत्तत्र स्थित आगन्तुको द्विजः ॥ ८ ॥

नरकेसरिसंज्ञः स लिङ्गसेवापरायणः ॥
पञ्च नूत्नानि पद्यानि कल्लेशाय न्यवेदयत् ॥ ९ ॥

कल्लेश्वराद्विना नान्यं देवं मेने कदाचन ॥
एकाग्रमानसो भूत्वा शिवसेवापरोऽभवत् ॥ १० ॥

सर्वे जनाः कविं प्राहुः कवित्वं तव शोभनम् ॥
श्रीगुरोः कवितापीतिरतो वर्णय तद्गुणान् ॥ ११ ॥

ते च नन्दिकवितां जगृहुस्ततः सा प्रकाशिता। ग्रामान्तरे कश्चिद्भक्तो महोत्सवार्थं गुरुं निन्ये। तत्र हिप्परिग्रामे स भक्तो भक्त्या विधिनानर्च। तत्र शिवालये कल्लेशाख्यं लिङ्गं ख्यातं। तत्रागन्तुकः ॥ १-८ ॥ नृकेसरीसंज्ञः कविः प्रत्यहं नवीनपञ्चपद्यानि कल्लेशाय न्यवेदयत्तं विनाऽन्यं देवं न मेने। शिवसेवारतं तं जन आह। ते कवित्वं साधु। गुरोरतीव कवित्वप्रीतिरतस्तद्गुणान्वर्णय। स आह। अन्ये सुराः संत्यथापि

कविस्तानाह जिह्वाऽसौ दत्ता कल्लेश्वराय हि ॥
सन्त्यन्येऽपि सुरा नाहं करिष्यामि नरस्तुतिम् ॥१२॥

इत्युक्त्वा नित्यवल्लिङ्गपूजां कर्तुमुपाविशत् ॥
पूजाकालेऽतीव गाढनिद्राव्याप्तोऽभवद्द्विजः ॥ १३ ॥

स निद्रितो देवगृहे स्वप्नेऽपश्यद्यतिर्गुरुः ॥
लिङ्ग एवोपविष्टस्तं पूजयामास भक्तितः ॥ १४ ॥

न ददर्श तदा लिङ्गं मुदा गुरुमपूजयत् ॥
गुरुः प्राहार्चसि कुतः कवितानर्हमानुषम् ॥ १५ ॥

इत्युक्तोऽप्युपचारैः स कविः षोडशभिर्मुदा ॥
गुरुमानर्चेति दृष्ट्वा शीघ्रं जागरितं ययौ ॥ १६ ॥

विस्मितः स्वगतं प्राह श्रीनृसिंहसरस्वती ॥
अवतीर्णः शिवो भूमौ तस्य पूजाऽद्य मे कृता ॥१७॥

त्रिमूर्तेरवतारोऽयं श्रीगुरुर्नात्र संशयः ॥
दर्शनं ह्यस्य कर्तव्यमित्युक्त्वा श्रीगुरुं ययौ ॥ १८ ॥

मे जिव्हा कल्लेशाय दत्ता, नरस्तुतिं न करिष्यामि। इत्युक्त्वा लिङ्गपूजां कर्तुमुपविश्य पूजाकाले निद्रया व्याप्तः। स्वप्ने लिङ्गे उपविष्टं गुरुं भक्त्याऽपूजयत् तत्र लिङ्गं नापश्यत्। श्रीगुरुस्तमाह। कवितानर्हमानुषं कुतोऽर्चसीत्युक्तोऽपि स षोडशोपचारैरानर्चेति दृष्ट्वा वीतनिद्र उत्थाय विस्मितः स स्वगतं आह। श्रीनृसिंहसरस्वती शिव एवात्रावतीर्णो मयाऽर्चितश्च। अतोऽस्य दर्शनं कार्यमित्युक्त्वा ॥ ९-१८ ॥ प्रतिपदं दण्डवन्नमन्गुरुमेत्य

पदे पदे दण्डवत्स पतन्नेत्य गुरोः पदे ॥
धृत्वा प्राह दयस्वाहमज्ञो रूपं न वेद्मि ते ॥ १९ ॥

प्रपञ्चे माययाऽऽवेष्ट्य न जाने तत्प्रवर्तकम् ॥
मुनीशस्त्वं शिवः साक्षादिति मे निश्चयोऽभवत् ॥२०॥

कर्पूरगौरः कल्लेशस्त्वमेवासि जगद्गुरो ॥
अतो मनः स्थिरीकृत्य पदलग्नोऽभवं तव ॥ २१ ॥

विश्वाधारस्त्वमेवासि शरणागतरक्षकः ॥
जातोऽस्मि भ्रमरप्रायस्त्वत्पादाब्जरसायने ॥ २२ ॥

निधाने सन्निधानेऽस्मिन्कः पर्यटति काननम् ॥
कामधेनौ गृहायातायां क्व दैन्यमवशिष्यते ॥ २३ ॥

पुरा सहस्रवर्षाणि मुनयोऽपि तपोऽतपन् ॥
कष्टार्तेभ्योऽपि तेभ्यस्ते न दत्तं दर्शनं विभो ॥ २४ ॥

विनाऽनुष्ठानमद्यात्र दत्तं नो दर्शनं त्वया ॥
कल्लेश्वरः प्रसन्नोऽभूत्कामसिद्धिरभून्मम ॥ २५ ॥

पदे धृत्वाऽऽह । दयस्व अज्ञोऽहं त्वां न जाने । मायावेष्टितोऽहं त्वां न वेद्मि । त्वं कल्लेशः साक्षाच्छिवोऽसि । हे जगद्गुरो मे मनास्स्थिरीकृत्य ते पदलग्नोऽस्मि । त्वं विश्वाधारः शरणागतत्राताऽतस्त्वत्पदाब्जरसं पातुं भ्रमरप्रायोऽस्मि । समीपस्थं निधानं त्यक्त्वा को वनमटेत् । कामधेनौ गृहागतायां क्व दैन्यं । पुराऽनेकवत्सरान्मुनयोऽतपन् । कष्टार्तेभ्योऽपि तेभ्यस्ते दर्शनं न । अनुष्ठानं विनाऽप्यत्र नो दर्शनं त्वया दत्तं । कल्लेश-

सत्यं त्वमेव कल्लेश इति मे निश्चयोऽभवत् ॥
जगद्गुरो दयस्वेति श्रीगुरोश्चरणेऽग्रहीत् ॥ २६ ॥

गुरुः प्राह कवे नित्यं मम निन्दां करोष्यहो ॥
कुतस्ते मानसेऽद्यैव भक्तिरेषा समुद्गता ॥ २७ ॥

कविः प्राह गुरो स्वामिन्नज्ञानतमसाऽऽवृतः ॥
अभवं चाद्य तु भवाञ्ज्योतिषां ज्योतिरुद्गतः ॥ २८ ॥

कल्लेश्वरार्चनेनैव मया यत्पुण्यमर्जितम् ॥
तेन पुण्यप्रभावेण लब्धमद्य भवत्पदम् ॥ २९ ॥

नित्यवत्पूजनायाद्य श्रीकल्लेश्वरमन्दिरम् ॥
गत्वा स्वप्नेऽपि तल्लिङ्गे त्वामेवादर्शमीश्वर ॥ ३० ॥

तत्र स्वप्नदशायां मे दैवाद्दृष्टौ पदाविमौ ॥
प्रत्यक्षं दर्शनं मेऽभून्मां शिष्येषु नियोजय ॥ ३१ ॥

प्रसादान्मे कामसिद्धिरभूत् त्वमेव कल्लेशोऽसीति निश्चयः। सद्गुरो दयस्वेति पदे दधौ। श्रीगुरुराह। मन्निन्दकस्य ते चित्तेऽद्य कुतोऽसौ भक्तिरागता ॥१९-२७॥ स आह। अहमज्ञानतमोवृतोऽभवं। अथाप्यद्य त्वं ज्योतिरुदितोऽसि। कल्लेशार्चनपुण्याद्भवत्पदं लब्धं। अद्य पूजासमये लिङ्गे त्वामेवाद्राक्षं। स्वप्ने दृष्टे पदे। दैवादद्यैते प्रत्यक्षमद्राक्षं। मां

१ उदितोऽसि.

इत्युक्त्वा स कविर्विप्रस्तुष्टाव बहुशो गुरुम् ॥
हृद्यैः पद्यैः षोडशोपचारपूजां व्यधाद्गुरोः ॥ ३२ ॥

सालङ्कारैः सुललितैः पद्यैर्मानसपूजनम् ॥
गुरोश्चक्रे गुरुः प्राह स्वप्ने मां[1]ऽपूजयत्कविः ॥ ३३ ॥

प्रत्यक्षमिव मां स्वप्ने कवित्वेनार्चयत्कविः ॥
अधुनाऽपि तथाऽऽनर्च भक्तियुक्तेन चेतसा ॥ ३४ ॥

इत्युक्त्वा तमुपाहूय गुरुस्तस्मै ददौ वरान् ॥
स भूत्वा पदसंलग्नः प्राह शिष्यो भवामि ते ॥ ३५ ॥

श्रीगुरुः प्राह कल्लेशः श्रेष्ठोऽस्माकं च सम्मतः ॥
नित्यं पूजय तं भक्त्या त्वं तत्रापि वसाम्यहम् ॥३६॥

कविः सोऽवदद्गुज्झित्य प्रत्यक्षं त्वां सुदुर्लभम् ॥
पूजयामि कुतो लिङ्गं त्वामेवाद्राक्षमत्र तु ॥ ३७ ॥

शिष्येषु योजयेत्युक्त्वा हृद्यैः पद्यैः षोडशोपचारगुरुपूजां व्यधात्। श्रीगुरुर्भक्तानाह। स्वप्नेऽयं यथा मामपूजयत्तथैवाधुना भक्तियुक्तेन चेतसाऽऽनर्चेति तमुपाहूय वरं ददौ। स पदे धृत्वाऽऽह। शिष्यो भवेयं। श्रीगुरुराह। कल्लेशो मे सम्मतस्तत्र वसामि तं भक्त्याऽर्चय। स आह। सुदुर्लभं प्रत्यक्षं त्वां हित्वा कुतोऽन्यः पूज्यः। लिङ्गे त्वामेवाद्राक्षं ॥२८-

[1] मां.

त्वं कल्लेशस्त्रिमूर्तिस्त्वमवतीर्णोऽसि लीलया ॥
निश्चयोऽयं ममातस्त्वां न जहामि कदाचन ॥ ३८ ॥

इति प्रार्थ्यानुगो भूत्वा गन्धर्वपुरमेत्य सः ॥
उपतस्थे कवित्वैः स गुरुं कीर्तनभक्तिमान् ॥ ३९ ॥

नामधारक भक्तौ द्वावेवं जातौ कवीश्वरौ ॥
श्रीगुरोः सन्निधौ स्थित्वा तौ भक्त्याभजतां गुरुम् ४०

गङ्गाधरात्मजः प्राह प्रसन्नो यस्य सद्गुरुः ॥
स कामितं लभत्येव कल्पद्रुस्तद्गृहे स्थितः ॥ ४१ ॥

सरस्वतीसंज्ञकविप्रगंगाधरार्यपुत्रेण च नौरसङ्गा ॥
ततुं भवाब्धेः सुकथोदिताऽत्र हितप्रदा चापि तथा परत्र ४२

३७॥ त्वं त्रिमूर्तिर्लीलयाऽवतीर्णोऽसि। ममायं निश्चयोऽतस्त्वां न जहामि। इति प्रार्थ्य गन्धर्वपुरे गुरुमन्वेत्य कवित्वैः कीर्तनभक्त्योपतस्थे एवं द्वौ कवी गुरुसन्निधौ स्थित्वाभजतां। यस्मिन्श्रीगुरुप्रसादः स कामितं लभेत्तद्गृहे कल्पवृक्षः। सरस्वतीसंज्ञकविप्र० ॥३८-४२॥ इति चूर्णिकायां षट्चत्वारिंशोऽध्यायः ॥

१ नाविकं विना स्वयमेव तारिणी.

(इति) श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्यगङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञितमहाराष्ट्रभाषान्वितगुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वतीयतिविरचितायां श्रीगुरुसंहितायां भक्तिकाण्डे षट्चत्वारिंशः ( अध्यायः ) ॥

॥ आदितः श्लोकाः ॥ ५९२१ ॥

॥ इति षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

---

## ॥ अथ सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

॥ श्रीगणेशाय नमः ॥

नामधारक आहाङ्ग कथं वृत्ता कथाऽग्रतः ॥
कृपां कृत्वा कथय तां सिद्धयोगिन्सविस्तरम् ॥ १ ॥

ततः सिद्धोऽवदच्छ्रीमच्छ्रीगुरोश्चरितं शृणु ॥
त्वं यच्छ्रुत्वैहिकानर्थानाप्त्वा मुक्तिं गमिष्यसि ॥२॥

ईदृक्पवित्रं चरितं चित्रं यच्छ्रवणाद्भवेत् ॥
पतितोऽपि पवित्रोऽत्र तात्पर्येणावधारय ॥ ३ ॥

सति गन्धर्वनगरे गुरौ दीपावलीक्षणः ॥
प्राप्तस्तदा गुरुं नेतुं प्रिया भक्ता उपागताः ॥ ४ ॥

सप्तातीव प्रिया शिष्या गुरुं प्राप्य प्रणम्य च ॥
दीपावल्युत्सवार्थं नो गृहमेहीति चाब्रुवन् ॥ ५ ॥

अथ सारसंग्रहश्लोकोऽयम्—

दीपावल्यां संप्रार्थितः सप्तशिष्यैः सप्तग्रामान् तत्क्षेत्रसंस्थोऽप्यगात्सः ॥
अष्टात्मा भूत्वा सप्तवेदाढ्यसर्गे लोके यन्मूर्तिर्विश्रुता वैश्वदेवी ॥४७॥

नामधारक आह। कृपयाऽग्रतः कथां वद। सिद्ध आह। शृणु। यच्छ्रवणादुभयसिद्धिर्मोक्षश्च ॥ १-२ ॥ ईदृक्पवित्राच्चरित्रात्पतितोऽपि पूतो भवेत्। तत्र दीपावलीक्षणे सप्त प्रियभक्ता गुरुमेत्य नत्वा पृथगूचुः। दीपावल्युत्सवार्थं नो गृहमागच्छेति। एकैकस्य पृथग्ग्राम इति ज्ञात्वा

एकैकस्य पृथग्ग्राम इति ज्ञात्वाऽब्रवीद्गुरुः ॥
सर्वालयेष्वेकदैव कथं मे गमनं भवेत् ॥ ६ ॥

विचार्यैव भवद्भिर्मे कथनीयं तथैव तु ॥
गमिष्यामि न सन्देहः शिष्याधीनोऽस्मि केवलम् ॥७॥

ततस्तेऽन्योन्यमाभाष्य स्वामी मेऽयं नयाम्यहम् ॥
अहमेवेति चान्योन्यं कलहं चक्रुरुच्चकैः ॥ ८ ॥

तान्निवार्याब्रवीत्स्वामी व्यर्थोऽयं कलहो हि वः ॥
सर्वेषां गुरुरेकोऽहमेष्याम्येकगृहं खलु ॥ ९ ॥

इति श्रुत्वा समस्तास्ते नताः प्राञ्जलयोऽब्रुवन् ॥
भेदं मा प्रेक्ष सार्थोऽयं दुर्बलोऽयमिति प्रभो ॥ १० ॥

सर्वत्रैव समं पश्य न्यूनादि न विचारय ॥
उपेक्षसे दुर्बलांश्चेत्कुर्मो गङ्गाप्रवेशनम् ॥ ११ ॥

कृष्णः कदन्नं बुभुजे स्वभक्तविदुरालये ॥
कौरवप्रार्थितोऽप्यन्नं नाददे भक्तवत्सलः ॥ १२ ॥

गुरुराह। सर्वालयान्प्रत्येकदैव कथं ममागमो भवेत्। शिष्याधीनोऽस्मि भवन्तो विचार्यैव ब्रुवंतु। ततस्तेऽन्योन्यं कलहं चक्रुः अहं नेष्याम्यहं नेष्यामीति। तान्निवार्य श्रीगुरुराह। व्यर्थोऽहं कलहः सर्वेषामेकोऽहं गुरुरेकगृहं यास्ये। ते प्राञ्जलय ऊचुः। समर्थोऽयं दुर्बलोऽयं इति भेदं मा प्रेक्ष। समं पश्य, दुर्बलानुपेक्षसे चेद्गंगाप्रवेशं कुर्मः। कौरवप्रार्थितो-ऽपि कृष्णो विदुरभक्तगृहे कदन्नमपि बुभुजे ॥३-१२॥ नौदासीन्यं कुरु

नोदासीनो भवास्मासु दासाः सर्वे वयं तव ॥
यदाज्ञापयसि स्वामिन्वहामः शिरसैव तत् ॥ १३ ॥

एवमुक्त्वाऽपि साष्टाङ्गं प्रणेमुः सर्व एव ते ॥
विनताः सर्व एवाहुः श्रीगुरो नो विलोकय ॥ १४ ॥

तान्त्सर्वान्श्रीगुरुः प्राह प्रतियात गृहान्हि वः ॥
एष्यामि माऽस्तु सन्देहः सत्यं दिव्यं ददामि वः॥१५॥

इति श्रुत्वा गुरोर्वाक्यं नताः सप्तावदन्गुरुम् ॥
सामान्यश्रवणात्केन कर्तव्यो निश्चयोऽधुना ॥ १६ ॥

अहो अज्ञा गतिं मे नो जानन्त्येकैकमेव तत् ॥
कथनीयं रह इति मत्वैकैकं जगौ गुरुः ॥ १७ ॥

एकं समीपमाहूय तत्कर्णे प्राह सद्गुरुः ॥
यस्मै कस्मै न वक्तव्यमहमेष्ये त्वदालयम् ॥ १८ ॥

एवं स दिव्यं प्रोक्त्वैकं गमयामास तं ततः ॥
ततो द्वितीयमाहूय गमयामास तं तथा ॥ १९ ॥

नस्ते दासाः । शिरसाऽऽज्ञां गृण्हीम, एवमुक्त्वा प्रणेमुः । तान्सर्वान्दृष्ट्वा गुरुराह । एमि गृहं प्रतियात, संशयो माऽस्तु, दिव्यं दद्मि । त ऊचुः । एवं श्रवणात्केन निश्चयः कर्तव्यः । एतेऽज्ञा इति मत्वैकैकं रह आहूय कर्णेऽकथयद्गुरुः । त्वदालयमेष्ये, यस्मै कस्मै न वाच्यमिति हृषीकेशेन

एवं रहसि चैकैकं कथयित्वा मुदैव तान् ॥
प्रस्थापयामास तदा हृषीकेशो जगद्गुरुः ॥ २० ॥

एवं सप्तापि ते शिष्या गुरुनाथेन चोदिताः ॥
जग्मुः स्वं स्वं गृहं सर्वे तदाऽऽश्चर्यमभून्महत् ॥ २१ ॥

परस्परमशंसन्तो भक्ताः सप्तापि ते गताः ॥
श्रीगुरुर्भगवान्प्रीतः ततो ग्रामे मठं ययौ ॥ २२ ॥

ग्रामस्था एतदाकर्ण्य भक्ता एत्य गुरुं तदा ॥
नता ऊचुर्गुरुं स्वामिन्नस्मान् हित्वा क्व यास्यसि॥२३॥

श्रीगुरुः प्राह तान्सर्वान्स्थितोऽस्म्यत्रैव भाविकाः ॥
अतश्चिन्ता न कर्तव्या युष्माभिरिह मत्प्रियैः ॥ २४ ॥

एवमुक्तवति श्रीशे सन्ध्याकाल उपागतः ॥
तदा धनत्रयोदश्यां मङ्गलस्नानवासरे ॥ २५ ॥

नारायणोऽष्टरूपोऽभूदपारो महिमाऽस्य तु ॥
तत्र स्थित्वाऽप्यगात्सप्तग्रामान्भूमाऽतिमायिकः ॥२६॥

गुरुणोक्ताः सप्तापि तेऽन्योन्यं अकथयंत एव स्वं स्वं गेहं ययुः। श्रीगुरुश्च मठं प्राप। ग्रामस्थास्तच्छ्रुत्वा नत्वा गुरुमूचुः। स्वामिन्नस्मान्हित्वा क्व यास्यसीति ॥१३-२३॥ श्रीगुरुराह। अत्रैव स्थितोऽस्मि। हे भाविकाश्चिन्तां मा कुरुतेति। ततः सायं धनत्रयोदश्यां मङ्गलस्नानदिने श्रीगुरु-

अष्टग्रामेषु भगवानष्टरूपोऽवसद्विभुः ॥
गृहीत्वाऽर्चां मठं प्राप गुह्यं केऽपि विदुर्न तत् ॥२७॥

कार्तिके पौर्णिमायां ते विधातुं त्रिपुरोत्सवम् ॥
समस्ता अपि ते प्राप्ताः श्रीगुरोः सन्निधौ मुदा ॥२८॥

नत्वोचुस्ते दशदिनैर्भूयोऽभूद्दर्शनं गुरोः ॥
इत्युक्त्वोचुस्तदाऽन्योन्यं मद्गेहे भगवान्स्थितः ॥२९॥

मिथ्या मिथ्येति चान्योन्यं प्रोक्त्वा दत्तांशुकादिकम् ॥
श्रीगुरौ निकटस्थं ते दर्शयामासुरादरात् ॥ ३० ॥

समस्ताश्चकिता जाता ग्रामस्था अपि तान्जगुः ॥
अस्माकं गुरुरत्रैव दीपावल्यां स्थितः खलु ॥ ३१ ॥

सर्वे ते विस्मिता ऊचुस्त्रिमूर्तिरियमेव हि ॥
नारायणावतारोऽयं श्रीगुरुर्नात्र संशयः ॥ ३२ ॥

पारमहिमो नारायणोऽष्टरूपो भूत्वा सप्तग्रामान्गत्वा मठेऽपि स्थित्वा पूजां गृहीत्वा मठं प्राप । तद्गुह्यं केऽपि न विदुः । ततः कार्तिक्यां त्रिपुरोत्सवं कर्तुं[1] ते सर्वे गुरुसमीपमेत्योचुः दशदिनैः पुनर्गुरुदर्शनमिति । मिथ्या मिथ्या, मद्गृह एव स्थितो, मयेदं दत्तमेतद्वस्त्रादि गुरुनिकटेऽस्तीत्यन्योन्यमूचुः । ग्रामस्था ऊचुः । गुरुरत्रैव दीपावल्यां स्थितः । सर्वे चकिताः । सर्वे ऊचुः नारायणोऽयं श्रीगुरुस्त्रिमूर्त्यवतारो न संशयः ॥२४-३२॥

---

१ कर्तु.

इत्युक्त्वा तुष्टुवुः सर्वे स्तोत्रैर्नानाविधैर्गुरुम् ॥
वेदात्मन्गुरुनाथाद्य माहात्म्यं तेऽत्र वेत्ति कः ॥ ३३ ॥

त्वं विश्वव्यापको विष्णुरपारो महिमा तव ॥
कार्यार्थं त्वं त्रिरूपोऽसि त्वमेकोऽसि परात्परः ॥३४॥

एवं स्तुत्वा दीपमालास्तत्र प्रज्वाल्य सोज्वलाः ॥
ब्राह्मणान्भोजयामासुर्भक्त्या भक्ता अनेकशः ॥ ३५ ॥

श्रीगुरोर्महिमा चैवं सर्वत्र ख्यातिमागमत् ॥
भूमण्डलेऽभवत्ख्यातः स गुरुर्नामधारक ॥ ३६ ॥

अतः सरस्वती वक्ति योऽयं कल्पद्रुमोऽन्तिकः ॥
अज्ञानान्धा न जानन्ति सदा तद्दैन्यभागिनः ॥३७॥

कामनासिद्ध्ये शीघ्रं भो जनः श्रीगुरुं भज ॥
कार्यसिद्धिर्भवेच्छीघ्रं प्रत्ययोऽयं ममाभवत् ॥ ३८ ॥

यथाऽमृतेन तृप्तस्य किं क्षीरेण प्रयोजनम् ॥
नामामृतेन तृप्तस्य किं ज्ञानेन प्रयोजनम् ॥ ३९ ॥

इत्युक्त्वा तुष्टुवुः । हे वेदात्मन्गुरुनाथ ! ते माहात्म्यं को वेत्ति । हे विष्णो ! विश्वव्यापक ! तेऽपारमहिमा । हे परात्पर ! कार्यार्थं त्रिरूपोऽपि त्वमेक एवेति स्तुत्वा दीपमालाः प्रज्वाल्य विप्रान्भोजयामासुः । एवं भुवि महिमा ख्यातः । गङ्गाधरज आह । अंतिके कल्पद्रुममज्ञात्वाऽज्ञानान्धा दैन्यभागिनः भो जन ! आशु कामसिध्यै गुरुं भज । ममानुभवो लब्धः । यथा अमृतेन तृप्तस्य क्षीरप्रयोजनं न, तथा नामामृतेन तृप्तस्य किं ज्ञानेन

गुरुं भज भजेत्येवं डिण्डिमोऽयं ममोच्चकैः ॥
वेदशास्त्रादिषु प्रोक्तं त्रिमूर्तिर्गुरुरेव हि ॥ ४० ॥

गुरोरन्यो न देवोऽस्ति वेदशास्त्रप्रमाणतः ॥
गुरुं निन्दति यो मूढः सौकरीं योनिमृच्छति ॥ ४१ ॥

इयं लिपिः स्वकपोलकल्पनाकल्पितेति वः ॥
मा भूच्छास्त्रप्रमाणं चेत्तर्ह्यंगीक्रियतां सुखम् ॥ ४२ ॥

अपारदुस्तरासारसंसारोत्तारणाय हि ॥
न क्वापि श्रीगुरोरन्या गतिरत्र परत्र च ॥ ४३ ॥

निर्जले भवदावेऽस्मिन्सुलभा स्थापिता मया ॥
कथामृतप्रपा पेया सुलभाऽमरता यतः ॥ ४४ ॥

त्रिमूर्तिरवतीर्णोऽयं श्रीनृसिंहसरस्वती ॥
गन्धर्वनगरे योऽस्ति सतां प्रत्यक्ष एव हि ॥ ४५ ॥

प्रयोजनं। गुरुं भजेत्युच्चैर्मे डिण्डिमस्ताड्यते। वेदादिनोक्तं गुरुरेव त्रिमूर्तिः गुरोरन्यो न देवः। गुरुनिन्दको मूढः सौकरीं योनिं गमिष्यति। नेयं मे स्वकपोलकल्पना। शास्त्रप्रमाणं चेदङ्गीकुर्वंतु ॥३३-४२॥ दुस्तरासारसंसारोत्तारणाय गुरोरन्या न गतिः। सुलभा कथामृतप्रपेयं मयेह स्थापिता। यथासुखं पेया यतोऽमरत्वं। नृसिंहसरस्वती त्रिमूर्त्यवतारो

१ यतोऽमरत्वं सुलभं.

एतत्स्थानं गमिष्यन्ति तेषां कार्यं क्षणाद्भवेत् ॥
दुर्लभोऽन्यत्र देवोऽयं प्रत्यक्षोऽत्र न संशयः ॥ ४६ ॥

हितं वः कथयाम्येतद्युष्माकं यदि रोचते ॥
याताशु गन्धर्वपुरमिति वक्ति सरस्वती ॥ ४७ ॥

(इति)श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्यगङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञितमहाराष्ट्रभाषान्वित-गुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वतीयतिविरचितायां श्रीगुरुसंहितायां भक्तिकाण्डे सप्तचत्वारिंशः ( अध्यायः ) ॥

॥ आदितः श्लोकाः ॥ ५९६८ ॥

गाणगापुरे प्रत्यक्षोऽस्ति । ये तत्र गमिष्यन्ति तेषां क्षणात्कार्यसिद्धिः । रोचते चेद्वो हितं वच्मि । गन्धर्वपुरं शीघ्रं गच्छतेति सरस्वती वक्ति ॥४३-४७॥ इति चूर्णिकायां सप्तचत्वारिंशोऽध्यायः ॥

॥ इति सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

---

## ।। अथ अष्टचत्वारिंशोऽध्यायः ।। ४८ ।।

।। श्रीगुरुदेवदत्त ।।

सिद्धोऽब्रवीद्वदेऽपूर्वं श्रृणु त्वं नामधारक ।।
वक्तुं गुरोश्चरित्रं मे प्रहर्षोऽतीव वर्धते ।। १ ।।

स्थिते गन्धर्वनगरे गुरौ ख्यातिरभूद्वरा ।।
भक्तः कश्चन शूद्रोऽभूत्तत्कथां कथयामि ते ।। २ ।।

श्रीगुरौ सङ्गमे नित्यमनुष्ठानाय गच्छति ।।
मार्गे कृषीवलः शूद्रः कृषिकर्मरतोऽपि सः ।। ३ ।।

दृष्ट्वा श्रीगुरुमायान्तं धावन्नागत्य भक्तितः ।।
प्रणिपत्य च साष्टाङ्गं पुनः क्षेत्रं स गच्छति ।। ४ ।।

अथ सारसंग्रहश्लोकोऽयम्—

क्षेत्रं गुरूक्तवदशेषमपक्वधान्यं
चिच्छेद शूद्र उपगां विनिवारयन्तीम् ।।
सिंहोन्नताक्ष इव चात्मवधूं निवार्य
लेभेऽमितर्धिमिभवेदयुजीशभक्त्या ।। ४८ ।।

सिद्ध आह। अपूर्वं श्रृणु। गुरुचरित्रं वक्तुं मेऽतीव हर्षः। तत्र कश्चिच्छूद्रो भक्तोऽभूत्तत्कथां वच्मि ।। २ ।। गुरौ नित्यमनुष्ठातुं याति सति कृषिकर्मरतः स शूद्रस्तं दृष्ट्वा धावन्नेत्य साष्टाङ्गं नत्वा स्वक्षेत्रं

भूयो निवृत्य माध्याह्ने मठं यान्तं जगद्गुरुम् ॥
ननामैवं बहुदिनं भक्तिं चक्रेऽप्यतीव सः ॥ ५ ॥

श्रीगुरुः प्रणतोऽपीशस्तूष्णीं तिष्ठति सर्ववित् ॥
न वक्त्येवं महाकालो निर्गतो दैवयोगतः ॥ ६ ॥

अथैकदाऽऽगतं शूद्रं नमन्तं श्रीगुरुर्हसन् ॥
पप्रच्छ नित्यं कष्टेन कुतो नमसि पादज ॥ ७ ॥

प्रकाशं विस्तराद्ब्रूहि का ते मनसि वासना ॥
प्राञ्जलिः प्राह शूद्रोऽसौ क्षेत्रपाको भवत्वलम् ॥ ८ ॥

किं बीजमुप्तं ते क्षेत्र इत्युक्तो गुरुणाऽवदत् ॥
यावनालादिपाकोऽत्र भवतीशप्रसादतः ॥ ९ ॥

नित्यप्रणामजात्पुण्यात्पाकोऽतीव प्रदृश्यते ॥
बहिर्यातस्ततो मासा भोक्ष्येऽहं तत्र धर्मतः ॥ १० ॥

भो स्वामिन्क्षेत्रमागच्छ सुधादृष्ट्या विलोकय ॥
अहं शूद्रोऽपि नोपेक्ष्यो यतस्त्वं सर्वपालकः ॥ ११ ॥

व्रजति भूयो निवृत्य माध्याह्ने गच्छंतमपि तथैव ननाम। श्रीगुरुस्तूष्णीं तिष्ठति न वक्ति। एवं बहुतिथे काले कदाचिन्नमन्तं शूद्रं श्रीगुरुर्हसन्नाह। नित्यं कष्टेन कुतो नमसि। स्फुटं वद। स बद्धाञ्जलिराह। अलं क्षेत्रपाको भवतु। श्रीगुरुराह। अत्र किमुप्तं ! स आह। यावनालाः। ते नित्यं नमनात्सस्यमतीव दृश्यते। ते धर्मान्मासेन भक्षिष्यामि। स्वामिन्क्षेत्रं सुधादृष्ट्या वीक्ष शूद्रोऽयमिति नोपेक्ष्यः। त्वं पाताऽसि

इत्युक्तः श्रीगुरुर्गत्वा दृष्ट्वा क्षेत्रं स तं जगौ ॥
विश्वासो मेऽस्ति चेद्वाक्ये तर्ह्येकं कथयामि ते ॥१२॥

यत्ते वक्ष्यामि तद्भक्त्या त्वं चेदङ्गीकरिष्यसि ॥
तर्हि ते कथयाम्येकभावेन त्वं समाचर ॥ १३ ॥

शूद्रः प्राह वद स्वामिन्गुरुवाक्यं हि तारकम् ॥
नान्यो भावो मम स्वामिन्साक्षी त्वं वेत्सि सर्वदृक् १४

ऊचे गुरुः सङ्गमान्मे मध्याह्ने यावदागमः ॥
तावच्छिन्ध्यखिलं क्षेत्रमीषत्पक्कमपीदृशम् ॥ १५ ॥

इत्युक्त्वा श्रीगुरुः शूद्रं स्नानार्थं सङ्गमं ययौ ॥
स्वीकृत्य गुरुवाक्यं स तथाकर्तुं मनो दधौ ॥ १६ ॥

ग्राममेत्य द्रुतं क्षेत्रनाथं प्राह गताब्दवत् ॥
करं निश्चित्य मे देहि प्रमापत्रं सुनिश्चितम् ॥ १७ ॥

इत्युक्तः स प्रभुः प्राह धान्यवृद्धिरतीव हि ॥
भविष्यति ततः पूर्वमिदं नाङ्गीकरोम्यहम् ॥ १८ ॥

॥१२-१८॥ इत्युक्तः श्रीगुरुः क्षेत्रं गत्वाऽऽह । मे वाक्ये विश्वासश्चेद्भक्त्या वाक्यं मेऽङ्गीकरोषि चेत्ते वक्ष्ये । स आह । गुरुवाक्यं हितं । नान्यो मे भावस्त्वं साक्षी सर्वदृग्वेत्सि । गुरुराह । मध्यान्हे यावदागमिष्यामि तावत्सर्वं छिन्धीत्युक्त्वा सङ्गमं ययौ । शूद्रो गुरूक्तं कर्तुं निश्चित्य ग्रामे क्षेत्रनाथमेत्याह । गतवर्षवत्करं निश्चित्य पत्रं मे देहीति । स आह । अतीव धान्यवृद्धिर्भविष्यत्यतो न दास्ये । इत्युक्तः शूद्र आह । गतवर्षाद्-

इत्युक्तो विनयेनैव द्विगुणं गतवर्षतः ॥
दातुं निश्चित्य प्रमाणपत्रं तस्मात्स चाददे ॥ १९ ॥

अभयः पत्रमादाय नरानाहूय सत्वरम् ॥
सन्तोषेणैव शूद्रः स सस्यं छेत्तुं समारभत् ॥ २० ॥

तदा निवारयामासुः शूद्रं स्त्रीतनयादयः ॥
स्त्रियं जघान पाषाणैर्गुरुभक्तः स पादजः ॥ २१ ॥

सुतानपि जघानासौ ततो भीताः पलायिताः ॥
राजद्वारमुपेत्याहुः शूद्रो जातः पिशाचवत् ॥ २२ ॥

अपक्वं बहुलं धान्यं पिता मौर्ख्याच्छिनत्त्यहो ॥
वारणाय प्रवृत्तान्नः पाषाणैर्घातयत्यहो ॥ २३ ॥

मुण्डिनो वचनादेवं छिन्नं क्षेत्रं वृथैव ते ॥
यन्मासमात्राल्लभ्यं तज्जीवितं नो वृथा गतम् ॥ २४ ॥

स राजा क्षेत्रपः प्राह स करोतु यथेप्सितम् ॥
गताब्दाद्द्विगुणं दातुं तेन पत्रं समर्पितम् ॥ २५ ॥

द्विगुणं दातुं निश्चित्य पत्रं देहीति । तथेति स स्वीचकार । शूद्रोऽभय- पत्रमादाय शीघ्रं नरानाहूय मुदा सस्यं छेत्तुं यावदारेभे ॥१९-२०॥ तावत्सपुत्रा स्त्रीरेत्य निवारयामास । स गुरुभक्तस्तान्पाषाणैरहन् । ते भीता राजद्वारमेत्याऽहुः शूद्रः पिशाचवज्जातः । अपक्वं सर्वं धान्यं छिनत्ति । वारणाय प्रवृत्तान्नः पाषाणैर्हंति । मुंडिवाक्याद्वृथा छिनत्ति । मासाल्लभ्यं जीवितं वृथा गतं । क्षेत्रनाथ आह । स कामं किमपि करोतु । गताद्वा-

तथाऽपि वारय इति प्रोक्त्वा दूतं स चेरयत् ॥
दूतं शूद्रोऽवदद्राज्ञे छन्नं धान्यं ददाम्युत ॥ २६ ॥

परीत्यापि ततो दूतः क्षेत्रपाय शशंस तत् ॥
शूद्रेण कथितं तुभ्यं कुतो भयमुपस्थितम् ॥ २७ ॥

यदि धैर्यं न चेत्तर्हिं द्वारि बध्नामि गा[2] मम ॥
यथा दत्तं मया पत्रं तथा दद्मीति सोऽब्रवीत् ॥ २८ ॥

क्षेत्रपः प्राह मे ज्ञातं छन्नं धान्यं तदालये ॥
अतीवास्ति ततः का मे चिन्ताऽभीष्टं करोतु सः २९

शूद्रश्छित्वा तु निःशेषं लवित्राणि[3] निधाय च ॥
श्रीगुरोरागमं ध्यायन्मार्गे तस्थौ प्रसन्नधीः ॥ ३० ॥

दर्शयामास संछिन्नं गुरवे चागताय सः ॥
श्रीगुरुः प्राह हा व्यर्थं छिन्नमेतत्त्वया कृतः ॥ ३१ ॥

द्द्विगुणं धान्यं दातुं पत्रं दत्तं। अथापि वारय इति दूतं प्रेरयत्। तमागतं दूतं शूद्र आह। गृहे छन्नं धान्यं दास्यामि। स दूतः परीत्याह। वः कुतो भयमुपस्थितं। धैर्यं न चेद्द्वारि गाः बध्नामि। दत्तपत्रानुसारेण दास्यामीति शूद्र आहेति। क्षेत्रप आह। तद्गृहेऽतीव धान्यं छन्नं ज्ञातं का मे चिन्तेति ॥२१-२९॥ शूद्रो निःशेषं छित्वा। तोत्राणि निधाय। गुरुं ध्यायन्मार्गे तस्थौ। तावदागताय गुरवे छिन्नं दर्शयामास। श्रीगुरु-

१ प्रेरयत् २ पशून् ३ शस्त्राणि.

सोपहासं मया प्रोक्तं त्वया सत्यं मतं कुतः ॥
स प्राह कथमप्युक्तं वाक्यं ते कामधुङ्मम ॥ ३२ ॥

इत्युक्तः श्रीगुरुः प्राह यथा भक्तिस्तथैव ते ॥
भविष्यति फलावाप्तिश्चिन्तां मा कुरु भाविक ॥ ३३ ॥

इत्युक्त्वा प्रययौ ग्रामं गुरुनाथः स्वतन्त्रधीः ॥
गुरुभक्तः स शूद्रोऽपि ततः स्वगृहमागतः ॥ ३४ ॥

ग्रामस्था एत्य तं प्राहुस्त्वं मौढ्यात्किमिदं कृतम् ॥
स्त्रीश्चागत्य रुरोदोच्चैर्ग्रासोऽस्माकं गतास्त्विति ॥३५॥

शूद्रः सर्वान्निवार्याऽह माऽस्तु चिन्ता सुखं भवेत् ॥
कामधेनुर्गुरोर्वाक्यं मूढा जानन्ति नैव तत् ॥ ३६ ॥

एकैकस्यास्य धान्यस्य सहस्रगुणितं हि सः ॥
ददात्यनन्तोऽनन्तं मे न हानिर्मे स्थिरं मनः ॥ ३७ ॥

राह । कुतो व्यर्थं छिन्नं । सोपहासेनोक्तं कुतः सत्यं मतं । शूद्र आह । ते वाक्यं कामधुक् । श्रीगुरुराह । यथा भक्तिस्तथा फलप्राप्तिर्भविष्यति । चिन्तां मा कुर्विति तमुक्त्वा मठं ययौ । शूद्रोऽपि गृहं गतः । ग्रामस्थाः शूद्रमाहुः । मौढ्यात्किमिदं कृतं । तत्स्त्री उच्चैरुरोद । नो ग्रासो गत इति । शूद्रः सर्वान्निवार्याह । चिन्ता माऽस्तु गुरुवाक्यं कामधुक् । सुखं भवेन्मूढा न विदुः एकैकधान्यतः सहस्रगुणं धान्यं दास्यतीति मे धैर्यं ।

स्वामी नरो भवति किं स मुनिः शिव एव हि ॥
सुदैवं मेऽग्रतो वीक्ष्य तेनैतत्कथितं खलु ॥ ३८ ॥

कुतो दैन्यं भयं तस्य यस्योपरि गुरोः कृपा ॥
निधानमेव मे लब्धं गुरुरित्याह तान्स च ॥ ३९ ॥

एवं पुत्रान्स्त्रियं चापि स्वेष्टान्बन्धुजनानपि ॥
स शूद्रोऽतीव संहृष्टो बोधयामास दूरदृक् ॥ ४० ॥

तूष्णीं तस्थुस्ततः सर्वे गतेष्वष्टदिनेषु तु ॥
ववौ वातोऽतीव शीतो यतोऽभूत्पाकसंक्षयः ॥ ४१ ॥

सर्वग्रामक्षेत्रपाको नष्टोऽभून्मूलभं गते ॥
सूर्येऽकाले ववर्षाब्दो जाता वृष्टिरतीव हि ॥ ४२ ॥

धान्यनाशोऽभवद्ग्रामे एकैकछिन्नमूलतः ॥
एकादशैकादश च प्रादुरासन्वराङ्कुराः ॥ ४३ ॥

न हानिः। स न नरः शिवमुनिरेव ॥३०-३८॥ यस्योपरि तत्कृपा तस्य कुतो दैन्यं भयं च। मे निधिर्लब्धः। एवं स स्त्रियं चाह। सुदैवं भावीत्यत एतत्कथितमिति। एवं स हृष्टः स्वेष्टजनानपि दूरदृष्ट्या बोधयामास। सर्वे तूष्णीं तस्थुः। ततोऽतीव शीतो वातो ववौ। यतः सर्वग्रामक्षेत्रपाकक्षयोऽभूत्। ततः सूर्ये मूलर्क्षगतेऽकालेऽप्यतीव वृष्टिरभूत्। ततो ग्रामे धान्यनाशोऽभूत्। शूद्रक्षेत्रे एकैकछिन्नमूलत एकादशैकादशांकुराः

तत्क्षेत्रेऽभूद्यावनालपाकोऽतीव समृद्धिमान् ॥
दृष्ट्वा लोकास्तदाश्चर्यं मेनिरेऽतीव मोदिताः ॥ ४४ ॥

शूद्री साऽतीव सन्तुष्टा क्षेत्रमभ्यर्च्य चाभितः ॥
निरीक्ष्य निश्चलदृशा प्रापानन्दं गतक्लमा ॥ ४५ ॥

पतिमागत्य तत्पादौ गृहीत्वा प्राह मञ्जुलम् ॥
मधुरं प्राणनाथाद्य दौरात्म्यं मे क्षमस्व भोः ॥ ४६ ॥

त्वामवादिषमज्ञानादनर्हं यन्निरङ्कुशम् ॥
श्रीगुरुर्निन्दितश्चापि प्राणनाथ क्षमस्व तत् ॥ ४७ ॥

क्षमाप्यैवं पतिं शूद्री क्षेत्रदेवं प्रपूज्य च ॥
विचार्य मनसा पत्या गुरुदृष्टयर्थमागमत् ॥ ४८ ॥

शूद्रः स्त्रिया सहागत्य पूजयामास तं गुरुम् ॥
तौ वीक्ष्य श्रीगुरुः स्वामी प्राहेदानीं किमद्भुतम् ॥४९॥

ऊचतुस्तावुभौ स्वामिन्श्रीगुरो जय कामधुक् ॥
त्वमेव देवराजोऽसि कुलदेवस्त्वमेव नः ॥ ५० ॥

प्रादुरासन्। तत्रातीव यावनालपाकोऽभूत्। लोकाः तदाश्चर्यं मेनिरे। शूद्री तद्दृष्ट्वाऽतीवानन्दिता पतिपादौ धृत्वा मंजुलं मधुरमाह। प्राणनाथ! दौरात्म्यं क्षमस्व। अज्ञानान्निरंकुशमुक्तं गुरुनिन्दा च कृता तत्क्षमस्वेति पतिं क्षमाप्य ॥३९-४७॥ क्षेत्रदेवं संपूज्य। गुरुदर्शनार्थं पत्या सहागमत्। शूद्रस्तया सह गुरुमानर्च। तौ वीक्ष्य गुरुराह। किमेतदद्भुतं। तावुचतुः। स्वामिन्श्रीगुरो जय। त्वमेव कामधुक्कुलदेवश्च। ते वचोऽमृतं।

वचनं तेऽमृतं तात पादश्चिंतामणिस्तव ॥
कामो नौ पूर्णतां यात आवां त्वां शरणं गतौ ॥५१॥

भक्तवत्सल ते ख्याता लोके या विरुदालयः ॥
अस्माभिरनुभूतास्ता इत्युक्त्वा पतितावुभौ ॥ ५२ ॥

नीराज्य श्रीगुरुं शूद्री तुष्टाव बहुधा मुदा ॥
तुष्टः प्रीत्या गुरुः प्राह श्रीरखण्डाऽस्तु ते गृहे ॥५३॥

इत्युक्त्वा तदनुज्ञातौ तौ ततः स्वगृहं गतौ ॥
मासेऽतीते ततो धान्यपाकः सम्यग्बभूव ह ॥ ५४ ॥

गताब्दतः शतगुणं धान्यं लब्धं ततोंऽघ्रिजः ॥
राजानं तं समाहूय धान्यवृद्धिं व्यदर्शयत् ॥ ५५ ॥

शूद्रः प्रोवाच तं धान्यं बहु जातं यतस्ततः ॥
पाको जातः समीचीनो भवतेऽर्धं ददाम्यहम् ॥ ५६ ॥

गतवर्षाच्च द्विगुणं दातुं यद्यपि निश्चितम् ॥
धान्यवृद्धिरतीवाभूद्गताब्दाच्च शताधिका ॥ ५७ ॥

पादश्चिन्तामणिर्नौ कामः पूर्णः आवां त्वां शरणं गतौ। हे भक्तवत्सल ! ते बिरुदावलिः ख्याताऽनुभूता चेति तौ दण्डवत्पतितौ। शूद्री गुरुं नीराज्य बहु तुष्टाव। तुष्टः श्रीगुरुर्मुदा प्राह। ते गृहेऽखंडा श्रीरस्तु ततोऽनुज्ञातौ तौ गृहं गतौ। गताब्दाच्छतगुणं धान्यं जातं। शूद्रोऽधिपमाहूय धान्यवृद्धिं दर्शयित्वाऽऽह। बहु धान्यं जातं भवतेऽर्धं ददामि ॥४८-५६॥ गतवर्षाद् द्विगुणं दातुं निश्चितमपि शतगुणा धान्यवृद्धि-

अतोऽर्धं ते प्रदास्यामि संशयं मा कुरु प्रभो ॥
राजोवाच न वै धर्महानिं कुर्वेऽद्य लोभतः ॥ ५८ ॥

गुरुप्रसादस्त्वय्यस्ति ततो लब्धं त्वयेदृशम् ॥
यथासुखं गृहं नीत्वा त्वं राज्यं कुरु भाविक ॥ ५९ ॥

इत्युक्तः स च तुष्टोऽदाद्द्विजेभ्यो बहु च स्वयम् ॥
बहु धान्यं गृहं नीत्वा ददौ भागं नृपाय च ॥ ६० ॥

ईदृग्गुरोश्चरित्रं तु विचित्रं नामधारक ॥
गुरौ यस्य दृढा भक्तिस्तस्य दैन्यं कुतो वद ॥ ६१ ॥

सर्वाभीष्टकरं गुरोः सुचरितं शृण्वन्ति ये तद्गृहे
श्रीर्नैसर्गिकचापलं च सततं त्यक्त्वैव तिष्ठेत्सदा ॥

लोको यो गुरुसेवकोऽस्य तु गृहे दैन्यं कुतोऽतोऽनिशं
सेव्यः सद्गुरुरित्युपादिशदसौ गङ्गाधरस्यात्मजः ॥६२॥

र्जाता। अतोऽर्धं दास्ये। संशयो माऽस्तु। स आह। लोभतः कुतो धर्महानिः कार्या। इदं गुरुप्रसादात्ते लब्धं तद्यथासुखं गृहं नीत्वा राज्यं कुरु। तथेत्युक्त्वा स च द्विजेभ्यो बहु धान्यं दत्वा, राजभागं च प्रदाय, बहु धान्यं गृहं निन्ये। ईदृग्गुरुचरित्रं। यस्य दृढा भक्तिस्तस्य कुतो दैन्यं। सर्वाभीष्टकरं गु० ॥५७-६२॥ इति चूर्णिकायां अष्टचत्वारिंशोऽध्यायः ॥

(इति)श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्यगङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञितमहाराष्ट्रभाषान्वितगुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वतीयतिविरचितायां श्रीगुरुसंहितायां भक्तिकाण्डे अष्टचत्वारिंशः ( अध्यायः ) ॥

॥ आदितः श्लोकाः ॥ ६०३० ॥

॥ इति अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

---

## ॥ अथ एकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

॥ श्रीगणेशाय नमः ॥

नामधारक शिष्याग्र्यो धृत्वा सिद्धपदौ मुदा ॥
करौ सन्धाय विनतो भक्तियुक्तोऽब्रवीदिदम् ॥ १ ॥

त्रिमूर्तेरवतारोऽयं वेषधारीव मानुषः ॥
गन्धर्वेऽस्मिन्कुतस्तस्थौ क्षेत्रे किन्नामकं त्विदम् ॥२॥

असंख्यातानि तीर्थानि प्रख्यातानि धरातले ॥
तानि हित्वा समस्तानि कुतोऽवसदिहैव तु ॥ ३ ॥

स्थानस्यास्य च माहात्म्यं स्वामिन्मे विस्तराद्वद ॥
इत्युक्त्वा सिद्धचरणौ जगृहे नामधारकः ॥ ४ ॥

इति तस्य वचः श्रुत्वा सिद्धः सन्तोषसंयुतः ॥
विस्तरात्प्राह शृण्वन्तु श्रोतारस्तत्समाहिताः ॥ ५ ॥

अथ सारसंग्रहश्लोकोऽयम्—

सर्गेऽकवाक्सम्मित इन्द्रवज्रालेपोपमावक्षतिकृद्धगिन्याः ॥
तत्क्षेत्रमाहात्म्यमुवाच सोऽष्टतीर्थानि चादर्शयदत्र सद्भ्यः ॥४९॥

नामधारकः सिद्धपदे धृत्वा नत्वाऽऽह ॥ १ ॥ वेषधारी नर इव त्रिमूर्त्यवतारोऽयं भूमिष्ठासंख्यतीर्थानि त्यक्त्वा कुतोऽत्र स्थितः, किन्नाम, क चैतत्क्षेत्रं । तन्माहात्म्यं विस्तराद्वदेति तद्वचः श्रुत्वा तुष्टः सिद्ध आह ।

इषकृष्णचतुर्दश्यां कदाचिद्दीपकोत्सवे ॥
स्वशिष्यान्त्रिस्थलीस्नानं कर्तुं गुरुरुपादिशत् ॥ ६ ॥

प्रयाताशु गयां काशीं प्रयागं सकुटुम्बकाः ॥
सम्भारान्सम्भरिष्यामः पाथेयानिति तेऽब्रुवन् ॥ ७ ॥

तच्छ्रुत्वा श्रीगुरुः प्राह सहास्यं ग्रामसन्निधौ ॥
त्रिस्थली विद्यते तस्मात्किं पाथेयप्रयोजनम् ॥ ८ ॥

अहं चाप्यागमिष्यामीत्युक्त्वा तैः सह सङ्गमम् ॥
गत्वा सस्नावमरजां शिष्यैः सह जगद्गुरुः ॥ ९ ॥

श्रीगुरुः प्राह माहात्म्यं सङ्गमस्यामितं खलु ॥
प्रयागेन समं स्नानात्षट्कूलेऽपि ततोऽधिकम् ॥ १० ॥

भीमातीरे त्वमरजासङ्गमोऽयं विशेषतः ॥
गङ्गायमुनयोर्योग इवायं तीर्थराट् स्वयम् ॥ ११ ॥

समाहितः श्रृणु। अत्र गन्धर्वनामकक्षेत्र आश्विनकृष्णचतुर्दश्यां दीपोत्सवे श्रीगुरुः शिष्यानाह। अद्य त्रिस्थलीयात्रां कुरुत। त ऊचुः। संभारान्संभरिष्यामः पाथेयानि च। प्रहसन्श्रीगुरुराह। सन्निधौ त्रिस्थली विद्यते। किं पाथेयप्रयोजनं। सकुटुंबा निर्गच्छत। अहं चागमिष्यामीत्युक्त्वा तैः सह सङ्गमं गत्वा स्नात्वाऽऽह। प्रयागेन समोऽयं सङ्गमोऽस्यामितमाहात्म्यं। ततोऽप्यधिकं षट्कूलतीर्थं ॥२-१०॥ भीमामरजासङ्गमोऽयं गंगायमुनासङ्गमादधिकस्तीर्थराजोऽत्र स्नानादनंतपुण्यं। उत्तरवाहिन्यां

अपारपुण्यमत्रोक्तं यत्र साऽमरजानदी ॥
काशीतोऽप्यधिकं पुण्यं सा यत्रोत्तरवाहिनी ॥ १२ ॥

अष्टतीर्थानि सन्त्यत्र यन्माहात्म्यमनुत्तमम् ॥
एकैकतीर्थमाहात्म्यं किं वाच्यं पावनं तु यत् ॥ १३ ॥

इति श्रुत्वा गुरोर्वाक्यं प्रोचुर्भक्ता नता गुरुम् ॥
नदी कस्मात्समुत्पन्ना सम्प्रोक्ताऽमरजेति या ॥१४॥

गुरुः प्राह भवद्भिर्मे सम्यक्पृष्टमिदं खलु ॥
कथा जालन्धराख्याने पुराणे कथिता त्वियम् ॥१५॥

जित्वा वसुन्धरां सर्वां जालन्धरनिशाचरः ॥
पराभूताः सुराः स्वर्गो हृतो देवाः पलायिताः ॥१६॥

देवासुरमभूद्युद्धं निहता अमरा अपि ॥
इन्द्रो गत्वेश्वरायेदं कथयामास सर्वशः ॥ १७ ॥

इन्द्रः प्राह शिवं शम्भो दैत्यैर्देवा हता युधि ॥
धृतं ते पदमस्माभिरुपायं कुरु सत्वरम् ॥ १८ ॥

त्वतोऽधिकः । अत्र पावनान्यष्टतीर्थानि । एकैकस्य माहात्म्यं किं वाच्यं । भक्ता ऊचुः । कुतोऽसावुत्पन्नाऽमरजानदी । श्रीगुरुराह । सम्यक्पृष्टं शृणुत । पुरा देवदैत्ययुद्धं जातं । जालंधरासुरेण देवा हताः । इन्द्रः शिवं

युद्धे विद्धास्तु ये दैत्या भुवि तद्रक्तबिन्दवः ॥
यावन्तः पतिता दैत्यास्तावन्तो जज्ञिरे शिव ॥ १९ ॥

पातालभूतलस्वर्गा व्याप्ता दैत्यकुलैः खलैः ॥
सकलं दैवतकुलं हतं तैरबलं यतः ॥ २० ॥

इतीन्द्रवचनं श्रुत्वा क्रुद्धो लोकं दहन्निव ॥
रुद्रो रौद्रतनुर्भूत्वा प्रतस्थे हन्तुमासुरान् ॥ २१ ॥

तदेन्द्रः प्रार्थयामास हनिष्यस्यसुरान्खलु ॥
देवसञ्जीवनोपायं तावद्योजय शङ्कर ॥ २२ ॥

ततस्तुष्टः स गिरीश उक्त्वाऽमृतवचो घटम् ॥
देवसञ्जीवनार्थाय देवेन्द्रस्य करे ददौ ॥ २३ ॥

तमादायेन्द्र आगत्य तदाऽसिञ्चत्सुरोपरि ॥
मृता अपि तदा देवाः सुप्तोत्थितवदुत्थिताः ॥ २४ ॥

यच्छिष्टममृतं कुम्भे तदादायामरेश्वरः ॥
ययौ तावच्च्युतं कुम्भादमृतं भुवि निःसृतम् ॥ २५ ॥

गत्वा सर्वं न्यवेदयत्। हे शिव! युद्धे विद्धदैत्यानां यावन्तो रक्तबिन्दवो भुवि पतन्ति तावन्तो दैत्या जातास्तैस्त्रिभुवनं व्याप्तं। देवा हताः ॥ १९-२०॥ इतीन्द्रवचः श्रुत्वा क्रुद्धः शिवो लोकं दहन्निवोग्रमूर्त्या दैत्यान्हंतुं प्रतस्थे। तदेन्द्र आह। देवजीवनोपायं तावत्कुरु। तदा शिवो देवसञ्जीवनार्थमिन्द्रायामृतघटं ददौ। तमादायेंद्रो हतदेवशरीरेषु सिषेच। ततस्ते मृता अपि मुक्तनिद्रा इवोत्थिताः। शिष्टममृतं कुंभाद्भुवि निःसृतं। सेयं

महाप्रवाहो जातः सा जाता सञ्जीवनी नदी ॥
भुवि प्रसिद्धाऽमरजा वाङ्मनःकायशोधिनी ॥ २६ ॥

अत एवात्र नद्यां ये स्नानं कुर्वन्ति भक्तितः ॥
न स्यात्तेषां कालमृत्युरपमृत्युभयं कुतः ॥ २७ ॥

पुमाञ्छतायुर्भवति दुःखरोगादिवर्जितः ॥
दोषा नश्यन्ति सर्वेऽपि ब्रह्महत्याद्यघानि च ॥ २८ ॥

नदीयममृतानाम्नी भीमरथ्या तु सङ्गता ॥
प्रयागवद्भूत्तीर्थं त्रिवेणीसङ्गमस्त्वयम् ॥ २९ ॥

राधकार्तिकमाघेषु स्नानं कुर्वन्ति येऽत्र तु ॥
इह लोके सुखं भुक्त्वा चान्ते मोक्षं व्रजन्ति ते ॥३०॥

सम्भवेच्चेत्सदा स्नायात्सोमसूर्यग्रहेऽथवा ॥
क्रान्तिपर्वैकादशीषु स्नानात्पुण्यमनन्तकम् ॥ ३१ ॥

महाप्रवाहा सञ्जीवन्यमरजानदी त्रिविधपापहर्त्री । येऽत्र भक्त्या स्नास्यन्ति न तेषां कालमृत्युः कुतोऽपमृत्युः स शतायुर्दुःखदोषरोगहीनश्च स्यात् ॥ ब्रह्महत्यादिहृन्नदीयं भीमायां सङ्गता त्रिवेणीसङ्गमोऽयं ॥२१-२९॥ अत्र वैशाखकार्तिकमाघस्नानादिह सुखमन्ते मोक्षश्च । नित्यस्नानासम्भवे ग्रहणसंक्रांतिपर्वैकादशीषु स्नानादनन्तफलं । नित्यस्नाने दोषनाशः शता-

१ संक्रांति.

घटेत चेत्सदा कार्यं स्नानं दोषहरं परम् ॥
यस्मिन्मनोहरे तीर्थे शतायुः पुरुषो भवेत् ॥ ३२ ॥

ईदृक्सङ्गममाहात्म्यं तीर्थश्रेष्ठं ततोऽग्रतः ॥
अश्वत्थसन्निधावस्ति यन्मनोहरनामकम् ॥ ३३ ॥

स्नानमात्रात्तु सफला भविष्यन्ति मनोरथाः ॥
यत्र कल्पद्रुमोऽश्वत्थस्तत्र किं किं न सिद्ध्यति ॥३४॥

अश्वत्थ एव कल्पद्रुः सत्यमेव न संशयः ॥
यं यं चिन्तयते कामं तं तं प्राप्नोत्यतो नरः ॥ ३५ ॥

ईदृङ्मनोरथं तीर्थं स्थितमश्वत्थसन्निधौ ॥
प्रख्यातं सर्वलोकेषु सर्वकामप्रपूरकम् ॥ ३६ ॥

ये सेवन्तेऽत्र तीर्थं ते तेषां सर्वे मनोरथाः ॥
शीघ्रं पूर्णा भविष्यन्ति गुरुनाथवचो यथा ॥ ३७ ॥

अहं सदाऽत्र तिष्ठामि निश्चयेन वदामि वः ॥
ये भक्त्याऽर्चन्ति तेषां मे दर्शनं स्यात्कलावपि ॥३८॥

युश्च। अश्वत्थसन्निधौ मनोहरतीर्थं। स्नानमात्रात्तु मनोरथपूर्णता। यत्र कल्पद्रुमोऽश्वत्थस्तत्र किं न सिद्ध्येत्। चिन्तितकामाप्तिर्भवत्येव सत्यं। अहं सदाऽत्र तिष्ठामि। ये भक्त्याऽर्चंति तेषां कलियुगेऽपि मे दर्शनं।

कल्पवृक्षं पुराऽभ्यचर्य ततो गत्वा शिवालयम् ॥
सङ्गमे त्र्यम्बकस्याग्रे जपेन्मन्त्रं समाहितः ॥ ३९ ॥

रुद्रोऽस्ति सङ्गमे यद्वच्छ्रीशैले मल्लिकार्जुनः ॥
शिवं प्रदक्षिणीकुर्यान्नरस्तं भक्तिपूर्वकम् ॥ ४० ॥

पूर्वं नत्वा नन्दिकेशं चण्डस्थानं ततश्चरेत् ॥
पुनः सव्येन नन्दीशं सोमसूत्रं समेत्य च ॥ ४१॥

परीत्यैत्य वृषं भूयो नत्वा चण्डं समेत्य च ॥
सोमसूत्रं पुनर्गत्वा कुर्याच्छैवीं प्रदक्षिणाम् ॥ ४२ ॥

यस्त्रिः प्रदक्षिणीकृत्य वृषभस्थानमेत्य च ॥
शिवमालोकयति चेत्पापमुक्तो भवेत्स च ॥ ४३ ॥

वामहस्तेन वृषणं धृत्वा संस्थाप्य शृङ्गयोः ॥
वृषस्याङ्गुष्ठतर्जन्यौ पश्यतीशं स चेन्द्रवत् ॥ ४४ ॥

धनधान्यादिसम्पत्तिर्गृहे लक्ष्मीरखण्डिता ॥
पुत्रपौत्रादिवृद्धिश्च सङ्गमेशार्चनान्नृणाम् ॥ ४५ ॥

कल्पद्रुं सङ्गमेशं शिवं च संपूज्य त्र्यम्बकमंत्रं जपेत् ॥३०-३९॥ श्रीशैले मल्लिकार्जुन इवायं सङ्गमेशः। पूर्वं नन्दिकेशं नत्वा चण्डस्थानमेत्य नत्वा पुनः सव्येन परीत्य नन्दीशं नत्वा सोमसूत्रेण चण्डं चागत्य नत्वा पुनः शिवसमीपमागच्छेदेवं त्रिः शैवीः प्रदक्षिणाः कृत्वा, वामहस्तेन नन्दिनोऽडं धृत्वा शृङ्गयोरंगुष्ठतर्जन्यौ निधाय, तन्मध्यतः शिवं पश्येत्स इन्द्रवत्तस्य गृहे धनधान्यादिसम्पदखण्डश्रीः पुत्रपौत्रादिवृद्धिश्च। ततोऽग्रतो

ततोऽग्रतो महातीर्थं साक्षाद्वाराणसीति यत् ॥
नागेशसंज्ञिताद्ग्रामादर्धक्रोशात्समुद्गता ॥ ४६ ॥

अस्याश्च शृणुताऽख्यानं सत्यं नैव जनश्रुतिः[1] ॥
अभवत्कश्चन पुरा भारद्वाजकुलोद्भवः ॥ ४७ ॥

विरक्त ईशभक्तः स सर्वसङ्गविवर्जितः ॥
नित्यानुष्ठाननिरतः शिवध्यानरतो द्विजः ॥ ४८ ॥

चन्द्रमौलिः स प्रसन्नः प्रत्यक्षोऽस्य सदाऽभवत् ॥
जाताल्हादः सदा विप्रो देहं विस्मृत्य पर्यटत् ॥४९॥

लोकः पिशाचोऽयमित्थं मत्वा निन्दति तं सदा ॥
अनुजौ द्वौ च तस्य स्तस्तयोराख्ये वदामि ते ॥५०॥

एक ईश्वरसंज्ञोऽभूत्पाण्डुरङ्गाभिधोऽपरः ॥
कर्तुं काशीक्षेत्रयात्रां प्रवृत्तौ तौ कदाचन ॥ ५१ ॥

तौ तु सम्पाद्य पाथेयं काशीं गन्तुं समुद्यतौ ॥
पप्रच्छतुर्भ्रातरं तौ त्वं पिशाचागमिष्यसि ॥ ५२ ॥

महातीर्थं साक्षाद्वाराणसीयं नागेशाख्यग्रामादुद्गताऽस्या आख्यानं शृणु । पुरा कश्चिद्भारद्वाजगोत्रजो ब्राह्मणो विरक्त ईशभक्तस्त्यक्तसर्वसङ्गः ॥४०-४८॥ तस्येशः समक्षं दृश्योऽभूत्तद्दर्शनाज्जाताल्हादः स देहं विस्मृत्य चचार । जनस्तं पिशाचं मेने । ईश्वरः पाण्डुरङ्ग इति तद्भ्रातरौ पाथेयं

---

[1] जनवार्ता.

तं ब्रह्मज्ञं द्विजं मूढाः पिशाचं मेनिरे स तु ॥
उवाच बान्धवानत्र काशीयं मम सन्निधौ ॥ ५३ ॥

विश्वेश्वरो मन्निकटे विद्यते दर्शयामि वः ॥
मत्वाऽऽश्चर्यं तमूचुस्ते विश्वेशं दर्शयात्र नः ॥ ५४ ॥

विश्वेश्वरोऽत्र चेद्यत्नात्को वा काशीं गमिष्यति ॥
प्रयासोऽपि न चास्माकं यदि त्वं दर्शयिष्यसि ॥५५॥

इत्युक्तः स तदा विप्रः स्नात्वा गङ्गोदके मुदा ॥
ईशं समाहितो दध्यावीश्वरोऽप्यागतोऽन्तिके ॥५६॥

स शिवं प्रार्थयामास काश्यपेक्षाऽस्ति नोऽत्र तु ॥
विश्वेशदर्शनं नित्यं भवत्विति पदेऽग्रहीत् ॥ ५७ ॥

भक्तवत्सलसम्राट् स प्रसन्नोऽभवदीश्वरः ॥
काशीं प्रदर्शयामास कुण्डे च मणिकर्णिकाम् ॥ ५८ ॥

सम्पाद्य ब्रह्मनिष्ठं तं प्रोचतुः। हे पिशाच! काशीमेष्यसि किं। स आह। काशी विश्वेश्वरश्च मे निकटेऽस्ति। तौ साश्चर्यमूचतुः। कुतः प्रयासात्तर्हि यात्रा कार्याऽत्र नो दर्शय। तथेति स स्नात्वा समाहित ईशं दध्यौ। तदा तस्य समीपे ईशोऽप्यागतः स ईश्वरं प्रार्थयत्। हे शिव! अत्र नित्यं काश्यपेक्षा, विश्वेशदर्शनं नित्यमस्तु। तदा भक्तवत्सल ईशः प्रसन्नो भूत्वा काशीं दर्शयामास ॥४९-५८॥ कुण्डे मणिकर्णिका तन्मध्ये

कुण्डमध्याच्च विश्वेशमूर्तिराविरभूत्तदा ॥
यत्रोदग्वाहिनी गङ्गा तत्र काशी समुद्गता ॥ ५९ ॥

भागीरथीजलसमं कुण्डतो निर्गतं जलम् ॥
अभवत्तानि चिह्नानि यानि काशीपुरे द्विजाः ॥ ६० ॥

तद्भीमामरजायोगे काशीतीर्थमनुत्तमम् ॥
तद्दृष्ट्वाऽऽप्लुत्य विधिना पिशाचं मेनिरे बुधम् ॥६१॥

स बन्धून्प्राह काशीयं दत्ता विश्वेश्वरेण मे ॥
स्नानादि कार्यमत्रैव गन्तव्यं नेतरत्र च ॥ ६२ ॥

बन्धवो भ्रान्त एवाहं गोस्वामीत्यभिधा मम ॥
युवां तु भ्रातरावीशाराधनं कुरुतं सदा ॥ ६३ ॥

प्रत्यब्दमेतामागत्य युवाभ्यामादरेण हि ॥
काशीयात्राऽत्र कर्तव्या बन्धूनित्थमुपादिशत् ॥ ६४ ॥

विश्वेशमूर्तिराविर्भूता यत्रोदग्वाहिनी गङ्गा तत्र काशी प्रकाशिता । कुण्डाद्भागीरथीजलवत्प्रवाहो निर्गतः । सर्वकाशीचिह्नानि चासन् । तत्सर्वं दृष्ट्वा विधिना स्नात्वा पिशाचं ज्ञानिनं मेनिरे । स बन्धून्प्राह । काशीयं विश्वेशेन दत्ता । अत्र स्नानादि कर्तव्यं, नान्यत्र गन्तव्यं । भ्रान्तोऽहं गोस्वामी । हे भ्रातरौ ! ईश्वरार्चनं कुरुतं । प्रतिवर्षमत्रादरेण काशीयात्रा

---

१ भीमा.

इति श्रुत्वा गुरोर्वाक्यं सर्वे स्नानादि चाचरन् ॥
ततोऽग्रतो ययौ भक्तैः श्रीगुरुर्नामधारक ॥ ६५ ॥

श्रीगुरुः प्राह काशीयं पुण्यराशिरिहोदिता ॥
साक्षाद्वाराणशीयं हि नात्र कार्या विचारणा ॥ ६६ ॥

गुरुस्तान्दर्शयामास तीर्थं पापविनाशकम् ॥
यत्स्नानमात्रं पापाद्रिं दहत्यग्निर्यथा तृणम् ॥ ६७ ॥

पूर्वाश्रमस्वसा रत्नानामिका दोषसंयुता ॥
तदैव चागताऽऽहूय तां श्रीगुरुरपृच्छत ॥ ६८ ॥

पूर्वाश्रमभगिन्यत्र दर्शनार्थं त्वमागता ॥
पूर्वोक्तानि च पापानि हृदा स्मरसि किं वद ॥ ६९ ॥

इति श्रुत्वा गुरोर्वाक्यं प्रणिपत्याब्रवीच्च सा ॥
योषा मूढाऽहमज्ञाऽतः[1] कुतो ज्ञानं ममेदृशम् ॥ ७० ॥

कर्तव्येति। एवं गुरुवाक्यं श्रुत्वा सर्वे स्नानादि चक्रुः। काशीयं पुण्य-राशिर्नात्र संशय इत्युक्त्वा गुरुः पापविनाशतीर्थमग्रतोऽदर्शयत्स्नानमात्रा-दग्निस्तृणाद्रिमिव पापराशिं दहति ॥५९-६७॥ तत्र पूर्वाश्रमस्वसा रत्ना प्राप्ता तां श्रीगुरुराह। मे दर्शनायागता त्वं पूर्वपापानि स्मरसि किं? सा नत्वाऽऽह। योषा मूढाऽहं, कुतो मे ज्ञानं, त्वं ज्ञानदीपो विश्वात्मको

१ हेतोः.

त्वं ज्ञानदीपको विश्वव्यापको जगदात्मकः ॥
सर्वं जानासि सर्वज्ञ विस्तरात्कथयस्व मे ॥ ७१ ॥

श्रीगुरुः प्राह तां रत्नां स्वपापं यदि पृच्छसि ॥
पञ्चमार्जारघातस्ते कृतः स्मरसि किं न तम् ॥ ७२ ॥

मार्जारी गर्भिणी भाण्डे प्रसूताऽभून्न वीक्ष्य च ॥
तद्गर्भान्भाजने क्षिप्त्वा जलमग्नौ त्वया धृतम् ॥ ७३ ॥

पञ्चमार्जारघातस्ते कृतोऽन्यदुदितं पुरा ॥
एवं गुरौ ब्रुवत्यङ्गं कुष्ठव्याप्तं ददर्श सा ॥ ७४ ॥

भीतभीता गुरुपदसंलग्ना विनताऽब्रवीत् ॥
दयस्व दयनीयाऽहं दयाब्धे गुरुनायक ॥ ७५ ॥

कृत्वा जनः पापराशिं याति वाराणशीं यथा ॥
पापमुक्त्यै तथैवाहं दर्शनार्थं त आगता ॥ ७६ ॥

विश्वसाक्षी सर्वं वेत्सि । विस्तराद्वद । श्रीगुरुराह । मार्जारी भाण्डे पञ्चपोतानसूत ! तानदृष्ट्वा तत्र जलं क्षिप्त्वा पात्रमग्नौ स्थापितम् । ततः पञ्चमार्जारघातो जातोऽन्यान्यपि पापानीति गुरौ वदति सति तद्देहः कुष्ठव्याप्तोऽभूत् सा भीता गुरुपदलग्नाऽऽह । दयाब्धे ! गुरुनाथ ! दयस्व यथा पापानि कृत्वा जनो वाराणशीं याति तथाऽहमागता । श्रीगुरुराह । पाप-

१ त्रयोदशाध्याये.

श्रीगुरुः प्राह तां पापराशिरेष त्वयाऽर्जितः ॥
एष्यजन्मनि पापं त्वं भोक्ष्यसेऽत्रैव वा वद ॥ ७७ ॥

प्राह रत्नावती स्वामिन्जन्मानि सुबहूनि मे ॥
कष्टेनैवोषितान्यन्ते मुक्त्यर्थं त्वामुपागता ॥ ७८ ॥

अलं लक्षभवैरद्य[1] चरणौ ते धृतौ मया ॥
मुक्त्वाऽत्रैवाखिलं पापं विपापा भवितुं यते ॥ ७९ ॥

इति तस्या वचः श्रुत्वा श्रीगुरुः प्राह तां शुभे ॥
कुष्ठं नश्येत्पापनाशतीर्थस्नानात्तव द्रुतम् ॥ ८० ॥

त्वं नित्यं कुर्विह स्नानं सद्यो नश्यन्त्यसंशयम् ॥
सप्तजन्मार्जिता दोषाः कुष्ठस्यास्य च का कथा ॥८१॥

सिद्धोऽवदन्मया दृष्टं तस्यास्तत्स्नानमात्रतः ॥
सद्य एवाभवत्कुष्ठरुक्शान्तिर्नामधारक ॥ ८२ ॥

राशिस्त्वयाऽर्जित एतज्जन्मान्तरे भोक्ष्यसेऽत्रैव वा वद ॥६८-७७॥ साऽऽह । अलं जन्मभिर्बहुकष्टं दृष्टं मुक्त्यर्थं त्वामुपागता ते पदौ धृतौ । अत्रैव विपापां कुरु । श्रीगुरुराह । अत्र पापनाशतीर्थे नित्यं स्नानं कुरु । स्नानात्सद्यस्ते पापं नश्येत्सप्तजन्मार्जितदोषा अपि । कुष्ठस्य तु का कथा । स्नानात्सद्य एव तत्कुष्ठशान्तिर्जाताऽस्माभि- सिद्ध आह । हे नामधारक । स्नानात्सद्य एव तत्कुष्ठशान्तिर्जाताऽस्माभि-

---

[1] जन्मभिः.

ईदृक्पापविनाशाख्यं तीर्थं परमपावनम् ॥
स्नानं कुर्वन्ति ये तेषां सप्तजन्माघसंक्षयः ॥ ८३ ॥

तीर्थमाहात्म्यमाज्ञाय हृष्टा रत्नवती तदा ॥
मठं निर्माय तत्रैव संस्थिता तीर्थसन्निधौ ॥ ८४ ॥

ततोऽग्रे दर्शयामास कोटितीर्थं गुरुः शुभम् ॥
यत्स्नानमात्रतोऽशेषदोषराशिर्विनश्यति ॥ ८५ ॥

यानि तीर्थानि सन्तीह जम्बुद्वीपेऽखिलानि तु ॥
वसन्ति कोटितीर्थेऽस्मिन्माहात्म्यं शृणुतास्य तु ॥८६॥

सोमसूर्यग्रहे पूर्णाऽमादिपर्वसु भास्वतः ॥
संक्रान्तौ प्रतिपद्यत्र स्नानं कार्यं विधानतः ॥ ८७ ॥

सालङ्कृताः सवत्साश्च कोटिधेनूर्ददाति यः ॥
तद्दानतुल्यपुण्यं हि लभेन्मर्त्यो न संशयः ॥ ८८ ॥

दृष्टा । ईदृक्पावनं पापनाशतीर्थं । यत्स्नानात्सप्तजन्माघक्षयः । हृष्टा रत्ना तीर्थमाहात्म्यं दृष्ट्वा तत्र मठं कृत्वाऽस्थात् । गुरुस्ततोऽग्रे दर्शयित्वाऽऽह । इदं स्नानमात्रात्सर्वदोषहृत् । जम्बुद्वीपस्थसर्वतीर्थान्यत्र वसन्ति ॥७८-८६॥ ग्रहणपर्वक्रान्तिस्नानात्सालङ्कृतसवत्सकोटिधेनुदानफलम् । तीर्थ-

---

१ पूर्णिमाऽमावास्या २ सूर्यस्य.

दानस्यापि फलं चैवमेकैकं दानमत्र तु ॥
कोटिपुण्यफलं प्रोक्तं तीर्थमाहात्म्यतोऽत्र तु ॥ ८९ ॥

ततोऽग्रतो रुद्रपादनामकं तीर्थमुत्तमम् ॥
गयातीर्थसमं प्रोक्तं माहात्म्यं शृणुतास्य च ॥ ९० ॥

गयातीर्थे यदुक्तं तदत्र कार्यं प्रयत्नतः ॥
कोटिजन्मार्जितं पापं नश्येद्रुद्रपदार्चनात् ॥ ९१ ॥

ततोऽग्रतश्चक्रतीर्थं पवित्रं यत्र केशवः ॥
तत्सन्निधौ पुण्यराशिस्थानमेतत्प्रकीर्तितम् ॥ ९२ ॥

एतत्तीर्थस्नानमात्राद्धीनोऽपि ज्ञानवान् भवेत् ॥
चक्राङ्कितं भवेदस्थि यत्र पुण्यं चतुर्गुणम् ॥ ९३ ॥

द्वारिकात इति श्रुत्वा गुरूक्तिं सकलास्तदा ॥
सस्नुर्ददुश्च दानानि ततो मन्मथतीर्थकम् ॥ ९४ ॥

ग्रामस्य पूर्वभागे तु यत्र कल्लेश्वरः स्थितः ॥
महाबलेश्वरो यद्वद्गोकर्णे तत्समः स च ॥ ९५ ॥

माहात्म्यादेकैकदानं कोटिगुणफलं भवेत्। ततोऽग्रे रुद्रपादतीर्थं गयासमं। गयातीर्थोक्तवदत्र कर्म कार्यं। रुद्रपदार्चनात्कोटिजन्मार्जितं पापं नश्येत्। ततोऽग्रे केशवसन्निधौ पुण्यराशिचक्रतीर्थं, हीनोऽपि यत्स्नानाज्ज्ञानी भवेत्। यत्रास्थि चक्राङ्कितं भवति। द्वारिकातश्चतुर्गुणं पुण्यमिति श्रुत्वा सर्वे स्नात्वा दानानि ददुः। यथा गोकर्णे महाबलेश्वरस्तथा ग्रामपूर्वभागे

तंत्र मन्मथतीर्थे यः स्नात्वा कल्लेशमर्चयेत् ॥
विधिनाऽष्टैश्वर्यलाभो भवेत्तस्य न संशयः ॥ ९६ ॥

नभस्यखंडाभिषेकादूर्जे दीपोत्सवात्स तु ॥
अक्षय्यफलदो दद्यात्सर्वसिद्धियुतामृतम् ॥ ९७ ॥

इत्यष्टतीर्थमाहात्म्यं श्रीगुरुः पुरुषोत्तमः ॥
तुष्टः प्रेम्णाऽवदद्भक्तान्बभूवुस्तेऽपि हर्षिताः ॥ ९८ ॥

भक्ता ऊचुस्तदा नेदं ज्ञातमस्माभिरीश्वर ॥
स्वामिन् त्वयाऽद्य कृपया पुनीताः स्मो वयं खलु॥९९॥

समीपस्थेषु तीर्थेषु को दूरं याति कष्टतः ॥
इदं पवित्रमित्युक्त्वा चेरुर्दानानि तेऽखिलाः ॥१००॥

इत्यष्टतीर्थमाहात्म्यं वदन्प्राप मठं गुरुः ॥
महानन्दान्विता भक्ताश्चक्रुर्ब्राह्मणभोजनम् ॥ १ ॥

नामधारक तीर्थानां माहात्म्यं यद्गुरूदितम् ॥
प्रीत्या भक्तजनेभ्यस्तत्तुभ्यं प्रकथितं वरम् ॥ २ ॥

कल्लेश्वरस्तत्सन्निधौ मन्मथतीर्थम्। तत्र स्नात्वा विधिना कल्लेशं सम्पूज्याष्टैश्वर्यं लभेन्न संशयः ॥८७-९६॥ श्रावणेऽखण्डाभिषेकात्कार्तिके दीपोत्सवाच्चेशोऽष्टसिद्धिसहितं मोक्षं दद्यात्। इत्यष्टतीर्थमाहात्म्यं पुरुषोत्तमः श्रीगुरुः प्रेम्णाऽवदत्। सर्वे हृष्टा ऊचुः। नेदं ज्ञातं। स्वामिन्त्वयाद्य प्रकाशितं। ते कृपया पुनीताः स्मः। समीपस्थेषु तीर्थेषु कः कष्टाद्दूरं यायात्। इत्युक्त्वा ते दानादि चक्रुः एवं ख्यापयन्गुरुर्मठं प्राप। हृष्टा

अत एव सरस्वती द्विजो द्विजगङ्गाधरजो रजोहरे ॥
सुरतीर्थयुतेऽवसद्वरे सति गन्धर्वपुरे मनोहरे ॥ १०३ ॥

(इति)श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्यगङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञितमहाराष्ट्रभाषान्वित-गुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वतीयतिविरचितायां श्रीगुरुसंहितायां भक्तिकाण्डे एकोनपञ्चाशत्तमः (अध्यायः) ॥

॥ आदितः श्लोकाः ॥ ६१३३ ॥

भक्ता विप्रान्भोजयामासुः । एवं गुरूक्तं ते कथितं । अत एव सरस्व० इति चूर्णिकायामेकोनपञ्चाश० ॥ ४९ ॥

॥ इति एकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

---

## ॥ अथ पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

॥ श्रीगुरुदेवदत्त ॥ ॥ श्रीग० ॥

सिद्धः प्राह शृणुष्वाग्रच सत्कथां नामधारक ॥
पुरोक्तं नवमाध्याये रजकः सेवकोऽभवत् ॥ १ ॥

वरश्च याचितस्तेन प्रसन्नस्तद्गुरुस्तदा ॥
एष्यजन्मनि ते राज्यं दास्यामीति वरं ददौ ॥ २ ॥

स प्रेत्य वैडूर्यपुरे सर्वसम्पत्समृद्धियुक् ॥
म्लेच्छजातीयराजोऽभूत्सुखी पुत्रादिसंयुतः ॥ ३ ॥

स सदैवाभवत्तुष्टो गजाश्वधनसंयुतः ॥
तस्य पादातिसैन्यस्य संख्या नैवाभवत्तदा ॥ ४ ॥

श्रीद० खशरयुते पुरोक्तरजकोऽभवद्यवनराज आस वृषकृत्
पृथुपिटकस्तदङ्क उदितस्तदीयशमकृद्‌द्विजो नृपकथाम् ॥
अवददथो ययौ स गुरुं स्मृतिं प्रथमजन्मनोऽलभदथो
गतरुगसौ सुयानगमजं गजाश्वललितं पुरं स्वमनयत् ॥ ५० ॥

सिद्ध आह नवमाध्याये उक्तो रजको गुरुसेवकोऽभूत् ॥ १ ॥ एष्यजन्मनि राज्यं दास्यामीति गुरुणा वरश्च दत्तः स वैडूर्यनगरे सर्वसम्पत्तियुतो म्लेच्छजातीयोऽखिलसुखपुत्रादियुतो राजाऽभूत्। स नित्यतुष्टो गजाश्वधनयुतश्च। यस्यासङ्ख्यातं पदातिसैन्यम् स हीनोऽपि

स्वयं स जातिहीनोऽपि पूर्वसंस्कारतः शुभम् ॥
पुण्येच्छाऽतीव तस्यासीद्दानधर्मरतोऽभवत् ॥ ५ ॥

भक्तिर्विशेषाद्विप्रेषु पूर्वसंस्कारतोऽस्य च ॥
स देवालयतीर्थादौ नैवोपद्रवमाचरत् ॥ ६ ॥

तं तत्पुरोहिता ऊचू राजन्धर्मं शृणुष्व नः ॥
यस्मान्म्लेच्छो भवान् तस्मान्निन्द्या देवा द्विजा अपि॥७॥

भवांस्तु तान्भजत्येतन्महापातकमेव नः ॥
यस्य यो विहितो धर्मः स तस्यातीव पुण्यदः ॥ ८ ॥

मन्दा द्विजास्तु काष्ठाश्मपूजां कुर्वन्त्यतद्विदः ॥
येषां मन्दधियां काष्ठवृक्षाश्मानोऽपि देवताः ॥ ९ ॥

धेनुश्च देवता येषामग्निसूर्यादयोऽपि च ॥
यात्रानदीतोयमपि येषां दैवतमीदृशम् ॥ १० ॥

एवं मन्दा निराकारं साकारं कल्पयन्त्यहो ॥
एतान्भजन्ति ये म्लेछास्तेषां नूनमधोगतिः ॥ ११ ॥

प्राक्संस्कारात्पुण्येच्छुर्दानधर्मरतो विशेषाद्विप्रभक्तश्च देवालयतीर्थादौ नोपद्रवं चक्रे तद्गुरवस्तमूचुः भवान्मूलेच्छोऽतो देवद्विजा निन्द्याः । तद्भजनान्महापापं । यस्य यो धर्मः स तस्यातीव पुण्यदः द्विजा मन्दा अज्ञा येषां काष्टपाषाणा अपि देवाः । धेनुराग्निसूर्यनदीजलाद्यपि कथम् दैवतम् ॥ २-१० ॥ एवं निराकारेशं साकारं मन्वानानां भजनादधोगतिः ।

इति तद्वचनं श्रुत्वा राजा तानाह सादरम् ॥
पूर्वसंस्कारतो यस्य वर्णधर्मे दृढा मतिः ॥ १२ ॥

राजा पुरोहितानाह भवद्भिर्यत्समीरितम् ॥
अण्वादितृणकाष्ठान्तं स्थितः सर्वत्र चेश्वरः ॥ १३ ॥

स्वयं स्वात्मानमसृजज्जगत्स्थावरभेदतः ॥
तत्सृष्ट्वानुप्रविष्टश्च तर्कभेदा मताग्रहात् ॥ १४ ॥

सर्वत्रैकोऽस्त्यनुस्यूतो देवो यस्माद्भूज्जगत् ॥
पञ्चभूतात्मकं धर्ममर्यादासहितं मितम् ॥ १५ ॥

हेत्वात्मतां[1] न त्यजन्ति यथा कुम्भादयो मृदः ॥
जाता अपि विकारास्ते तथा सत्त्वं जहाति कः ॥ १६ ॥

यथा नानावर्णगोषु क्षीरमेकं तथात्र चित् ॥
न हेम्नो भूषणैर्हानिस्तथा भूम्नो न विश्वतः ॥ १७ ॥

तच्छ्रुत्वा पूर्वसंस्काराद्धर्मे दृढमती राजाह। तृणकाष्ठाण्वादिषु सर्वत्रेश्वरः स्वयं स्वात्मनः स्थावरजङ्गमादि सृष्ट्वाभूद्भेदबुद्ध्या मताग्रहः तस्मात्पञ्चभूतात्मकं धर्ममर्यादासहितं जगदेव एव सर्वत्रानुस्यूतः। कुम्भादयो यथा हेतुरूपं न त्यजन्ति तथा विकाराः सत्त्वं न त्यजन्ति। नानावर्णगोषु क्षीरमेकमिव सर्वत्र चिदेका। यथा भूषणैर्न स्वर्णहानिस्तथा जगता भूम्नो

---

१ कारणात्मतां.

घटादिभिरिवाकाश आत्मा देहैर्न भिद्यते ॥
नात्मैति विकृतिं बुद्ध्या घटोदेनेव चन्द्रमाः ॥ १८ ॥

दीपादीपान्तरेऽप्येकत्वं निर्बाधं यथा तथा ॥
अखण्डैकरसं ब्रह्म सच्चिदानन्दमेकमित् ॥ १९ ॥

तस्मिन्सर्वमिदं प्रोतं नामरूपविभागयुक् ॥
तदधीनं यथा सूत्रे नानामणिगणाः स्थिताः ॥ २० ॥

एवं नानाजातिगत एक एव हरिर्विभुः ॥
आकाशवत्सर्वगतोऽसङ्गो भेदः कुतो विभोः ॥ २१ ॥

ईदृगात्मपरिज्ञाने चित्तशुद्धिरपेक्ष्यते ॥
तदर्थमश्मादिमूर्तौ विहितेश्वरभावना ॥ २२ ॥

अस्ति सर्वत्र विश्वात्माथापि ध्यानार्थमेव च ॥
प्रतिमार्चा स्वल्पधीनां सुधीनामात्मपूजनम् ॥ २३ ॥

न हानिः। घटैराकाश इवात्मा देहैर्न भिद्यते। घटोदकस्थचन्द्र इवात्मा बुद्ध्या विकारं नैति। दीपादीपान्तरेऽपि यथैकत्वं निर्बाधं तथाखण्डैकरसं ब्रह्म प्रत्यग्रूपेण न भिद्यते ॥ ११-१९ ॥ सूत्राधीना नानामणय इवेदं नामरूपविभागात्मकं तस्मिन्प्रोतं तदधीनमेव। एवं नानाजातिगत एक एव विभुराकाशवदसङ्गः। तज्ज्ञाने चित्तशुद्ध्यपेक्षा, तदर्थमश्मादिकृतदेव-प्रतिमाभावना। ध्यानार्थमेवाल्पधियाम् प्रतिमार्चनम्। सुधीनामात्मभावना.

---

१ विकारं.　　२ स्वल्पधियामित्यपि पाठः.

यस्यान्तःकरणस्थैर्यं न तस्य प्रतिमादिषु ॥
भावनातो भवेत्स्थैर्यं तत्र नारायणोऽस्ति हि ॥ २४ ॥

यत्र यस्य भवेन्निष्ठा तत्र तस्य तथा फलम् ॥
अत एव न निन्द्यास्ते न द्वेष्याः स्वमतादराः ॥ २५ ॥

तस्माद्भवद्भिर्नो निन्द्या निजधर्मानुवर्तिनः ॥
येषां यो विहितो मार्गः स तस्य हितदो भवेत् ॥ २६ ॥

एवं विस्तरतः प्राह राजा म्लेच्छपुरोहितान् ॥
स्वयं चचार पुण्यं स देवब्राह्मणभक्तिमान् ॥ २७ ॥

स्थित्वा वैडूर्यनगरे धार्मिकः स शशास गाम् ॥
दैवयोगेन तस्याङ्के राजस्फोटक उद्गतः ॥ २८ ॥

चिकित्सकैरनेकैः स स्फोटकोऽपि चिकित्सितः ॥
न शशाम महाकष्टं प्राप तेन स भूमिपः ॥ २९ ॥

एवं च सति गन्धर्वपुरे श्रीगुरुरात्मनि ॥
विचार्यांहाधुना म्लेच्छराजोऽप्यत्रागमिष्यति ॥ ३० ॥

सर्वत्र विश्वात्मापि ध्यानार्थं मनःस्थैर्याय प्रतिमादिषु भावयन्ति तत्र नारायणोऽस्ति हि यत्र यस्य यथा निष्ठा तत्र तस्य तथा फलम्। ततः स्वमतनिष्ठा न निन्द्या न द्वेष्याश्च। येषां यो मार्गः स तस्य हितदः। एवं तानुक्त्वा देवविप्रभक्तः स्वयं धर्ममाचरन्राज्यं शशास। दैवात्तस्याङ्के राजस्फोटकोऽभूत् ॥ २८ ॥ वैद्यैश्चिकित्सितोऽपि न शशाम। तेन सोऽतीव कष्टं प्राप। श्रीगुरुर्मठे विचारयामास। म्लेच्छराजोऽत्रागमि-

पीडा भवेद्द्विजातीनां म्लेच्छेष्वत्रागतेषु च ॥
माहात्म्यं प्रकटं जातं मया स्थेयं न चात्र तत् ॥३१॥

प्रसिद्धाभून्मम ख्यातिर्म्लेच्छा आयान्ति भाति मे ॥
अतोऽन्तर्धानमस्माकं वरं लोकेऽत्र सर्वथा ॥ ३२ ॥

सिंहराशिं गुरुः प्राप्तो बहुधान्याख्यवर्षके ॥
गोदावरीतीर्थयात्राप्रसङ्गेन चराम्यहम् ॥ ३३ ॥

इत्युक्त्वा प्राह शिष्यान्स म्लेच्छो राजागमिष्यति ॥
मां नेतुमत एवातो यास्यामो गौतमीं द्रुतम् ॥ ३४ ॥

इत्युक्ताश्चिन्तयामासुः शिष्या यद्यप्यहो नृपः ॥
म्लेछ आयाति चेदत्र धर्महानिर्भवेन्न किम् ॥ ३५ ॥

अलमस्मद्विचारेण श्रीनृसिंहसरस्वती ॥
साक्षात्तिष्ठति दत्तोऽत्र सोऽस्मात्रक्षतु सर्वतः ॥ ३६ ॥

इत्युक्त्वापि च तत्रैव तूष्णीं तस्थुश्च तेऽखिलाः ॥
पूर्वसंस्कारतो राज्ञो मतिर्धर्मेऽभवच्छुभा ॥ ३७ ॥

ष्यति। ततो द्विजानां पीडा स्यान्माहात्म्यं प्रकटितं। नात्र स्थेयं। ख्यातिः प्रसिद्धा, म्लेच्छा अप्यागमिष्यन्ति, ततोऽतर्धानं वरं. बहुधान्यवर्षेऽत्र गुरुः सिंहराशिं गतः, गौतमीयात्राप्रसङ्गेन यास्यामीति विचार्य शिष्या-नाह। म्लेच्छराजोऽत्रागमिष्यति ततो गौतमीं यास्ये। तच्छ्रुत्वा ते प्राहुः। अहो म्लेच्छ एष्यति चेन्नो धर्महानिरलं नो विचारेण श्रीगुरुः साक्षाद्दत्तोऽत्र तिष्ठति स नस्त्रातेत्युक्त्वा ते तूष्णीं स्थिताः। पूर्वसंस्कारा-

राजा स्फोटककष्टेनातीव दुःखमवाप सः ॥
नानौषधैः सुलेपैश्च नैव शान्ति ययौ व्यथा ॥ ३८ ॥

राजा विचारयामास स्फोटकोऽतीव बाधते ॥
वैद्या अपि न शेकुर्मे आरोग्यं दातुमद्य हि ॥ ३९ ॥

किं कर्तव्यमतो विप्रान्पृच्छेयमिति स द्विजान् ॥
आहूयारोग्यं पप्रच्छ ते प्राहुः शृणु भूपते ॥ ४० ॥

पूर्वजन्मकृतं पापं व्याधिरूपेण बाधते ॥
तीर्थदेवार्चनैर्दानैर्व्याधिशान्तिर्भविष्यति ॥ ४१ ॥

अथवा साधुभजनात्तद्दर्शनसुधारसात् ॥
भविष्यति किलारोग्यं भूप ते नात्र संशयः ॥ ४२ ॥

दैवाद्राजन्सत्पुरुषकृपादृष्टिर्लभेद्यदि ॥
षष्टिजन्माघनाशोऽतः कुतः स्फोटादिरुग्व्यथा ॥ ४३ ॥

इति विप्रवचः श्रुत्वा नत्वा राजाब्रवीद्द्विजम् ॥
म्लेच्छोऽयमिति नोपेक्ष्यो विप्रदासोऽहमेव हि ॥ ४४ ॥

ज्जातसन्मती राजा ॥ ३७ ॥ अतीव दुःखितः नानौषधलेपैर्यद्व्यथा न शान्ता। तदा पीडितो राजाह। वैद्या अप्यारोग्यं दातुं न शक्ताः अतो विप्राः प्रष्टव्या इति विप्रानाहूयापृच्छत्। त ऊचुः। प्राग्जन्मपापं व्याधिरूपेण बाधते तीर्थदेवार्चनदानैस्तच्छान्तिः। यद्वा साधोर्भजनाद्दर्शनाच्च न संशयः। सत्कृपादृष्टिर्भवेत्तर्हि षष्टिजन्मपापनाशः, स्फोटकस्य तु का कथा। राजाह। म्लेच्छोऽयमिति नोपेक्ष्यः। भवद्दासोऽहं प्राग्जन्मनि

प्राग्जन्मनि गुरोः सेवा कृतातो लब्धमीदृशम् ॥
राज्यं ह्यघवशाज्जन्म मम म्लेच्छकुलेऽभवत् ॥ ४५ ॥

विश्वासार्थं पुरावृत्तं भवन्तः कथयन्तु मे ॥
महानुभावदृष्ट्यैव कस्य रोगः क्षणाद्गतः ॥ ४६ ॥

इति राजवचः श्रुत्वा विचार्य मनसा द्विजः ॥
प्राहात्र तन्न वक्तव्यं रहःस्थानमपेक्ष्यते ॥ ४७ ॥

म्लेच्छं भवन्तं सर्वेऽपि निन्दन्त्येव वयं द्विजाः ॥
कथं वाच्यं त्वत्र लोकविद्विष्टत्वाद्रहो वदे ॥ ४८ ॥

इति विप्रवचः श्रुत्वा विनीतो यवनोऽब्रवीत् ॥
किं जात्या द्विजदासं मामुद्धरन्तु कृपालवः ॥ ४९ ॥

इति तस्यानुतप्तस्य मनो ज्ञात्वाऽब्रवीद्द्विजः ॥
अथाप्येकान्त एवेदं राजन्वक्ष्याम्यसंशयम् ॥ ५० ॥

तीर्थं पापविनाशाख्यं रहःस्थानमनुत्तमम् ॥
तत्केनापि निमित्तेन प्रयाहि नृप निश्चितम् ॥ ५१ ॥

गुरुसेवा कृताऽत ईदृग्राज्यं लब्धं । पापात्तु म्लेच्छकुले जन्म । सदृदृष्ट्या पुरा कस्य रोगो गत इति विश्वासार्थमेकं निदर्शनं भवन्तः कथयन्तु ॥ ३८-४६ ॥ त आहुरेतद्रहो वाच्यं । सर्वे म्लेच्छं निन्दन्ति । वयं तु द्विजाः । राजाह । किं जात्या । द्विजदासं मां कृपयोद्धरत । एवं तमनुत्तमं ज्ञात्वा त ऊचुः । पापविनाशतीर्थं रहःस्थानं तत्र केनापि निमित्तेन गत्वा

१ पापवशात्.

तस्मिन्मनोहरे स्नात्वा रहस्तिष्ठ नृपोत्तम ॥
शृणुष्व तस्मिन्नेकान्तस्थाने कार्यं भवेत्तव ॥ ५२ ॥

इति विप्रवचः श्रुत्वा राजा तुष्टः स सत्वरम् ॥
ययौ पापविनाशाख्यं तीर्थमेकान्ततो हितम् ॥ ५३ ॥

पूर्वं सर्वान्निवार्यैव स एकाकी गतो नृपः ॥
स्नात्वा तस्थौ तदैवैको यतिर्विप्रः समाययौ ॥ ५४ ॥

स राजा तं निरीक्ष्यैव नत्वा सद्भावसंयुतः ॥
स्फोटकं दर्शयित्वोचे कथमस्य शमो भवेत् ॥ ५५ ॥

इति राजवचः श्रुत्वा विप्रः प्राह सविस्तरम् ॥
शान्तो भवेत्साधुदृष्ट्या शृण्वत्र कथयामि ते ॥ ५६ ॥

पुरावन्तीपुरे कश्चिद्दुराचारो द्विजोऽवसत् ॥
जन्ममात्राद्द्विजोऽपि स्वधर्मकर्मविवर्जितः ॥ ५७ ॥

स तारुण्यमदोन्मत्तः परस्त्रीनिरतः सदा ॥
स्नानसन्ध्यावन्दनादि त्यक्त्वाऽभूद्ब्राह्मणब्रुवः ॥५८॥

स्नात्वा रहस्तिष्ठ। तत्र ते कार्यं भवेत्। इति श्रुत्वा स तुष्टः सर्वान्निवार्यैकः पापनाशतीर्थं गत्वाऽस्थात्। तत्रैको विप्र आप। राजा तं नत्वा स्फोटकं दर्शयित्वाह। कथमस्य शान्तिर्भवेत्। विप्र आह! साधुदृष्ट्या शान्तिर्भवेत्। तदर्थं श्रृणु ॥ ४६-५५ ॥ पुरावन्तीपुरे कश्चिज्जन्ममात्रेण द्विजः, स्वधर्महीनः,मत्तः, स्नानादिवर्जितो, दुराचारः, पिङ्गलाख्यवेश्यालये स्थित्वा

दुराचाररतो नित्यं ब्राह्मणाचारवर्जितः ॥
वेश्यामेकां पिङ्गलाख्यां वृत्वा तस्यालये स्थितः ॥५९॥

स्वकर्महीनोऽहोरात्रं वेश्यासङ्गरसायनम् ॥
आस्वादयन्गृहे तस्या बुभुजे भयवर्जितः ॥ ६० ॥

वेश्यालये वर्तमाने ब्राह्मणे दैवयोगतः ॥
ऋषभाख्यो महायोगी मुनिः प्राप यदृच्छया ॥ ६१ ॥

तं वीक्ष्य वेश्या विप्रश्च साष्टाङ्गं प्रणिपत्य तम् ॥
सम्प्रार्थ्य भक्तिभावेन गृहं मुनिमनीनयत् ॥ ६२ ॥

उपवेश्योत्तमे पीठे पूजयामासतुर्मुदा ॥
उपचारैः षोडशभिर्भक्तिपूतेन चेतसा ॥ ६३ ॥

नानापरिमलैर्गन्धैर्नानापुष्पैः सुशोभनैः ॥
नानापरिमलद्रव्यैः पूजयामासतुर्मुदा ॥ ६४ ॥

पादावनेजनं तीर्थं तस्य पीत्वाखिलाघहृत् ॥
भोजयामासतुर्मिष्टैः पक्वान्नैर्विविधैरपि ॥ ६५ ॥

क्षालयित्वा करास्यादि दत्वा ताम्बूलमुत्तमम् ॥
ततः शायितवन्तौ तं पर्यङ्के कोमलास्तरे ॥ ६६ ॥

होरात्रं तयारीरमत्। निर्भयं तदन्नञ्च बुभुजे। कदाचिद्दैवात्तत्र ऋषभयोगी प्राप। तं दृष्ट्वा तौ साष्टाङ्गं नत्वा, भक्त्या प्रार्थ्य, गृहमानीयोत्तमासने उपवेश्य, नानागन्धपरिमलादिभिः पूजयित्वा, तत्पादोदकं पीत्वा, मिष्टपक्वान्नैर्भोजयित्वा, हस्तौ क्षालयित्वोत्तमं ताम्बूलं दत्वा, कोमलास्तरणपर्यङ्के तं शाययित्वा ॥ ९६-६६ ॥ देवबुद्ध्योभौ तत्पादसेवनादि चक्रतुः

तत्र सुप्तस्य तस्योभौ पादसंवाहनादिकम् ॥
चक्रतुर्देवबुद्ध्या तौ भक्तियुक्तेन चेतसा ॥ ६७ ॥

प्रगाढं निद्रितं ज्ञात्वा योगेश्वरमुभावपि ॥
उपस्थितौ त्रियामं तौ बद्धाञ्जलिपुटौ मुदा ॥ ६८ ॥

उदिते भास्वति मुनिः सन्तुष्टस्तापसः स तु ॥
ऋषभस्तौ समापृच्छ्य ययौ स्वैरं यथागतम् ॥६९॥

कञ्चित्कालं स विप्रोऽपि स्थित्वा वेश्यागृहे ततः ॥
वार्धक्यभिन्नतारुण्यः शुद्धधीः साधुसङ्गमात् ॥ ७० ॥

दैवयोगेन मरणं स ययौ ब्राह्मणब्रुवः ॥
पिङ्गलाख्यापि वेश्या सा पञ्चत्वमगमद्विधेः ॥ ७१ ॥

पूर्वकर्मानुबन्धेन जातौ राजकुले तु तौ ॥
वज्रबाहोर्दशार्णेशो[१] महिष्याः कुक्षिमाप सः ॥ ७२ ॥

वज्रबाहोर्ज्येष्ठपत्नी सुमतिश्चेति या श्रुता ॥
तस्या उदरमेवासौ प्रविष्टो ब्राह्मणो नृप ॥ ७३ ॥

गाढं निद्रितं तं ज्ञात्वोभौ बद्धाञ्जली तस्थतुः । स मुनिः प्रातरुत्थाय तौ समापृच्छ्य स्वैरं ययौ । कञ्चित्कालं तत्र स्थितो विप्रो गततारुण्यः साधुसङ्गाच्छुद्धधीर्दैवान्ममार । सापि वेश्या मृता । कर्मवशात्तौ राजकुले जातौ । स विप्रो दशार्णेशवज्रबाहुभूपस्य ज्येष्ठपत्न्याः कुक्षिं प्राप । राजा

१ दशार्णदेशाधिपस्य.

वज्रबाहुस्तदा दृष्ट्वा ज्येष्ठपत्नीं च गर्भिणीम् ॥
महोत्सवेन व्यकृणोत्क्रियाः पुंसवनादिकाः ॥ ७४ ॥

तां राज्ञीं गर्भिणीं दृष्ट्वा तत्सपत्नी तदा तराम् ॥
क्रुद्धा मात्सर्यतो यत्नात्तन्नाशायोद्यताभवत् ॥ ७५ ॥

गर्भिण्यै सर्पगरलं प्रददौ सा प्रयत्नतः ॥
सर्वाङ्गेषु च तद्विद्धं ज्येष्ठपत्न्या नृपस्य तु ॥ ७६ ॥

व्याप्तं सर्वं वपुस्तस्या उल्बणेन विषेण च ॥
अतीव कष्टमापन्ना दैवान्नैव ममार सा ॥ ७७ ॥

एवं सा दुःखिता राज्ञी कष्टेन सुषुवे सुतम् ॥
सर्वाङ्गव्रणसंयुक्तः स बालोऽतीव दुःखितः ॥ ७८ ॥

सर्वाङ्गव्रणसंत्रस्तः स नक्तंदिवमर्भकः ॥
भृशं रुरोद दुःखार्तो निद्राहारविवर्जितः ॥ ७९ ॥

विषव्याप्तं सुतं कान्तां तथैव सततं भृशम् ॥
क्रन्दन्तीं युवतीं वीक्ष्य राजा चिन्तापरोऽभवत् ॥ ८० ॥

महोत्सवेन जातकर्माद्यकरोत्। तद्दृष्ट्वा सपत्नी क्रुद्धा मात्सर्येण यत्नाद्गर्भिण्यै सर्पगरलं ददौ ॥ ६७-७६ ॥ सर्वाङ्गेषूल्बणं विषं विद्धं। तथाऽपि सा दैवान्न मृता। ततः कष्टेन सा पुत्रं प्रासूत। सर्वाङ्गव्रणो बालोऽतीव दुःखितो निद्राहीनोऽहोरात्रं भृशं रुरोद। विषव्याप्तं सुतं पत्नीं च वीक्ष्य, चिन्ताक्रान्तो राजा धनं व्ययीकृत्य, देशान्तरादपि वैद्यानानीय,

चिकित्सां कर्तुमाहूय वैद्यान्देशान्तरादपि ॥
व्ययीचक्रे धनं राजा नारोग्यमभवत्तयोः ॥ ८१ ॥

कृमियुक्ता व्रणा जाताः सर्वाङ्गेषूभयोस्तयोः ॥
निद्राहारादि सन्त्यज्य सुतरां कष्टमापतुः ॥ ८२ ॥

राजा राज्याः सुतस्यापि दृष्ट्वा तां तादृशीं व्यथाम् ॥
स्वयं च दुःखितो भूत्वा जातो निद्राविवर्जितः ॥८३॥

व्यथया बालकः क्षीणो राज्ञी च कृशतां गता ॥
त्यक्त्वान्नमुदकं चापि जातौ तौ भृशदुःखितौ ॥८४॥

एकस्मिन्दिवसे राजा तौ दृष्ट्वाऽतीव दुःखितौ ॥
उभौ गलद्व्रणत्रस्तौ खिन्नौ बीभत्सरूपिणौ ॥ ८५ ॥

राजोवाचाथ किं कार्यमहो नानौषधैरिमौ ॥
अवस्थामीदृशीं कष्टां प्राप्तौ नारोग्यमापतुः ॥ ८६ ॥

दृशेयमुभयोरेतौ नूनं जीवच्छवाविव ॥
नानयोरपि चारोग्यशङ्कातः किं करोम्यहम् ॥ ८७ ॥

चिकित्सां कारयामास। अथापि न शान्तिर्जाता। सर्वाङ्गेषु कृमियुक्ता व्रणा जाताः। ततस्तौ भृशदुःखितौ खानं पानं च त्यक्त्वा क्षीणौ जातौ। राजा गलद्व्रणौ बीभत्सौ तौ वीक्ष्याह। नानौषधादिभिरारोग्यं न प्राप्तौ ॥ ८६ ॥ नातः परमारोग्यशङ्कापि दृश्यमप्यनयोर्महा-

बीभत्सावप्युभौ द्रष्टुं मनो मेऽपि न वाञ्छति ॥
नायास्यत उभावेतावारोग्यं सुजुगुप्सितौ ॥ ८८ ॥

इतःपरं द्रष्टुमपि मम नोत्सहते मनः ॥
महादोषान्वितावेतावुभौ त्याज्यौ प्रयत्नतः ॥ ८९ ॥

यो हि पापी स जीवन्वा मृतो वाप्यकभाग्भवेत् ॥
भोगं विनार्जितं पापं न क्वापि विलयं व्रजेत् ॥ ९० ॥

तस्मात्त्याज्यावुभौ पापाविति निश्चित्य भूपतिः ॥
सूतमाहूय तं प्राहाश्राव्यं तच्छृणु भूपते ॥ ९१ ॥

राजा सूतमुवाचेमौ स्त्रीपुत्रौ परिदाय[1] च ॥
मदाज्ञया महारण्ये निःशङ्कं प्रजहीहि तौ ॥ ९२ ॥

नृणां यत्र न सञ्चारस्तत्र पुत्रं वधूं[2]मपि ॥
नीत्वा वेगेन सूत त्वं परित्यज मदाज्ञया ॥ ९३ ॥

एवमाज्ञाप्य स ददौ रथं सूतस्ततस्तु तम् ॥
पुत्रमादाय राज्ञीं च निर्ययौ नगराद्बहिः ॥ ९४ ॥

पापौ यत्नात्त्याज्यौ। पापी जीवन्मृतोऽपि दुःखभाक्। भोगं विना कथं पापलयः। इति विचार्य सूतमाहूयाह। मदाज्ञया स्त्रीपुत्रौ गृहीत्वा, निर्जनारण्यं नीत्वा, तत्र निःशङ्कं त्यजेति। स तथेति रथे तावादाय पुराद्बहिर्ययौ। राज्ञ्या बान्धवा दास्यो दासाश्च विरहार्ता भृशं रुरुदुः।

---

१ गृहीत्वा. २ भार्यां.

राज्या दास्यश्च दासाश्च पिता मातापि बान्धवाः ॥
दुःखेन महता व्याप्ता रुरुदुर्विरहातुराः ॥ ९५ ॥

लोका नागरिकाश्चापि प्रोचुर्दुःखेन पीडिताः ॥
अहो बत कुतो राजा हन्ति पुत्रं वधूमपि ॥ ९६ ॥

तौ निधाय रथे सूतो जगाम गहनं वनम् ॥
न यत्र नरसञ्चारस्तत्र तत्याज तावुभौ ॥ ९७ ॥

निवृत्य सूत आगत्य राज्ञे सर्वं न्यवेदयत् ॥
राजन्ननुज्ञया तेद्य त्यक्तौ तौ विजने वने ॥ ९८ ॥

इति तस्य वचः श्रुत्वा राजा प्राहापरां स्त्रियम् ॥
त्यक्ता वने सपत्नी ते तच्छ्रुत्वापि जहर्ष सा ॥९९॥

राज्ञी सुतेन सहिता कष्टेनातीव दुःखिता ॥
अन्नोदकाभ्यां रहिता स्थितारण्ये नृवर्जिते ॥१००॥

सौकुमार्याद्राजपत्नी कुमारेण युतार्दिता ॥
अज्ञाताङ्घ्रिगतिस्तन्वी त्रस्ताभूत्कण्टकाश्मभिः ॥ १ ॥

लोका दुःखिता ऊचुः। अहो राजाऽयं क्रूरः स्त्रीपुत्रौ कुतो मारयतीति ॥ ९६ ॥ सूतस्तौ गहनं निर्जनं वनं नीत्वा तत्र त्यक्त्वा पुनरेत्य राज्ञे न्यवेदयत्। तच्छ्रुत्वा राजान्यपत्न्यै तच्छशंस। सापि जहर्ष। वने सपुत्रां राज्ञी सौकुमार्यादज्ञातपादगतिः कण्टकाश्मभिः

कटे बालं समादाय मन्दं मन्दं ययौ सती ॥
निजकर्म च संस्मृत्य प्राह सा किं करोम्यहम् ॥ २ ॥

एकला साऽबला लोला पर्यटन्ती वनाद्वनम् ॥
व्याघ्रान्सिहान्महाहिंस्रान्सर्पानपि ददर्श सा ॥ ३ ॥

सा प्राह जीवितेनालं मां व्याघ्रो भक्षतु द्रुतम् ॥
कोपयोगोऽत्र पापिन्या दुष्टाया जीवितेन मे ॥ ४ ॥

इत्युक्त्वा प्राप्य मूर्च्छां सा पुनरुत्थाय दैवतः ॥
ततोऽग्रतोऽग्रतोऽरण्यं गच्छन्ती दुःखिताभवत् ॥ ५ ॥

तृषितापि न लेभेऽम्बु व्रणैश्चातीव दुःखिता ॥
व्याघ्रसर्पैर्हरीन्दृष्ट्वा चकिताभूत्पदे पदे ॥ ६ ॥

सालावृकान्वृकान्दृष्ट्वा वेतालान्ब्रह्मराक्षसान् ॥
मुक्तकेशी रुरोदोच्चैर्गच्छन्ती सानुपानहा ॥ ७ ॥

पीडितान्नपानवर्जितापि कटे बालमादाय स्वकर्म स्मारं स्मारं प्राह। निर्जने वने एकलाबलाहं किं करोमि। सर्पव्याघ्रादयो दृश्यन्ते। जीवितेनालं। एते मां भक्षंतु। पापिन्या दुष्टायाःकोपयोग इति मूर्छितापि पुनरुत्थाय मन्दं मन्दमग्रे गत्वा तृषिता जलं न लेभे। व्रणार्तापि पदे पदे ॥ १०६ ॥ व्याघ्रसालावृकवेतालब्रह्मराक्षसादीन्दृष्ट्वा मुक्तकेशी

१. सिंहान्.

एवं महावनं राज्ञी पर्यटन्ती ददर्श गाः ॥
किञ्चिदाश्वास्य चात्मानं मन्दं मन्दं ययौ पुरः ॥ ८ ॥

राज्ञी गोरक्षकान्वैश्यानुपेत्यातीव दुःखिता ॥
प्राहायं तृषितो बाल उदकं क्वोपलभ्यते ॥ ९ ॥

गोपाला ऊचुरासन्नो ग्रामोऽयं मन्दिराणि तु ॥
बहूनि तेऽन्नमुदकं चापि लभ्येत निश्चितम् ॥ ११० ॥

इत्युक्त्वा दर्शयामासुर्मार्गं मन्दं व्रजेति सा ॥
तैरुक्ता पुत्रसहिता वनिता ग्राममागता ॥ ११ ॥

नार्यो नराश्च तत्रत्या दृष्ट्वातीव मनोहराः ॥
प्राप्य किञ्चित्समाधानं राज्ञी पप्रच्छ ताः स्त्रियः ॥ १२ ॥

अस्मिन्राष्ट्रेऽस्ति को राजा मुदिता भान्ति मे प्रजाः ॥
इत्युक्तास्ता जगू राजा वैश्यः पुण्यो महाधनः ॥ १३ ॥

पद्माकर इति ख्यातो दयालुः पुण्यवान्स च ॥
निश्चयेन सपुत्राया रक्षणं ते करिष्यति ॥ १४ ॥

रुरोद। ततोऽग्रे गाः दृष्ट्वात्मानमाश्वास्य, मन्दं मन्दं गत्वा गोरक्षा- नाह। तृषितो बाल उदकं क्वेति। त ऊचुः। समीपेऽयं ग्रामस्तत्रान्नं जलं च लभ्येतेति मार्गं दर्शयामासुः। सा च ग्राममेत्य तत्र नारीर्मनो- हरान्नरांश्च दृष्ट्वा समाहितापृच्छत्। कोऽत्र राजा? प्रजा हृष्टा भान्ति। त ऊचुः। महाधनः पुण्यात्मा दयालुः पद्माकराख्यो वैश्यः। स

इति तासु वदन्तीषु वैश्यराजगृहादपि ॥
दास्यो यदृच्छया प्राप्तास्तस्या राजस्त्रियोऽन्तिके॥१५॥

ताभिः पृष्ट्वादितः सर्वं तामादाय पुरं ययुः ॥
स्वामिने सर्ववृत्तान्तं राज्ञ्यास्तस्या न्यवेदयन् ॥ १६ ॥

दृष्ट्वा तां वैश्यनाथोऽपि कृपया परयावृतः ॥
अन्तर्नीत्वा राजपत्न्यै प्रददौ सुखमन्दिरम् ॥ १७ ॥

तद्वृत्तान्तं स्वयं पृष्ट्वा वणिग्राजः कृपान्वितः ॥
दत्वास्या अन्नवसने पालयामास मातृवत् ॥ १८ ॥

ततः सा वैश्यनगरे कञ्चित्कालं नृपप्रिया ॥
स्थिता साभूद्व्रणत्रस्ता न शान्ता औषधैर्व्रणाः ॥१९॥

प्राणान्तिकव्यथां प्राप्य राजपत्नी सुदुःखिता ॥
वैश्येन रक्षिता चापि व्रणैर्देहोऽतिपीडितः ॥ १२० ॥

एकस्मिन्दिवसे राज्ञ्याः कुमारो व्रणपीडितः ॥
ममार तं मृतं दृष्ट्वा विललाप नृपाङ्गना ॥ २१ ॥

ससुतां त्वां रक्षयिष्यति। अत्रान्तरे राजदास्यस्तत्रागत्य सर्वं पृष्ट्वा तां स्वामिसमीपं नीत्वा न्यवेदयन् ॥ ११६ ॥ स च तामन्तर्गृहं नीत्वा। तद्वृत्तान्तं ज्ञात्वा, कृपालुः कृपयान्नवस्त्रादि दत्वा, मातृवद्ररक्ष। तत्राप्यौषधैर्व्रणा न शान्ताः। एकस्मिन्दिवसे व्रणपीडितः पुत्रो ममार।

क्षणं सा मूर्छिता भूमौ पतितातीव दुःखिता ॥
संस्मृत्य पूर्वं स्वसुखं शोकेन महतावृता ॥ २२ ॥

वणिक्स्त्रियः समागत्य वचनैर्दुःखशामकैः ॥
तां राज्ञीं बोधमायासुस्तद्दुःखान्तो न चाभवत् ॥२३॥

स्त्रीभिर्नानाप्रकारैः सा बोधितापि नृपाङ्गना ॥
संस्मृत्य प्राक्सुखं प्राह तात बाल क्व गच्छसि ॥ २४ ॥

त्वं राजकुलपूर्णेन्दुरनुक्रोशाकरो[1] मम ॥
आनन्दकन्दोऽप्यधुना मां विहाय क्व यास्यसि ॥२५॥

पतिं च पितरौ बन्धून्परिहाय त्वदाशया ॥
आगतास्मि सुत त्वं मां रक्षितेति विनिश्चिता ॥२६॥

मामनाथं परित्यज्य गते त्वयि नृपात्मज ॥
को मां रक्षत्यतः प्राणांस्त्यक्ष्यामि कुलनन्दन ॥२७॥

राज्ञी भुवि पतिता दुःखिता मूर्छिताभूत्। बुध्वा च पूर्वसुखं स्मृत्वा महाशोकाविष्टाभूत्। वणिक्स्त्रियो दुःखशामकवाक्यैस्तां बोधयामासुः। अथापि सा दुःखिताह। हा तात बाल राजकुलपूर्णचन्द्रानन्दकंद! मां विहाय क्व यास्यसि। पतिपितृबन्धूंस्त्यक्त्वा त्वं मे त्रातेति निश्चयेन त्वदाशया स्थितामनाथां मां त्यक्त्वा क्व गच्छसि ॥ १२९ ॥ को

---

१ कृपाकरः.

एवं सा राजवनिता शोकेनातीव दुःखिता ॥
दृष्ट्वा नागरिका राज्ञीं दुःखितां तेऽपि दुःखिताः ॥१२८॥

दुःखेभ्यः सकलेभ्योऽपि पुत्रशोको महानलः ॥
भस्मीकरोति यो जीवत्पितरावपि निश्चितम् ॥ २९ ॥

राज्ञ्यां सुदुःखितायां तत्पुत्रपूर्वोपकारवित् ॥
स्वेच्छया ऋषभो योगी महाज्ञानी समागतः ॥ १३० ॥

तं योगीश्वरमायान्तं दृष्ट्वा वैश्योऽभिवन्द्य च ॥
पाद्यार्घ्यादिभिरापूज्य तोषयामास तं मुनिम् ॥ ३१ ॥

मुनिः प्राह विशां केयं शोचतीह महास्वरा ॥
किमर्थं क्रियते शोकः सर्वं कथय मे वणिक् ॥ ३२ ॥

ततः शशंस वैश्येशो योगिने सर्वमादितः ॥
योगीश्वरः कृपालुः स तस्या निकटमाययौ ॥ ३३ ॥

योगीश्वरः प्राह राज्ञि मौढ्याच्छोकं करोष्यहो ॥
को जातः कुत आयातः को मृतः क्व पुनर्गतः ॥३४॥

मां त्रातेति दुःखिता। तां दृष्ट्वा नागरिकस्त्रियोऽपि दुःखिताः। सर्व-शोकेभ्यः पुत्रशोको महानलो जीवत्पितरावपि भस्मसात्करोति। अत्रान्तरे पूर्वोपकारज्ञो ज्ञानी ऋषभयोगी तत्र प्राप्तः। वैश्यस्तं सम्पूज्य तोषयामास। मुनिराह। केयं महास्वरा किमर्थं शोचति। ततो वैश्यः सर्वं न्यवेदयत्। कृपालुर्ऋषभस्तस्याः समीपमागत्य तां प्राह। हे राज्ञि! मौढ्यादयं शोकः। को जातः। को मृतः। कुत आयातः। क्व वा

आत्मा तु नेदृशोऽदृश्यो दृश्यो देहस्तु भौतिकः ॥
व्यक्तोऽप्यव्यक्ततां याति फेनो गङ्गोदके यथा ॥३५॥

पृथिव्यप्तेजोवाताभ्रविकारो देह एष तु ॥
लिङ्गदेहेन सहितो यावत्कर्मात्र तिष्ठति ॥ ३६ ॥

पञ्चापि पञ्च गच्छन्ति देहः कर्मात्यये जडः ॥
पतत्यात्मा तु नैवातः शोको व्यर्थोऽयमीदृशः ॥ ३७ ॥

गुणतो गुणसम्भूतिर्निजकर्मानुसारतः ॥
भ्रमते कालवेगेन लैङ्गोऽयं वासनामयः ॥ ३८ ॥

सत्वं रजस्तम इति गुणाः प्रकृतितोऽभवन् ॥
त एव कर्मसङ्गेन निबध्नन्तीह देहिनम् ॥ ३९ ॥

सत्वेन देवतां याति रजसात्र मनुष्यताम् ॥
तिर्यक्त्वं तमसाधश्च नैर्गुण्यं च गुणात्यये ॥ १४० ॥

गतः। नेदृगात्माऽदृश्यः। दृश्यो देहस्तथाविधो भौतिको जलफेनवत् ॥ १३५ ॥ पञ्चभूतविकारः स्थूलदेहो यावदारब्धं लिङ्गेन सहात्र तिष्ठति। कर्मात्यये तद्वियुक्तो जडोऽत्र पतति। ईदृशः शोच्यः किं? लैंगोऽपि गुणोत्थनिजकर्मतः वासनामयः कालवेगाद्भ्रमते। प्रकृतिगुणा एव कर्मसङ्गतो जीवं बध्नन्ति। सत्वेन देवत्वं। रजसा नरत्वं। तमसा तिर्यक्त्वं चैवं शश्वत्। गुणात्यये तु नैर्गुण्यं। अन्ते प्रवृद्धगुणो नश्वरं दैवं

---

१ मुक्तिं.

प्रवृद्धो यो गुणस्तेन प्रलयं याति देहभृत् ॥
स याति नश्वरान्देहान्दैवमानुषराक्षसान् ॥ ४१ ॥

संसारेऽस्मिन्वर्तमानो निजकर्मानुसारतः ॥
सुखं वा यदि वा दुःखं स्वार्जितं यद्भुनक्ति तत्॥४२॥

यः कोटिकल्पवर्षायुः सोऽपि चान्ते मरिष्यति ॥
यूयं त्वल्पायुषो मर्त्या आयुःस्थैर्यं कुतो हि वः ॥४३॥

अत एव बुधो नैव जन्मना मोदतेथवा ॥
मरणे समनुप्राप्ते दुःखं नैव करोति च ॥ ४४ ॥

यदा गर्भे समुद्भूतस्तदा मृत्युः सहागतः ॥
मृत्युर्बाल्येपि तारुण्ये वार्धक्येवश्यमेव हि ॥ ४५ ॥

यस्यास्ति यावदारब्धं तावत्तस्यात्र जीवनम् ॥
मायामोहाद्वृथा[1]र्भादिसम्बन्धेनैष बध्यते ॥ ४६ ॥

मानुषमासुरं वा जन्म प्रापयति । एवं कर्मानुसारेण स्वार्जितं सुखं दुःखं वा भोग्यं । कल्पायुषोऽप्यन्ते मरिष्यन्ति । नृणां तु का कथा । अतो बुधो जातस्य हर्षं मृतस्य शोकं च न करोति ॥ १४४ ॥ मृत्युः सहैवायातः । बाल्ये तारुण्ये वार्धक्ये वावश्यं मृत्युः । यावदारब्धं जीवितस्य पुत्रादिसम्बन्धेन मायामोहाल्लोको बध्यते । यद्वात्रा लिखितं

१ पुत्रादि.

यन्मूर्ध्नि लिखितं धात्रा तदलंघ्यं सुरैरपि ॥
कालकर्मोल्लंघने तु कः शक्नोतीह पामरः ॥ ४७ ॥

कुतः शोचसि मातस्त्वं समादायाध्रुवं वपुः ॥
यदीच्छस्यात्मनः श्रेयस्तर्हीशं शरणं व्रज ॥ ४८ ॥

कोऽपि कस्य न सम्बन्धी तथा चेत्पूर्वजन्मनि ॥
कस्य त्वं जननी स्त्रीर्वा के वा सम्बन्धिनस्तव ॥ ४९ ॥

अत एव विचार्येदं शोकं मा कुरु निष्फलम् ॥
यदीच्छस्यात्मनः श्रेयस्तर्हीशं शरणं व्रज ॥ १५० ॥

इति योगीशवाक्यं सा श्रुत्वा नत्वाब्रवीत्प्रभो ॥
भूत्वापि भ्रष्टराज्याहं संप्राप्तास्मीदृशीं दशाम् ॥ ५१ ॥

अरण्ये पतिता दैवात्पितृबन्धुवियोजिता ॥
प्राणप्रियस्य पुत्रस्य कांक्षया जीविता चिरम् ॥ ५२ ॥

तस्येदृशी गतिर्जाता ततः किं जीवितेन मे ॥
अतो भवतु मे मृत्युरित्युक्त्वा तत्पदेऽग्रहीत् ॥ ५३ ॥

तल्लङ्घने कः शक्तः । हे मातः शवं धृत्वा कुतः शोचासि ! स्वहितेच्छा चेत्तर्हीशं शरणं व्रज । संम्बधो नियतश्चेत्त्वं पूर्वं कस्य का वासीः । के वा ते सम्बन्धिनः । इदं विचार्य शोकं मा कुर्विति श्रुत्वा नत्वा साह । प्रभो ! राज्यभ्रष्टाहमिदृशीं दशां प्राप्ता । अरण्ये पतिता । पित्रादिवियुक्तापि पुत्राशयात्र स्थिता, तस्येदृग्गतिश्चेत्किमिति तत्पदे दधौ ॥५३॥

इति निर्विण्णचित्तां तां दृष्ट्वा योगी कृपान्वितः ॥
पूर्वोपकारं संस्मृत्य प्रसन्नोऽभूत्स तत्क्षणम् ॥ ५४ ॥

स भस्मालेप्य तन्मूर्ध्नि चिक्षेपास्ये[1] च मन्त्रितम् ॥
सहसा प्राण[2] आयातो मृतोऽपि च स उत्थितः ॥५५॥

उत्थायोपाविशद्बालो दिव्यकान्तिर्बभूव सः ॥
व्रणा मातुः सुतस्यापि प्रणष्टा दिव्यरूपिणः[3] ॥ ५६ ॥

राज्ञी पुत्रेण सहिता योगिराजं ननाम तम् ॥
कृपावानृषभो योगी ताभ्यां भस्मान्यदर्पयत् ॥ ५७ ॥

सुवर्णकान्तिः शरीरे तदा जाता तयोर्द्वयोः ॥
तदा देवाविवोभौ तौ शुशुभातेऽतिशोभनौ ॥ ५८ ॥

योगीश्वरः प्रसन्नोऽभूत्स च ताभ्यां ददौ वरम् ॥
जरापि न भवेद्देहे दार्ढ्यं वां सर्वदा भवेत् ॥ ५९ ॥

निर्विण्णां तां दृष्ट्वा दयालुर्योगी पूर्वोपकारवशात्प्रसन्नः, प्रेतमूर्ध्नि मन्त्रितं भस्म चिक्षेप । ततः सहसा गतप्राणोऽपि स जीवन्नुत्थितः । स दिव्यकान्तिरुपाविशत् । तस्य राज्याश्च व्रणा नष्टाः । सपुत्रा राज्ञी मुनिं ननाम । स भस्म ददौ । तद्धारणात्तौ देववद्दिव्यकान्ती जातौ । योगीश आह । वां

---

१ मुखे. २ कार्यकारणरूपाणि पंचभूतानि. ३ दिव्यरूपिणः सुतस्येत्यन्वयः.

भद्रायुरिति विख्यातः कीर्तिमान्भविता सुतः ॥
राज्यं करिष्यति चिरं पितुरप्यधिकैर्गुणैः ॥ १६० ॥

इति प्रसन्नो योगीशो वरं दत्वा ययौ नृप ॥
एवं सत्पुरुषस्यैव दृष्टयारोग्यमभूत्तयोः ॥ ६१ ॥

राजन्राजस्फोटकोऽयं शाम्येत्ते साधुसेवनात् ॥
चिन्तां मा कुरु भक्त्यैव साधुपादौ दृढं वह ॥ ६२ ॥

इति विप्रवचः श्रुत्वा नत्वा राजाब्रवीत्पुनः ॥
विप्र क्वास्ते सत्पुरुषः कृपां कृत्वा वदाधुना ॥ ६३ ॥

दर्शनार्थं गमिष्यामि तस्य यद्दर्शनान्मम ॥
भविष्यति किलारोग्यमिति मे निश्चयोऽभवत् ॥६४॥

इति तस्य वचः श्रुत्वा प्राह गन्धर्वपत्तने ॥
भीमातीरेऽस्ति परमपुरुषो भगवानिव ॥ ६५ ॥

तस्य दर्शनमात्रेण तवारोग्यं भविष्यति ॥
इति तस्य वचः श्रुत्वा स राजा निर्ययौ ततः ॥ ६६ ॥

दृढदेहे न जरा भवेत् । भद्रायुः सुतोऽयं कीर्तिमान्जनकाद्गुणैरधिकश्चिरं राज्यं करिष्यतीति स वरं दत्वा ययौ। एवं साधुदृष्टयारोग्यं जातं। हे राजन्स्फोटकशान्तिर्भवेत् । चिन्ता मास्तु। दृढं साधुपादं धारय ॥६२॥ राजाऽऽह । क्वास्ते सत्पुरुषः कृपया वद । तद्दर्शनार्थं यास्यामि आरोग्यं भवेदिति मे निश्चयः । विप्र आह. भीमातीरे गन्धर्वपुरे सत्पुरुषोऽस्ति तद्दर्शनमात्रात्तवारोग्यं भविष्यतीति श्रुत्वा, राजा श्रीगुरुदर्शनार्थं चतुरङ्ग-

श्रीगुरोर्दर्शनार्थं स प्रयाणमकरोद्द्रुतम् ॥
चतुरङ्गबलैर्युक्तो गन्धर्वनगरं ययौ ॥ ६७ ॥

ग्राममेत्य स पप्रच्छ लोकान्संन्यासिरूपधृक् ॥
श्रुतोऽत्र तापसोऽस्तीति स कुत्रास्ते ब्रुवन्तु माम् ॥६८॥

तदा सर्वेऽपि ते भीतभीता आहुः परस्परम् ॥
श्रीगुरुं पृच्छति म्लेच्छः किमतोऽत्र भविष्यति ॥६९॥

पुनः स कुपितो राजा प्राह तद्दर्शनाय हि ॥
आगतोऽस्मि स कुत्रास्ते भवन्तो दर्शयन्तु मे॥ १७० ॥

तत आहुश्च ते लोका अनुष्ठातुं जगद्गुरुः ॥
गतः सङ्गममायाति मध्यान्हे मठमत्र तु ॥ ७१ ॥

म्लेच्छराज इति श्रुत्वा निवार्यान्यान्स्वयं तदा ॥
आन्दोलिकास्थितो यातः श्रीगुरोर्दर्शनाय सः ॥ ७२ ॥

श्रीगुरुं दूरतो दृष्ट्वा पादचारेण स व्रजन् ॥
उपेत्य श्रीगुरुं भक्त्या नत्वा दूरे व्यवस्थितः ॥ ७३ ॥

सैन्यैः सह प्रतस्थे। गाणगापुरमेत्य लोकमाह। कश्चित्तापसोऽत्र कुत्रास्ते तन्मे शंस इति श्रुत्वा भीतो लोकोऽन्योन्यमाह। म्लेच्छः श्रीगुरुं पृच्छति किमतोऽत्र भविष्यतीति। राजा कुपित आह। तद्दर्शनायागतोऽस्मि स कुत्रास्ते मे कथय। लोक आह। अनुष्ठातुं सङ्गमं गतो मध्यान्हे मठमेष्यति ॥ ७२ ॥ तच्छ्रुत्वा राजा सर्वान्निवार्य स्वयं गत्वा दूराच्छ्रीगुरुं दृष्ट्वा पादचारी व्रजन्भक्त्या तमुपेत्य नत्वा दूरे स्थितः तं दृष्ट्वा श्रीगुरुराह। हे

श्रीगुरुः प्राह तं दृष्ट्वा तदा रे रजकानुग ॥
क्व तिष्ठसि चिरादेव दर्शनार्थमिहागतः ॥ ७४ ॥

इति श्रुत्वा गुरोर्वाक्यं म्लेच्छो ज्ञानी बभूव सः ॥
स्मृत्वा पूर्वभवं तं च साष्टाङ्गं प्रणनाम ह ॥ ७५ ॥

सगद्गदः सरोमाञ्च आनन्दाश्रुसमाप्लुतः ॥
लोलद्गात्रो बभूवासौ श्रीगुरोः पादुकोपरि ॥ ७६ ॥

पूर्वजन्म स च श्रुत्वा रुरोदातीव विव्हलः ॥
करौ सन्धाय सानन्दं तुष्टाव श्रीगुरुं परम् ॥ ७७ ॥

स राजा श्रीगुरुं प्राह कुतो मां समुपेक्षसे ॥
विदेशस्थोऽभवं युष्मत्पादसेवापराङ्मुखः ॥ ७८ ॥

गृहान्धकूपे गहने घोरेऽहं पतितोऽस्म्यहम् ॥
मत्तः प्रमादमद्येन विस्मृत्य चरणौ तव ॥ ७९ ॥

संसारसागरेऽगाधे निमग्नोऽस्मि कुधीरहम् ॥
मायाजालावृतस्तेंऽघ्रिस्मृतिर्मेऽभूत्सुदुर्लभा ॥ १८० ॥

सेवक रजक ! क्व तिष्ठसि । चिराद्दर्शनायागतोसि । स तद्वाक्यं श्रुत्वा, पूर्वजन्म स्मृत्वा, साष्टाङ्गं नत्वा, गद्गदवाग्रोमाञ्चितः, सानन्दाश्रुस्तत्पादुकोपरि लोलदङ्गः पूर्वजन्म स्मृत्वातीव विव्हलो रुदन्नत्वा गुरुं प्राह । कुतो मामुपेक्षसे । त्वत्सेवापराङ्मुखो विदेशस्थोऽभवं । गृहान्धकूपे पतितः । प्रमत्तस्ते पदं विस्मृत्य मायाजालावृतोऽस्मि । तेङ्घ्रिस्मृतिर्दुर्लभा जाता-

सन्निधानं निधानं त्वां मतिहीनो न वेद्म्यहो ॥
नाप्यज्ञानतमोहृत्ते चरणस्मरणं मम ॥ ८१ ॥

नोपेक्षसे स्वभक्तान्त्वमिति मे निश्चयोऽप्यहो ॥
स्वामिन्नज्ञानसिन्धौ मां कुतः क्षिपसि सु[1]व्रत ॥ ८२ ॥

तदर्थमागतोऽस्म्यद्य प्रभो मामुद्धरोद्धर ॥
भवा[2]मीतोंऽघ्रिदासस्ते दुःखदैरलमुद्भ[3]वैः ॥ ८३ ॥

एवं स बहुशः स्तुत्वा म्लेच्छराजो ननाम तम् ॥
भक्तं श्रीगुरुराहाङ्ग कामसिद्धिर्भवेत्तव ॥ ८४ ॥

राजोवाच गुरो राजस्फोटकोऽङ्के समुद्गतः ॥
नितरां व्यथयत्येतं कृपादृष्ट्या विलोकय ॥ ८५ ॥

इति राजवचः श्रुत्वा सस्मितास्योऽवदद्गुरुः ॥
नास्त्यङ्के स्फोटकः क्वास्ते तं मे दर्शय सत्वरम् ॥८६॥

ज्ञानहृत्ते पदं समीपस्थमपि न जाने ॥ १८१ ॥ त्वं भक्तान्नोपेक्षसे । अथापि कुतोऽज्ञानसिन्धौ मां क्षिपासि । जन्मनालं ! तेंऽघ्रिदासो भवामि । मामुद्धर । एवं स्तुत्वा नमन्तं श्रीगुरुराह । ते कामसिद्धिर्भवेत् । राजाह । अङ्के स्फोटको नितरां व्यथयति । कृपादृष्ट्या पश्य । श्रीगुरुराह । क्वास्ते दर्शय । स राजाङ्के स्फोटकमदृष्ट्वा नत्वा चकित आह । स्वामिन् ते

---

१ सुव्रतइत्यपिपाठः २ इतःपरं. ३ जन्मभिः

इत्युक्तश्चकितो राजा प्राक् सन्तं स्फोटकं च सः ॥
अदृष्ट्वा विस्मितो भूत्वा प्रणनाम गुरोः पदे ॥ ८७ ॥

राजोवाच गुरो स्वामिन् प्रसादात्ते समृद्धिमत् ॥
राज्यमैश्वर्यसहितमनुभूतं मुदा प्रभो ॥ ८८ ॥

पुत्राः पौत्राश्च मे दृष्टा मनो मे तृप्तिमाययौ ॥
एकः कामोऽवशिष्टो मे मदैश्वर्यं विलोकय ॥ ८९ ॥

भक्तवत्सल नाथ त्वं वासनां मे प्रपूरय ॥
संसारधुरं[1]मुज्झित्य पदे लीनो भवामि ते ॥ १९० ॥

गुरुः प्राहास्मि संन्यासी यतिर्म्लेंछपुरे तव ॥
कथं मे गमनं यत्र महापापानि सन्ति हि ॥ ९१ ॥

यूयं हि यवना जीवहिंस्रा युष्मत्पुरेऽहहा ॥
गोहत्याः सन्ति हा कष्टं हत्यां मा कुरु सर्वथा ॥ ९२ ॥

प्रसादात् समृद्धं राज्यमनुभूतं, पुत्राः पौत्राश्च दृष्टा, मनो मे तृप्तं। हे भक्तवत्सल ! ममैश्वर्यं विलोकय। अमुं मे कामं पूरय। ततः सर्वं सन्न्यस्य ते पदलीनो भवेयम्। श्रीगुरुराह। संन्यासिनो मे म्लेच्छराज्ये गमनं कथं। यत्र महापापानि ॥ १९१ ॥ हिंस्रा गोहत्याः कुर्वन्ति। हत्यां मा कुरु। स तथेत्यङ्गीकृत्याह। दूरतो वीक्ष। अहं ते पुरातनो

१ भारं.

तथेत्यङ्गीकृत्य सर्वं राजा नत्वाऽब्रवीद्गुरो ॥
दूरतो वीक्ष ते दासोऽस्म्यहमेव पुरातनः ॥ ९३ ॥

योऽयं प्राग्रजकः सोऽहं स्वामिवाक्यान्नृपोऽभवम् ॥
सुखं चाप्यनुभूतं मे जातिरेकैव गर्हिता ॥ ९४ ॥

त्वत्पाददर्शनात्सद्यः सन्तुष्टं मे मनः प्रभो ॥
पुत्रादीन्दर्शयित्वा ते ततो दासो भवामि ते ॥ ९५ ॥

एवं स प्रार्थयामास विनयावनतो नृपः ॥
भूयो भूयः प्रणम्यैव दयनीयतमोऽभवत् ॥ ९६ ॥

गुरुर्विचारयामास प्रकाशो मेऽभवत्ततः ॥
नीचा अपि समायान्ति कलौ स्थेयं न चाग्रतः ॥९७॥

तद्गौतमीमहातीर्थं गत्वा हि सिंहगे गुरौ ॥
अदृश्योऽहं भविष्यामि वर्तमाने कलौ युगे ॥ ९८ ॥

गुरुरेवं विनिश्चित्य तथेत्युक्त्वा स सङ्गमात् ॥
निर्ययौ म्लेच्छराजस्तं पालके समुपाविशत् ॥ ९९ ॥

दासः। योऽहं रजकः स एव स्वामिवाक्याद्राजाऽभवं मे सुखं चानुभूतं। कर्मवशाज्जातिरेवैका गर्हिता। त्वद्दर्शनात्तुष्टोऽस्मि। पुत्रादीन्दर्शयित्वा ततस्ते दासो भवामीति विनयेन प्रार्थ्य पुनः पुनर्ववन्दे। श्रीगुरुर्विचारयामास। प्रकाशो मेऽभून्नीचा अपि दर्शनायायान्ति, नात्र स्थेयं, सिंहस्थे गुरौ गौतमीं गत्वाऽदृश्यो भवेयं। यतो वर्तमानः कलिः। इति

पादुके स्वयमादाय पादचारी तमन्वगात् ॥
गुरुः प्राहारुह हयं त्वां निन्दन्ति जना नृप ॥२००॥

राष्ट्राधिपं वदन्ति त्वां जन्म म्लेच्छकुलेऽपि ते ॥
द्विजदास्याद्धसिष्यन्ति स्पृशेत्त्वां जातिदूषणम् ॥ १ ॥

स प्राह कोऽधिपः स्वामिन्सेवको रजकोऽस्मि ते ॥
स्पर्शादयोऽपि हेमेव शुद्धोऽस्मि तव दर्शनात् ॥ २ ॥

राजा त्वमेव सर्वेषां भृत्यस्ते रजकोऽस्म्यहम् ॥
दर्शनं मे पुनर्दत्तं पूर्णा जाता मनोरथाः ॥ ३ ॥

एवमुक्त्वा चतुरगान्तुरगान्गुरवे मुदा ॥
बहुवर्णान्मदोन्मत्तान्करिणोऽपि व्यदर्शयत् ॥ ४ ॥

सैन्यं तथा चतुरगं चतुरङ्गं सुशिक्षितम् ॥
ऐश्वर्यं च मुदा तस्मै दर्शयामास भूमिपः ॥ ५ ॥

विचार्य तथेति नृपमाह। स पादचारी गुरुं शिविकायामुपवेश्य पादुके गृहीत्वाऽन्वगाद् गुरुस्तमाह। अश्वमारुह। त्वां लोको निन्दति ॥२००॥ हे म्लेच्छ! राष्ट्राधिपं त्वां द्विजदासं दृष्ट्वा हसन्ति। जातिदूषणमपि भवेत्। स आह। को राजा? ते दासो रजकोऽहं स्पर्शस्पर्शाल्लोहमिव ते दृष्ट्या पूतोऽस्मि। त्वमेव सर्वेषां राजाऽहं ते भृत्यः, पुनर्दर्शनं दत्तं। मनोरथाः पूर्णाः। इत्युक्त्वा चतुरङ्गसैन्यमैश्वर्यं च गुरवे व्यदर्शयत्।

ततो गुरुर्नृपं प्राह दूरं गन्तव्यमेव ते ॥
मदाज्ञां शिरसा धृत्वा हयमारुह सत्वरम् ॥ ६ ॥

इति श्रुत्वा गुरोर्वाक्यं शिष्येभ्यो वाहनानि सः ॥
प्रदायापि स्वयं चाश्वमारुरोह तदा नृपः ॥ ७ ॥

गुरुदर्शनसञ्जातपरानन्दोऽस्य सर्वथा ॥
गगनेऽपि न च स्थातुं प्रबभूव महीभृतः ॥ ८ ॥

गुरुर्नृपमुपाहूय यवनं तमुवाच ह ॥
त्वं भक्तिमानसि मयि प्रीतोऽस्म्यधमजाऽपि ते ॥ ९ ॥

तापसोऽहं तु संन्यासी त्रिकालं म उपासनम् ॥
त्वत्सङ्गान्न भवेत्तस्मादुपायं कथयामि ते ॥ २१० ॥

उपायं स्वीकुरुष्वेममहमग्रे व्रजाम्यतः ॥
ततो यथासुखं पश्चाद्भवान्स्वैरागमिष्यति ॥ ११ ॥

तीर्थे पापविनाशाख्ये दर्शनं मे भविष्यति ॥
इत्याज्ञाप्य नृपं तस्य पश्यतोऽन्तरधीयत ॥ १२ ॥

स तमाह। दूरे गन्तव्यं मदाज्ञयाऽश्वमारुहेति। ततः शिष्येभ्यो वाहान्दत्वा, सोऽश्वमारुह्य, गुरुदर्शनेनातीवानन्दितोऽभूद् गुरुस्तमाह। त्वं भक्तोऽसि। संन्यासिनो मे त्रिकालमनुष्ठानम् त्वत्सङ्गात्कथं भवेत् ॥२१०॥ अग्रतो व्रजामि। त्वं पश्चाद्यथासुखमेहि, पापनाशतीर्थे मे दर्शनं भवेदि-

---

१. स्वजनैः सह.

श्रीगुरुर्योगगत्याऽथ शिष्यैः सह मनोगतिः ॥
विलीयैव ययौ वेगाद्वैडूर्यनगरान्तिकम् ॥ १३ ॥

तीर्थे पापविनाशाख्ये शिष्यैः सह जगद्गुरुः ॥
अनुष्ठातुं स्थितस्तत्र दर्शनार्थं ययुर्जनाः ॥ १४ ॥

सायन्देवसुतस्तत्र नागनाथः समागतः ॥
परमानन्दसंयुक्तः पूजयामास तं गुरुम् ॥ १५ ॥

श्रीगुरुं स्वपुरं नीत्वा शिष्यैः साकमपूजयत् ॥
उपचारैः षोडशभिर्भोजयामास सादरम् ॥ १६ ॥

सायङ्कालोऽभवत्तावन्नागनाथं जगौ गुरुः ॥
म्लेच्छायोक्तं पापनाशतीर्थमेहीति मे द्विज ॥ १७ ॥

तस्मादितो गमिष्यामि विप्रोपद्रवभीतितः ॥
मयि स्थितेऽत्र ते म्लेच्छा आगमिष्यन्ति वो गृहान् ॥ १८ ॥

इत्युक्त्वा पापनाशाख्यतीर्थं शिष्यैः समं ययौ ॥
भद्रासनोपविष्टः स दध्यौ स्वात्मानमात्मना ॥ १९ ॥

त्युक्त्वा गुरुस्तिरोदधे। स विलीय मनोवेगाच्छिष्यैः सह वैडूर्यनगरान्तिके पापनाशतीर्थेऽनुष्ठातुमुपाविशत्। तं दृष्ट्वा सायन्देवसुतो नागनाथ एत्य सम्प्रार्थ्य, सशिष्यं तं स्वगृहं नीत्वाऽभ्यर्च्य, सादरं भोजयामास। सायङ्काले गुरुराह। म्लेच्छायोक्तं पापनाशतीर्थमेहीति। तस्मादितो गमिष्याम्यन्यथाऽत्र म्लेच्छा आगमिष्यन्तीत्युक्त्वा श्रीगुरुः शिष्यैः सह तीर्थमेत्य भद्रासनेनोपविष्टः स्वात्मानं दध्यौ। राजा श्रीगुरुं सैन्येऽदृष्ट्वा

म्लेच्छराजस्तु विस्मृत्य सैन्यमध्ये जगद्गुरुम् ॥
इतस्ततो नावलोक्य चिन्ताविष्टोऽब्रवीदिदम् ॥२२०॥

अहो बताहं गुरुणा नाथेन किमुपेक्षितः ॥
मया किमपराद्धं वा यतोऽस्मन्निर्गतो[1] गुरुः ॥ २१ ॥

इत्युक्त्वा स पुनः स्मृत्वा तीर्थे पापविनाशके ॥
दास्ये दर्शनमित्युक्तं तस्मादग्रे गतः खलु ॥ २२ ॥

को जाने तस्य माहात्म्यं कस्तस्यान्तं गमिष्यति ॥
यस्मान्ममोत्तमं दैवं तस्मात्तत्पदमीक्षितम् ॥ २३ ॥

राजस्फोटार्तिशान्त्यर्थं कृतं मे गुरुदर्शनम् ॥
महापुण्यप्रभावेण सञ्जातो मे कृपानिधिः ॥ २४ ॥

अयमग्रे गतो नूनमित्युक्त्वा त्वरितं स च ॥
दिव्यं हयं समारुह्य ययौ यवननायकः ॥ २५ ॥

राड्द्वाविंशतिगव्यूतिं[2] दिनेनैकेन चात्यगात् ॥
तीर्थे पापविनाशाख्ये ददर्श श्रीगुरुं स च ॥ २६ ॥

चिन्ताविष्ट आह ॥ २२० ॥ बत गुरुर्मामुपेक्षते किं? किमपराद्धमित्युक्त्वा तीर्थे दर्शनं दास्य इत्युक्तं स्मृत्वाऽऽह। कोऽस्य माहात्म्यं वेत्ति। मे दैवमुत्तमं ततस्तद्दर्शनं जातं। स्फोटार्तिशान्त्यर्थमेत्य महापुण्योदयात्कृपाब्धिर्दृष्टः। नूनमग्रे गतस्ततोऽहं शीघ्रं यास्य इत्यश्वमारुह्य, राजैकदिनेन द्वाविंशतिगव्यूतिमितिदेशे[2] पापनाशतीर्थमेत्य, श्रीगुरुं दृष्ट्वाऽतीव

---

१ अस्मत्सकाशात्. २ चतुश्चत्वारिंशत्क्रोशपर्यंतं.

अतीव हृष्टचित्तः स ववन्दे श्रीगुरोः पदे ॥
स भक्त्या प्रार्थयामास पावनं कुरु मे पुरम् ॥ २७ ॥

तथेत्युक्तः स नगरं मुक्ताजालैरलंकृतम् ॥
पताकाध्वजसङ्कीर्णं निन्ये श्रीसद्गुरुं मुदा ॥ २८ ॥

गुरुमान्दोलिकायां स उपवेश्य स्वयं नृपः ॥
पादचारी पुरं निन्ये रत्नैर्नीराज्य भक्तितः ॥ २९ ॥

एवं महोत्सवैर्निन्ये गुरुनाथं पुरं नृपः ॥
म्लेच्छाः सुविस्मिता जाता राजकर्म निरीक्ष्य तत् ॥२३०॥

ऊचुः परस्परं म्लेच्छा अहोऽयं द्विजमर्चति ॥
अनाचारोऽभवद्राजा स्वधर्मं यो जहाति हि ॥ ३१ ॥

येषां न वीक्ष्यमस्माभिर्मुखं तानेष सेवते ॥
धर्मभ्रष्टस्त्वयं नष्टो नेष्टा चेष्टाऽस्य वा इति ॥ ३२ ॥

अभूद्विप्रकुलं हृष्टमूचेऽयं पुण्यवान्नृपः ॥
विप्राणां सेवको जातस्ततः साधु भविष्यति ॥ ३३ ॥

हृष्टो नत्वा, मे पुरं पावयेति भक्त्या प्रार्थयत्। गुरुणा तथेत्युक्तः स मुक्ताजालालङ्कृते पताकाध्वजसङ्कीर्णे पुरे शिबिकास्थं गुरुं प्रविश्य स्वयं पादचारी सन्रत्नदीपैर्नीराज्य, महोत्सवेनान्तःपुरं निन्ये ॥ २२९ ॥ विस्मिता म्लेच्छा ऊचुः। अहो स्वधर्मं त्यक्त्वाऽनाचारो राजा द्विजमर्चति। यन्मुखं न वीक्ष्यं तं सेवतेऽयं भ्रष्टः। द्विजा ऊचुः। पुण्यात्माऽयं राजा विप्रसेवकोऽभूदतः साधु भविष्यति। नायं ब्रह्मद्वेषी ज्ञानी

ईदृग्राजा सुस्वभावः पुण्यवान्ज्ञानवानपि ॥
ब्रह्मद्वेषी न चातोऽयं पुण्यश्लोको न संशयः ॥ ३४ ॥

लोका नागरिकास्त्वेत्य प्रणेमुर्भक्तिभाविताः ॥
पादचारिणमालोक्य भूपं सर्वेऽपि विस्मिताः ॥ ३५ ॥

केचिदाहुरहो नायं नरो देववरोऽस्त्यपि ॥
यतोमुमभजद्राजा दृष्टं चित्रं कलौ युगे ॥ ६६ ॥

इति ब्रुवत्सु लोकेषु संस्तुवत्सु च बन्दिषु ॥
वाद्यघोषैर्गुरुं राजा हृष्टो निन्ये परं पुरम् ॥ ३७ ॥

आच्छाद्य मार्गं स च दिव्यवस्त्रै-
नींत्वा पुरद्वारममुं समंतात् ॥
स भ्रामयित्वा बहुरत्नजातं
जहौ दरिद्राः सुखिनो यतः स्युः ॥ ३८ ॥

एवं समानीय महोत्सवेन
ततोऽग्रतोऽमूल्यसुवस्त्रसङ्घैः ॥
आच्छादितेनैव पथा पुरान्त-
र्निन्ये शनैः श्रीगुरुमात्मकामः ॥ ३९ ॥

पुण्यश्लोकः। नागरिका गुरुं भक्त्या प्रणम्य, पादचारिभूपं दृष्ट्वा विस्मिता आहुः। नायं गुरुर्नरः किं तु देववरोऽतो राजाऽर्चति चित्रं कलौ दृष्टं। राजा बन्दिषु स्तुवत्सु वाद्यघोषैर्गुरुं गोपुरं निन्ये। ततो दिव्यवस्त्राच्छादितमार्गेण गुरुमनीनयत्। तत्समन्ताद्बहुरत्नानि भ्रामयित्वाऽत्यजत्तेन दरिद्राः सुखिनो जाताः। एवं शनैर्गुरुमन्तर्निन्ये ॥ २३८ ॥ श्रीगुरु-

दिव्याम्बराछन्नपथं पदाभ्यां
योग्यर्चिताभ्यां भगवाञ्छनैः सः ॥
आभूषयन्वाद्यनिनादजुष्टं
ययौ नृपान्तःपुरमाप्तकामः ॥ २४० ॥

सिंहासने रत्नवरौघजुष्टे शिष्टेष्टजुष्टं यतिनामभीष्टम् ॥
अभीष्टदं रिष्टदमार्तबन्धुं मुदोपवेश्य प्रणनाम भूपः ॥४१॥

संस्थाप्य सर्वान्बहिरेव चान्या-
ञ्छिष्यैश्चतुर्भिः सहितं हितं तम् ॥
सिंहासने साधु सुखोपविष्टं
स वीजयामास नृपः स्वयं तु ॥ ४२ ॥

अन्तःपुरःस्थाः सकलाः सुशीला
लीलाविलोला महिला[1] नृपस्य ॥
एणीदृशो वेणिविराजितास्ता
भक्त्या प्रणेमुः ससुता नताङ्गाः ॥ ४३ ॥

योगिध्येयपादाभ्यां दिव्यवस्त्राच्छन्नमार्गमाभूषयन्वाद्यनादघुष्टं पुरं विवेश। सर्वान् बहिः संस्थाप्य चतुर्भिः शिष्यैः सह श्रीगुरुमन्तर्नीत्वा रत्नाञ्चित-सिंहासने उपवेश्य नत्वा राजा स्वयं वीजयामास। ततः सुशीला भूषिताः

---

१ स्त्रियः

प्रणम्य राजा प्रणमय्य सर्वा-
न्सर्वान्तरस्थं गुरुमाबभाषे ॥
स्वामिन्कृतार्थोऽस्मि तवाऽगमेन[1]
तवागमेनापि[2] सुदूरधूतः ॥ ४४ ॥

तुष्टो गुरुस्तस्य नृपस्य भक्त्या
प्रीत्याऽप्युपाहूय नृपं स्वभक्तम् ॥
दत्वाऽऽशिषो हृष्टतरं तरन्तम्
संसारवार्धेः कुशलाद्यपृच्छत् ॥ ४५ ॥

पप्रच्छ भूपं भगवान्प्रहृष्टो
हृष्टं मनस्ते विषयैर्न वाऽङ्ग ॥
अद्यापि किं वाञ्छसि चेन्नृप त्वं
प्रब्रूहि मां विस्तरतोऽप्यशङ्कम् ॥ ४६ ॥

राजाऽवदन्मे सुचिरं हि राज्यं
प्राज्यं प्रभो भुक्तमतो[3] न तोषः ॥
स्वामिन्दयस्वान्तरितांघ्रिसेवां
भवान्वितायार्पय मे न चान्यत् ॥ ४७ ॥

ससुता राजस्त्रिय एत्य भक्त्या प्रणेमुः। प्रणतो राजा सर्वान्प्रणमय्याह। शास्त्रगर्हितोऽप्यहं तवागमनेन कृतार्थोऽस्मि। तुष्टो गुरुः प्रीत्याऽऽशिषो दत्वा तमाह। ते मनो हृष्टं, वाऽन्यत्किमपीच्छति, निःशङ्कं वद ॥२४६॥ स आह। चिरं राज्यं भुक्तं नातस्तोषोऽन्तरितां ते पादसेवां देहि।

१ आगमनेन. २ वेदेन. ३ राज्यात्.

इत्युक्तवन्तं गुरुराबभाषे श्रीपर्वते ते मम दर्शनं हि ॥
भवेदिमां राज्यधुरं सुताय प्रदाय शैलं द्रुतमेहि भक्त॥४८॥

इत्थं समाश्वास्य तमश्रुसान्द्रं
गुरुः प्रतस्थे विरहाक्षमः सः ॥
श्लक्ष्णं बभाषे भगवन्प्रदेहि
ज्ञानं यतस्ते सततं स्मृतिः स्यात् ॥ ४९ ॥

कृपानिधिः श्रीगुरुनाथ आह
ज्ञानं तवास्तूपशमालयं हि ॥
उदीर्य चैवं स च शिष्ययुक्तो
गोदावरीं प्राप स पापहारी ॥ २५० ॥

गङ्गां पुनान इव देवनराघभङ्गां
स्नात्वा सुशीतलजले विमलेऽप्यसङ्गः ॥
सङ्गम्य शिष्यसहितोऽमरसू[1]तिभीमा-
सङ्गे स्थितोऽस्य महिमा जगति ह्यसीमा ॥५१॥

नान्यद्वयस्व। श्रीगुरुराह। राज्यधुरं पुत्राय दत्वा श्रीशैलं गच्छ। तत्र मे दर्शनं भविष्यति। पुनः सान्द्राश्रुर्विरहाक्षमो राजाऽऽह। भगवन्ज्ञानं देहि। यतस्ते सततं स्मृतिः स्यात्। तथेत्युक्त्वा सशिष्यः श्रीगुरुर्गोदावरीमेत्य, तां पुनान इव विमले तज्जले स्नात्वा, भीमामरजासङ्गमं

१ अमरजा.

दृष्ट्वाऽथ तं भजकभाविकलोकवर्गा
भर्गाभमस्तविरहार्तिमपास्तजूर्तिम् ॥
सारार्तिकाः कुतुकहेतुमहेतुमीशं
त्रीशं प्रणेमुरभयप्रदमादरेण ॥ ५२ ॥

प्राप्ते गुरौ जीव इवेंद्रियाण्यु-
त्तस्थुः पुरं नेतुममुं द्विजास्तान् ॥
प्रोचे गुरुः ख्यातिरतीव जाता
तिष्ये ततोऽत्रैव तिरोभविष्ये ॥ ५३ ॥

श्रीशैलयात्रामिषतोऽप्यतोहं
गत्वाऽपि गन्धर्वपुरे वरेऽस्मिन् ॥
गुप्तस्वरूपेण भजद्धितार्थं
तिष्ठामि साक्षाद्भजतामिहैव ॥ ५४ ॥

गन्धर्वसंज्ञं नगरं वरं मे
प्रियं प्रतिष्ठामि सदैव चात्र ॥
श्रीशैलयात्रामिषतस्त्वितोऽहं
गच्छन्निवात्रैव सदैव तिष्ठे ॥ ५५ ॥

प्राप। तं दृष्ट्वाऽस्तविरहार्तिः सारार्तिको भक्तजनः प्राप्तं प्राणमिव तं नत्वा पुरं नेतुं प्रार्थयत्। तं श्रीगुरुराह। अतीव ख्यातिर्जाता, कलौ तिरोभविष्ये ॥ २९३ ॥ श्रीशैलं गत्वाऽपि भक्तहितायात्र सदैव प्रतिष्ठामि। इदं गन्धर्वपुरं मेऽतिप्रियम्। अत्र भजतां प्रत्यक्ष एवाहं।

एकान्तभक्ता मम पादसक्ता-
स्त्यक्तापरेहा अपि तान्समस्तान् ॥
दुर्गात्समुद्धर्तुमिहैव तिष्ठे
शिष्टेष्टदाता कलिकालहन्ता ॥ ५६ ॥

दिनानि कष्टानि युगेऽत्र धर्म-
ह्रासो नृपाः क्रूरतराः कुकर्म ॥
म्लेच्छाः करिष्यन्ति च वीक्षितुं मां
तेऽप्यागमिष्यन्ति ततो गमिष्ये ॥ ५७ ॥

मद्दर्शनार्थं नृप आगतस्त-
ज्ज्ञात्वाऽऽगमिष्यन्ति तथैव चान्ये ॥
न साधु मन्ये यवनागमं त-
त्तिष्ये ततोऽत्रैव तिरोभविष्ये ॥ ५८ ॥

सिद्धोऽवदत्पुत्रक नामधारक
श्रीसद्गुरोर्गामवक्षार्य सेवकाः ॥
चिन्तार्दितान्तःकरणाः सुभाविका-
श्चित्रोपमा ईशमवेक्ष्य तस्थिरे ॥ ५९ ॥

कलिकालहन्ताऽहमेकान्तभक्तानुद्धर्तुं गुप्तस्तिष्ठे। अग्रे कष्टदिनानि, धर्मह्रासः, क्रूराः कुकर्म कुर्वंति। मद्दर्शनायागतं नृपं ज्ञात्वाऽन्ये हीना अप्यागमिष्यंति, नैतत्साधु। एवं गुरुवाक्यं श्रुत्वा ते चिंतार्दिताश्चित्र-वत्तस्थुः। अतोऽग्रेऽन्ये भूपा हीनाः, दिनानि कष्टानि, हीना अप्यत्रा-

अतःपरं भूपतयोऽतिहीना
　म्लेच्छा भविष्यन्ति दिनानि चाग्रे ॥
कष्टानि हीना भजनानुरक्ता
　मृषा भविष्यन्ति ततस्तिरोधात् ॥ २६० ॥

लोकाय यातोऽहमिति प्रदर्शयन्
　गच्छन्निव श्रीनिगमागमातिगः ॥
तस्थौ स गन्धर्वपुरेऽमरेश्वरः
　श्रीसद्गुरुः पुत्रक नामधारक ॥ ६१ ॥

गङ्गाधरस्यात्मज इत्यवादी-
　त्सरस्वतीसंज्ञक एकभक्तिः ॥
मुक्तिप्रदः श्रीगुरुनाथ आस्ते
　साक्षादिहैवेति मयाऽपि दृष्टः ॥ ६२ ॥

यो भाविको भजति तस्य समस्तकामान्
　कामाधिनाथ इह पूरयति क्षणेन ॥
कुर्वन्तु माऽत्र खलु संशयमात्तभावा
　भावार्थवित्स भगवान्लघुसिद्धिदोऽत्र ॥ ६३ ॥

गमिष्यंतीतस्तिरोधानं वरम् ॥ २६० ॥ इति श्रीगुरुः शैलयात्रामिषेण गत इति प्रदर्शयन्नत्रैवास्थात् । गङ्गाधरपुत्र आह । मुक्तिदः श्रीगुरुः साक्षादत्रास्तीति मया दृष्टं । भाविककामदोत्रास्तीत्यसंशयं भजत । शीघ्रं कामसिद्धिः स्यात् । यो युगांतरे कष्टादप्यलभ्यः सोऽत्र कल्पवृक्षो

आयासतो न लभतेऽपि युगान्तरे यत्
तच्छीघ्रमत्र लभते सहसा प्रयासात् ॥
जागर्ति यत्र भगवानपि कल्पवृक्षो
गन्धर्वसंज्ञकपुरे तमुपैतु लोकः ॥ ६४ ॥

सङ्कल्पयत्यत्र हि कोऽपि यद्यत्
तत्तल्लभेद्धान्यधनर्धियुक्तः ॥
भक्तः सुखी तस्य भवेत्सदैव
भुक्तिं स मुक्तिं च लभेन्मुदैव ॥ २६५ ॥

(इति)श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्यगङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञितमहाराष्ट्रभाषान्वित-गुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वतीयतिविरचितायां श्रीगुरुसंहितायां भक्तिकाण्डे पञ्चाशत्तमः (अध्यायः) ॥

॥ आदितः श्लोकाः ॥ ६३९८ ॥

॥ इति पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

जागर्ति । सङ्कल्पयत्यत्र हि कोऽपि यद्यत्तत्तल्लभेद्धान्यधनर्धियुक्तः । भक्तः सुखी तस्य भवेत्सदैव भुक्तिं स मुक्तिं च लभेन्मुदैव ॥ २६९ ॥

॥ इति चूर्णिकायां पञ्चाशत्तमोऽध्यायः ॥

# ॥ अथ एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

॥ श्रीगुरुदेवदत्त ॥

नामधारक उवाच सिद्ध भोः
सत्कथां कथय मेऽग्रतः प्रभो ॥
म्लेच्छराजसदनं गुरुर्गत-
स्तेन पूजित उपागतस्ततः ॥ १ ॥

गन्धर्वसंज्ञं पुरमेत्य देव-
श्चक्रे ततः किं स महानुभावः ॥
भावान्वितं[1] मां करुणाकरार्य-
वर्याधुना ब्रूहि गुरोश्चरित्रम् ॥ २ ॥

इत्युक्त ऊचे स च सिद्धयोगी
योगीशलीलां कथयामि वत्स ॥
या दोषहन्त्री खिलकामदात्री
धात्रीव पोष्ट्री वदरा भवित्री ॥ ३ ॥

॥ अथ सारसंग्रहश्लोकोऽयम् ॥ राजपुरादेत्य स च निजपीठं कीर्तिरभून्मम सुशुचिरतन्वी । स्थेयमिहातः परमिह न साक्षादित्यवनीशुयुजि स च विचार्य ॥ स्वानपि चाश्वास्य बहुवरदानैः पुष्पकृतासन गत इदमाह । मद्भजनाद्वः सुगतिरिह तिष्ठे सत्यमितीडरमभवद्दृश्यः ॥ ९१ ॥

नामधारक आह । म्लेच्छपुरं गत्वा गुरुरग्रे गत इति श्रुतं । ततोऽ-

---

१ भक्तियुक्तं.

राज्ञे दत्वा दर्शनं विश्वधाता
गन्धर्वाख्यं पत्तनं प्राप भर्ता ॥
ज्ञात्वा कालं वर्तमानं तदैव
श्रेष्ठं मेनेऽसौ तिरोधानमेव ॥ ४ ॥

प्रकटितो महिमा बहुदूरतः[1]
स नृप आगत एव विदूरतः ॥
यवनवंश उपैत्यपि भक्तिमा-
नितरजातिरपीदृगभक्तिमान्[2] ॥ ५ ॥

अत एव तिरोभवाम्यहं नगयात्रामिषतश्चराम्यहम् ॥
इति जातविनिश्चयो विभुः प्रययौ सङ्गमतो नगं प्रभुः॥६॥

इति विचार्य तिरोभवितुं पुरा
प्रकटिताङ्ग इतः प्रययौ धरम् ॥
सकलशिष्ययुतो निरगाद्यदा
सकललोक उपेत्य जगौ तदा ॥ ७ ॥

ग्रतः कथय। सिद्ध आह। दोषघ्नं कामदं तच्चरितं शृणु। राज्ञे वरं दत्वाऽऽगत्य गुरुर्वर्तमानकालं ज्ञात्वा, तिरोधानमैच्छत्। महिमा सुदूरं प्रकटितो, हीना अपि भजनायायांति, ततः शैलयात्रामिषेण यास्यामीति निश्चित्य संगमं ययौ। तदा दुःखिता भक्ता ऊचुः ॥ ७ ॥ अहो जीवन-

---

१ बहु दूरदेशपर्यंतं. २ इतरा नीचा जातिर्यस्य.

अहो सद्गुरो जीवभूतोऽसि नस्त्वं
रहोजुट्सुचिन्ताहरं यस्य तत्त्वम् ॥
स च त्वं जहासीह चिन्तानलेऽस्मा-
न्न चाहो तदर्हा हि तस्मादवास्मान् ॥ ८ ॥

एवं सर्वे शोकयुक्ताः सुरक्ता
भूत्वा भक्ताः श्रीगुरोः पादसक्ताः ॥
स्वामिन्नस्मान्त्वं परित्यज्य कस्मा-
द्दीनानाथार्तेश यास्यस्यकस्मात् ॥ ९ ॥

त्वं सन्निधानं परमं निधानं
चित्तावधानं सुतपःपिधानम् ॥
स्वकामधेनुर्निजवत्सकल्पान्
जहासि नोऽल्पान्क हिताद्यकल्पान्[1] ॥ १० ॥

अनुदिनं तव दर्शनमेव नः
कलुषहारि सुपावनपावनः ॥
त्वमसि घोरभयाच्च कृतावनः
स कुह यासि सुपूरितकामनः ॥ ११ ॥

भूत सद्गुरो ! नश्चिताग्नौ त्यक्त्वा क यास्यसि ? वयं पदसक्ता भक्ताः त्वं निकटस्थं परमं निधानं । हे कामधेनो ! वत्सकल्पानज्ञान् हित्वा क यास्यसि । हे पावन ! सदा ते दर्शनं नः पापहारि । हे भयत्रातः काम-

१ असमर्थान्.

बालानस्मान्सम्परित्यज्य कस्मा-
द्भो मातर्यास्यम्ब कुत्राप्यकस्मात् ॥
माता नस्त्वं सद्गुरुस्त्वं पिता त्वं
निःस्नेहत्वं तात मा गा गुरो त्वम् ॥ १२ ॥

एवं प्रकारैर्बहुभिः प्रकम्पं
ते प्रार्थयन्नेष तु सानुकम्पम् ॥
आश्वास्य सर्वानपि मन्दहासः
प्रोचे गुरुर्मेऽत्र तु नित्यवासः ॥ १३ ॥

अस्मिन्ग्रामे लोक तिष्ठामि नित्यं
नित्यं कृत्यं सङ्गमेत्रैव सत्यं ॥
कृत्वा मध्यान्हे मठे निर्गुणाख्ये
स्थास्ये भक्ताः संवृतो वोऽस्मि सख्ये ॥ १४ ॥

ये भावुकाः सुरसिका मम सेवका ये
नित्यं मदर्पितहृदः सुहृदः सदा ये ॥
सर्वस्य ते प्रियतमा यतमानमोहाः
पश्यन्ति मामिह भवन्ति च ते तमोहाः[१] ॥ १५ ॥

पूरक ! बालान्नस्त्यक्त्वा क्व यास्यासि। त्वं नो माता पिता गुरुश्च निःस्नेहो मा भवेति सानुकम्पं प्रार्थयतस्तानाश्वास्य, सहासमाह। सङ्गमे नित्यकृत्यं कृत्वा मध्यान्हे मठे तिष्ठामि ॥ १४ ॥ भाविकभक्तानामहमत्र

---

१ परेषामपि मोहनाशनसमर्थाः.

कृष्णापहारिकृष्णावारिण्याप्लुत्य चोषसि प्रेष्ठाः ॥
कल्पतरौ कृतकर्मा भीमां मध्यान्ह एमि साधिष्ठाः॥१६॥

आप्लुत्य सङ्गम इहाप्यहमन्वहं भो
गृह्णामि निर्गुणमठेऽर्चनमत्र शम्भोः ॥
एतस्य सत्यवचनं मम माऽस्तु चिन्ता
चिन्तामणौ ह्यभयदे कुह दैन्यचिन्ता ॥ १७ ॥

आश्वासनं कृतधियां प्रददे त्रिवारं
मा संशयोऽस्तु भवतां निवसेऽनुवारम् ॥
गन्धर्वसंज्ञकपुरेऽत्र मदीययोग-
क्षेमावहोऽहमखिलेष्टदचारुयोगः ॥ १८ ॥

मत्पादसक्ता मयि येऽनुरक्ता
भक्ताः प्रिया ते मम नित्ययुक्ताः ॥
तेषां विशुद्धिः खलु कार्यसिद्धि-
र्भवेद्दतं भाविकलोक विद्धि ॥ १९ ॥

प्रत्यक्षोऽस्मि। सत्यं। चिन्तामणौ अभयदे कुतो दैन्यचिन्ता। त्रिवार-माश्वासनं दद्मि। संशयो मास्तु गन्धर्वपुरेऽत्र स्वभक्तयोगक्षेमकर्तुर्मम पादसक्तानां भक्तानां विशुद्धिः कार्यसिद्धिश्च। अश्वत्थोऽयं कल्पवृक्षः

---

१ मद्भक्त.

अश्वत्थवृक्षः खलु कल्पवृक्षः
प्रत्यक्ष आस्ते निजपक्षपक्षः ॥
स्वभक्त्यपेक्षः सकलार्त्युपेक्षो
मंक्षु प्रसीदेद्विजितारिपक्षः ॥ २० ॥

स्नात्वाऽस्मिन्नियमेन सङ्गमजलेऽप्यश्वत्थकल्पद्रुमं
भक्त्या मद्वसतिं यथाविधि समभ्यर्च्यास्तसर्वश्रमम् ॥
सर्वानर्थहरं मनोहरमिदं रम्यं ममास्त्याश्रमं
तत्रार्चेन्मम पादुके विनिहिते स क्वापि नेयाद्भ्रमम् ॥ २१ ॥

चिन्तान्वितोऽपीह गणाधिनाथं
चिन्तामणिं योऽर्चति विघ्ननाथम् ॥
स चिन्तितार्थं लभते क्षणेन
स्थास्यन्ति विघ्ना न यदीक्षणेन ॥ २२ ॥

समस्तविघ्नान्तकमस्तशोकं
विनायकं योऽर्चति वारिताकम् ॥
तीर्थेषु चाष्टस्वपि भक्तियुक्तः
स्नात्वाऽऽप्तकामो भवतीह मुक्तः ॥ २३ ॥

शीघ्रं प्रसीदेत्। सङ्गमे स्नात्वा, अश्वत्थं भक्त्याऽभ्यर्च्य, सर्वानर्थभ्रमहरेऽत्राश्रमे संस्थापितयोर्मे पादुकयोरर्चनात्सर्वभ्रमशान्तिर्भवेत् ॥ २१ ॥ विघ्नहरचिन्तामण्यर्चनाद्विघ्नशोकनाशः। अष्टतीर्थस्नानात्सर्वसिद्धिर्मुक्तिश्च।

१ दुःख.

सन्तोषदारार्तिकदीपकैर्य-
त्रिकालमर्चेन्मम पादुके यः ॥
मां वा स्मरेत्तस्य समस्तकामान्
दास्ये सकामा अपि तेऽस्तकामाः ॥ २४ ॥

इति गुरुर्नरसिंहसरस्वती-
यतिरुदीर्य ससार सरस्वतीम् ॥
नगमगाङ्गजका मठमागता
हृदि निधाय गुरुं गुरुतां गताः ॥ २५ ॥

ते चिन्त्यमाना गुरुपादपद्म-
मुपागताः श्रीगुरुनाथसद्म ॥
दृष्ट्वा गुरुं तत्र च विस्मितास्ते
प्रोचुस्त्रिमूर्तिः स इहापि चास्ते ॥ २६ ॥

योऽमुं नरं वक्ति स भक्तिहीनः
प्रयाति कालस्य पुरं सुदीनः ॥
अनन्तमाहात्म्य उपास्तितार[1]ः
सत्यं विभोरेष किलावतारः ॥ २७ ॥

त्रिकालं पादुके सम्पूज्य मत्सन्तोषदमारार्तिकं च कृत्वा मां स्मरेत्तस्य कामसिद्धिः। इत्युक्त्वा श्रीगुरुः शैलयात्रायै प्रतस्थे। तत्पादपद्मं ध्यायन्तो भक्ता मठमेत्य तत्र श्रीगुरुं दृष्ट्वा विस्मिता आहु। अहो ! अयमत्राप्यास्ते।

---

१ उपासनेन तारकः.

इत्युक्त्वा ते दृष्टवन्तो न भूयः
सद्भिर्दृष्टो यद्यशः साधु भूयः ॥
तस्थौ देवो गुप्तरूपेण चैवं
तस्मान्नास्तीहेति वाच्यं न चैवम् ॥ २८ ॥

प्रत्यक्षमेवं स च दर्शयित्वा
श्रीपर्वतं श्रीगुरुराशु गत्वा ॥
पातालगङ्गातटमार्यवर्य
आप्लुत्य तस्थौ विहितस्वकार्यः ॥ २९ ॥

आहूय शिष्यान्गुरुराह कार्यं
पुष्पासनं मे विहितं स्वकार्यम् ॥
इतो व्रजे यत्र विभोः कलास्ते
नेक्षन्त उन्मार्गरताः खलास्ते ॥ ३० ॥

तथेति ते शिष्यवरा वराणि
पुष्पाणि पद्मानि तथाऽपराणि ॥
आहृत्य मोचा[1]दलसंयुतं स-
त्सुखासनं चक्रुरलङ्कृतं सत् ॥ ३१ ॥

असौ त्रिमूर्तिः योऽमुं नरमिति वक्ति स नरकं गमिष्यति। अस्यानंतो महिमाऽयं विभोरवतारः। एवं दर्शनं दत्वा, तत्र गुप्तरूपेण तस्थौ। ततोऽत्र नेति न वाच्यं ॥ २८ ॥ गुरुः श्रीशैलं गत्वा, पातालगङ्गायां स्नात्वा, शिष्यानाहूयाह। पुष्पासनं कुरुत, इतो व्रजामि। तथेति

---

१ कदलीपत्र.

निर्माय पीठं परमं पवित्रं
गङ्गाप्रवाहे निदधुर्विचित्रम् ॥
ऊचे गुरुस्तान्प्रतियात कामं
ग्रामं सदा वोऽस्तु सुखं निकामम् ॥ ३२ ॥

पुनर्दुःखितानब्रवीच्छ्रीगुरुस्तान्
समाश्वास्य भूयोऽपि भूयः स्वभक्तान् ॥
प्रयाताशु गन्धर्वसंज्ञं पुरं मे
प्रियाः सर्वदा तत्र वासोस्त्यरं मे ॥ ३३ ॥

अभाविकानां मददर्शनाय
सुभाविकानां मम दर्शनाय ॥
प्रदर्शितो मेऽयमहानुपायः
सदाऽस्मि मद्भक्तगृहेऽनपायः ॥ ३४ ॥

इत्युदीर्य भगवान्गुरुस्तदा पुष्पकासन उपाविशन्मुदा ॥
यश्चरित्रमतिचित्रमुत्तमं संविधाय सुखधाम सत्तमम् ॥ ३५ ॥

शिष्याः पद्मादिपुष्पाण्यानीय, तैः कदलीदलवेष्टितैः सुखासनं कृत्वा, गङ्गायां निदधुः । गुरुस्तानाह । सुखं ग्रामं प्रतियात । पुनस्तान्दुःखितान्दृष्ट्वाऽऽश्वास्याह । गन्धर्वपुरं प्रतियात सदा मे तत्र वासः । अभाविकानामदर्शनाय, भाविकानां दर्शनाय चायं सूपायः कृतः । मद्भक्तगेहे सदाऽस्मि । एवं चरित्रं विधाय ॥ ३५ ॥ श्रीगुरुर्बहुधान्यसंवत्सरे ।

उदग्गतेऽर्के शिशिरर्तुमध्ये
  माघाख्यमासेऽसितपक्ष आप्ते ॥
दैत्येज्यवारे प्रतिपत्तिथौ च
  पुष्याख्यचन्द्रर्क्षसमन्विते च ॥ ३६ ॥

कन्यागते देवगुरौ घटस्थे दिवाकरे पुण्यतमेऽत्र वारे ॥
उपाविशद्वै बहुधान्यवर्षे हर्षेण जाते सुरपुष्पवर्षे ॥३७॥

गुरुर्नदीनिर्झरमध्यसंस्थः
  प्राह व्रजेऽहं सुमनासनस्थः ॥
गत्वा निजस्थानमहो प्रिया वः
  प्रसादपुष्पाणि समीरयामि ॥ ३८ ॥

प्रसादपुष्पाणि भवद्भिरेव
  ग्राह्याणि चत्वारि मयेरितानि ॥
आधाय भक्तिं मयि पादुके मे
  पूज्ये ततोऽभीप्सितसिद्धिरेव ॥ ३९ ॥

कन्यागते गुरौ, कुम्भस्थेऽर्के, उत्तरायणे, शिशिरर्तौ, माघमासे असिते पक्षे, प्रतिपत्तिथौ, शुक्रवारे, पुष्यनक्षत्रे, देवेषु पुष्पाणि वर्षत्सु सत्सु पुष्पकासन उपविश्य नदीमध्यस्थ आह। चत्वारि प्रसादपुष्पाणि प्रेरयामि तानि गृहीत्वा भक्त्या मत्पादुके अर्चत। अभीष्टार्थसिद्धिः स्यात्। मे

गीते मम प्रीतिरतीव तस्मा-
द्गेयं मदुद्देशत एव नित्यम् ॥
भक्त्या भवद्भिर्मम चावतार-
कथान्वितं तस्य गृहेऽस्मि नित्यम् ॥ ४० ॥

गायन्ति ये मां मधुरं सदैव
स्थास्याम्यहं तत्सदने मुदैव ॥
न दैवभीतिः खलु तस्य गेहे
श्रीश्चाप्यखण्डा स पतेन्न मोहे ॥ ४१ ॥

मद्भक्तियुक्तेऽस्तु मम प्रसाद-
स्ततो भवेद्व्याध्यघदैन्यसादः ॥
श्रियान्वितास्ते सुतपौत्रयुक्ताः
शतायुषोऽन्ते च भवन्ति मुक्ताः ॥ ४२ ॥

चित्रं चरित्रं मम ये पठन्ति
शृण्वन्ति ये वाऽवहिता हिता मे ॥
श्रीर्नन्दते तत्कुलजेषु चापि
निःसंशयं सत्यमिदं वचो मे ॥ ४३ ॥

गानप्रीतिः ये मधुरं गायन्ति तद्गृहे स्थास्यामि तत्राखण्डा श्रीः सम्पच्च । न तत्र भीतिः । मद्भक्ते मे प्रसादो न तत्र दैन्याधिव्याधयः ॥ ४२ ॥ ते पुत्रपौत्रयुक्ताः श्रियान्विताः शतायुषश्च । ये मच्चरितं पठंति शृण्वन्ति

१ कार्यं

इत्युदीर्य भजकान्भजकाप्तः
पश्यतामपि सतां स च गुप्तः ॥
श्रीगुरुर्यत तिरोदधे यदा
भाविका अपि सुविस्मितास्तदा ॥ ४४ ॥

चिन्तायुक्तास्ते सरित्तीरसंस्था-
स्तावत्प्राप्ता नाविकास्तत्र नौस्थाः ॥
ते तानूचुः श्रीगुरुर्देवदेवः
साक्षाद्दृष्टोऽस्मिन्सरिन्मध्य एव ॥ ४५ ॥

भो शिष्यवर्गाः शृणुताद्य चित्रं
यतिस्वरूपं परमं पवित्रम् ॥
अस्माभिरस्याः सरितः प्रवाहे
दृष्टं निविष्टं सुमनःसमूहे ॥ ४६ ॥

दण्डं कराभ्यां च कमण्डलुं च
दधान ईदृग्यतिरूपधारी ॥
अस्मान्प्रभाषे कथयन्तु चास्म-
च्छिष्येभ्य एभ्यः पुरतः स्थितेभ्यः ॥ ४७ ॥

वा सत्यं तत्कुले श्रीर्नन्दते। इत्युक्त्वाऽदृश्योऽभूत्। विस्मिता भक्ताः यावच्चिन्तान्वितास्तावन्नाविका एत्योचुः। नद्यां साक्षाद्देवो दृष्टः। पुष्पासनस्थो, दण्डकमण्डलुधरो यतिर्न आह। नृसिंहसरस्वत्याख्योऽहं

अस्मान्वभाषे स यतिर्नृसिंह-
सरस्वतीसंज्ञ इदं त्वहं तु ॥
यास्यामि शीघ्रं कदलीवनान्तं
प्रयात गन्धर्वपुरं भवन्तः ॥ ४८ ॥

भ्रान्तिं समुज्झित्य तथैव दुःखं
गच्छन्तु भक्ता इति तेन चोक्तम् ॥
दृष्टः स च श्रीगुरुनाथ ईदृग्
यत्पादुके स्वर्णमये विभाते ॥ ४९ ॥

तदुक्तवाक्यं कथितं भवद्भ्य-
स्ततः सुखेन प्रतियात गेहान् ॥
आस्थाय भक्तिं खलु भुक्तिमुक्ति-
प्रदां गृहे तिष्ठत शिष्टकृत्याः ॥ ५० ॥

प्रसादपुष्पाणि तदीरितानि
ग्राह्याणि युष्माभिरिहागतानि ॥
सन्देशमित्थं गुरुणोदितं तं
विज्ञाप्य तेभ्यः प्रययुस्ततस्ते ॥ ५१ ॥

कदलीवनं यास्ये इति पुरस्थशिष्येभ्यो निवेदयत। गन्धर्वपुरं प्रतियात। भ्रान्तिं दुःखं च त्यक्त्वा सुखं प्रतियातेति चोक्तं। तत्पदयोः सौवर्ण-पादुके ॥ ४९ ॥ तेन भवद्भ्यः भुक्तिमुक्तिप्रदा मद्भक्तिरास्थेया प्रसाद-

श्रुत्वा समस्ता अपि नाविकोक्तिं
संस्मृत्य संस्मृत्य च ते गुरूक्तिम् ॥
प्रसादपुष्पागमसमीक्षमाणा-
स्तस्थुर्यशस्तस्य च भाषमाणाः ॥ ५२ ॥

प्रसादपुष्पाणि समागतानि
चत्वारि तावद्गुरुणेरितानि ॥
मुख्याश्च शिष्या जगृहुश्च तानि
चत्वारि भाग्यादुपसादितानि ॥ ५३ ॥

अथ संशयकोटिधारक-
स्तमपृच्छत्स च नामधारकः ॥
कतमा अपि मुख्यशिष्यकाः
कतमास्तेषु च पुष्पधारकाः ॥ ५४ ॥

स सिद्ध ऊचे गुरुनायकस्य
शिष्या बभूवुर्हितकारकस्य ॥
गन्धर्वपुर्यां बहवोऽपि जाताः
संन्यासिनः केचन गेहिनश्च ॥ ५५ ॥

पुष्पाण्यागच्छन्ति तानि गृहितव्यानीति तत्सन्देशो वः कथित इत्युक्त्वा ते जग्मुः। शिष्यास्तच्छ्रुत्वा प्रसादपुष्पाणीक्षमाणा यावत्स्थितास्तावच्चत्वारि पुष्पाण्यागतानि मुख्यशिष्या एकैकं जगृहुः। सिद्ध आह।

ये न्यासिनस्तान्स च तीर्थयात्रां
कर्तुं भुवि प्रेरयदेष देवः ॥
पूर्वं मयैते कथितास्तथाऽपि
प्राधान्यतस्तान्कथयाम्यथापि ॥ ५६ ॥

आद्यः स्मृतो बालसरस्वतीति
ततोऽपरः कृष्णसरस्वतीति ॥
अन्यस्तथोपेन्द्रसरस्वतीति
स्यान्माधवाभिख्यसरस्वतीति ॥ ५७ ॥

गुर्वाज्ञया ये गृहमेधिनोभये
तस्थुर्निकाय्ये स्ववशीकृतोभये ॥
श्रीशैलयात्रासमये सुविस्मये
चतुष्टयेनास विभुर्हृतस्मये ॥ ५८ ॥

सायन्देवः श्रीगुरूपात्तभावः
कन्याख्योऽन्यो नन्दिशर्माप्तभावः ॥
तद्वच्चान्यः सत्कवियों द्वितीयः
सिद्धोऽहं सम्प्राप्तभावोद्वितीयः ॥ ५९ ॥

बहवोऽस्य शिष्याः । तत्र यात्रायै प्रेरिताः सन्न्यासिनः प्राधान्याद्वच्मि ॥ ५६ ॥ बालसरस्वती, कृष्णसरस्वती, माधवसरस्वत्युपेन्द्रसरस्वती च । शैलयात्रासमये सायन्देवो प्राप्ताभया गृहस्थास्त्वाज्ञया सुखं गृहानीयुः ।

---

१ गृहे.

चत्वारि पुष्पाणि चतुर्भिरेवमस्माभिराप्तानि तदा तदेव ॥
प्रसादपुष्पं परिपश्य देवसमर्पितं पूजितमेतदेव ॥ ६० ॥

इति गुरोर्महिमा न हि मानमे-
त्यखिलवर्णनशक्तिरहो न मे ॥
कथित एष मयाऽद्य समासतो
वरकथाऽस्य तु वेद समासतः ॥ ६१ ॥

गुरोश्चरित्रं खलु विस्तरेण
मयोदितं कामधुगादरेण ॥
दारिद्र्यपापामयदावदावं
यच्छन्ति कल्पद्रुमसान्द्रदावम्[1] ॥ ६२ ॥

लिखन्ति येऽदोऽपि गुरोश्चरित्रं
पठन्ति वा ये परमं पवित्रम् ॥
शृण्वन्ति वा चित्तहरं विचित्रं
मोदन्त एतेऽत्र तथा परत्र ॥ ६३ ॥

नन्दिनरहरिकवी सिद्धोऽहं चेति चतुर्भिश्चत्वारि पुष्पाणि गृहीतानि। तत्रैकमिदं पश्य। मयेदं सम्पूज्य रक्षितं। एवं संक्षेपतो गुरुमहिमोक्तः सर्ववर्णने न मे शक्तिः। कामधुग्गुरुचरित्रं मयेदमुक्तं। दारिद्र्यपापरोगहरं शान्तिदं चेदं पवित्रं, मनोहरम्, यो लिखति, पठति, श्रृणोति वा, स चेह परत्र च मोदते॥ ६३ ॥ तत्कुलं पुत्रपौत्रादियुङ्नन्दते। धर्मार्थ-

---

१ निबिडवनं.

पुत्रपौत्रसहितं मुदा कुलं
नन्दतेऽस्य तु सदोभयं कुलम् ॥
धर्ममर्थमपि काममाप्नुयात्
सेवकोऽस्य च गतिं समाप्नुयात् ॥ ६४ ॥

सोऽवधार्य मुनिसिद्धजल्पितं
नामधारक उदस्त[1]कल्पितम् ॥
तत्क्षणं स पुलकाङ्कितोऽभवत्
पूर्णवांछितमनोरथोऽभवत् ॥ ६५ ॥

इति सिद्धवचो निशम्य सन्मुदितात्मा स च नामधारकः॥
कविरास शतायुराप्त[2]सत्सुतसम्पद्गुरुभक्तिधारकः ॥६६॥

श्रीगुरोश्चरितमेतदशेषं
शृण्वतोऽपि च ददाति सुतोषम् ॥
कामधेनुरिव कामितदं य-
च्छ्राव्यमन्वहमिदं वरदं यत् ॥ ६७ ॥

कामदं मोक्षदं चेदमिति श्रुत्वा नामधारकः पूर्णमनोरथः पुलकाङ्कितो मुदितात्माऽभूत्। स कविः शतायुर्लब्धगुरुभक्तिः सम्पत्सन्ततियुक्तो जातः। य इदं सन्तोषदं कामधुक्चरितं शृणोति स कामितं प्राप्नुयात्। अतो वरदमिदं नित्यं श्राव्यं। भवारण्येऽमृतप्रपेयं स्थापिता। अस्याः पानाच्चतुर्विधपुरुषार्थवार्तिर्निगमे गतिः। सन्मतिः, सद्गतिश्च भविष्यति।

१ परित्यक्तमायाजालं. २ प्राप्ताः सुताः संपत् च येन.

भवाटवीस्था अमृतप्रपेयं
गुरोश्चरित्रं हि सदैव पेयम् ॥
धर्मार्थकामान्निगमे गतिं च
मतिं स्मृतिं रातिं च सद्गतिं च ॥ ६८ ॥

यः पुत्रपौत्रादिरुचिं दधाति
सोऽदश्चरित्राभिरुचिं दधाति ॥
शृणोति नित्यं चरितं त्वखण्डं
तद्धाम्नि लक्ष्मीर्निवसेदखण्डम् ॥ ६९ ॥

श्रवणमात्रत एव पुमर्थदं
श्रवणमात्रत एतदनर्थदम् ॥
अवति तान्नरसिंहसरस्वती
यतिपतिस्त्विति वक्ति सरस्वती ॥ ७० ॥

अतएवासौ गङ्गाधरभूसुरजः सरस्वती विप्रः ॥
श्रोतॄन् प्रार्थयतेऽसौ श्राव्यो ग्रन्थोऽखिलार्थदः क्षिप्रः ॥ ७१ ॥

पुत्रपौत्रादीच्छुरिदं शृणुयात्। तद्धाम्न्यखण्डा लक्ष्मीर्वसेत् ॥ ६९ ॥ श्रवणात्पुरुषार्थदं सर्वानर्थहरं चेदं यः शृणोति तं श्रीनृसिंहसरस्वती सर्वानर्थतो रक्षति। गङ्गाधरात्मजः श्रोतॄन्प्रार्थयते शीघ्रं सर्वार्थदोऽयं ग्रन्थः सेव्यः। प्रपञ्चादपि परमार्थसिद्धिदः, प्रवृत्तितोऽपि निवृत्तिदोऽखिलकामपूरकोऽनर्थनिवारक एष ग्रन्थो नित्यः सेव्यः। आरम्भतत्समाप्ति-

प्रपञ्चतोऽतः परमार्थसिद्धिदः
प्रवृत्तितोऽप्येष निवृत्तिसिद्धिदः ॥
शृणोतु लोकोऽखिलकामपूरकं
पठत्वमुं नित्यमनर्थवारकम् ॥ ७२ ॥

समारम्भतत्समाप्तिकृन्नृसिंहसरस्वती ॥
नाधारोऽन्यस्ततो याचे सन्मार्गं देहि मह्यमो३म् ॥७३॥

ॐ तत्सत् ॥ श्रीसिद्धनामधारकसंवादरूपेण सरस्वत्याख्य-गङ्गाधरात्मजविरचितनरसिंहसरस्वत्युपाख्यानसंज्ञितमहाराष्ट्र-भाषान्वितगुरुचरित्रसमानार्थायां वासुदेवानन्दसरस्वतीयतिविर-चितायां श्रीगुरुसंहितायां उपासनाकाण्डे एकपञ्चाशत्तमः ॥

॥ आदितः श्लोकाः ॥ ६४७१ ॥

संग्रथ्य लिखिताः प्रायोऽन्वहं श्लोकाः शताधिकाः ॥
श्लोकाः पञ्चदिनान्यस्य प्रत्यहं द्विशताधिकाः ॥ १ ॥
प्रत्नप्राकृतसद्ग्रन्थाद्वासुदेवसरस्वती ॥
व्यधादेतमतः प्रीयान्नरसिंहसरस्वती ॥ २ ॥

कृन्नरसिंहसरस्वती । ततोऽन्यो नाऽधारोऽतो याचामि । सन्मार्गं मे देहीति (ॐ) इति वासुदेवानन्दसरस्वतीकृता श्रीस० गुरुचरितचूर्णिका कावेरी-तीरे समाप्ता । श्रीदत्तात्रेयार्पणमस्तु ॥ ७३ ॥

---

१ प्राचीनहस्तलिखितमहाराष्ट्रगुरुचरित्रात्.

# शुद्धिपत्रम्

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ८ | ३ | भागीरथः | भगीरथः |
| १६ | ८ | भावान्कि | भवान्कि |
| २० | १६ | न ब्रपेऽहं | न ब्रूपेऽहं |
| २४ | ८ | भृत्वा | भूत्वा |
| २६ | २१ | कष्टातं | कष्टार्तं |
| २८ | १७ | इत्युत्क्वा | इत्युक्त्वा |
| ३० | १९ | सावघानः | सावधानः |
| ३६ | ९ | मात्स्यर्य | मात्सर्य |
| ४१ | १९ | पीडया | पीडय |
| ४४ | ११ | स्त्रवण | स्त्रश्रवण |
| ४४ | २० | दुपदेष्टा | दुपदेष्टा |
| ५५ | २४ | अनाहृत्य | अनादृत्य |
| ५९ | ११ | ऽतः | ऽतैः |
| ५९ | १४ | विहितो५ | विहितो६ |
| ५९ | २५ | ५ कृता | ६ कृता |
| ७३ | १९ | नत्व | नत्वा |
| ७९ | २० | सिष्ठाः | वसिष्ठाः |
| ८० | ७ | हरास्ते | हरांस्ते |
| ८३ | ९ | न्यत्र | न्यत्र |
| ८६ | २२ | यास्या | यस्या |
| ८७ | १९ | युप्म | युष्म |
| ८७ | २० | नसारिणा | नुसारिणा |
| ८८ | १९ | श्रता | श्रुता |
| ९० | १६ | योऽम्व | योऽम्ब |
| ९३ | ५ | भो च | भोश्च |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९७ | ६ | द्वर्वीय | वीक्ष्य |
| १०० | ६ | तानाश्वास्य | तावाश्वास्य |
| १०० | १५ | तानाश्वास्य | तावाश्वास्य |
| १०४ | २ | त्रवीत् | ब्रवीत् |
| १११ | १८ | मस्त्वरूपो | मत्स्वरूपो |
| ११५ | १९ | रावणास्या | रावणस्या |
| ११८ | १८ | महिषमुक् | महिषभुक् |
| १२९ | २६ | एतावना | एतावता |
| १३२ | २० | निर्विष्णो | निर्विण्णो |
| १३७ | १७ | भषण | भूषण |
| १४० | ७ | त्रलोक्य | त्रैलोक्य |
| १४० | २२ | अनुतमम् | अनुत्तमम् |
| १४२ | १४ | चन्द्राकान्त | चन्द्रकान्त |
| १४३ | ७ | नच्छृछं | नपृच्छं |
| १४४ | ४ | रात्रो | रात्र्यु |
| १४८ | १३ | ओप | औप |
| १४९ | ६ | बुभक्षा | बुभुक्षा |
| १४९ | १२ | क्षुघा | क्षुधा |
| १५० | १९ | त्युच्चरण | त्युच्चारण |
| १५० | २० | क्रन्दती | क्रन्दन्ती |
| १५५ | ११ | पादर्शना | पाददर्शना |
| १५८ | ५ | स्त्रीर्दुः | स्त्री दुः |
| १६२ | १७ | स्यास्यंती | स्थास्यंती |
| १६४ | १४ | धीरिणी | धरणी |
| १९४ | २३ | अर्कंचारे | अर्कवारे |
| १९८ | १९ | मढः | मूढः |
| २०० | ९ | रतरां | स्तरां |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २०१ | १९ | जाताऽमृत | जातामृतं |
| २०३ | १७ | सन्यासी | संन्यासी |
| २१० | २२ | पूजयमास | पूजयामास |
| २१३ | १४ | तीर्णोब्ज | तीर्णोऽज |
| २१४ | ५ | विधैस्तोत्रै | विधैः स्तोत्रै |
| २१७ | २१ | निंदति | निंदन्ति |
| २१९ | ९ | सान्दि | सान्दी |
| २२८ | १६ | पूजयमा | पूजयामा |
| २२९ | १७ | अप्यर्ध्वं | अप्यूर्ध्वं |
| २३९ | ११ | दृष्टवा | दृष्ट्वा |
| २५९ | १२ | सन्या | संन्या |
| २६० | १२ | गतव्य | गन्तव्य |
| २६२ | २० | कुरक्षेत्रं | कुरुक्षेत्र |
| २७१ | १० | काथ | कथा |
| २८० | ७ | औन्नतां | ओन्नतां |
| २८६ | २ | यैंव | यैवं |
| २९६ | १९ | अभत् | अभूत् |
| २९८ | १४ | जिह्वाम् | जिव्हाम् |
| २९८ | १५ | ,, | ,, |
| ३०१ | १४ | तत्राय | तत्रायं |
| ३०५ | ५ | दास्ये | दास्य |
| ३०५ | १८ | तामाह | तमाह |
| ३१६ | १८ | भपम् | भूपम् |
| ३१७ | १९ | प्रसन्नोऽभ | प्रसन्नोऽभू |
| ३२२ | १२ | तंत्तदा | तंत्तदा |
| ३३० | १४ | महात्म्यं | माहात्म्यं |
| ३३७ | ४ | म्यूदुम्बरे | म्युदुम्बरे |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३३७ | १४ | जाता | जाताः |
| ३४४ | १५ | च्छृणोपि | च्छृणोषि |
| ३४६ | २० | चक्रुः | चक्रतुः |
| ३४७ | ४ | अवयया | अवयवा |
| ३४८ | ४ | त्वमेह | त्वमेव |
| ३४९ | २० | यृयं | यूयं |
| ३५४ | ११ | पर्वक | पूर्वक |
| ३६४ | १५ | न्यनं | न्यूनं |
| ३७० | १५ | स्त्रीः | स्त्री |
| ३७७ | १५ | रतव | स्तव |
| ३९२ | १० | सन्य | सैन्य |
| ३९३ | १२ | ध्या | ध्यौ |
| ३९४ | १९ | मर्त्यव | मूर्त्यव |
| ४०६ | १८ | वैतौ | वेतौ, |
| ४०८ | ३ | ब्रतं | ब्रूतं |
| ४१४ | १४ | श्मश्र | श्मश्रु |
| ४२० | १६ | मलं | मूलं |
| ४३० | १४ | सर्वभत | सर्वभूत |
| ४४० | ७ | पूर्वा | पूर्वा |
| ४४४ | ११ | भुवत्वा | भुक्त्वा |
| ४४५ | १९ | श्वासा | श्वासा |
| ४४६ | ९ | च्छेवेत | च्छेत व |
| ४५२ | २१ | मिंद्रं | मिंद्रं |
| ४५५ | २१ | माहा | महा |
| ४६३ | १८ | यूयगमा | यूयमत्रा |
| ४७१ | १९ | रूपवतीः | रूपवत्यः |
| ४७५ | ५ | जत्मोत्थं | जन्मोत्थं |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४७८ | १२ | शिवदता | शिवदूता |
| ४८५ | १२ | रज्जिता | रञ्जिता |
| ४८६ | १७ | कोठ्य | कोटय |
| ४९२ | १७ | माहा | महा |
| ४९७ | १६ | पापोपा | पापोपपा |
| ५२९ | १२ | न्यन | न्यून |
| ५३५ | १७ | पत्यै | पत्ये |
| ५५९ | १९ | न्ताऽवतारा | न्ता अवतारा |
| ५६१ | ६ | सुकौयाम्बशेरावृता | सुकौशेया-म्बरावृत |
| ५७० | २ | ज्ञताथ | ज्ञयातीर्थ |
| ५७० | २१ | वचतुः | वूचतुः |
| ५७१ | २० | तारयणाय | तारणाय |
| ५८२ | १३ | रज्जिता | रञ्जिता |
| ५८४ | ११ | रज्जितम् | रञ्जितम् |
| ६०२ | ११ | भूमिचा | भूमिचा |
| ६०६ | ४ | नुष्ठीय | नुष्ठाय |
| ६१८ | १७ | मृत्र | मूत्र |
| ६२२ | १८ | मिधार्थं | मिदर्थं |
| ६३२ | १३ | रज्जिता | रञ्जिता |
| ६५४ | ५ | त्युवत्वा | त्युक्त्वा |
| ६७९ | १९ | शाटया | शाठ्या |
| ६८३ | १७ | मृत्रो | मूत्रो |
| ६८४ | ७ | यावत्य | यावन्त्य |
| ७११ | १८ | पितृणां | पितृणां |
| ७१७ | १६ | त्रिमर्तिः | त्रिमूर्तिः |
| ७३० | १६ | प्राक्यत्य | प्राक्प्रत्य |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ७३५ | ११ | कठिन | कठिनं |
| ७३८ | २ | उपवीति | उपवीती |
| ७४६ | २० | ताम्बृ | ताम्बू |
| ७६३ | ५ | अवशिष्टां | अवशिष्टान् |
| ७७९ | १४ | तदद्धि | तद्द्धि |
| ७७९ | १७ | प्रद्रक्षि | प्रदक्षि |
| ८१९ | १८ | पर्ण | पूर्ण |
| ८१९ | २१ | क्रूरष्टया | क्रूरदृष्टया |
| ८२३ | ३ | कठिणा | कठिना |
| ८२९ | १९ | यतोऽ | यतोऽ |
| ८३० | १९ | सोस्पकर | सोपस्कर |
| ८३१ | २० | स्तभं | स्तंभं |
| ८४५ | १६ | त्रिमर्तयः | त्रिमूर्तयः |
| ८४७ | २१ | दारिद्यहारि | दारिद्यहारिन् |
| ८६२ | १६ | भृभार | भूभार |
| ८६४ | ९ | भुवस्त्रातुं | भुवस्त्रातुं |
| ८६७ | १० | स्त्रीर्मम | स्त्री मम |
| ८६९ | १४ | भवन्त्यः | भवत्यः |
| ८७५ | १४ | गत्त्वा | गत्वा |
| ८८५ | २० | मृर्खाः | मूर्खाः |
| ८९३ | २० | पर्वजन्म | पूर्वजन्म |
| ९०५ | १९ | तमोंऽधे | तमोंऽधो |
| ९०८ | ६ | स्त्यक्षामि | स्त्यक्ष्यामि |
| ९२१ | १७ | नृकेसरीसंज्ञः | नृकेसरिसंज्ञः |
| ९२२ | १८ | कृतोऽ | कुतोऽ |
| ९२९ | १८ | व्यर्थोऽहं | व्यर्थोऽयं |
| ९३२ | १४ | महिमो | महिमा |

| पृष्ठम् | पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १३३ | १२ | जनः | जन |
| १४२ | १९ | मलत | मूलत |
| १५० | १६ | युद्धै | युद्धे |
| १५५ | १८ | भृत्वा | भूत्वा |
| १६५ | १७ | भवान्मूलेच्छो | भवान्म्लेच्छो |
| १६९ | ११ | म्लेछ | म्लेच्छ |
| १७८ | १९ | सपुत्रां राज्ञी | सपुत्रा राज्ञी |
| १००४ | १९ | कृराः | क्रूराः |
| १००७ | १४ | वदरा | वरदा |
| १००९ | १८ | भन सद्गुरो | भूत सद्गुरो |
| ,, | १९ | हित्या वक | हित्वा वक |
| १०१० | १८ | यास्यासि | यास्यसि |
| १०२० | १९ | ते जन्मुः | ते जग्मुः |

